आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०२

श्रीमद्द्वैपायनमुनिप्रणीतं-

# ब्रह्मवैवर्तपुराणम् ।

तस्य प्रथमो भागः ।

एतत्पुस्तकं
वे० शा० सं० वासुदेवशास्त्री मराठे इत्येतैः संशोधितम् ।
तच्च
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५७ ।

खिस्ताब्दाः १९३५ ।



मूल्यं षडाणकाधिकरूपकचतुष्टयम् (४।८६) ।

## विद्वदभ्यर्थना ।

अयि भो विद्वांसः श्रुतिस्मृतिपुराणेतिहासेषु बद्धादरा धर्माभिमानिनो धर्माचरणेषु श्रद्धालवः, विदितचरमेवैतद्भवतां तत्रभवतामानन्दाश्रमग्रन्थावलीयग्रन्थग्राहिणां, यदिदानीमानन्दाश्रममुद्रणालये श्रीमद्द्वैपायनमुनिप्रणीतं ब्रह्मवैवर्तं नाम पुराणं संमुद्र्य प्रकाश्यत इति ।

यद्यप्यस्मिन् किल भारते वर्षे बहवो धर्मविषयका ऐतिहासिकाश्च ग्रन्थाः भारतरामायणप्रभृतयः संमुद्र्य प्रकाशिताः सन्ति पुराणानि च श्रीमद्भागवतदेवीभागवतादीनि, तथेदमपि विद्यते, तथाऽपीदानींमष्टादशमहापुराणेषु ब्रह्मवैवर्ताख्यं महापुराणं ब्रह्मखण्ड—प्रकृतिखण्ड—गणपतिखण्ड—श्रीकृष्णजन्मखण्डात्मकमखिलभूमण्डलप्रसिद्धं विशेषतया संमुद्र्य प्रकाश्यतेऽस्माभिः । तत्राऽऽद्यभागेऽशरणशरणराधारमणगोलोकराजश्रीकृष्णतः सर्वेषां भुवनानां सृष्टिस्थितिलयानां सर्गप्रतिसर्गमन्वन्तरवंशानुचरितानां ब्रह्मप्रकृतिगणपतिशंकरादिदेवानामुत्पत्त्यधिकारचरितानां च नारदनारायणसंवादद्वारा विस्तरेण वर्णनं वर्तते । अथ द्वितीये श्रीकृष्णजन्मखण्डात्मके भागे तु श्रीमत्परब्रह्मश्रीकृष्णचरितानामतिविस्तरतया भक्तजनमानससंमोदाधायकं वर्णनं विद्यते ।

तदेतत्पुराणं पूर्वमन्यत्र मुद्रितमप्यस्माभिः पाठान्तरैः सुरभीकृततया मरीचादिसुसंस्कृतं पानकमिव समधिकमेव संतोषं जनयेद्धर्माभिलाषुकाणामित्यत्र नास्ति नः संदेहलेशोऽपि । तथा चान्यदीयमुद्रणालयमुद्रितपुस्तकापेक्षयाऽस्य शुद्धतरत्वाद्वाचकानामयमेवाऽऽनन्दाश्रममुद्रितो ग्रन्थः श्रेयान्वाचनार्थम् । अन्यत्र मुद्रितपुस्तकमवलोकयतां तत्रस्थाननेकान्दोषान्दृष्ट्वा यच्छुद्धीकरणं मनस्युपतिष्ठते तदेवात्र कृतमवलोक्यातितरां ते मुदमाप्नुयुः ।

अथास्मिन्ममाभ्यर्थनाप्रथमप्रयत्ने यदृच्छतः स्खलनं क्वापीति न्यायेन संस्कृतभाषालेखनसरण्यनभ्यस्ततया दोषबाहुल्यं दृश्येत तत्क्षन्तुमर्हन्ति विद्वांस इति मे महान्दृढो विश्वासः । तदेतल्लेखनसाहसमनसूयावतां धीमतामग्रे विनिवेद्य सविनयं सप्रणयं साञ्जलिबन्धं च श्रीमत्सच्चिदानन्दचरणयोः समर्प्य विरमामीति शम् ।

पुण्यपत्तने चैत्र व० १० ) गुरुजनकृपाभिलाषी मराठे इत्युपाह्वो
श० १८५७. ) श्रीधरात्मजो वासुदेवशर्मा ।

# अथ श्रीमद्ब्रह्मवैवर्तपुराणविषयानुक्रमणिका ।


| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| | अथ ब्रह्मखण्डम् ॥ १ ॥ | |
| १ | ग्रन्थादौ मङ्गलाचरणम्, नैमिषारण्ये शौनकादीन्प्रति सौतेरागमनम्, तत्र कुशलप्रश्नानन्तरं सौतिं प्रति शौनकमहर्षेः श्रीकृष्णभक्तीहापरसौख्यप्रदतन्महापुराणतत्त्वजिज्ञासया प्रश्नः। सौतिना शौनकं प्रति ब्रह्मवैवर्तमहापुराणसंख्यातत्पुराणस्थचतुष्खण्डगतमुख्यविषयवर्णनम् । | १ |
| २ | सौतिना सुरूपवर्णनपूर्वकं सर्वोपरिस्थगोलोकवर्णनम् । ततः शतकोटियोजनाधःप्रदेशे वैकुण्ठलोकः। तदधः शिवलोकः । प्रलये वैकुण्ठशिवलोकयोर्गोलोके लयः । गोलोकस्य तूत्पत्तिलयाभावः । गोलोकस्थतेजोमण्डलस्यैव सर्वजगत्कारणश्रीकृष्णरूपत्ववर्णनम् । | ४ |
| ३ | श्रीकृष्णपरमात्मनो जगत्सिसृक्षायां स्वाङ्गदक्षिणपार्श्वतः स्वगुणत्रयोदशानां पञ्चतन्मात्राणां महाभूतादीनां नारायणस्य चोत्पत्तिः । नारायणकृतश्रीकृष्णस्तोत्रम् । श्रीकृष्णवामपार्श्वाच्छंकरोत्पत्तिः । शंकरकृतश्रीकृष्णस्तोत्रम् । नाभिप्रदेशाद्ब्रह्मोत्पत्तिस्तत्कृतश्रीकृष्णस्तोत्रम् । वक्षसो धर्मोत्पत्तिः । तत्कृतश्रीकृष्णस्तोत्रम् । सरस्वतीमहालक्ष्मीदुर्गोत्पत्तिः । तत्कृतश्रीकृष्णस्तोत्रम् । | ६ |
| ४ | श्रीकृष्णजिह्वाग्रतः सावित्र्युत्पत्तिः । तत्कृतकृष्णस्तुतिः । श्रीकृष्णमनसो मन्मथोत्पत्तिः । तद्वामाङ्गाद्रत्युत्पत्तिः । रतिदर्शनेन ब्रह्मणो रेतःपतनम् । तस्माद्रेतसो वरुणोत्पत्तिः । अग्निस्वाहावरुणानीनां क्रमेणोत्पत्तिः । श्रीकृष्णरेतःस्खलनान्महाविष्णोरुत्पत्तिः । श्रीकृष्णकर्णमलान्मधुकैटभोत्पत्तिः । श्रीकृष्णकृतमधुकैटभवधवर्णनम् । | १० |
| ५ | गोलोकगोगोपगोपीनां नित्यानित्यत्वव्यवस्था । शंभुनारायणयोः कल्पत्रयवर्णनम् । ब्रह्मणः कालनिर्णयः । मार्कण्डेयस्थितिकाल | १२ |

| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
| --- | --- | --- |
| | निर्णयः । श्रीकृष्णकृतगोगोपबलीवर्दोत्पत्तिः । प्रकृतेः सकाशाद्राधोत्पत्तिः । राधागण्डप्रदेशात्कोटिसंख्याकगोपीनामुत्पत्तिः । | |
| ६ | श्रीकृष्णेन नारायणादिभ्यो महालक्ष्म्यादीनां दानम् । महेश्वराय दुर्गायां समर्पयितव्यायां शंकरेण तत्स्वीकारप्रत्याख्यानम् । श्रीकृष्णेन शंकराय सर्वपूज्यत्वादिवरप्रदानपूर्वकं तन्माहात्म्यवर्णनम् । सिंहवाहिनीदेवीसमाश्वासनपूर्वकं मन्त्रदानम् । ब्रह्मणे सृष्टिकरणायाऽऽज्ञादानम् । | १५ |
| ७ | ब्रह्मकृतपृथिव्यादिविश्वसृष्टिवर्णनम् । | १८ |
| ८ | ब्रह्मणा सावित्र्यां वीर्याधानतो वेदशास्त्रादिसृष्टिवर्णनम् । ब्रह्मणः पृष्ठदेशादिभ्योऽधर्माद्युत्पत्तिः । स्वसुतेभ्यः सृष्टिकरण आज्ञादानम् । ब्रह्मणो नारदाय शापदानम् । नारदेन च ब्रह्मणे शापदानम् । | १९ |
| ९ | ब्रह्माज्ञया नारदातिरिक्तसर्वमहर्षिकृतसृष्टिः । तत्र कश्यपादिसंबन्धवर्णनम् । मङ्गलग्रहोत्पत्तिविषय इतिहासवर्णनम् । चन्द्रपत्नीनां चरित्रे रोहिणीसङ्गतं चन्द्रं प्रति दक्षेण यक्ष्मरोगित्वशापादकशापदानम् । चन्द्रस्य शिवाश्रयणम् । चन्द्रपत्नीभिः स्वपतिलिप्सया पितृसमीपे पतिमाहात्म्यवर्णनम् । दक्षेण शिवाच्चन्द्रस्य याचनम् । शिवेन तत्प्रत्याख्यानम् । कृष्णेन दक्षाय चन्द्रस्य दानम् । | २२ |
| १० | भृग्वादिभ्यश्च्यवनाद्युत्पत्तिः । कुबेरजन्मकथनम् । क्षत्रियादिजात्युत्पत्तिः । शिल्पकारोत्पत्तिः । शिल्पकाराणां पतितत्वादिदोषेणायाजत्व इतिहासवर्णनम् । घृताचीन माप्सरोभिः सह विश्वकर्मणः समागम उभयोः संवादः । घृताच्या नीतिधर्मवर्णनम् । परस्परशापवर्णनम् । भूलोके विश्वकर्मणो ब्राह्मणजन्म । घृताच्या गोपिकाया गङ्गातीरे रमणम् । ततो मलये रमणम् । ततो नवपुत्रोत्पत्तिः । तेषां कार्यनिर्णयः । संकरजातिवर्णनम् । वैद्यजातिनिर्णयेऽश्विनीकु- | २६ |

| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| | मारोत्पत्तिवर्णनम् सर्वजातिषु योनिसंबन्धवर्णनम् । | |
| ११ | सुतपोब्राह्मणस्याश्विनीकुमाराभ्यां शापः । सूर्यकृतब्राह्मणस्तुतिः । सुतपसाऽश्विनीकुमारयोर्नीरुजत्वकरणम् । ब्राह्मणमाहात्म्यम् । | ३४ |
| १२ | गन्धर्वराजस्य पुत्रप्राप्तिनिमित्तं पुष्करक्षेत्रे शंकरोद्देशेन तपश्चर्या । तत्तपस्तुष्टेन शंकरेण वरप्रदानम् । गन्धर्वराजभार्यायां नारदजननम् । | ३६ |
| १३ | नारदस्य पूर्वजन्मन्युपबर्हणेतिनामकथनम् । उपबर्हणस्य दुष्करतपश्चरणेन गन्धर्वकन्यानां परिणयनम् । रम्भादर्शनेनोपबर्हणस्य वीर्यस्खलने तस्मै शूद्रत्वप्रापकशापः । उपबर्हणस्य स्वदेहपरित्यागः । तन्निमित्तं मालावतीनामज्येष्ठपत्न्या विलापः । शापोद्यतमालावतीभयाद्ब्रह्मादिसर्वदेवानां तत्राऽऽगमनम् । | ३८ |
| १४ | मालावतीसमीपे श्रीविष्णोरागमनम् । स्वपतिमरणकारणपृच्छायां ब्राह्मणेन सर्वदेवानां पृथक्पृथक्फलप्राप्तिवर्णनम् । विष्णुप्रशंसा । | ४२ |
| १५ | ब्राह्मणस्य स्वयं सर्वज्ञताप्रशस्ति । मालावत्या प्रत्यक्षतो दर्शनं धर्मादीनाम् । धर्मादीन् प्रति निजकान्तनिधनकारणपृच्छा । मालावतीकालपुरुषसंवादः । | ४५ |
| १६ | मालावत्या व्याध्युत्पत्तेर्हेतुज्ञानाय प्रश्नः । ब्रह्मणेन व्याधिकारणवर्णनम् । तत्राऽऽयुर्वेदविद्याप्रवृत्तिजरानाशकोपचारकथनम् । वातपित्तश्लेष्महारकोपायकथनम् । | ४८ |
| १७ | ब्राह्मणरूपधारिविष्णोर्ब्रह्मशिवादिभिः सह संवादे विष्णुप्रशंसा । | ५२ |
| १८ | ब्रह्मादीनां पुनर्मालावतीसमीपं प्रत्यागमनम् । गन्धर्वजीवनम् । तदा मालावतीकृतमहापुरुषस्तोत्रम् । कृष्णेनगन्धर्वजीवदानम् । | ५५ |
| १९ | विष्णुकवचम् । बाणेश्वरकवचम् । | ५७ |
| २० | उपबर्हणस्य ब्रह्मशापाद्वृषलीगर्भे जन्मवृत्तान्तवर्ण० । | ५९ |
| २१ | कलावतीवृत्तान्तः । वृष- | ६४ |

| अध्यायाङ्कः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| | लोपुत्रस्य नारदेतिनामकरणम् । वीर्यप्रदनारदजन्मवृत्तान्तवर्णनम् । श्रीकृष्णध्यानस्तोत्रकवचवर्णनम् । नारदस्य शापविमोचनम् । | |
| २१ | ब्रह्मणः कण्ठान्नारदोत्पत्तिप्रसङ्गेन प्राचेतसादिमुनीनां ब्रह्माङ्गविशेषादुत्पत्तिवर्णनम् । ब्रह्मपुत्रनाम्नोव्युत्पत्तिवर्णनम् । | ६६ |
| २३ | ब्रह्मणो नारदं प्रति पुनः सृष्टिकरण आज्ञा । नारदेन दारपरिग्रहनिन्दाप्रसङ्गेन स्त्रीस्वभाववर्णनम् । | ६८ |
| २४ | ब्रह्मणो नारदं प्रति गार्हस्थ्यधर्मस्य वैदिकत्ववर्णनम् । नारदस्य श्रीकृष्णमन्त्रग्रहणार्थं ब्रह्मणो प्रार्थना । ब्रह्माज्ञया तदर्थं नारदस्य शिवलोकं प्रति गमनम् । | ७० |
| २५ | तत्र नारदस्य शिवदर्शनम् । | ७२ |
| २६ | ब्राह्मणविष्णवविधयानामाह्निकम् । | |
| २७ | भक्ष्याभक्ष्यकर्तव्याकर्तव्यकथनम् । | |
| २८ | ब्रह्मस्वरूपवर्णनम् । शिवाज्ञया नारदस्य बदरिकाश्रमं प्रति गमनम् । | ७९ |
| २९ | श्रीकृष्णमाहात्म्यवर्णनम् । | ८२ |
| | प्रकृतिमाहात्म्यवर्णनम् । | |
| ३० | भगवत्स्तुतिः । | ८३ |
| | इति ब्रह्मखण्डम् ॥ १ ॥ | |

अथ प्रकृतिखण्डम् ॥ २ ॥

| | | |
|---|---|---|
| १ | प्रकृतिचरितम् । | ८७ |
| २ | देवस्य देव्याश्चोत्पत्तिः । | ९४ |
| ३ | भूरादिलोकाः । तत्स्थानानि । महाविराडुत्पत्तिः । तस्य जगत्स्रष्टृत्वम् । | ९७ |
| ४ | प्रकृतयः । सरस्वत्या मन्त्रः पूजा कवचं च । | १०० |
| ५ | याज्ञवल्क्योक्तवाग्देवीस्तोत्रम् । | १०४ |
| ६ | सरस्वत्या गङ्गालक्ष्म्योः कलहः—परस्परं शापाश्च । | १०६ |
| ७ | शापात्सरस्वत्या नदीत्वम् । लक्ष्म्यास्तुलसीत्वम् । कलौ धर्माधर्मकथनम् । कृतयुगारम्भे सर्वेषां स्वस्वधर्मे प्रवृत्तिः । कालपरिमाणम् । जगदधिष्ठातारो देवाः । | १११ |
| ८ | वसुधोत्पत्तिः । पृथिवीपूजामन्त्रस्तोत्राणि । | ११६ |
| ९ | भूमिदाने फलम् । तद्धरणे पापम् । परकीयतडागादौ स्नाने फलम् । भूस्वामिने पिण्डमदत्त्वा श्राद्धकरणे पापम् । भूमौ शङ्खादिस्थापने पापम् । भूमिनाशे व्युत्पत्तिवर्णनम् । | ११९ |

| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| १० | गङ्गोपाख्यानम् । तस्याः पूजादिः राधोत्सवः । | १२० |
| ११ | गङ्गारूपमोहितकृष्णस्य राधोपालम्भः । | १२८ |
| १२ | गङ्गां प्रति राधाकोपाद्राधा-या निवारणम् । गङ्गाया विष्णुना साकं गान्धर्वविवाहः । | १३४ |
| १३ | वृषध्वजहंसध्वजयोर्धर्मध्वज-कुशध्वजावतारत्वकथनम् | १३५ |
| १४ | कुशध्वजस्य कन्याया वेदवत्यास्तपश्चरन्त्याः स्पर्शे रावणाय शापः । तस्या जानकीरूपेणावतारः । तच्छायाया द्रौपद्यवतारश्च । | १३७ |
| १५ | धर्मध्वजपत्न्यां तुलस्यावतारः । तस्या विष्णुना सङ्गे ब्रह्मणो वरप्राप्तिः । तत्र च राधिकाशापः । राधामन्त्रेण ततो मोक्षश्च । | १४० |
| १६ | तुलस्याः शङ्खचूडेन सह विवाहः । शङ्खचूडाद्देवानां पराजयः । तत्कोपनायाऽमरैः ब्रह्माणं प्रति सभायामकथाकथनम् । तद्वधोपायः । | १४२ |
| १७ | शङ्खचूडं प्रति दूतत्वेन पुष्पदन्तस्य प्रेषणम् । शङ्खचूडतुलस्योः संवादः । | १५१ |
| १८ | शङ्खचूडस्य युद्धार्थं शिवं प्रत्यागमनम् । तयोः संवादः । | १५५ |
| १९ | शङ्खचूडस्य देवैः साकं युद्धम् । | १५८ |
| २० | शिवेन साकं युद्धे विष्णुना तत्कवचहरणम् । ततस्तद्वधः । | १६१ |
| २१ | तुलस्या नारायणेन संयोगः । तस्या वृक्षत्वेनोत्पत्तिः । तन्माहात्म्यं च । | १६३ |
| २२ | तस्या ध्यानं स्तवनं पूजाविधिश्च । | १६७ |
| २३ | सावित्र्युपाख्यानेऽश्वपति-राजानं प्रति पराशरोक्तं सावित्रीव्रतम् । | १६९ |
| २४ | सावित्र्यवतारः । तस्याः सत्यवता साकं विवाहः । अपमृत्युना मारिते सत्यवति यमसावित्रीसंवादः । | १७३ |
| २५ | यमसावित्रीसंवादः । | १७५ |
| २६ | यमसावित्रीसंवादे कर्मविपाकविवरणम् । | १७७ |
| २७ | पुण्यकर्मफलानि । | १८० |
| २८ | सावित्रीकृतयमस्तोत्रम् । | १८१ |
| २९ | नरकाणां संख्याः । | १८७ |
| ३० | पापिनां यातनादिनिरूपणम् । | १८८ |
| ३१ | नरकाणां पुनर्वर्णनम् । | १९७ |
| ३२ | स्वर्गप्रापककर्माणि । | १९९ |
| ३३ | नरकाणां लक्षणानि । | २०१ |
| ३४ | सावित्र्यै वरदानम् । श्रीकृ- | २०१ |

| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| | ष्णस्य वर्णनम् । तत्पतिं जीवयित्वा तस्या अखण्ड-सौभाग्यादिवरदानम् । | |
| ३५ | लक्ष्म्या उत्पत्तिः । तस्या नानारूपाणि । तस्यासामर्थ्यम् । | २१० |
| ३६ | दुर्वाससः शापादिन्द्रस्य भ्रष्टश्रीत्वम् । तस्मै ज्ञानोपदेशः । | २११ |
| ३७ | इन्द्रस्य गुरुणा संवादः । | २१८ |
| ३८ | इन्द्रस्य ब्रह्माणं प्रति गमनम् । ब्रह्मणा स हेन्द्रस्य वैकुण्ठगमनम् । लक्ष्म्या वासस्य योग्यस्थानानि । | २२० |
| ३९ | लक्ष्म्या ध्यानं स्तोत्रं पूजा च | २२३ |
| ४० | स्वाहोपाख्यानम् । | २२७ |
| ४१ | स्वधोपाख्यानम् । | २२९ |
| ४२ | दक्षिणोपाख्यानम् । | २३१ |
| ४३ | षष्ठीदेव्युपाख्यानम् । | २३५ |
| ४४ | मङ्गलचण्ड्या उपाख्यानम् । | २३९ |
| ४५ | मनसादेव्युपाख्यानम् । | २४१ |
| ४६ | मनसादेवीस्तोत्रादि । | २४३ |
| ४७ | सुरभिकथा । | २४८ |
| ४८ | नारायणी कथा । राधोपा० | २४९ |
| ४९ | राधासुदाम्नोः परस्परं शापकथनम् । | २५३ |
| ५० | सुयज्ञकथा । सुयज्ञाय यज्ञेऽनाहूतविप्रशापः । | २५५ |
| ५१ | ऋषिभिः पापकर्मणां तत्फलानां च कथनम् । | २५७ |
| ५२ | कृतघ्नताप्रकारः । तदादिकृतं पापं दण्डश्च । | २६१ |
| ५३ | सुयज्ञसुतपःसंवादे तत्कथितं विष्णुस्वरूपम् । | २६३ |
| ५४ | गोलोकवर्णनम् । विश्ववर्णनम् । कालमानम् । चतुर्दश मनवः । सप्त चिरंजीविनः । प्रलयवर्णनम् । तदा लोकस्थितिः । विप्रपादोदकमाहात्म्यवर्णनम् । सुतपसा सुयज्ञाय राधामन्त्राद्युपदेशः । सुयज्ञस्य गोलोकदर्शनम् । गोलोकदर्शनेऽधिकारिणः तत्र विष्णुस्वरूपम् । | २६५ |
| ५५ | राधापूजापद्धतिः । | २७२ |
| ५६ | राधाकवचम् । | २७७ |
| ५७ | दुर्गोपाख्यानम् । | २८० |
| ५८ | सुरथस्य राज्ञो वंशवर्णनम् । गुरुपत्न्यां तारायां चन्द्राद्बुधोत्पत्तिः । चन्द्रस्य कलङ्कप्राप्तिः । चन्द्राय शुक्रशापः । परस्त्रीगमने दोषः । स्त्रीपुरुषाणां च कर्मविशेषान्नरकविशेषाः । | २८१ |
| ५९ | तारान्वेषणाय बृहस्पतिना स्वशिष्यस्य प्रेषणम् । बृ· | २८६ |

| अध्यायाङ्काः। | विषयाः। | पृष्ठाङ्काः। |
|---|---|---|
| | हस्पतेः शोकः। इन्द्रबृहस्पत्योः संवादः। | |
| १० | बृहस्पतेः कैलासगमनम्। शिवबृहस्पत्योराज्ञप्तिविज्ञप्ती। देवानां नर्मदातीर आगमनम्। | २९० |
| ११ | ब्रह्मणस्तारान्वेषणाय शुक्रगृहे गमनम्। गुरोस्ताराप्राप्तिः। बुधाच्चित्रायां चैत्रोत्पत्तिः। तस्य पुत्रोऽजरथः। | २९४ |
| १२ | नन्दिराजेन पराजितस्य सुरथस्यारण्ये मेधोमहर्ष्याश्रमगमनम्। तस्य समाधिवैश्येन सह संगमः। तयोर्मेधसः आश्रमे गमनम्। तयोस्तन्महर्षिणा सहोक्तिप्रत्युक्ती। तयोर्महर्षिकृतमन्त्रोपदेशश्च। | २९९ |
| १३ | समाधिकृता देव्याः स्तुतिः। तत्तपश्चर्या। तत्फलं कृष्णदास्यम्। | ३०१ |
| १४ | राजकृतादेवीपूजापद्धति | ३०३ |
| १५ | सुरथराजस्य ज्ञानप्राप्तिः। | ३०७ |
| १६ | दुर्गायाः स्तोत्रम्। | ३०९ |
| १७ | दुर्गायाः कवचम्। | ३११ |


इति प्रकृतिखण्डम्॥२॥

अथ गणपतिखण्डम्।


| अध्यायाङ्काः। | विषयाः। | पृष्ठाङ्काः। |
|---|---|---|
| १ | पार्वत्युत्पत्तिः। शिवेन समागमः। पार्वतीसङ्गतस्य शिवस्य देवैः कृतो गर्भविघ्नः। भूपतिताशिववीर्येण स्कन्दोत्पत्तिप्रक्रिया। | ३१३ |
| २ | रतिघातकेभ्यो देवेभ्यः पार्वत्याः शापः। शिवकृतं तत्सान्त्वनम्। तस्याः पुत्राभावाद्दुःखम्। | ३१५ |
| ३ | पुत्रप्राप्तये तस्याः श्रीकृष्णव्रतोपदेशः। तत्फलं च। | ३१६ |
| ४ | व्रतोपकरणानि। व्रतविधानं च। | ३१८ |
| ५ | व्रतमाहात्म्यकथा। शिवस्य तपसे गमनम्। | ३२२ |
| ६ | विष्णुना शिवाय वरदानम्। श्रीकृष्णव्रतकरण आज्ञाग्रहणं च। | ३२३ |
| ७ | व्रतविषये हरेराज्ञा। पार्वतीकृतव्रतविधानम्। व्रतान्ते पुरोहितयाचितदक्षिणाश्रवणमूर्च्छितायाः पार्वत्या देवानां समाधानोक्तावुत्तरम्। विष्णुना धर्मप्राधान्यवर्णनम्। पार्वत्यै नारायणकृतोपदेशः। पार्वतीकृतनारायणस्तोत्रम्। | ३२८ |

| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| ८ | पार्वत्या वरप्राप्तिः । पुनः पार्वत्या संगते शिवे गर्भाविज्ञाय वृद्धविप्रवेषेण विष्णोरागमनम् । तदा भू-पतितशिववीर्येण गणेशो-त्पत्तिः । | ३३४ |
| ९ | निरोहितविप्रवेषस्यां पार्वत्यां गृहाभ्यन्तरे गणे-शजन्मनिबन्धनाकाशवा-णीप्रवृत्तिः । पार्वत्याऽत्र गणेशदर्शनम् । | ३३८ |
| १० | पुत्रोत्पत्तौ कृतानि दाना-नि । देवानामाशीर्वचनम् । | ३४० |
| ११ | गणेशदर्शनायाऽऽगतस्य शनैश्चरस्याधोमुखं दृष्ट्वा पार्वत्या उक्तिप्रत्युक्ती । | ३४२ |
| १२ | शनिना दृष्टमात्रस्य गणेश-स्य मस्तकपाते तत्र देवै-र्गजमस्तकसंयोजनम् । | ३४३ |
| १३ | विष्णुकृतगणेशस्तोत्रम् । गणेशपूजा । | ३४६ |
| १४ | सभायां कार्तिकेयोत्पत्ति-वार्ता । | ३५१ |
| १५ | कार्तिकेयानयनाय शिवदू-तानां कृत्तिकागृहे गमनम् । तत्र नन्दिकार्तिकेयसंवा-दश्च । | ३५३ |
| १६ | कृत्तिकाभिः सार्धं स्कन्दस्य तत्र देवसभायामागमनम् । | ३५५ |
| १७ | स्कन्दस्य सेनानीत्वेऽभिषेकः । | ३५८ |
| १८ | गणपतिशिरश्छेदे हेतुः । शिवाय कश्यपशापः । | ३५९ |
| १९ | सूर्यस्य पूजनं स्तोत्रं च । | ३६० |
| २० | गणपतौ गजमुखयोजने हेतुः ( तत्रेन्द्रस्य भ्रष्टश्री-कत्वम् ) । | ३६२ |
| २१ | पुनरिन्द्रस्य लक्ष्मीप्राप्तिः । | ३६५ |
| २२ | लक्ष्म्याः स्तोत्रं कवचं च । | ३६६ |
| २३ | लक्ष्म्योक्तं स्वनिवासयोग्य-स्थानवर्णनम् । | ३६८ |
| २४ | गणेशस्यैकदन्तत्वे हेतुः । जमदग्निकार्तवीर्ययोः कपि-लागोनिमित्ते युद्धारम्भः । | ३७० |
| २५ | जमदग्निकार्तवीर्ययोर्युद्धव० । | ३७३ |
| २६ | जमदग्निकार्तवीर्यार्जुनयो-र्ब्रह्मणा स्वयमागत्य युद्धनि० । | ३७५ |
| २७ | तयोः पुनर्युद्धम् । तत्र मृते जमदग्नौ रेणुकाशोकः । तदा परशुरामागमनम् । कार्त-वीर्याय शापदानम् । तद्व-धे तत्प्रतिज्ञा । | ३७६ |
| २८ | तस्योत्तरक्रिया भृगूपदिष्ट रीत्या तस्योद्धारश्च । | ३७९ |
| २९ | तदर्थं परशुरामस्य तपश्चर्या | ३८२ |
| ३० | शिवपार्वतीभ्यां परशुरा-मस्य वरयाचना । शंकरेण श्रीकृष्णकवचादिदानम् । | ३८५ |
| ३१ | शिवकथितं श्रीकृष्णकव०-चम् । | ३८६ |

| अध्यायाङ्काः । | विषयाः । | पृष्ठाङ्काः । |
|---|---|---|
| ३२ | अथ शिवकथितं कृष्णस्तोत्रं मन्त्रः पूजाविधानं च । | ३८९ |
| ३३ | पुनः परशुरामस्य पुष्करतीर्थे तपश्चर्या । तस्य स्वप्नदर्शनं च । | ३९२ |
| ३४ | रामस्य कार्तवीर्यं प्रति दूतप्रेषणम् । तयोः संवादः । कार्तवीर्यस्याशुभदर्शनम् । | ३९४ |
| ३५ | कार्तवीर्यपत्न्या मनोरमाया देहत्यागः । राज्ञोऽनुतापः । आकाशवाण्या राज्ञो बोधः । भार्गवेण राज्ञो युद्धारम्भः । | ३९८ |
| ३६ | कार्तवीर्यप्रेरितानां राज्ञां नाशः । सुचन्द्रेण राज्ञा सह रामस्य युद्धम् । | ४०३ |
| ३७ | कालीकवचम् । | ४०५ |
| ३८ | सुचन्द्रवधेऽपरै राजेन्द्रादिभिर्युद्धम् । रामेण पाशुपतास्त्रग्रहे लक्ष्मीकवचप्राप्तिः । | ४०७ |
| ३९ | दुर्गाकवचम् । कार्तवीर्यस्य स्वतो युद्धाय गमनम् । | ४१० |
| ४० | रामकार्तवीर्ययोस्तुमुलसंग्रामवर्णनम् । पाशुपतास्त्रेण कार्तवीर्यवधः । परशुरामेणैकविंशतिकृत्वः क्षत्रियाणां वधः । | ४१२ |
| ४१ | महीं निःक्षत्रियां कृत्वा रामस्य कैलासगमनम् । | ४१६ |
| ४२ | रहःस्थितयोः शिवयोः समीपगमने परशुरामस्य गणपतिं प्रति प्रार्थना । तदा तयोः परस्परं विवादः । | ४१७ |
| ४३ | परशुरामस्यान्तःपुरगमने पुनर्गणपतिकृतो महान्निरोधः । | ४२१ |
| ४४ | तदा तयोर्युद्धे गणेशदन्तस्य भङ्गः । ततस्तत्राऽऽगत्य पार्वत्यां रामं हन्तुमुद्यतायां रामकृतं विष्णुस्तोत्रम् । | ४२२ |
| ४५ | विष्णुना गौरीप्रीतये रामाय गणेशस्तवाद्युपदेशः । परशुरामकृतं दुर्गास्तोत्रम् । | ४२७ |
| ४६ | स्वसङ्गमायाऽऽगतायास्तुलस्या गणेशकृतं निवारणम् । गणेशतुलसीसंवादः । अस्य गणेशखण्डस्य पठनादेः फलश्रुतिः । | ४३० |
| | इति गणपतिखण्डम् ॥ | |


समाप्तेयं श्रीमद्ब्रह्मवैवर्तपुराणप्रथमभागविषयानुक्रमणिका ।

====

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं—

# ब्रह्मवैवर्तपुराणम् ।

## तत्राऽऽदिमं ब्रह्मखण्डम् ।

### अथ प्रथमोऽध्यायः ।

गणेशब्रह्मेशसुरेशशेषाः सुराश्च सर्वे मनवो मुनीन्द्राः ।
सरस्वतीश्रीगिरिजादिकाश्च यं नमन्ति देव्यः प्रणमामि तं विभुम् ॥ १ ॥
स्थूलस्तनूर्विदधतं त्रिगुणं विराजं विश्वानि लोमविवरेषु महान्तमाद्यम् ।
सृष्ट्युन्मुखः स्वकलयाऽपि ससर्ज सूक्ष्मं नित्यं समेत्य हृदि यस्तमजं भजामि ॥

ध्यायन्ते ध्याननिष्ठाः सुरनरमनवो योगिनो योगरूढाः
सन्तः स्वप्नेऽपि सन्तं कतिकतिजनिभिर्यं न पश्यन्ति तत्त्वा ।
ध्याये स्वेच्छामयं तं त्रिगुणपरमहो निर्विकारं निरीहं
भक्त्या ध्यानैकहेतोर्निरुपमरुचिरश्यामरूपं दधानम् ॥ ३ ॥

वन्दे कृष्णं गुणातीतं परं ब्रह्माच्युतं यतः ।
आविर्बभूवुः प्रकृतिब्रह्मविष्णुशिवादयः ॥ ४ ॥

ॐ नमो भगवते वासुदेवाय । ( * ॐ नमः सर्वलोकविघ्नविनायकाय । ॐ नमो ब्रह्मणे । ॐ नमः शिवाय । ॐ नमो गणपतये । ॐ नमो नारदाय । ॐ नमो व्यासाय । ॐ नमः प्रकृत्यै ) ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अमृतपरमपूर्वं भारतीकामधेनुं श्रुतिगणकृतवत्सो व्यासदेवो दुदोह ।
अतिरुचिरपुराणं ब्रह्मवैवर्तमेतत्पिबत पिबत मुग्धा दुर्लभमक्षयमिष्टम् ॥ ५ ॥

भारते नैमिषारण्ये ऋषयः शौनकादयः । नित्यां नैमित्तिकीं कृत्वा क्रियामूषुः कुशासने ॥

* धनुश्चिह्नितोऽयं ग्रन्थः ख. पुस्तके नास्ति ।

१ क. मायः । २ क. स्वप्नेऽपि नित्यं । ४ क. तमः ।

एतस्मिन्नन्तरे सौतिमागच्छन्तं यदृच्छया। प्रणतं सुविनीतं तं विलोक्य ददुरासनम्॥ ४॥
तं संपूज्यातिथिं भक्त्या शौनको मुनिपुंगवः। पप्रच्छ कुशलं शान्तं शान्तः पौराणिकं मुदा
वर्त्मायासविनिर्मुक्तं वसन्तं सुस्थिरासने। सस्मितं सर्वतत्त्वज्ञं पुराणानां पुराणवित्॥
परं कृष्णकथोपेतं पुराणं श्रुतिसंमतम्। मङ्गलं मङ्गलार्हं च मङ्गल्यं मङ्गलालयम्॥
सर्वमङ्गलबीजं च सर्वदा मङ्गलप्रदम्। सर्वामङ्गलनिघ्नं च सर्वसंपत्करं परम्॥ ८॥
हरिभक्तिप्रदं शश्वत्सुखदं मोक्षदं भवेत्। तत्त्वज्ञानप्रदं दारपुत्रपौत्रविवर्धनम्॥ ९॥
पप्रच्छ सुविनीतं च सुप्रीतो मुनिसंसदि। यथाऽऽकाशे तारकाणां द्विजराजो विराजते॥

शौनक उवाच—

प्रस्थानं भवतः कुत्र कुत आयासि ते शिवम्। किमस्माकं पुण्यदिनमद्य त्वद्दर्शनेन च॥
वयमेव कलौ भीता विशिष्टज्ञानवर्जिताः। मुमुक्षवो भवे मग्नास्तद्धेतुस्त्वमिहागतः॥
भवान्साधुर्महाभागः पुराणेषु पुराणवित्। सर्वेषु च पुराणेषु निष्णातोऽतिकृपानिधिः॥
श्रीकृष्णे निश्चला भक्तिर्यतो भवति शाश्वती। तत्कथ्यतां महाभाग पुराणं ज्ञानवर्धनम्॥
गरीयसी या साक्षाच्च कर्ममूलनिकृन्तनी। संसारसंनिबद्धानां निगडच्छेदकर्तरी १९
भवदावाग्निदग्धानां पीयूषवृष्टिवर्षिणी। सुखदाऽऽनन्ददा सौते शश्वच्चेतसि जीविनाम्॥
यत्राऽऽदौ सर्वबीजं च परं ब्रह्मनिरूपणम्। तस्य सृष्ट्युन्मुखस्यापि सृष्टेरुत्कीर्तनं परम्॥
साकारं वा निराकारं परमात्मस्वरूपकम्। किमाकारं च तद्ब्रह्म तद्ध्यानं किं च भावनम्॥
ध्यायन्ते वैष्णवाः किं वा शान्ताश्च योगिनस्तथा। मतं प्रधानं केषां वा गूढं वेदे निरूपितम्
प्रकृतेश्च य आकारो यत्र वत्स निरूपितः। गुणानां लक्षणं यत्र महदादेश्च निश्चयः॥
गोलोकवर्णनं यत्र यत्र वैकुण्ठवर्णनम्। वर्णनं शिवलोकस्य यत्रान्यत्स्वर्गवर्णनम्॥ २१॥
अंशानां च कलानां च यत्र सौते निरूपणम्। के प्राकृताः का प्रकृतिः क आत्मा प्रकृतेः परः॥ २२॥
निगूढं जन्म येषां वा देवानां देवयोषिताम्। समुत्पत्तिः समुद्राणां शैलानां सरितामपि॥
के वांऽशाः प्रकृतेश्चापि कलाः का वा कलाकलाः। तासां च चरितं ध्यानं पूजास्तोत्रादिकं शुभम्॥ २४॥
दुर्गासरस्वतीलक्ष्मीसावित्रीणां च वर्णनम्। यत्रैव राधिकाख्यानमत्यपूर्वं सुधोपमम्॥
जीवकर्मविपाकश्च नरकाणां च वर्णनम्। कर्मणां खण्डनं यत्र यत्र तेभ्यो विमोक्षणम्॥

---

१ क. °ण्णवरोपे°। २ क. °तिसुन्दरम्। ३ क. °लविघ्नं। ४ क. सुमहाभागो विनीं। ५ क. ख °किमाका°।

येषां च जीविनां यद्यत्स्थानं यत्र शुभाशुभम् । जीविनां कर्मणो यस्माद्यासु यासु च योनिषु ॥ २७ ॥
जीवानां कर्मणो यस्माद्यो यो रोगो भवेदिह । मोक्षणं कर्मणो यस्मात्तेषां च तान्निरूपय ॥
मनसा तुलसी काली गङ्गा पृथ्वी वसुंधरा । आसां यत्र शुभाख्यानमन्यासामपि यत्र वै ॥
शालग्रामशिलानां च दानानां च निरूपणम् । अपूर्वं यत्र वा सौते धर्माधर्मनिरूपणम् ॥
गणेश्वरस्य[1] चरितं यत्र तज्जन्म कर्म च । कवचस्तोत्रमन्त्राणां गूढानां यत्र वर्णनम् ॥
यदपूर्वमुपाख्यानमश्रुतं परमाद्भुतम् । कृत्वा मनसि तत्सर्वं सांप्रतं वक्तुमर्हसि ॥ ३२ ॥
यत्र जन्मभ्रमो विश्वे पुण्यक्षेत्रे च भारते । परिपूर्णतमस्यापि कृष्णस्य परमात्मनः ॥
जन्म कस्य गृहे लब्धं पुण्ये पुण्यवतो मुने । सुतं प्रसूता का धन्या मान्या पुण्यवती सती ॥
आविर्भूय च तद्गेहात्क गतः केन हेतुना । गत्वा किं कृतवांस्तत्र कथं वा पुनरागतः ॥
भारावतरणं केन प्रार्थितो गोश्चकार सः । विधाय किंवा सेतुं च गोलोकं गतवान्पुनः ॥
इतीदमन्यदाख्यानं पुराणं श्रुतिदुर्लभम् । दुर्विज्ञेयं मुनीनां च मनोनिर्मलकारणम् ॥
स्वज्ञानाद्यन्मया पृष्टमपृष्टं वा शुभाशुभम् । सद्यो वैराग्यजननं तन्मे व्याख्यातुमर्हसि ॥
शिष्यपृष्टमपृष्टं वा व्याख्यानं कुरुते च यः । स सद्गुरुः सतां श्रेष्ठो योग्यायोग्ये च यः समः ॥

सौतिरुवाच—

सर्वं कुशलमस्माकं त्वत्पादपद्मदर्शनात् । सिद्धक्षेत्रादागतोऽहं यामि नारायणाश्रमम् ॥
दृष्ट्वा विप्रसमूहं च नमस्कर्तुमिहागतः । द्रष्टुं च नैमिषारण्यं पुण्यदं चापि भारते[2] ॥ ४१ ॥
देवं विप्रं गुरुं दृष्ट्वा न नमेद्यस्तु संभ्रमात् । स कालसूत्रं व्रजति यावच्चन्द्रदिवाकरौ ॥
हरिर्ब्राह्मणरूपेण शश्वद्भ्रमति भूतले । सुकृती प्रणमेत्पुण्याद्ब्राह्मणं हरिरूपिणम् ॥ ४३ ॥
भगवन्यत्त्वया पृष्टं ज्ञातं सर्वमभीप्सितम् । सारभूतं पुराणेषु ब्रह्मवैवर्तमुत्तमम् ॥ ४४ ॥
पुराणोपपुराणानां वेदानां भ्रमभञ्जनम् । हरिभक्तिप्रदं सर्वतत्त्वज्ञानविवर्धनम् ॥ ४५ ॥
कामिनां कामदं चेदं मुमुक्षूणां च मोक्षदम् । भक्तिप्रदं वैष्णवानां कल्पवृक्षस्वरूपकम् ॥
ब्रह्मखण्डे सर्वबीजं परब्रह्मनिरूपणम् । ध्यायन्ते योगिनः सन्तो वैष्णवा यत्परात्परम् ॥
वैष्णवा योगिनः सन्तो न च भिन्नाश्च शौनक । स्वज्ञानपरिपाकेन भवन्ति जीविनः क्रमात् ॥
सन्तो भवन्ति सत्सङ्गाद्योगिसंगेन योगिनः । वैष्णवा भक्तसंगेन क्रमात्सद्योगिनः पराः ॥
यत्रोद्भवश्च देवानां देवीनां सर्वजीविनाम् । ततः प्रकृतिखण्डे च देवीनां चरितं शुभम् ॥

१ क. 'स्य देवस्य उत्पत्तिजं' । २ क. भारते । ३ क. 'कृतिस्तं नमे' । ४ ख. 'खण्डं स' ।

जीवकर्मविपाकश्च शालग्रामनिरूपणम् । तासां च कवचस्तोत्रमन्त्रपूजानिरूपणम् ॥
प्रकृतेर्लक्षणं तत्र कलांशानां निरूपणम् । कीर्तिरूकीर्तनं तासां प्रभावश्च निरूपितः ॥
प्रकृतीनां सुकृतिनामपाख्यानं शुभाशुभम् । वर्णनं नरकाणां च रोगाणां मोक्षणं ततः ॥
ततो गणेशखण्डे च तज्जन्म परिकीर्तितम् । अतीवापूर्वचरितं श्रुतिवेदसुदुर्लभम् ॥६०॥
गणेशभृगुसंवादे सर्वतत्त्वनिरूपणम् । निगूढकवचस्तोत्रमन्त्रतन्त्रनिरूपणम् ॥ ६१ ॥
श्रीकृष्णजन्मखण्डं च कीर्तितं च ततः परम् । भारते पुण्यक्षेत्रे च श्रीकृष्णजन्मकर्म च ॥
भुवो भारावतरणं क्रीडाकौतुकमङ्गलम् । सतां सेतुविधानं च जन्मखण्डे निरूपितम् ॥
इदं ते कथितं विप्र पुराणप्रवरं परम् । चतुष्खण्डैः परिमितं सर्वधर्मनिरूपणम् ॥६४॥
सर्वेषामीप्सितं चेदं सर्वाशापूर्णकारकम् । ब्रह्मवैवर्तकं नाम सर्वाभीष्टफलप्रदम् ॥६५॥
सारभूतं पुराणेषु केवलं वेदसंमतम् । विवृतं ब्रह्म कात्स्न्र्यं च कृष्णेन यत्र शौनक ॥
ब्रह्मवैवर्तकं तेन प्रवदन्ति पुराविदः ॥ ६६ ॥
इदं पुराणसूत्रं च पुरा दत्तं च ब्रह्मणे । निरामये च गोलोके कृष्णेन परमात्मना ॥
महातीर्थे पुष्करे च दत्तं धर्माय ब्रह्मणा । धर्मेण दत्तं पुत्राय प्रीत्या नारायणाय च ॥
* नारायणर्षिर्भगवान्प्रददौ नारदाय च । नारदो व्यासदेवाय प्रददौ जाह्नवीतटे ॥
व्यासः पुराणसूत्रं तत्संन्यस्य विपुलं महत् । मह्यं ददौ सिद्धक्षेत्रे पुण्यदेशे मनोहरम् ॥
मयेदं कथितं ब्रह्मंस्तत्समग्रं निशामय । अष्टादशसहस्रं तु व्यासेनेदं पुराणकम् ॥६६॥
पुराणकात्स्न्र्यश्रवणे यत्फलं लभते नरः । तत्फलं लभते नूनमध्यायश्रवणेन च ॥६७॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डेऽनुक्रमणिका-
नाम प्रथमोऽध्यायः ॥ १ ॥

===

**शौनक उवाच—**

किमपूर्वं श्रुतं सौते परमाद्भुतदर्शनम् । सर्वं कथय संन्यस्य ब्रह्मखण्डमनुत्तमम् ॥१॥

**सौतिरुवाच—**

वन्दे गुरोः पादपद्मं स्नात्वा तीर्थमभीप्सितम् । हरिं देवान्द्विजान्नत्वा धर्मान्वक्ष्ये सनातनान् ॥

---

* इदं श्लोकार्धं ख. पुस्तके नास्ति ।

---

१ क. °प्सिततमं च° । २ ख. °रणम् । ३ ख. °मितम् । ४ क. सिद्धिक्षेत्रे । ५ ख. °तमीप्सितम् ।

यच्छ्रुतं व्यासवक्त्रेण ब्रह्मखण्डमनुत्तमम्। अज्ञानान्धतमोध्वंसि ज्ञानवर्त्मप्रदीपकम् ॥२॥
ज्योतिःसमूहं प्रलये पुराऽऽसीत्केवलं द्विज। सूर्यकोटिप्रभं नित्यमसंख्यं विश्वकारणम् ॥
स्वेच्छामयस्य च विभोस्तज्ज्योतिरुज्ज्वलं महत्। ज्योतिरभ्यन्तरे लोकत्रयमेव मनोहरम् ॥
तेषामुपरि गोलोकं नित्यमीश्वरवद्द्विज। त्रिकोटियोजनायामं विस्तीर्णं मण्डलाकृति ॥६॥
तेजःस्वरूपं सुमहद्रत्नभूमिमयं परम्। अदृश्यं योगिभिः स्वप्ने दृश्यं गम्यं च वैष्णवैः ॥
योगेन धृतमीशेन चान्तरिक्षस्थितं वरम्। आधिव्याधिजरामृत्युशोकभीतिविवर्जितम् ॥
सद्रत्नरचितासंख्यमन्दिरैः परिशोभितम्। लये कृष्णयुतं सृष्टौ गोपगोपीभिरावृतम् ॥
तदधो दक्षिणे सव्ये पञ्चाशत्कोटियोजनात्। वैकुण्ठं शिवलोकं तु तत्समं सुमनोहरम् ॥
कोटियोजनविस्तीर्णं वैकुण्ठं मण्डलाकृति। लये शून्यं च सृष्टौ च लक्ष्मीनारायणान्वितम् ॥
चतुर्भुजैः पार्षदैश्च जरामृत्य्वादिवर्जितम्। सव्ये च शिवलोकं च कोटियोजनविस्तृतम् ॥
लये शून्यं च सृष्टौ च सपार्षदशिवान्वितम्। गोलोकाभ्यन्तरे ज्योतिरतीवसुमनोहरम् ॥
परमाह्लादकं शश्वत्परमानन्दकारकम्। ध्यायन्ते योगिनः शश्वद्योगेन ज्ञानचक्षुषा ॥१४॥
तदेवानन्दजनकं निराकारं परात्परम्। तज्ज्योतिरन्तरे रूपमतीवसुमनोहरम् ॥ १५ ॥
नवीननीरदश्यामं रक्तपङ्कजलोचनम्। शारदीयपार्वणेन्दुशोभितं चामलाननम् ॥१६॥
कोटिकन्दर्पलावण्यं लीलाधाम मनोरमम्। द्विभुजं मुरलीहस्तं सस्मितं पीतवाससम् ॥१७॥
सद्रत्नभूषणौघेन भूषितं भक्तवत्सलम्। चन्दनोक्षितसर्वाङ्गं कस्तूरीकुङ्कुमान्वितम् ॥१८॥
श्रीवत्सवक्षःसंभ्राजत्कौस्तुभेन विराजितम्। सद्रत्नसाररचितकिरीटमुकुटोज्ज्वलम् ॥१९॥
रत्नसिंहासनस्थं च वनमालाविभूषितम्। तदेव परमं ब्रह्म भगवन्तं सनातनम् ॥२०॥
स्वेच्छामयं सर्वबीजं सर्वाधारं परात्परम्। किशोरवयसं शश्वद्गोपवेषविधायकम् ॥२१॥
कोटिपूर्णेन्दुशोभाढ्यं भक्तानुग्रहकारकम्। निरीहं निर्विकारं च परिपूर्णतमं विभुम् ॥
रासमण्डलमध्यस्थं शान्तं रासेश्वरं वरम्। माङ्गल्यं मङ्गलार्हं च मङ्गलं मङ्गलप्रदम् ॥
परमानन्दबीजं च सत्यमक्षरमव्ययम्। सर्वसिद्धेश्वरं सर्वसिद्धिरूपं च सिद्धिदम् ॥२४॥
प्रकृतेः परमीशानं निर्गुणं नित्यविग्रहम्। आद्यं पुरुषमव्यक्तं पुरुहूतं पुरुष्टुतम् ॥२५॥
सत्यं स्वतन्त्रमेकं च परमात्मस्वरूपकम्। ध्यायन्ते वैष्णवाः शान्ताः शान्तं तत्परमायणम्
एवं रूपं परं बिभ्रद्भगवानेक एव सः। दिग्भिश्च नभसा सार्धं शून्यं विश्वं ददर्श ह ॥

---

१ क. 'त्यवमध्ये' । २ क. 'द्रत्नैर्भूषणैः प्रेमभू' । ३ क. 'वे ह्रदं हरिम्' । ४ क. 'न्दराजं' ।
५ क. 'रं विद्धयि' । ६ क. एकं क' ।

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे परब्रह्मनि-
रूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

====

सौतिरुवाच –

दृष्ट्वा शून्यमयं विश्वं गोलोकं च भयंकरम्[१]। निर्जन्तु निर्जलं घोरं निर्वातं तमसाऽऽवृतम्
वृक्षशैलसमुद्रादिविहीनं विकृताकृतिम्। निर्मूर्त्तिकं च निर्धातुं निःसस्यं निस्तृणं द्विज ॥
आलोच्य मनसा सर्वमेक एवासहायवान्। स्वेच्छया स्रष्टुमारेमे सृष्टिं स्वेच्छामयः प्रभुः
आविर्बभूवुः सर्गादौ पुंसो दक्षिणपार्श्वतः। भवकारणरूपाश्च मूर्तिमन्तस्त्रयो गुणाः॥४॥
ततो महानहंकारः पञ्चतन्मात्र एव च। रूपरसगन्धस्पर्शशब्दाश्चैवेतिसंज्ञकाः॥५॥
आविर्बभूव तत्पश्चात्स्वयं नारायणः प्रभुः। श्यामो युवा पीतवासा वनमाली चतुर्भुजः॥
शङ्खचक्रगदापद्मधरः स्मेरमुखाम्बुजः। रत्नभूषणभूषाढ्यः शार्ङ्गी कौस्तुभभूषणः ७
श्रीवत्सवक्षाः श्रीवासः श्रीनिधिः श्रीविभावनः। शारदेन्दुप्रभामृष्टमुखेन्दुसुमनोहरः॥
कामदेवप्रभामृष्टरूपलावण्यसुन्दरः। श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः॥९॥

नारायण उवाच—

वरं वरेण्यं वरदं वरार्हं वरकारणम्। कारणं कारणानां च कर्म तत्कर्मकारणम्॥१०॥
तपस्तत्फलदं शश्वत्तपस्वीशं च तापसम्। वन्दे नवघनश्यामं स्वात्मारामं मनोहरम्॥
निष्कामं कामरूपं च कामघ्नं कामकारणम्। सर्वं सर्वेश्वरं सर्वबीजरूपमनुत्तमम्॥१२॥
वेदरूपं वेदबीजं वेदोक्तफलदं फलम्। वेदज्ञं तद्विधानं च सर्ववेदविदां वरम्॥१३॥
इत्युक्त्वा भक्तियुक्तश्च स उवास तदाज्ञया। रत्नसिंहासने रम्ये पुरतः परमात्मनः॥
नारायणकृतं स्तोत्रं यः पठेत्सुसमाहितः। त्रिसंध्यं यः पठेन्नित्यं पापं तस्य न विद्यते॥
पुत्रार्थी लभते पुत्रं भार्यार्थी लभते प्रियाम्। भ्रष्टराज्यो लभेद्राज्यं धनं भ्रष्टधनो लभेत्॥
कारागारे विपद्ग्रस्तः स्तोत्रेणानेन मुच्यते। रोगात्प्रमुच्यते रोगी वर्षं श्रुत्वा च संयतः॥

इति ब्रह्मवैवर्ते नारायणकृतं श्रीकृष्णस्तोत्रम्॥

---

सौतिरुवाच—

आविर्बभूव तत्पश्चादात्मनो वामपार्श्वतः। शुद्धस्फटिकसंकाशः पञ्चवक्त्रो दिगम्बरः॥

---

१ ख. निर्मुक्तिकं। २ क. सर्वादौ। ३ क. 'भपूर्वं च'। ४ ख. 'दभवं वे'। ५ ख. 'गी
ध्रुवं ध्रु'।

तप्तकाञ्चनवर्णाभजटाभारधरो वरः । ईषद्धास्यप्रसन्नास्यस्त्रिनेत्रश्चन्द्रशेखरः ॥ १९ ॥
त्रिशूलपट्टिशधरो जपमालाकरः परः । सर्वसिद्धेश्वरः सिद्धो योगीन्द्राणां गुरोर्गुरुः ॥
मृत्योर्मृत्युरीश्वरश्च मृत्युर्मृत्युंजयः शिवः। ज्ञानानन्दो महाज्ञानी महाज्ञानप्रदः परः॥
पूर्णचन्द्रप्रभामृष्टसुखदृश्यो मनोहरः । वैष्णवानां च प्रवरः प्रज्वलन्ब्रह्मतेजसा ॥२२॥
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रोऽतिगद्गदः

महादेव उवाच—

जयस्वरूपं जयदं जयेशं जयकारणम् । प्रवरं जयदानां च वन्दे तमपराजितम् ॥२४॥
विश्वं विश्वेश्वरेशं च विश्वेशं विश्वकारणम् । विश्वाधारं च विश्वस्थं विश्वकारणकारणम् ॥
विश्वरक्षाकारणं च विश्वघ्नं विश्वजं परम् । फलबीजं फलाधारं फलं च तत्फलप्रदम् ॥
तेजःस्वरूपं तेजोदं सर्वतेजस्विनां वरम् । इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे ॥
नारायणं च संभाष्य उवास स तदाज्ञया ॥ २७ ॥
इति शंभुकृतं स्तोत्रं यो जनः संयतः पठेत् । सर्वसिद्धिर्भवेत्तस्य विजयं च पदे पदे ॥
संततं वर्धते मित्रं धनमैश्वर्यमेव च । शत्रुसैन्यं क्षयं याति दुःखानि दुरितानि च ॥

इति ब्रह्मवैवर्ते शंभुकृतं श्रीकृष्णस्तोत्रम् ॥

---

सौतिरुवाच—

आविर्बभूव तत्पश्चात्कृष्णस्य नाभिपङ्कजात् । महातपस्वी वृद्धश्च कमण्डलुकरो वरः ॥
शुक्लवासाः शुक्लदन्तः शुक्लकेशश्चतुर्मुखः । योगीशः शिल्पिनामीशः सर्वेषां जनको गुरुः॥
तपसां फलदाता च प्रदाता सर्वसंपदाम् । स्रष्टा विधाता कर्ता च हर्ता च सर्वकर्मणाम् ॥
धाता चतुर्णां वेदानां ज्ञाता वेदप्रसूपतिः । शान्तः सरस्वतीकान्तः सुशीलश्च कृपानिधिः
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः । पुलकाङ्कितसर्वाङ्गो भक्तिनम्रात्मकंधरः ॥

ब्रह्मोवाच—

कृष्णं वन्दे गुणातीतं गोविन्दमेकमक्षरम् । अव्यक्तमव्ययं व्यक्तं गोपवेषविधायिनम् ॥
किशोरवयसं शान्तं गोपीकान्तं मनोहरम् । नवीननीरदश्यामं कोटिकन्दर्पसुन्दरम् ॥
वृन्दावनवनाभ्यर्णे रासमण्डलसंस्थितम् । रासेश्वरं रासवासं रासोल्लाससमुत्सुकम् ॥
इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे । नारायणेशौ संभाष्य स उवास तदाज्ञया ॥

---

१ क. 'दाने च । २ ख. 'स्वर्स वि' ।

इति ब्रह्मकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् । पापानि तस्य नश्यन्ति दुःस्वप्नः सुस्वप्नो भवेत् ॥ ३९ ॥

भक्तिर्भवति गोविन्दे श्रीपुत्रपौत्रवर्धिनी । अकीर्तिः क्षयमाप्नोति सत्कीर्तिर्वर्धते चिरम् ॥

इति ब्रह्मवैवर्ते ब्रह्मकृतं श्रीकृष्णस्तोत्रम् ।

---

सौतिरुवाच—

आविर्बभूव तत्पश्चाद्वक्षसः परमात्मनः । सस्मितः पुरुषः कश्चिच्छुक्लवर्णो जटाधरः ॥

सर्वसाक्षी च सर्वज्ञः सर्वेषां सर्वकर्मणाम् । समः सर्वत्र सदयो हिंसाकोपविवर्जितः ॥

धर्मज्ञानयुतो धर्मो धर्मिष्ठो धर्मदो भवेत् । स एव धर्मिणां धर्मः परमात्मा फलोद्भवः ॥

श्रीकृष्णपुरतः स्थित्वा प्रणम्य दण्डवद्भुवि । तुष्टाव परमात्मानं सर्वेशं सर्वकामदम् ॥

श्रीधर्म उवाच—

कृष्णं विष्णुं वासुदेवं परमात्मानमीश्वरम् । गोविन्दं परमानन्दमेकमक्षरमच्युतम् ॥ ४९ ॥

गोपेश्वरं च गोपीशं गोपं गोरक्षकं विभुम् । गवामीशं च गोष्ठस्थं गोवत्सपुच्छधारिणम् ।

गोगोपगोपीमध्यस्थं प्रधानं पुरुषोत्तमम् । व[1]न्देऽनवद्यमनघं श्यामं शान्तं मनोहरम् ॥

इत्युच्चार्य समुत्तिष्ठन्रत्नसिंहासने वरे । ब्रह्मविष्णुमहेशांस्तान्संभाष्य स उवास ह ॥

चतुर्विंशतिनामानि धर्मवक्त्रोद्गतानि च । यः पठेत्प्रातरुत्थाय स सुखी सर्वतो जयी ॥

मृत्युकाले हरेर्नाम तस्य साध्यं[2] भवेद्ध्रुवम् । स यात्यन्ते हरेः स्थानं हरिदास्यं[3] भवेद्ध्रुवम् ॥ ५० ॥

नित्यं धर्मकृतं पठते नाधर्मे तद्गतिर्भवेत् । चतुर्वर्गफलं तस्य शश्वत्करगतं भवेत् ॥५१॥

तं दृष्ट्वा सर्वपापानि पलायन्ते भयेन च । भयानि चैव दुःखानि वैनतेयमिवोरगाः ॥५२ ।

इति ब्रह्मवैवर्ते धर्मकृतं श्रीकृष्णस्तोत्रम् ॥

---

सौतिरुवाच—

आविर्बभूव कन्यैका धर्मस्य वामपार्श्वतः । मूर्तिर्मूर्तिमती साक्षाद्द्वितीया कमलालया ॥

आविर्बभूव तत्पश्चान्मुखतः परमात्मनः । एका देवी शुक्लवर्णा वीणापुस्तकधारिणी ॥

कोटिपूर्णेन्दुशोभाढ्या शरत्पङ्कजलोचना । वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ॥५५॥

---

१ क. 'न्दे नवघनश्यामं कामवामं भ' । २ क 'वेद्ध्रवि' । ३ क. 'स्यं लभेद्ध्रु' ।

सस्मिता सुमुखी श्यामा सुन्दरीणां च सुन्दरी । श्रेष्ठा श्रुतीनां शास्त्राणां विदुषां जननी परा
वागधिष्ठातृदेवी सा कवीनामिष्टदेवता । शुद्धसत्त्वस्वरूपा च शान्तरूपा सरस्वती ॥
गोविन्दपुरतः स्थित्वा जगौ प्रथमतः सुखम् । तन्नामगुणकीर्तिं च वीणया सा ननर्त च॥
कृतानि यानि कर्माणि कल्पे कल्पे युगे युगे । तानि सर्वाणि हरिणा तुष्टाव च पुटाञ्जलिः ॥

सरस्वत्युवाच—

रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् । रत्नसिंहासनस्थं च रत्नभूषणभूषितम् ॥
रासेश्वरं रासकरं वरं रासेश्वरीश्वरम् । रासाधिष्ठातृदेवं च वन्दे रासविनोदिनम्॥ १
रासायासपरिश्रान्तं रासरासविहारिणम् । रासोत्सुकानां गोपीनां कान्तं शान्तं मनोहरम्
प्रणम्य च तमित्युक्त्वा प्रहृष्टवदना सती । उवास सा सकामा च रत्नसिंहासने वरे ॥
इति वाणीकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् । बुद्धिमान्धनवान्सोऽपि विद्यावान्पुत्र-
वान्सदा ॥ १४ ॥

इति ब्रह्मवैवर्ते सरस्वतीकृतं श्रीकृष्णस्तोत्रम् ॥

---

सौतिरुवाच—

आविर्बभूव मनसः कृष्णस्य परमात्मनः । एका देवी गौरवर्णा रत्नालंकारभूषिता ॥
पीतवस्त्रपरीधाना सस्मिता नवयौवना । सर्वैश्वर्याधिदेवी सा सर्वसंपत्फलप्रदा ॥
स्वर्गे च स्वर्गलक्ष्मीश्च राजलक्ष्मीश्च राजसु ॥ ११ ॥
सा हरेः पुरतः स्थित्वा परमात्मानमीश्वरम् । तुष्टाव प्रणता साध्वी भक्तिनम्रात्मकंधरा ॥

महालक्ष्मीरुवाच—

सत्यस्वरूपं सत्येशं सत्यबीजं सनातनम् । सत्याधारं च सत्यज्ञं सत्यमूलं नमाम्यहम्
इत्युक्त्वा श्रीहरिं नत्वा सा चोवास सुखासने । तप्तकाञ्चनवर्णाभा भासयन्ती दिशस्त्विषा
आविर्बभूव तत्पश्चाद्बुद्धेश्च परमात्मनः । सर्वाधिष्ठातृदेवी सा मूलप्रकृतिरीश्वरी ॥
तप्तकाञ्चनवर्णाभा सूर्यकोटिसमप्रभा । ईषद्धास्यप्रसन्नास्या शरत्पङ्कजलोचना ॥ ७१ ॥
रक्तवस्त्रपरीधाना रत्नाभरणभूषिता । निद्रातृष्णाक्षुत्पिपासादयाश्रद्धाक्षमादिकाः ॥७२॥
तासां च सर्वशक्तीनामीशाऽधिष्ठातृदेवता । भयंकरी शतभुजा दुर्गा दुर्गार्तिनाशिनी ॥
आत्मनः शक्तिरूपा सा जगतां जननी परा । त्रिशूलशक्तिशार्ङ्गं च धनुःखड्गशराणि च ॥

शङ्खचक्रगदापद्ममक्षमालां कमण्डलुम् । वज्रमङ्कुशपाशं च भुशुण्डीदण्डतोमरम् ॥
नारायणास्त्रं ब्रह्मास्त्रं रौद्रं पाशुपतं तथा । पार्जन्यं वारुणं वाह्नं गान्धर्वं बिभ्रती सती
कृष्णस्य पुरतः स्थित्वा तुष्टाव तं मुदान्विता ॥ ७१ ॥

प्रकृतिरुवाच—

अहं प्रकृतिरीशाना सर्वेशा सर्वरूपिणी । सर्वशक्तिस्वरूपा च मया च शक्तिमज्जगत् ॥
त्वया सृष्टा न स्वतन्त्रा त्वमेव जगतां पतिः । गतिश्च पाता स्रष्टा च संहर्ता च पुनर्विधिः
स्रष्टुं स्रष्टा च संहर्तुं संहर्ता वेधसां विधिः । परमानन्दरूपं त्वां वन्दे चाऽऽनन्दपूर्वकम्
चक्षुर्निमेषकाले च ब्रह्मणः पतनं भवेत् ॥ ७९ ॥
तस्य प्रभावमतुलं वर्णितुं कः क्षमो विभो । भ्रूभङ्गलीलामात्रेण विष्णुकोटिं सृजेत्तु यः
चराचरांश्च विश्वेषु देवान्ब्रह्मपुरोगमान् । मद्विधाः कति वा देवीः स्रष्टुं शक्तश्च लीलया
परिपूर्णतमं स्वीड्यं वन्दे चाऽऽनन्दपूर्वकम् । महान्विराड् यत्कलांशो विश्वसंख्याश्रयो विभो
वन्दे चाऽऽनन्दपूर्वं तं परमात्मानमीश्वरम् ॥ ८२ ॥
यं च स्तोतुमशक्ताश्च ब्रह्मविष्णुशिवादयः । वेदा अहं च वाणी च वन्दे तं प्रकृतेः परम् ॥
वेदाश्च विदुषां श्रेष्ठाः स्तोतुं शक्ताश्च लक्ष्यतः । निर्लक्ष्यं कः क्षमः स्तोतुं तं निरीहं नमाम्यहम्
इत्येवमुक्त्वा सा दुर्गा रत्नसिंहासने वरे । उवास नत्वा श्रीकृष्णं तुष्टुवुस्तां सुरेश्वराः ॥
इति दुर्गाकृतं स्तोत्रं कृष्णस्य परमात्मनः । यः पठेदर्चनाकाले स जयी सर्वतः सुखी ॥
दुर्गा तस्य गृहं त्यक्त्वा नैव याति कदाचन । भवाब्धौ यशसा भाति यात्यन्ते श्रीहरेः पुरम्

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे सृष्टि-
निरूपणे दुर्गास्तोत्रं नाम तृतीयोऽध्यायः ॥ ॥ ३ ॥

अथ चतुर्थोऽध्यायः ।

सौतिरुवाच—

आविर्बभूव तत्पश्चात्कृष्णस्य रसनाग्रतः । शुद्धस्फटिकसंकाशा देवी चैका मनोहरा ॥
शुक्लवस्त्रपरीधाना सर्वालंकारभूषिता । बिभ्रती जपमालां च सावित्री सा प्रकीर्तिता ॥
सा तुष्टाव पुरः स्थित्वा परं ब्रह्म सनातनम् । पुटाञ्जलिपरा साध्वी भक्तिनम्रात्मकंधरा ॥

सावित्र्युवाच—

---

१ क. वाह्वं गा° । २ क. स्रष्टुः स्रष्टा च संहर्तुः सं° । ३ क. °चरेषु वि° ।

नमामि सर्वबीजं त्वां ब्रह्मज्योतिः सनातनम् । परात्परतरं श्यामं निर्विकारं निरञ्जनम् ॥४॥
इत्युक्त्वा सस्मिता देवी रत्नसिंहासने वरे । उवास श्रीहरिं नत्वा पुनरेव श्रुतिप्रसूः ॥
आविर्बभूव तत्पश्चात्कृष्णस्य परमात्मनः । मानसाच्च पुमानेकस्तप्तकाञ्चनसंनिभः ॥६॥
मनो मथ्नाति सर्वेषां पञ्चबाणेन कामिनाम् । तन्नाम मन्मथं तेन प्रवदन्ति मनीषिणः ॥
तस्य पुंसो वामपार्श्वात्कामस्य कामिनी वरा । बभूवातीवललिता सर्वेषां मोहकारिणी ॥
रतिर्बभूव सर्वेषां तां दृष्ट्वा सस्मितां सतीम् । रतीति तेन तन्नाम प्रवदन्ति मनीषिणः ॥
हरिं स्तुत्वा तया सार्द्धं स उवास हरेः पुरः । रत्नसिंहासने रम्ये पञ्चबाणो धनुर्धरः ॥
मारणं स्तम्भनं चैव जृम्भणं शोषणं तथा । उन्मादनं पञ्चबाणान्पञ्चबाणो बिभर्ति सः ॥
बाणांश्चिक्षेप सर्वांश्च कामो बाणपरीक्षया । सद्यः सर्वे सकामाश्च बभूवुरीश्वरेच्छया ॥
रतिं दृष्ट्वा ब्रह्मणश्च रेतःपातो बभूव ह । तत्र तस्थौ महायोगी वस्त्रेणाऽऽच्छाद्य लज्जया ॥
वस्त्रं दग्ध्वा समुत्तस्थौ ज्वलदग्निः सुरेश्वरः । कोटितालप्रमाणश्च सशिखश्च समुज्ज्वलन् ॥
कृष्णस्तद्वर्धनं दृष्ट्वा ससर्जापः स्वलीलया । निःश्वासवायुना सार्धं मुखबिन्दून्समुद्गिरन् ॥
विश्वौघं प्लावयामास मुखबिन्दुजलं द्विज । तत्र किंचिज्जलकणं(णो)वह्निं शान्तं चकार ह
ततःप्रभृति तेनाग्निस्तोयान्निर्वाणतां व्रजेत् । आविर्भूतः पुमानेकस्ततस्तदधिदेवता ॥
उत्तस्थौ तज्जलादेकः पुमान्स वरुणः स्मृतः । जलाधिष्ठातृदेवोऽसौ सर्वेषां यादसां पतिः ॥
आविर्बभूव कन्यैका तद्वह्नेर्वामपार्श्वतः । सा स्वाहा वह्निपत्नीं तां प्रवदन्ति मनीषिणः
जलेशस्य वामपार्श्वात्कन्या चैका बभूव सा । वरुणानीति विख्याता वरुणस्य प्रिया सती
बभूव पवनः श्रीमान्विभोर्निःश्वासवायुना । स च प्राणश्च सर्वेषां निःश्वासस्तत्कलोद्भवः
तस्य वायोर्वामपार्श्वात्कन्या चैका बभूव ह । वायोः पत्नी च सा देवी वायवी परिकीर्तिता
कृष्णस्य कामबाणेन रेतःपातो बभूव ह । जले तद्रेचनं चक्रे लज्जया सुरसंसदि ॥
सहस्रवत्सरान्ते तद्डिम्भरूपं बभूव ह । ततो महान्विराड्जज्ञे विश्वौघाधार एव सः ॥
यस्यैकलोमविवरे विश्वैकस्य व्यवस्थितिः । स्थूलात्स्थूलतरः सोऽपि महान्नान्यस्ततः परः ॥
स एव षोडशांशोऽपि कृष्णस्य परमात्मनः । महाविष्णुः स विज्ञेयः सर्वाधारः सनातनः
महार्णवे शयानः स पद्मपत्रं यथा जले । बभूवतुस्तौ द्वौ दैत्यौ तस्य कर्णमलोद्भवौ ॥
तौ जलाच्च समुत्थाय ब्रह्माणं हन्तुमुद्यतौ । नारायणश्च भगवाञ्जघने तौ जघान ह ॥
बभूव मेदिनी कृत्स्ना कात्स्न्र्येन मेदसा तयोः । तत्रैव सन्ति विश्वानि सा च देवी वसुंधरा

---

१ क. °ह्मयोर्नि स° । २ ख. °ने चाऽऽस्य प° । ३ क. °ष्णस्तं दहन । ४ तत्प्रेरणं च° ।
५ क. तद्विन्दुरू° । ६ क. कृष्णा कार्त्स्न्येन मे° ।

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे सृष्टिनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

अथ पञ्चमोऽध्यायः ।

शौनक उवाच—

गोगोपगोप्यो गोलोके किं नित्याः किं नु कल्पिताः । मम संदेहभेदार्थं तन्मे व्याख्यातुमर्हसि ॥ १ ॥

सौतिरुवाच—

सर्वादिसृष्टौ ताः वल्लभ्याः प्रलये[1] कृष्णसंस्थिताः । सर्वादिसृष्टिकथनं यन्मया कथितं द्विज
सर्वादिसृष्टौ वल्लभौ च नारायणमहेश्वरौ । प्रलये प्रलये व्यक्तौ स्थितौ तौ प्रकृतिश्च सा
सर्वादौ ब्रह्मकल्पस्य चरितं कथितं द्विज । वाराहपाद्मकल्पौ द्वौ कथयिष्यामि श्रोष्यसि ॥
ब्राह्मवाराहपाद्माश्च कल्पाश्च त्रिविधा मुने । यथा युगानि चत्वारि क्रमेण कथितानि च ॥
सत्यं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । त्रिशतैश्च षष्ट्यधिकैर्युगैर्दिव्यं युगं स्मृतम् ॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । चतुर्दशेषु मनुषु गतेषु ब्रह्मणो दिनम् ॥७॥
त्रिशतैश्च षष्ट्यधिकैर्दिनैर्वर्षं च ब्रह्मणः । अष्टोत्तरं वर्षशतं विधेरायुर्निरूपितम् ॥८॥
एतन्निमेषकालस्तु कृष्णस्य परमात्मनः । ब्रह्मणश्चाऽऽयुषा कल्पः कालविद्भिर्निरूपितः ॥
क्षुद्रकल्पा बहुतरास्ते संवर्तादयः स्मृताः । सप्तकल्पान्तजीवी च मार्कण्डेयश्च तन्मतः ॥
ब्रह्मणश्च दिनेनैव स कल्पः परिकीर्तितः । विधेश्च सप्तदिवसैर्मुनेरायुर्निरूपितम् ॥११॥
ब्राह्मवाराहपाद्माश्च त्रयः कल्पा निरूपिताः । कल्पत्रये यथा सृष्टिः कथयामि निशामय ॥
ब्राह्मे च मेदिनीं सृष्ट्वा स्रष्टा सृष्टिं चकार सः । मधुकैटभयोश्चैव मेदसा चाऽऽज्ञया प्रभोः
वाराहे तां समुद्धृत्य लुप्तां मग्नां रसातलात् । विष्णोर्वराहरूपस्य द्वारा चातिप्रयत्नतः ।
पाद्मे विष्णोर्नाभिपद्मे स्रष्टा सृष्टिं विनिर्ममे । त्रिलोकीं ब्रह्मलोकान्तां नित्यलोकत्रयं विना ॥
एतत्तु कालसंख्यानमुक्तं सृष्टिनिरूपणे । किंचिन्निरूपणं सृष्टेः किं भूयः श्रोतुमिच्छसि ॥

शौनक उवाच—

अतः परं किं चकार भगवान्सात्वतां पतिः । एतान्सृष्ट्वा किं चकार तन्मे व्याख्यातुमर्हसि ॥

सौतिरुवाच—

अतः परं तु गोलोके गोलोकेशो महान्प्रभुः । एतान्सृष्ट्वा जगामासौ सुरम्यं रासमण्डलम् ॥
एतैः समेतैर्भगवानतीव कमनीयकम् ॥ १८ ॥

---

१ ख. "ये प्रलये स्थि" ।

रम्याणां कल्पवृक्षाणां मध्येऽतीवमनोहरम् । सुविस्तीर्णं च सुसमं सुस्निग्धं मण्डलाकृति
चन्दनागुरुकस्तूरीकुङ्कुमैश्च सुसंस्कृतम् । दधिलाजसक्तुधान्यदूर्वापर्णपरिप्लुतम् ॥२०॥
पट्टसूत्रग्रन्थियुक्तं नवचन्दनपल्लवैः । संयुक्तरम्भास्तम्भानां समूहैः परिवेष्टितम् ॥२१॥
सद्रत्नसारनिर्माणमण्डपानां त्रिकोटिभिः । रत्नप्रदीपज्वलितैः पुष्पधूपाधिवासितैः ॥२२॥
शृङ्गारार्हभोगवस्तुसमूहपरिवेष्टितम् । अतीवललिताकल्पतल्पयुक्तैः सुशोभितम् ॥२३॥
तत्र गत्वा च तैः सार्धं समुवास जगत्पतिः । दृष्ट्वा रासं विस्मितास्ते बभूवुर्मुनिसत्तम ॥
आविर्बभूव कन्यैका कृष्णस्य वामपार्श्वतः । धावित्वा पुष्पमानीय ददावर्घ्यं प्रभोः पदे॥
रासे संभूय गोलोके सा दधाव हरेः पुरः । तेन राधा समाख्याता पुराविद्भिर्द्विजोत्तम॥
प्राणाधिष्ठातृदेवी सा कृष्णस्य परमात्मनः । आविर्बभूव प्राणेभ्यः प्राणेभ्योऽपि गरीयसी ॥
देवी षोडशवर्षीया नवयौवनसंयुता । वह्निशुद्धांशुकाधाना सस्मिता सुमनोहरा॥२८॥
सुकोमलाङ्गी ललिता सुन्दरीषु च सुन्दरी । बृहन्नितम्बभारार्ता पीनश्रोणिपयोधरा ॥
बन्धुजीवजितारक्तसुन्दरोष्ठाधरानना । मुक्तापङ्क्तिजिताचारुदन्तपङ्क्तिर्मनोहरा॥३०॥
शरत्पार्वणकोटीन्दुशोभामृष्टशुभानना । चारुसीमन्तिनी चारुशरत्पङ्कजलोचना ॥३१॥
खगेन्द्रचञ्चुविजितचारुनासामनोहरा । स्वर्णगण्डूकविजिते गण्डयुग्मे च बिभ्रती ॥३२॥
दधती चारुकर्णे च रत्नाभरणभूषिते । चन्दनागरुकस्तूरीयुक्तकुङ्कुमबिन्दुभिः ॥३३॥
सिन्दूरबिन्दुसंयुक्तसुकपोला मनोहरा । सुसंस्कृतं केशपाशं मालतीमाल्यभूषितम्॥३४॥
सुगन्धकबरीभारं सुन्दरं दधती सती । स्थलपद्मप्रभामुष्टं पादयुग्मं च बिभ्रती ॥३५॥
गमनं कुर्वती सा च हंसखञ्जनगञ्जनम् । सद्रत्नसारनिर्माणां वनमालां मनोहराम् ॥
हारं हीरकनिर्माणं रत्नकेयूरकङ्कणम् । सद्रत्नसारनिर्माणं पाशकं सुमनोहरम् ॥३७॥
अमूल्यरत्ननिर्माणं क्वणन्मञ्जीररञ्जितम् । नानाप्रकारचित्राढ्यं सुन्दरं परिबिभ्रती॥३८॥
सा च संभाष्य गोविन्दं रत्नसिंहासने वरे । उवास सस्मिता भर्तुः पश्यन्ती मुखपङ्कजम् ॥
तस्याश्च लोमकूपेभ्यः सद्यो गोपाङ्गनागणः । आविर्बभूव रूपेण वेषेणैव च तत्समः ॥
लक्षकोटीपरिमितः शश्वत्सुस्थिरयौवनः । संख्याविद्भिश्च संख्यातो गोलोके गोपिकागणः ॥
कृष्णस्य लोमकूपेभ्यः सद्यो गोपगणो मुने । आविर्बभूव रूपेण वेषेणैव च तत्समः ॥
त्रिंशत्कोटिपरिमितः कमनीयो मनोहरः । संख्याविद्भिश्च संख्यातो बल्लवानां गणः श्रुतौ
कृष्णस्य लोमकूपेभ्यः सद्यश्चाऽऽविर्बभूव ह । नानावर्णो गोगणश्च शश्वत्सुस्थिरयौवनः ॥
बलीवर्दाः सुरभ्यश्च वत्सा नानाविधाः शुभाः । अतीवललिताः श्यामा बह्व्यो वै
कामधेनवः ॥ ४५ ॥

तेषामेकं बलीवर्दं कोटिसिंहसमं बले । शिवाय प्रददौ कृष्णो वाहनाय मनोहरम् ॥
कृष्णाङ्घ्रिनखरन्ध्रेभ्यो हंसपङ्क्तिर्मनोहरा । आविर्बभूव सहसा स्त्रीपुंवत्ससमन्विता ॥
तेषामेकं राजहंसं महाबलपराक्रमम् । वाहनाय ददौ कृष्णो ब्रह्मणे च तपस्विने ॥
वामकर्णस्य विवरात्कृष्णस्य परमात्मनः । गणः श्वेततुरङ्गाणामाविर्भूतो मनोहरः ॥
तेषामेकं च श्वेताश्वं धर्मार्थं वाहनाय च । ददौ गोपाङ्गनेशश्च संप्रीत्या सुरसंसदि ॥
दक्षकर्णस्य विवरात्पुंसश्च सुरसंसदि । आविर्भूता सिंहपङ्क्तिर्महाबलपराक्रमा ॥१ १॥
तेषामेकं ददौ कृष्णः प्रकृत्यै परमादरम् । अमूल्यरत्नमाल्यं च वरं यदभिवाञ्छितम् ॥
कृष्णो योगेन योगीन्द्रश्चकार रथपञ्चकम् । शुद्धरत्नेन्द्रनिर्माणं मनोयायि मनोहरम् ॥
लक्षयोजनमूर्ध्वे च प्रस्थे च शतयोजनम् । लक्षचक्रं वायुरहं लक्षक्रीडागृहान्वितम् ॥
शृङ्गारार्हं भोगवस्तुतल्पासंख्यसमन्वितम् । रत्नप्रदीपलक्षाणां राजिभिश्च विराजितम् ॥
नानाचित्रविचित्राढ्यं सद्रत्नकलशोज्ज्वलम् । रत्नदर्पणभूषाढ्यं शोभितं श्वेतचामरैः ॥
वह्निशुद्धांशुकैश्चित्रैर्मुक्ताजालैर्विभूषितम् । मणीन्द्रमुक्तामाणिक्यहीरहारविराजितम् ॥
आरक्तवर्णरत्नेन्द्रसारनिर्माणकृत्रिमैः । पङ्कजानामसंख्यैश्च सुन्दरैश्च सुशोभितम् ॥
ददौ नारायणायैकं तेषां मध्ये द्विजोत्तम । एकं दत्त्वा राधिकायै ररक्ष शेषमात्मने ॥
आविर्बभूव कृष्णस्य गुह्यदेशात्ततः परम् । पिङ्गलश्च पुमानेकः पिङ्गलैश्च गणैः सह ॥
आविर्भूता यतो गुह्यात्तेन ते गुह्यकाः स्मृताः । यः पुमान्स कुबेरश्च धनेशो गुह्यकेश्वरः ॥
बभूव कन्यका चैका कुबेरवामपार्श्वतः । कुबेरपत्नी सा देवी सुन्दरीणां मनोरमा ॥
भूतप्रेतपिशाचाश्च कूष्माण्डब्रह्मराक्षसाः । वेताला विकृतास्तस्याऽऽविर्भूता गुह्यदेशतः ॥
शङ्खचक्रगदापद्मधारिणो वनमालिनः । पीतवस्त्रपरीधानाः सर्वे श्यामचतुर्भुजाः ॥१७॥
किरीटिनः कुण्डलिनो रत्नभूषणभूषिताः । आविर्भूताः पार्षदाश्च कृष्णस्य मुखतो मुने ॥
चतुर्भुजान्पार्षदांश्च ददौ नारायणाय च । गुह्यकान्गुह्यकेशाय भूतादीञ्छंकराय च ॥
द्विभुजाः श्यामवर्णाश्च जपमालाकरा वराः । ध्यायन्तश्चरणाम्भोजं कृष्णस्य सततं मुदा ॥
दास्ये नियुक्ता दासाश्चैवाध्र्यमादाय यत्नतः । आविर्भूता वैष्णवाश्च सर्वे कृष्णपरायणाः
पुलकाङ्कितसर्वाङ्गाः साश्रुनेत्राः सगद्गदाः । आविर्भूताः पादपद्मात्पादपद्मैकमानसाः ॥
आविर्बभूवुः कृष्णस्य दक्षनेत्राद्भयंकराः । त्रिशूलपट्टिशधरास्त्रिनेत्राश्चन्द्रशेखराः ॥
दिगम्बरा महाकाया ज्वलदग्निशिखोपमाः । ते भैरवा महाभागाः शिवतुल्याश्च तेजसा ॥

---

१ ख. 'णां वाजि' ।

रुरुसंहारकालाख्या असितक्रोधभीषणाः । महाभैरवखट्वाङ्गावित्यष्टौ भैरवाः स्मृताः ॥
आविर्बभूव कृष्णस्य वामनेत्राद्भयंकरः । त्रिशूलपट्टिशव्याघ्रचर्माम्बरगदाधरः ॥७२॥
दिगम्बरो महाकायस्त्रिनेत्रश्चन्द्रशेखरः । स ईशानो महाभागो दिक्पालानामधीश्वरः ॥
डाकिन्यश्चैव योगिन्यः क्षेत्रपालाः सहस्रशः । आविर्बभूवुः कृष्णस्य नासिकाविवरोदरात्
सुरास्त्रिकोटिसंख्याता दिव्यमूर्तिधरा वराः । आविर्बभूवुः सहसा पुंसो वै पृष्ठदेशतः ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे सृष्टिनि-
रूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

अथ षष्ठोऽध्यायः ।

**सौतिरुवाच—**

अथ कृष्णो महालक्ष्मीं सादरं च सरस्वतीम् । नारायणाय प्रददौ रत्नेन्द्रं मालया सह ॥
सावित्रीं ब्रह्मणे प्रादान्मूर्तिं धर्माय सादरम् । रतिं कामाय रूपाढ्यां कुबेराय मनोरमाम् ॥
अन्याश्च या या अन्येभ्यो याश्च येभ्यः समुद्भवाः । तस्मै तस्मै ददौ कृष्णस्तां तां
रूपवतीं सतीम् ॥ ३ ॥
ततः शंकरमाहूय सर्वेशो योगिनां गुरुम् । उवाच प्रियमित्येवं गृह्णीयाः सिंहवाहिनीम् ॥
श्रीकृष्णस्य वचः श्रुत्वा प्रहसन्नीललोहितः । उवाच भीतः प्रणतः प्राणेशं प्रभुमच्युतम् ॥

**श्रीमहेश्वर उवाच—**

अधुनाऽहं न गृह्णामि प्रकृतिं प्राकृतो यथा । त्वद्भक्त्यैकव्यवहितां दास्यमार्गविरोधिनीम्
तत्त्वज्ञानसमाच्छन्नां योगद्वारकपाटिकाम् । मुक्तीच्छाध्वंसरूपां च सकामां कामवर्धिनीम् ॥
तपस्याच्छन्नरूपां च महामोहकरण्डिकाम् । भवकारागृहे घोरे दृढां निगडरूपिणीम् ॥
शश्वद्बुद्धिजननीं सद्बुद्धिच्छेदकारिणीम् । शश्वद्भोगसारां च विषयेच्छाविवर्द्धिनीम् ॥
नेच्छामि गृहिणीं नाथ वरं देहि मदीप्सितम् । यस्य यद्वाञ्छितं तस्मै तद्ददाति तदीश्वरः
त्वद्भक्तिविषये दास्ये लालसा वर्धतेऽनिशम् । तृप्तिर्न जायते नामजपने पादसेवने ।
त्वन्नाम पञ्चवक्त्रेण गुणं सन्मङ्गलालयम् । स्वप्ने जागरणे शश्वद्गायन्भ्रमाम्यहम् ॥
आकल्पकोटिं कोटिं च त्वद्रूपध्यानतत्परम् । भोगेच्छाविषये नैव योगे तपसि मन्मनः ॥
त्वत्सेवने पूजने च वन्दने नामकीर्तने । सदोल्लसितमेषां च विरतौ विरतिं लभेत् ॥

---

१ क. 'साध्यां च वि' ।

स्मरणं कीर्तनं नामगुणयोः श्रवणं जपः । त्वच्चारुरूपध्यानं त्वत्पादसेवाभिवन्दनम् ॥
समर्पणं चाऽऽत्मनश्च नित्यं नैवेद्यभोजनम् । वरं वरेश देहीदं नवधाभक्तिलक्षणम् ॥
सार्ष्टिसालोक्यसारूप्यसामीप्यं साम्यलीनताम् । वदन्ति षड्विधां मुक्तिं मुक्ता मुक्तिविदो विभो ॥ १७ ॥
अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वं च सर्वकामावसायिता ॥ १८ ॥
सार्वज्ञं दूरश्रवणं परकायप्रवेशनम् । वाक्सिद्धिः कल्पवृक्षत्वं स्रष्टुं संहर्तुमीशता ॥
अमरत्वं च सर्वाग्र्यं सिद्धयोऽष्टादश स्मृताः । योगास्तपांसि सर्वाणि दानानि च व्रतानि च
यशः कीर्तिर्वचः सत्यं धर्माण्यनशनानि च । भ्रमणं सर्वतीर्थेषु स्नानमन्यसुरार्चनम् ॥
सुरार्चादर्शनं सप्तद्वीपसप्तप्रदक्षिणम् । स्नानं सर्वसमुद्रेषु सर्वस्वर्गप्रदर्शनम् ॥ २२ ॥
ब्रह्मत्वं चैव रुद्रत्वं विष्णुत्वं च परं पदम् । अतोऽनिर्वचनीयानि वाञ्छनीयानि सन्ति वा ॥
सर्वाण्येतानि सर्वेश कथितानि च यानि च । तव भक्तिकलांशस्य कलां नार्हन्ति षोडशीम् ॥
शर्वस्य वचनं श्रुत्वा कृष्णस्तं योगिनां गुरुम् । प्रहस्योवाच वचनं सत्यं सर्वसुखप्रदम् ॥

श्रीभगवानुवाच—

मत्सेवां कुरु सर्वेश शर्व सर्वविदां वर । कल्पकोटिशतं यावत्पूर्णं शश्वदहर्निशम् ॥
वरस्तपस्विनां त्वं च सिद्धानां योगिनां तथा । ज्ञानिनां वैष्णवानां च सुराणां च सुरेश्वर
अमरत्वं लभ भव भव मृत्युंजयो महान् । सर्वसिद्धिं च वेदांश्च सर्वज्ञत्वं च मद्वरात् ॥
असंख्यं ब्रह्मणां पातं लीलया वत्स पश्यसि । अद्यप्रभृति ज्ञानेन तेजसा वयसा शिव ॥
पराक्रमेण यशसा महसा मत्समो भव । प्राणानामधिकस्त्वं च न भक्तस्त्वत्परो मम ॥
त्वत्परो नास्ति मे प्रेयांस्त्वं मदीयात्मनः परः । ये त्वां निन्दन्ति पापिष्ठा ज्ञानहीना विचेतनाः ॥ ३१ ॥
पच्यन्ते ते कालसूत्रे यावच्चन्द्रदिवाकरौ । कल्पकोटिशतान्ते च ग्रहीष्यसि शिवां शिव
ममाऽर्थे च वचनं पालनं कर्तुमर्हसि । त्वन्मुखान्निर्गतं वाक्यं न करोम्यधुनेति च ॥
मद्वाक्यं च स्ववाक्यं च पालनं तत्करिष्यसि । गृहीत्वा प्रकृतिं शंभो दिव्यं वर्षसहस्रकम्
सुखं महच्च शृङ्गारं करिष्यसि न संशयः । न केवलं तपस्वी त्वमीश्वरो मत्समो महान् ॥
काले गृही तपस्वी च योगी स्वेच्छामयो हि यः । दुःखं च दारसंयोगे यत्त्वया कथितं शिव
कुस्त्री ददाति दुःखं च स्वामिने न पतिव्रता । कुले महति या जाता कुलजा कुपपालिका ॥

---

१ क. 'मस्य च भ॰'। २ क. मो भवान्। ३५। का॰।

करोति पालनं स्नेहात्सत्पुत्रस्य समं पतिम् । पतिर्बन्धुर्गतिर्भर्ता दैवतं कुलयोषिताम् ॥
पतितोऽपतितो वाऽपि कृपणश्चेश्वरोऽथवा । असत्कुलप्रसूता याः पित्रोर्दुःशीलमिश्रिताः ॥
ध्रुवं ताः परमोग्याश्च पतिं निन्दन्ति संततम् । आवयोरतिरिक्तं च या पश्यति पतिं सती ॥
गोलोके स्वामिना सार्द्धं कोटिकल्पं प्रमोदते । भविता सा शिवा शैवी प्रकृतिर्वैष्णवी शिवे
मदाज्ञया च तां साध्वीं ग्रहीष्यसि भवाय च । प्रकृत्या योनिसंयुक्तं स्वलिङ्गं तीर्थमृत्कृतम्
तीर्थे सहस्रं संपूज्य भक्त्या पञ्चोपचारतः । सदक्षिणं संयतो यः पवित्रश्च जितेन्द्रियः ॥
कोटिकल्पं च गोलोके मोदते च मया सह । लक्षं तीर्थे पूजयेद्यो विधिवत्साधुरलिङ्गम् ॥
न च्युतिस्तस्य गोलोकात्स भवेदावयोः समः । मृज्जस्मगोशकृत्पिण्डैस्तीर्थवालुकयाऽपि वा
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि । प्रजावान्भूमिमान्विद्वान्पुत्रवान्धनवांस्तथा
ज्ञानवान्मुक्तिमान्साधुः शिवलिङ्गार्चनाद्भवेत् । शिवलिङ्गार्चनस्थानमतीर्थं तीर्थमेव तत् ॥
भवेत्तत्र मृतः पापी शिवलोकं स गच्छति ॥ १७ ॥
महादेव महादेव महादेवेति वादिनः । पश्चाद्यामि महास्तोत्रनामश्रवणलोभतः ॥१८॥
शिवेति शब्दमुच्चार्य प्राणांस्त्यजति यो नरः । कोटिजन्मार्जितात्पापान्मुक्तो मुक्तिं प्रयाति सः
शिवकल्याणवचनं कल्याणं मुक्तिवाचकम् । यतस्तत्प्रभवेत्तेन स शिवः परिकीर्तितः ।
विच्छेदे धनबन्धूनां निमग्नः शोकसागरे । शिवेति शब्दमुच्चार्य लभेत्सर्वशिवं नरः ॥
पापघ्ने वर्तते शिश्च वश्च मुक्तिपदे तथा । पापघ्नो मोक्षदो नृणां शिवस्तेन प्रकीर्तितः ॥
शिवेति च शिवं नाम यस्य वाचि प्रवर्तते । कोटिजन्मार्जितं पापं तस्य नश्यति निश्चितम्
इत्युक्त्वा शूलिने कृष्णो दत्त्वा कल्पतरुं मनुम् । तत्त्वज्ञानं मृत्युजयमवोचात्सिंहवाहिनीम्

श्रीभगवानुवाच--

अधुना तिष्ठ वत्से त्वं गोलोके मम संनिधौ । काले भजिष्यसि शिवं शिवदं च शिवायनम् ॥
तेजःसु सर्वदेवानामाविर्भूय वरानने । संहृत्य दैत्यान्सर्वांश्च भविता सर्वपूजिता ॥१९॥
ततः कल्पविशेषे च सत्यं सत्ययुगे सति । भविता दक्षकन्या त्वं सुशीला शंभुगेहिनी
ततः शरीरं संत्यज्य यज्ञे भर्तुश्च निन्दया । मेनायां शैलभार्यायां भविता पार्वतीति च
दिव्यं वर्षसहस्रं च विहरिष्यसि शंभुना । पूर्णं ततः सर्वकालमभेदं त्वं लभिष्यसि ॥
काले सर्वेषु विश्वेषु महापूजा सुपूजिते । भविता प्रतिवर्षे च शारदीया सुरेश्वरि ॥
ग्रामेषु नगरेष्वेव पूजिता ग्रामदेवता । भवती भवितेत्येवं नामभेदेन चारुणा ॥ ११ ॥

---

१ ख. 'तेजसा स' । २ क. पूर्णे ततः सर्वकाले ममैव त्वं भविष्यसि । का' ।

मदाज्ञया शिवकृतैस्तन्त्रैर्नानाविधैरपि । पूजाविधिं विधास्यामि कवचं स्तोत्रसंयुतम् ॥
भविष्यन्ति महान्तश्च तवैव परिचारकाः । धर्मार्थकाममोक्षाणां सिद्धाश्च फलभागिनः ॥
ये त्वां मातर्भजिष्यन्ति पुण्यक्षेत्रे च भारते । तेषां यशश्च कीर्तिश्च धर्मैश्वर्यं च वर्द्धते ॥
इत्युक्त्वा प्रकृतिं तस्यै मन्त्रमेकादशाक्षरम् । दत्त्वा सकामबीजं च मन्त्रराजमनुत्तमम् ॥
चकार विधिना ध्यानं भक्तं भक्तानुकम्पया । श्रीमायाकामबीजाढ्यं ददौ मन्त्रं दशाक्षरम् ॥
सर्वज्ञोपयोगिकीं शक्तिं सर्वसिद्धिं च कामदाम् । तद्विशिष्टोत्कृष्टतत्त्वं ज्ञानं तस्यै ददौ विभुः
त्रयोदशाक्षरं मन्त्रं दत्त्वा तस्मै जगत्पतिः । कवचं स्तोत्रसहितं शंकराय तथा द्विज
दत्त्वा धर्माय तं मन्त्रं सिद्धिज्ञानं तदेव च । कामाय वह्नये चैव कुबेराय च वायवे
एवं कुबेरादिभ्यस्तु दत्त्वा मन्त्रादिकं परम् । विधिं प्रोवाच सृष्टयर्थं विधातुर्विधिरेव सः

**श्रीभगवानुवाच—**

मदीयं च तपः कृत्वा दिव्यं वर्षसहस्रकम् । सृष्टिं कुरु महाभाग विधे नानाविधां पराम् ॥
इत्युक्त्वा ब्रह्मणे कृष्णो ददौ मालां मनोरमाम् । जगाम सार्धं गोपीभिर्गोपैर्वृन्दावनं वनम्

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे सृष्टिनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

---

**सौतिरुवाच—**

तदा ब्रह्मा तपः कृत्वा सिद्धिं प्राप्य यथेप्सिताम् । ससृजे पृथिवीमादौ मधुकैटभमेदसा १
ससृजे पर्वतानष्टौ प्रधानान्सुमनोहरान् । क्षुद्रानसंख्यान्किं ब्रूमः प्रधानाख्यां निशामय ॥
सुमेरुं चैव कैलासं मलयं च हिमालयम् । उदयं च तथाऽस्तं च सुवेलं गन्धमादनम् ॥
समुद्रान्ससृजे सप्त नदान्कतिविधा नदीः । वृक्षांश्च ग्रामनगरं समुद्राख्या निशामय ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवान् । लक्षयोजनमानेन द्विगुणांश्च परात्परान् ॥५॥
सप्तद्वीपांश्च तद्भूमिमण्डले कमठाकृते । उपद्वीपांस्तथा सप्त सीमाशैलांश्च सप्त च ॥
निबोध विप्र द्वीपाख्यां पुरा या विधिना कृता । जम्बूशाककुशप्लक्षक्रौञ्चन्यग्रोधपौष्करान् ॥

---

१ ख. 'तिः श्रीधनेश्व' ।

मेरोरष्टसु शृङ्गेषु ससृजेऽष्टौ पुरीः प्रभुः । अष्टानां लोकपालानां विहाराय मनोहराः
मूलेऽनन्तस्य नगरीं निर्माय जगतां पतिः । ऊर्ध्वे स्वर्गांश्च सप्तैव तेषामाख्यां निशामय
भूर्लोकं च भुवर्लोकं स्वर्लोकं सुमनोहरम् । जनोलोकं तपोलोकं सत्यलोकं च शौनक
शृङ्गमूर्ध्नि ब्रह्मलोकं जरादिपरिवर्जितम् । तदूर्ध्वे ध्रुवलोकं च सर्वतः सुमनोहरम् ११
तदधः सप्त पातालान्निर्ममे जगदीश्वरः । स्वर्गातिरिक्तभोगाढ्यानधोऽधः क्रमतो मुने ॥
अतलं वितलं चैव सुतलं च तलातलम् । महातलं च पातालं रसातलमधस्ततः ॥१३॥
सप्तद्वीपैः सप्तनाकैः सप्तपातालसंज्ञकैः । एभिर्लोकैश्च ब्रह्माण्डं ब्रह्माधिकृतमेव च ॥१४॥
एवं चासंख्यब्रह्माण्डं सर्वं कृत्रिममेव च । महाविष्णोश्च लोम्नां च विवरेषु च शौनक ॥
प्रतिविश्वेषु दिक्पाला ब्रह्मविष्णुमहेश्वराः । सुरा नरादयः सर्वे सन्ति कृष्णस्य मायया
ब्रह्माण्डगणनां कर्तुं न क्षमो जगतां पतिः । न शंकरो न धर्मश्च न च विष्णुश्च के सुराः
संख्यातुमीश्वरः शक्तो न संख्यातुं तथाऽपि सः । विश्वाकाशदिशां चैव सर्वतो यद्यपि क्षमः
कृत्रिमाणि च विश्वानि विश्वस्थानि च यानि च । अनित्यानि च विप्रेन्द्र स्वप्रवन्नश्वराणि च
वैकुण्ठः शिवलोकश्च गोलोकश्च तयोः परः । नित्यो विश्वबहिर्भूतश्चाऽऽत्माकाशदिशो
यथा ॥ २० ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे सृष्टिनिरूपणं
नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अथाष्टमोऽध्यायः ।

---

**सौतिरुवाच—**

ब्रह्मा विश्वं विनिर्माय सावित्र्यां वरयोषिति । चकार वीर्याधानं च कामुक्यां कामुको यथा
सा दिव्यं शतवर्षं च धृत्वा गर्भं सुदुःसहम् । सुप्रसूता च सुषुवे चतुर्वेदान्मनोहरान् ॥
विविधाञ्शास्त्रसंघांश्च तर्कव्याकरणादिकान् । षट्त्रिंशत्संख्यका दिव्या रागिणीः सुमनो
हराः ॥ ३ ॥
षट् रागान्सुन्दरांश्चैव नानातालसमन्वितान् । सत्यत्रेताद्वापरांश्च कलिं च कलहप्रियम्
वर्षं मासमृतुं चैव तिथिं दण्डक्षणादिकम् । दिनं रात्रिं च वारांश्च संध्यामुषसमेव च
पुष्टिं च देवसेनां च मेधां च विजयां जयाम् । षट् कृत्तिकाश्च योगांश्च करणं च तपोधन

---

१ क. 'शाऽसुराद' ।

देवसेना महाषष्ठी कार्तिकेयप्रिया सतीम् । मातृकासु प्रधाना सा बालानामिष्टदेवता ॥
ब्राह्मं पाद्मं च वाराहं कल्पत्रयमिदं स्मृतम् । नित्यं नैमित्तिकं चैव द्विपरार्धं च प्राकृतम् ॥
चतुर्विधं च प्रलयं कालं वै मृत्युकन्यकाम् । सर्वान्व्याधिगणांश्चैव सा प्रसूय स्तनं ददौ ॥
अथ धातुः पृष्ठदेशादधर्मः समजायत । अलक्ष्मीस्तद्वामपार्श्वाद्बभूवात्यन्तकामिनी ॥
नाभिदेशाद्विश्वकर्मा जातो वै शिल्पिनां गुरुः । महान्तो वसवोऽष्टौ च महाबलपराक्रमाः ॥
अथ धातुश्च मनस आविर्भूताः कुमारकाः । चत्वारः पञ्चवर्षीया ज्वलन्तो ब्रह्मतेजसा ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो भगवांश्चतुर्थो ज्ञानिनां वरः ॥ १३ ॥
आविर्बभूव मुखतः कुमारः कनकप्रभः । दिव्यरूपधरः श्रीमान्सस्त्रीकः सुन्दरो युवा ॥
क्षत्रियाणां बीजरूपो नाम्ना स्वायंभुवो मनुः । या स्त्री सा शतरूपा च रूपाढ्या कमलाकला
सस्त्रीकश्च मनुस्तस्थौ धाताज्ञापरिपालकः । स्वयं विधाता पुत्रांश्च तानुवाच प्रहर्षितान् ॥
सृष्टिं कर्तुं महाभागो महाभागवतान्द्विजः । जग्मुस्ते च नहीत्युक्त्वा तप्तुं कृष्णपरायणाः
चुकोप हेतुना तेन विधाता जगतां पतिः । कोपासक्तस्य च विधेर्ज्वलतो ब्रह्मतेजसा ॥
आविर्भूता ललाटाच्च रुद्रा एकादश प्रभो । कालाग्निरुद्रः संहर्ता तेषामेकः प्रकीर्तितः ॥
सर्वेषामेव विश्वानां स तामस इति स्मृतः । राजसश्च स्वयं ब्रह्मा शिवो विष्णुश्च सात्त्विकौ
गोलोकनाथः कृष्णश्च निर्गुणः प्रकृतेः परः । परमज्ञानिनो मूर्खा वदन्ति तामसं शिवम्
शुद्धसत्त्वस्वरूपं च निर्मलं वैष्णवाग्रणीम् । शृणु नामानि रुद्राणां वेदोक्तानि च यानि च
महान्महात्मा मतिमान्भीषणश्च भयंकरः । ऋतुध्वजश्चोर्ध्वकेशः पिङ्गलाक्षो रुचिः शुचिः
पुलस्त्यो दक्षकर्णाच्च पुलहो वामकर्णतः । दक्षनेत्रात्तथाऽत्रिश्च वामनेत्रात्क्रतुः स्वयम्
अरणिर्नासिकारन्ध्रादङ्गिराश्च मुखाद्रुचिः । भृगुश्च वामपार्श्वाच्च दक्षो दक्षिणपार्श्वतः
छायायाः कर्दमो जातो नाभेः पञ्चशिखस्तथा । वक्षसश्चैव वोढुश्च कण्ठदेशाच्च नारदः
मरीचिः स्कन्धदेशाच्चैवापान्तरतमा गलात् । वसिष्ठो रसनादेशात्प्रचेता अधरोष्ठतः ॥
हंसश्च वामकुक्षेश्च दक्षकुक्षेर्यतिः स्वयम् । सृष्टिं विधातुं स विधिश्चकाराऽऽज्ञां सुतान्प्रति
पितुर्वाक्यं समाकर्ण्य तमुवाच स नारदः ॥ १८ ॥

नारद उवाच—

पूर्वमानय ज्येष्ठांश्च सनकादीन्पितामह । कारयित्वा दारयुक्तानस्मान्वद जगत्पते ॥
सिद्धा ते तपसे युक्ताः संसाराय वयं कथम् । अहो हन्त प्रभोर्बुद्धिर्विपरीताय कल्पते ॥

---

१ क. °भूव तस्य का° । २ क. °रः । कर्णदेशोर्ध्वके° । ३ क. तमो ग° ।

कस्मै पुत्राय पीयूषात्परं दत्तं तपोऽधुना । कस्मै ददासि विषयं विषमं च विषाधिकम् ॥
अतीव निम्ने घोरे च भवाब्धौ यः पतेत्पितः । निष्कृतिस्तस्य नास्तीति कोटिकल्पे
गतेऽपि च ॥ ३२ ॥
निस्तारबीजं सर्वेषां बीजं च पुरुषोत्तमम् । सर्वदं भक्तिदं दास्यपदं सत्यं कृपामयम् ॥
भक्तैकशरणं भक्तवत्सलं स्वच्छमेव च । भक्तप्रियं भक्तनाथं भक्तानुग्रहकारकम् ॥
भक्ताराध्यं भक्तसाध्यं विहाय परमेश्वरम् । मनो दधाति को मूढो विषये नाशकारणे ॥
विहाय कृष्णसेवां च पीयूषादधिकां प्रियाम् । को मूढो विषमश्नाति विषमं विषयाभिधम्
स्वप्नवन्नश्वरं तुच्छमसत्यं मृत्युकारणम् । यथा दीपशिखाग्रं च कीटानां सुमनोहरम् ॥
यथा बाडिशमांसं च मत्स्यापातसुखप्रदम् । तथा विषयिणां तात विषयो मृत्युकारणम् ॥
इत्युक्त्वा नारदस्तत्र विरराम विधेः पुरः । तस्थौ तातं नमस्कृत्य ज्वलदग्निशिखोपमः ॥
ब्रह्मा कोपपरीतश्च शशाप तनयं द्विज । उवाच कम्पिताङ्गश्च रक्तास्यः स्फुरिताधरः

ब्रह्मोवाच—

भविता ज्ञानलोपस्ते मच्छापेन च नारद । क्रीडामृगश्च त्वं साध्यो योषिल्लुब्धश्च लम्पटः
स्थिरयौवनयुक्तानां रूपाढ्यानां मनोहरः । पञ्चाशत्कामिनीनां च भर्ता च प्राणवल्लभः ॥
शृङ्गारशास्त्रवेत्ता च महाशृङ्गारलोलुपः । नानाप्रकारशृङ्गारनिपुणानां गुरोर्गुरुः ॥४३॥
गन्धर्वाणां च सुवरः सुस्वरश्च सुगायनः । वीणावादनसंदर्भनिष्णातः स्थिरयौवनः ॥
प्राज्ञो मधुरवाक्शान्तः सुशीलः सुन्दरः सुधीः । भविष्यसि न संदेहो नामतश्चोपबर्हणः
ताभिर्दिव्यं लक्षयुगं विहृत्य निर्जने वने । पुनर्मदीयशापेन दासीपुत्रश्च तत्परः ॥४६॥
वत्स वैष्णवसंसर्गाद्वैष्णवोच्छिष्टभोजनात् । पुनः कृष्णप्रसादेन भविष्यसि ममाऽऽत्मजः ॥
ज्ञानं दास्यामि ते दिव्यं पुनरेव पुरातनम् । अधुना भव नष्टस्त्वं मत्सुतो निपत ध्रुवम् ॥
ब्रह्मेत्युक्त्वा सुतं विप्र विरराम जगत्पतिः । रुरोद नारदस्तातमवोचत्संपुटाञ्जलिः ॥

नारद उवाच—

क्रोधं संहर संहर्तस्तात तात जगद्गुरो । स्रष्टुस्तपस्वीशस्याहो क्रोधोऽयं मय्यनाकरः ॥
शपेत्परित्यजेद्विद्वान्पुत्रमुत्पथगामिनम् । तपस्विनं सुतं शप्तुं कथमर्हसि पण्डित ॥५१॥
जनिर्भवतु मे ब्रह्मन्यासु यासु च योनिषु । न जहातु हरेर्भक्तिर्ममैवं देहि मे वरम् ॥
पुत्रश्चेज्जगतां धातुर्नास्ति भक्तिर्हरेः पदे । सूकरादतिरिक्तश्च सोऽधमो भारते भुवि ॥
जातिस्मरो हरेर्भक्तियुक्तः सूकरयोनिषु । जनिर्लभेत्स प्रवरो गोलोकं याति कर्मणा ॥
गोविन्दचरणाम्भोजभक्तिमाध्वीकमीप्सितम् । पिबतां वैष्णवादीनां स्पर्शपूता वसुंधरा ॥

तीर्थानि स्पर्शमिच्छन्ति वैष्णवानां पितामह । पापानां पापितस्त्वानां क्षालनायाऽऽत्मनामपि
मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारते । परैश्च कोटिपुरुषैः पूर्वैः सार्धं हरेरहो ॥
कोटिजन्मार्जितात्पापान्मन्त्रग्रहणमात्रतः । मुक्ताः शुध्यन्ति यत्पूर्वं कर्म निर्मूलयन्ति च
पुत्रान्दारांश्च शिष्यांश्च सेवकान्बान्धवांस्तथा । यो दर्शयति सन्मार्गं सद्गतिस्तं लभेद्ध्रुवम्
यो दर्शयत्यसन्मार्गं शिष्यैर्विश्वासितो गुरुः । कुम्भीपाके स्थितिस्तस्य यावच्चन्द्रदिवाकरौ
स किंगुरुः स किंतातः स किंस्वामी स किंसुतः । यः श्रीकृष्णपदाम्भोजे भक्तिं दातुमनीश्वरः
शप्तो निरपराधेन त्वयाऽहं चतुरानन । मया शप्तुं त्वमुचितो घ्नन्तं घ्नन्त्यपि पण्डिताः॥
कवचस्तोत्रपूजाभिः सहितस्ते मनुर्भनोः । लुप्तो भवतु मच्छापात्प्रतिविश्वेषु निश्चितम्
अपूज्यो भव विश्वेषु यावत्कल्पत्रयं पितः । गतेषु त्रिषु कल्पेषु पूज्य पूज्यो भविष्यसि
अधुना यज्ञभागस्ते व्रतादिष्वपि सुव्रत । पूजनं चास्तु नामैकं वन्द्यो भव सुरादिभिः ॥
इत्युक्त्वा नारदस्तत्र विरराम पितुः पुरः । तस्थौ सभायां स विधिर्हृदयेन विदूयता ॥
उपबर्हणगन्धर्वो नारदस्तेन हेतुना । दासीपुत्रश्च शापेन पितुरेव च शौनक ॥ १७ ॥
ततः पुनर्नारदश्च स बभूव महानृषिः । ज्ञानं प्राप्य पितुः पश्चात्कथयिष्यामि चाधुना॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे ब्रह्मनारद-
शापोपलम्भनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

सौतिरुवाच—

अथ ब्रह्मा स्वपुत्रांस्तानादिदेश च सृष्टये । सृष्टिं प्रचक्रुस्ते सर्वे विप्रेन्द्र नारदं विना॥
मरीचेर्मनसो जातः कश्यपश्च प्रजापतिः । अत्रेर्नेत्रमलाच्चन्द्रः क्षीरोदे च बभूव ह ॥
प्रचेतसोऽपि मनसो गौतमश्च बभूव ह । पुलस्त्यमनसः पुत्रो मैत्रावरुण एव च ॥
मनोश्च शतरूपायां तिस्रः कन्याः प्रजज्ञिरे । आकूतिर्देवहूतिश्च प्रसूतिस्ताः पतिव्रताः
प्रियव्रतोत्तानपादौ द्वौ च पुत्रौ मनोहरौ । उत्तानपादतनयो ध्रुवः परमधार्मिकः ॥ ५ ॥
आकूतिं रुचये प्रादाद्दक्षायाथ प्रसूतिकाम् । देवहूतिं कर्दमाय यत्पुत्रः कपिलः स्वयम् ॥
प्रसूत्यां दक्षबीजेन षष्टिकन्याः प्रजज्ञिरे । अष्टौ धर्माय स ददौ रुद्रायैकादश स्मृताः॥
शिवायैकां सतीं प्रादात्कश्यपाय त्रयोदश । सप्तविंशतिकन्याश्च दक्षश्चन्द्राय दत्तवान्
नामानि धर्मपत्नीनां मत्तो विप्र निशामय ।शान्तिःपुष्टिर्धृतिस्तुष्टिः क्षमा श्रद्धा मतिः स्मृतिः
शान्तेः पुत्रश्च संतोषः पुष्टेः पुत्रो महानभूत । धृतेर्धैर्यं च तुष्टेश्च हर्षदर्पौ सुतौ स्मृतौ

क्षमापुत्रः सहिष्णुश्च श्रद्धापुत्रश्च धार्मिक । मतेर्ज्ञानाभिधः पुत्रः स्मृतेर्जातिस्मरो महान्
पूर्वं तस्यां च मूर्त्यां च नरनारायणावृषी । बभूवुरेते धर्मिष्ठा धर्मपुत्राश्च शौनक ॥
नामानि रुद्रपत्नीनां सावधानं निबोध मे । कला कलावती काष्ठा कालिका कलहप्रिया
कन्दली भीषणा रास्ना प्रमोचा भूषणा शुकी । एतासां बहवः पुत्रा बभूवुः शिवपार्षदाः
सा सती स्वामिनिन्दायां तनुं तत्याज यज्ञतः । पुनर्भूत्वा शैलपुत्री लेभे सा शंकरं पतिम्
कश्यपस्य प्रियाणां च नामानि शृणु धार्मिक । अदितिर्देवमाता वै दैत्यमाता दितिस्तथा
सर्पमाता तथा कद्रूर्विनता पक्षिसूस्तथा । सुरभिश्च गवां माता महिषाणां च निश्चितम्
सारमेयादिजन्तूनां सरमा सूश्चतुष्पदाम् । दनुः प्रसूर्दानवानामन्याश्चेत्येवमादिकाः ॥
इन्द्रश्च द्वादशादित्या उपेन्द्राद्याः सुरा मुने । कथिताश्चादितेः पुत्रा महाबलपराक्रमाः
इन्द्रपुत्रो जयन्तश्च शच्यामजायत । आदित्यस्य सवर्णायां कन्यायां विश्वकर्मणः
शनैश्चरयमौ पुत्रौ कालिन्दी कन्यका तथा । उपेन्द्रवीर्यात्पृथ्व्यां तु मङ्गलः समजायत

शौनक उवाच—

कथं सौते स चोपेन्द्रान्मङ्गलः समजायत । वसुंधरायां बलवान्तन्मे व्याख्यातुमर्हसि ॥

सौतिरुवाच—

उपेन्द्ररूपमालोक्य कामार्ता च वसुंधरा । विधाय सुन्दरीवेषमक्षता प्रौढयौवना ॥२३॥
मलये निर्जने रम्ये चारुचन्दनपल्लवे । चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् ॥२४॥
तं सुशीलं शयानं च शान्तं सस्मितमीप्सितम् । सस्मिता तस्य तल्पे च सहसा समुप-
स्थिता ॥ २५ ॥
सुरम्यां मालतीमालां ददौ तस्मै वरानना । सुगन्धि चन्दनं चारु कस्तूरीकुङ्कुमान्वितम्
उपेन्द्रस्तन्मनो ज्ञात्वा कामिनीं कामपीडिताम् । नानाप्रकारशृङ्गारं चकार च तया सह
तदङ्गसङ्गसंसक्ता मूर्छां प्राप सती तदा । मृतेव निद्रितेवासौ बीजाधाने कृते हरौ ॥
तां विलग्नां च सुश्रोणीं सुखसंभोगमूर्छिताम् । बृहन्मुक्तनितम्बां च सस्मितां विपुलस्तनीम् ॥
क्षणं वक्षसि कृत्वा तां तदोष्ठं च चुचुम्ब ह । विहाय तत्र रहसि जगाम पुरुषोत्तमः ३०
उर्वशी पथि गच्छन्ती बोधयामास तां मुने । सा च पप्रच्छ वृत्तान्तं कथयामास भूश्च ताम्
वीर्यसंवरणं कर्तुं सा चाशक्ता च दुर्बला । प्रवालस्याऽऽकरे त्रस्ता वीर्यन्यासं चकार सा
तेन प्रवालवर्णश्च कुमारः समपद्यत । तेजसा सूर्यसदृशो नारायणसुतो महान् ॥ ३१ ॥
मङ्गलस्य प्रिया मेधा तस्य घण्टेश्वरो महान् । व्रणदाताऽतितेजस्वी विष्णुतुल्यो बभूव ह

---

१ क. तस्यां खलेश्व°।

दितेर्हिरण्यकशिपुर्हिरण्याक्षो महाबलो । कन्या च सिंहिका विप्र सैंहिकेयश्च तत्सुतः
निर्ऋतिः सिंहिका सा च तेन राहुश्च नैर्ऋतः । सूकरेण हिरण्याक्षोऽप्यनपत्यो मृतो युवा
हिरण्यकशिपोः पुत्रः प्रह्लादो वैष्णवाग्रणीः । विरोचनश्च तत्पुत्रस्तत्पुत्रश्च बलिः स्वयम् ॥
बलेः पुत्रो महायोगी ज्ञानी शंकरकिंकरः । दितेर्वंशश्च कथितः कद्रूवंशं निबोध मे ॥ ३८
अनन्तं वासुकिं चैव कालीयं च धनंजयम् । कर्कोटकं तक्षकं च पद्ममैरावतं तथा ॥ ३९
महापद्मं च शङ्कुं च शङ्खं संवरणं तथा । धृतराष्ट्रं च दुर्धर्षं दुर्जयं दुर्मुखं बलम् ॥ ४० ॥
गोक्षं गोकामुकं चैव विरूपादींश्च शौनक । एतेषां प्रवरांश्चैव यावत्यः सर्पजातयः ॥ ४१ ॥
कन्यका मनसा देवी कमलांशसमुद्भवा । तपस्विनीनां प्रवरा महातेजस्विनी शुभा ॥ ४२
यत्पतिश्च जरत्कारुर्नारायणांशसमुद्भवः । आस्तीकस्तनयो यस्या विष्णुतुल्यश्च तेजसा ॥
एतेषां नाममात्रेण नास्ति नागभयं नृणाम् । कद्रूवंशो निगदितो विनतायाः शृणुष्व मे ॥
वैनतेयारुणौ पुत्रौ विष्णुतुल्यपराक्रमौ । तौ बभूवुः क्रमेणैव यावत्यः पक्षिजातयः ४५
गावश्च महिषाश्चैव सुरभिप्रवरा इमे । सर्वे वै सारमेयाश्च बभूवुः सरमासुताः ॥ ४६ ॥
श्वापदाश्च दनोर्वंश्या अन्याः सामान्यजातयः । उक्तः कश्यपवंशश्च चन्द्राख्यानं निबोध मे
नामानि चन्द्रपत्नीनां सावधानं निशामय । अत्यपूर्वं च चरितं पुराणेषु पुरातनम् ॥
अश्विनी भरणी चैव कृत्तिका रोहिणी तथा । मृगशीर्षा तथाऽऽर्द्रा च पुण्या साध्वी पुनर्वसुः
पुष्याऽऽश्लेषा मघा पूर्वफल्गुन्युत्तरफल्गुनी । हस्ता चित्रा तथा स्वाती विशाखा चानु-
राधिका ॥ ५० ॥
ज्येष्ठा मूला तथा पूर्वाषाढा चैवोत्तरा स्मृता । श्रवणा च धनिष्ठा च तथा शतभिषक्शुभा ॥
पूर्वा भाद्रोत्तरा भाद्रा रेवत्यन्ता विधुप्रियाः । तासां मध्ये च सुभगा रोहिणी रसिका वरा
संततं रसभावेन चकार शशिनं वशम् । रोहिण्युपगतश्चन्द्रो न यात्यन्यां च कामिनीम्
सर्वा भगिन्यः पितरं कथयामासुराहताः । सपत्नीकृतसंतापं प्राणनाशकरं परम् ॥
दक्षः प्रकुपितश्चन्द्रमशपन्मन्त्रपूर्वकम् । द्रुतं श्वशुरशापेन यक्ष्मग्रस्तो बभूव सः ॥ ५५ ॥
दिने दिने यक्ष्मणा स क्षीयमाणश्च दुःखितः । वपुष्यर्धे क्षीयमाणे शंकरं शरणं ययौ
दृष्ट्वा चन्द्रं शंकरश्च क्लेशितं शरणागतम् । करुणासागरस्तस्मै कृपया चाभयं ददौ ५७
निर्मुक्तं यक्ष्मणा कृत्वा स्वकपाले स्थलं ददौ । अमरो निर्भयो भूत्वा स तस्थौ शिवशेखरे ॥
तं शिवः शेखरे कृत्वा चाभवच्चन्द्रशेखरः । नास्ति लोकेषु देवेषु शिवाच्छरणपञ्जरः ॥
दक्षकन्याः पतिं मुक्तं दृष्ट्वा च रुरुदुः पुनः । आजग्मुः शरणं तातं दक्षं तेजस्विनां वरम्

१ ख. °क । न ते° । २ ख. °णकुले° । ३ क. पूर्वोत्तराभाद्रपदा रे° ।

उच्चैश्च रुरुदुर्गत्वा निहत्याङ्गं पुनः पुनः । तमूचुः कातरं दीना दीननाथं विधेः सुतम् ॥

दक्षकन्या ऊचुः—

स्वामिसौभाग्यलाभाय त्वमुक्तोऽस्माभिरेव च । सौभाग्यमस्तु नस्तात गतः स्वामी गुणा-
न्वितः ॥ ६२ ॥

स्थिते चक्षुषि हे तात दृष्टं ध्वान्तमयं जगत् । विज्ञातमधुना स्त्रीणां पतिरेव हि लोचनम् ॥
पतिरेव गतिः स्त्रीणां पतिः प्राणाश्च संपदः । धर्मार्थकाममोक्षाणां हेतुः सेतुर्भवार्णवे ॥
पतिर्नारायणः स्त्रीणां व्रतं धर्मः सनातनः । सर्वं कर्म वृथा तासां स्वामिनो विमुखाश्च याः ॥
स्नानं च सर्वतीर्थेषु सर्वयज्ञेषु दक्षिणा । सर्वदानानि पुण्यानि व्रतानि नियमाश्च ये ॥६६
देवार्चनं चानशनं सर्वाणि च तपांसि च । स्वामिनः पादसेवायाः कलां नार्हन्ति षोडशीम् ॥
सर्वेषां बान्धवानां च प्रियः पुत्रश्च योषिताम् । स एव स्वामिनोंऽशश्च शतपुत्रात्परः पतिः
असद्वंशप्रसूता या सा द्वेष्टि स्वामिनं सदा । यस्या मनश्चलं दुष्टं सततं परपूरुषे ॥ ६९ ॥
पतितं रोगिणं दुष्टं निर्धनं गुणहीनकम् । युवानं चैव वृद्धं वा भजेत्तं न त्यजेत्सती ॥
सगुणं निर्गुणं वाऽपि द्वेष्टि या संत्यजेत्पतिम् । पच्यते कालसूत्रे सा यावच्चन्द्रदिवाकरौ ॥
कीटैः शुनकतुल्यैश्च भक्षिता सा दिवानिशम् । भुङ्क्ते मृतवसामांसं पिबेन्मूत्रं च तृष्णया
गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः । श्वापदः शतजन्मानि सा भवेद्बन्धुहा ततः ॥
ततो मानवजन्मानि लभेच्चेत्पूर्वकर्मणः । विधवा धनहीना च रोगयुक्ता भवेद्ध्रुवम् ॥
देहि नः कान्तदानं च कामपूरं विधेः सुत । विधात्रा सदृशस्त्वं च पुनः स्रष्टुं क्षमो जगत् ॥
कन्यानां वचनं श्रुत्वा दक्षः शंकरसंनिधिम् । जगाम शंभुस्तं दृष्ट्वा समुत्थाय ननाम च ॥
दक्षस्तस्याऽऽशिषं कृत्वा समुवाच कृपानिधिम् । तत्याज कोपं दुर्धर्षं दृष्ट्वा च प्रणतं शिवम्

दक्ष उवाच—

देहि जामातरं शंभो मदीयं प्राणवल्लभम् । मत्सुतानां च प्राणानां परमेव प्रियं पतिम् ॥
न चेद्ददासि जामातर्मम जामातरं विधुम् । दास्यामि दारुणं शापं तुभ्यं त्वं केन मुच्यसे
दक्षस्य वचनं श्रुत्वा तमुवाच कृपानिधिः । सुधाधिकं च वचनं ब्रह्मन्शरणपञ्जरः ॥८०॥

शिव उवाच—

करोषि भस्मसाच्चेन्मां दत्त्वा वा शापमेव च । नाहं दातुं समर्थश्च चन्द्रं च शरणागतम् ॥
शिवस्य वचनं श्रुत्वा दक्षस्तं शप्तुमुद्यतः । शिवः सस्मार गोविन्दं विपन्मोक्षणकारकम्

१ क. °द्रूक्षे मूत्ररसं मां° । २ ख. धर्षो द° ।

एतस्मिन्नन्तरे कृष्णो वृद्धब्राह्मणरूपधृक् । समाययौ तयोर्मूलं तौ तं च नमतुः क्रमात् ॥
दत्त्वा शुभाशिषं तौ स ब्रह्मज्योतिः सनातनः । उवाच शंकरं पूर्वं परिपूर्णतमो द्विज ॥

श्रीभगवानुवाच—

न चाऽऽत्मनः प्रियः कश्चिच्छर्व सर्वेषु बन्धुषु । आत्मानं रक्ष दक्षाय देहि चन्द्रं सुरेश्वर ॥
तपस्विनां वरः शान्तस्त्वमेवं वैष्णवाग्रणीः । समः सर्वेषु जीवेषु हिंसाक्रोधविवर्जितः ॥
दक्षः क्रोधी च दुर्धर्षस्तेजस्वी ब्रह्मणः सुतः । शिष्टो बिभेति दुर्धर्षं न दुर्धर्षश्च कंचन ॥
नारायणवचः श्रुत्वा हसित्वा शंकरः स्वयम् । उवाच नीतिसारं च नीतिबीजं परात्परम् ॥

शंकर उवाच—

तपो दास्यामि तेजश्च सर्वसिद्धिं च संपदम् । प्राणांश्च न समर्थोऽहं प्रदातुं शरणागतम् ॥
यो ददाति भयेनैव प्रपन्नं शरणागतम् । तं च धर्मः परित्यज्य याति शप्त्वा सुदारुणम् ॥
सर्वं त्यक्तुं समर्थोऽहं न स्वधर्मं जगत्प्रभो । यः स्वधर्मविहीनश्च स च सर्वबहिष्कृतः ॥
यश्च धर्मं सदा रक्षेद्धर्मस्तं परिरक्षति । धर्मं वेदेश्वर त्वं च किं मां ब्रूहि स्वमायया ॥
त्वं सर्वमाता स्रष्टा च हन्ता च परिणामतः । त्वयि भक्तिर्दृढा यस्य तस्य कस्माद्भयं भवेत् ॥
शंकरस्य वचः श्रुत्वा भगवान्सर्वभाववित् । चन्द्रं चन्द्राद्विनिष्कृष्य दक्षाय प्रददौ हरिः ॥
प्रतस्थावर्धचन्द्रश्च निर्व्याधिः शिवशेखरे । निजग्राह परं चन्द्रं विष्णुदत्तं प्रजापतिः ॥
यक्ष्मग्रस्तं च तं दृष्ट्वा दक्षस्तुष्टाव माधवम् । पक्षे पूर्णं क्षतं पक्षे तं चकार हरिः स्वयम् ॥
कृष्णः एवं वरं दत्त्वा जगाम स्वालयं द्विज । दक्षश्चन्द्रं गृहीत्वा च कन्याभ्यः प्रददौ पुनः ॥
चन्द्रस्ताश्च परिप्राप्य विजहार दिवानिशम् । समं ददर्श ताः सर्वास्तत्प्रभृत्येव कम्पितः ॥
इत्येवं कथितं सर्वं किंचित्सृष्टिक्रमं मुने । श्रुतं च गुरुवक्त्रेण पुष्करे मुनिसंसदि ॥९९ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे प्रसूतिवंशवर्णनं
नाम नवमोऽध्यायः ॥ ९ ॥

अथ दशमोऽध्यायः ।

सौतिरुवाच—

भृगोः पुत्रश्च च्यवनः शुक्रश्च ज्ञानिनां वर । क्रतोरपि क्रिया भार्या वालखिल्यानसूयत ॥

१ क. 'श्च प्रपाति' । २ ख. 'भ्यस्तेभ्यो व' ।

त्रयः पुत्राश्चाङ्गिरसो बभूवुर्मुनिसत्तमाः । बृहस्पतिरुतथ्यश्च शम्बरश्चापि शौनक ॥२॥
वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः। पराशरसुतः श्रीमान्कृष्णद्वैपायनो हरिः ॥
व्यासपुत्रः शिवांशश्च शुकश्च ज्ञानिनां वरः। विश्वश्रवाः पुलस्त्यस्य यस्य पुत्रो धनेश्वरः॥ ४ ॥

शौनक उवाच—

अहो पुराणविदुषामत्यन्तं दुर्गमं वचः । न बुद्धं वचनं किंचिद्धनेशोत्पत्तिपूर्वकम् ॥
अधुना कथितं जन्म धनेशस्येश्वरादिदम्। पुनर्भिन्नक्रमं जन्म ब्रवीषि कथमेव माम् ॥

सौतिरुवाच—

बभूवुरेते दिक्पालाः पुरा च परमेश्वरात्। पुनश्च ब्रह्मशापेन स च विश्रवसः सुतः ॥
गुरवे दक्षिणां दातुमुतथ्यश्च धनेश्वरम्। ययाचे कोटिसौवर्णं यत्नतश्च प्रचेतसे ॥८॥
धनेशो विरसो भूत्वा तस्मै तद्दातुमुद्यतः। चकार भस्मसाद्विप्र पुनर्जन्म लब्धाभ सः ॥
तेन विश्रवसः पुत्रः कुबेरश्च धनाधिपः। रावणः कुम्भकर्णश्च धार्मिकश्च विभीषणः ॥
पुलहस्य सुतो वात्स्यः शाण्डिल्यश्च रुचेः सुतः। सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः॥
काश्यपः कश्यपाज्जातो भरद्वाजो बृहस्पतेः। ( स्वयं वात्स्यश्च पुलहात्सावर्णिर्गौतमात्तथा शाण्डिल्यश्च रुचेः पुत्रो मुनिस्तेजस्विनां वरः। ) बभूवुः पञ्चगोत्राश्च एतेषां प्रवरा भवे॥
बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः। ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक
चन्द्रादित्यमनूनां च प्रवराः क्षत्रियाः स्मृताः। ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः। तासां संकरजातेन बभूवुर्वर्णसंकराः ॥
गोपनापितभिल्लाश्च तथा मोदककूबरौ। ताम्बूलिस्वर्णकारौ च वणिग्जातय एव च ॥
इत्येवमाद्या विप्रेन्द्र सच्छूद्राः परिकीर्तिताः। शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः
विश्वकर्मा च विद्यायां वीर्याधानं चकार सः। ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः
मालाकारः कर्मकारः शङ्खकारः कुविन्दकः। कुम्भकारः कांस्यकारः षडते शिल्पिनां वराः
सूत्रधारश्चित्रकारः स्वर्णकारस्तथैव च। पतितास्ते ब्रह्मशापादयाज्या वर्णसंकराः॥२१॥

शौनक उवाच—

कथं देवो विश्वकर्मा वीर्याधानं चकार सः। शूद्रायामधमायां च कथं ते पतितास्त्रयः
कथं तेषु ब्रह्मशापो ह्यभवत्केन हेतुना । हे पुराणविदां श्रेष्ठ तन्नः शंसितुमर्हसि ॥

---

१ क. 'ब्र संवर्तेश्वा' ।

सौतिरुवाच—

घृताची कामतः कामं वेषं चक्रे मनोहरम्। तामपश्यद्विश्वकर्मा गच्छन्तीं पुष्करे पथि ॥
आगच्छत्तद्विलोकाच्च प्रसादोत्फुल्लमानसः। तां ययाचे स शृङ्गारं कामेन हृतचेतनः॥
रत्नालङ्कारभूषाढ्यां सर्वावयवकोमलाम्। यथा षोडशवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥
बृहन्नितम्बभारार्तां मुनिमानसमोहिनीम्। अतिवेगकटाक्षेण लोलां कामातिपीडिताम् ॥
तच्छ्रोणीं कठिनां दृष्ट्वा वायुनाऽपहृतांशुकाम्। अतीवोच्चैः स्तनयुगं कठिनं वर्तुलं परम्
सुस्मितं चारु वक्त्रं च शरच्चन्द्रविनिन्दकम्। पक्वबिम्बफलारक्तस्वोष्ठाधरमनोहरम् ॥
सिन्दूरबिंदुसंयुक्तं कस्तूरीबिन्दुसंयुतम्। कपोलमुज्ज्वलं शश्वन्महार्हमणिकुण्डलम् ॥
तामुवाच प्रियां शान्तां कामशास्त्रविशारदः। कामाग्निवर्धनोद्योगि वचनं श्रुतिसुन्दरम्॥

विश्वकर्मोवाच—

अयि क्व यासि ललिते मम प्राणाधिके प्रिये। मम प्राणांश्चापहृत्य तिष्ठ कान्ते क्षणं शुभे॥
तवैवान्वेषणं कृत्वा भ्रमामि जगतीतलम्। स्वप्राणांस्त्यक्तुमिष्टोऽहं त्वां न दृष्ट्वा हुताशने
त्वं कामलोकं यासीति श्रुत्वा रम्भामुखान्मया। आगच्छमहमेवाद्य चास्मिन्वर्त्मन्यवस्थितः
अहो सरस्वतीतीरे पुष्पोद्याने मनोहरे। सुगन्धिमन्दशीतेन वायुना सुरभीकृते ॥३९॥
रम कान्ते मया सार्द्धं यूना कान्तेन शोभने। विदग्धाया विदग्धेन संगमो गुणवान्भवेत्
स्थिरयौवनसंयुक्ता त्वमेव चिरजीविनी। कामुकी कोमलाङ्गी च सुन्दरीषु च सुन्दरी
मृत्युंजयवरेणैव मृत्युकन्या जिता मया। कुबेरभवनं गत्वा धनं लब्धं कुबेरतः॥३८॥
रत्नमाला च वरुणाद्वायोः स्त्रीरत्नभूषणम्। वह्निशुद्धं वस्त्रयुगं वह्नेः प्राप्तं महौजसः ॥
कामशास्त्रं कामदेवाद्योषिद्रञ्जनकारणम्। शृङ्गारशिल्पं यत्किंचिल्लब्धं चन्द्राच्च दुर्लभम्॥
रत्नमालां वस्त्रयुग्मं सर्वाण्याभरणानि च। तुभ्यं दातुं हृदि कृतं प्राप्तं तत्क्षणमेव च ॥
गृहे तानि च संस्थाप्य चाऽऽगतोऽन्वेषणे भवे। विरामे सुखसंभोगे तुभ्यं दास्यामि सांप्रतम्
कामुकस्य वचः श्रुत्वा घृताची सस्मिता मुने। ददौ प्रत्युत्तरं शीघ्रं नीतियुक्तं मनोहरम्

घृताच्युवाच—

त्वया यदुक्तं भद्रं तत्स्वीकरोम्यधुना परम्। किंतु सामयिकं वाक्यं ब्रवीष्यामि स्मरातुर ॥
कामदेवालयं यामि कृतवेषा च तत्कृते। यद्दिने यत्कृते यामो वयं तेषां च योषितः ॥
अद्याहं कामपत्नी च गुरुपत्नी तवाधुना। त्वयोक्तमधुनेदं च पठितं कामदेवतः ॥

---

१ ख. भम°। २ क. °भवेतदः।

विद्यादाता मन्त्रदाता गुरुर्लक्षगुणैः पितुः । मातुः सहस्रगुणवांश्चास्त्यन्यस्तत्समो गुरुः
गुरोः शतगुणैः पूज्या गुरुपत्नी श्रुतौ श्रुता । पितुः शतगुणं पूज्या यथा माता विचक्षण
मात्रा समागमे सूनोर्यावान्दोषः श्रुतौ श्रुतः । ततो लक्षगुणो दोषो गुरुपत्नीसमागमे ॥
मातरित्येव शब्देन यां च संभाषते नरः। सा मातृतुल्या सत्येन धर्मः साक्षी सतामपि
तया हि संगतो यः स्यात्कालसूत्रं प्रयाति सः । तत्र घोरे वसत्येव यावच्चन्द्रदिवाकरौ
मात्रा सह समायोगे ततो दोषश्चतुर्गुणः । सार्द्धं च गुरुपत्न्या च तल्लक्षगुण एव च ॥
कुम्भीपाके पतत्येव यावद्वै ब्रह्मणो वयः। प्रायश्चित्तं पापिनश्च तस्य नैव श्रुतौ श्रुतम् ॥
चक्राकारं कुलालस्य तीक्ष्णधारं च खड्गवत् । वसामूत्रपुरीषैश्च परिपूर्णं सुदुस्तरम् ॥
शूलवत्कृमिसंयुक्तं तप्तमग्निसमं द्रवत् । पापिनां तद्विहारं च कुम्भीपाकं प्रकीर्तितम् ॥
यावान्दोषो हि पुंसां च गुरुपत्नीसमागमे । तावांश्च गुरुपत्न्या वै तत्र चेत्कामुकी यदि ॥
अद्य यास्यामि कामस्य मन्दिरं तस्य कामिनी। वेषं कृत्वाऽऽगमिष्यामि त्वत्कृतेऽहं दिनान्तरे
घृताचीवचनं श्रुत्वा विश्वकर्मा रुरोष ताम् । शशाप शूद्रयोनिं च व्रजेति जगतीतले ॥
घृताची तद्वचः श्रुत्वा तं शशाप सुदारुणम्। लभ जन्म भवे त्वं च स्वर्गभ्रष्टो भवेति च
घृताची कारुमुक्त्वा च साऽगच्छत्काममन्दिरम्। कामेन सुरतं कृत्वा कथयामास तां कथाम्
सा भारते च कामोक्त्या गोपस्य मदनस्य च । पत्न्यां प्रयागे नगरे लेभे जन्म च शौनक
जातिस्मरा तत्प्रसूता बभूव च तपस्विनी। वरं न वव्रे धर्मिष्ठा तपस्यायां मनो दधौ ॥
तपश्चकार तपसा तप्तकाञ्चनसंनिभा । दिव्यं च शतवर्षं सा गङ्गातीरे मनोरमे ॥१३॥
वीर्येण सुरकारोश्च नव पुत्रान्प्रसूय सा । पुनः स्वर्लोकं गत्वा च सा घृताची बभूव ह

शौनक उवाच—

कथं वीर्यं सा दधार सुरकारोस्तपस्विनी । पुत्रान्नव प्रसूता च कुत्र वा कति वासरान् ॥

सौतिरुवाच—

विश्वकर्मा तु तच्छापं समाकर्ण्य रुषाऽन्वितः। जगाम ब्रह्मणः स्थानं शोकेन हतचेतनः ॥
नत्वा स्तुत्वा च ब्रह्माणं कथयामास तां कथाम् । ललाभ जन्म ब्राह्मण्यां पृथिव्यां ग्रामाज्ञया विधेः १७ ॥
स एव ब्राह्मणो भूत्वा भुवि कारुर्बभूव ह। नृपाणां च गृहस्थानां नानाशिल्पं चकार ह ॥
शिल्पं च कारयामास सर्वेभ्यः सर्वतः सदा। विचित्रं विविधं शिल्पमाश्चर्यं सुमनोहरम् ॥

---

१ क. °श्च चाद्यो पु° । २ क. °त्रानष्टौ प्र° । ३ ख. °र्मिर्मा साऽऽऽश्च° ।

एकदा तु प्रयागे च शिल्पं कृत्वा नृपस्य च । स्नातुं जगाम गङ्गां स चापश्यत्तत्र कामिनीम् ।
घृताचीं नवरूपां च युवतिं तां तपस्विनीम् । जातिस्मरां तां बुबुधे स च जातिस्मरो द्विजः
दृष्ट्वा सकामः सहसा बभूव हृतचेतनः । उवाच मधुरं शान्तः शान्तां तां च तपस्विनीम् ॥

ब्राह्मण उवाच —

अहोऽधुना त्वमत्रैव घृताचि सुमनोहरे । मा मां स्मरसि रम्भोरु विश्वकर्माऽहमेव च ॥
शापमोक्षं करिष्यामि भज मां तव सुन्दरि । त्वत्कृतेऽतिदहत्येव मनो मे स च मन्मथः ॥
द्विजस्य वचनं श्रुत्वा घृताची नवरूपिणी । उवाच मधुरं शान्ता नीतियुक्तं परं वचः ॥

गोपिकोवाच—

तद्दिने कामकान्ताऽहमधुना च तपस्विनी । कथं त्वया संगता स्यां गङ्गातीरे च भारते ॥
विश्वकर्मन्निदं पुण्यं कर्मक्षेत्रं च भारतम् । अत्र यत्क्रियते कर्म भोगोऽन्यत्र शुभाशुभम् ॥
धर्मी मोक्षकृते जन्म प्रलभ्य तपसः फलात् । निबद्धः कुरुते कर्म मोहितो विष्णुमायया ॥
माया नारायणीशाना परितुष्टा च यं भवेत् । तस्मै ददाति श्रीकृष्णो भक्तिं तन्मन्त्रमीप्सितम् ।
यो मूढो विषयासक्तो लब्धजन्मा च भारते । विहाय कृष्णं सर्वेशं स मुग्धो विष्णुमायया ॥
सर्वं स्मरामि देवाहमहो जातिस्मरा पुरा । घृताची सुरवेश्याऽहमधुना गोपकन्यका ॥
तपः करोमि मोक्षार्थं गङ्गातीरे सुपुण्यदे । नात्र स्थलं च क्रीडायाः स्थिरस्त्वं भव कामुक ॥
अन्यत्र च कृतं पापं गङ्गायां च विनश्यति । गङ्गातीरे कृतं पापं सद्यो लक्षगुणं भवेत् ॥
तत्तु नारायणक्षेत्रे तपसा च विनश्यति । सद्यो वा कामतः कृत्वा निवृत्तश्च भवेत्पुनः ॥
घृताचीवचनं श्रुत्वा विश्वकर्माऽनिलाकृतिः । जगाम तां गृहीत्वा च मलयं चन्दनालयम् ॥
रम्यायां मलयद्रोण्यां पुष्पतल्पे मनोरमे । पुष्पचन्दनवातेन संततं सुरभीकृते ॥ ८१ ॥
चकार सुखसंभोगं तया स विजने वने । पूर्णं द्वादशवर्षं च बुबुधे न दिवानिशम् ॥
बभूव गर्भः कामिन्याः परिपूर्णः सुदुर्वहः । सा सुषाव च तत्रैव पुत्रांस्नव मनोहरान् ॥
कृताशिक्षितशिल्पांश्च ज्ञानयुक्तांश्च शौनक । पूर्वप्राक्तनतो योग्यान्बलयुक्तान्विचक्षणान् ॥
मालाकारान्कर्मकारान्छङ्खकारान्कुविन्दकान् । कुम्भकारान्सूत्रकारान्स्वर्णचित्रकरांस्तथा
तौ च तेभ्यो वरं दत्त्वा तान्संस्थाप्य महीतले । मानवीं तनुमुत्सृज्य जग्मतुर्निजमन्दिरम् ॥
स्वर्णकारः स्वर्णचौर्याद्ब्राह्मणानां द्विजोत्तम । बभूव पतितः सद्यो ब्रह्मशापेन कर्मणा ॥ ९२ ॥

---

१ क. 'रे मां संस्म' । २ क. 'ञानष्टे स' ।

सूत्रकारो द्विजानां तु शापेन पतितो भुवि । शीघ्रं च यज्ञकाष्ठानि न ददौ तेन हेतुना
व्यतिक्रमेण चित्राणां सद्यश्चित्रकारस्तथा । पतितो ब्रह्मशापेन ब्राह्मणानां च कोपतः ॥
कश्चिद्वणिग्विशेषश्च संसर्गात्स्वर्णकारिणः । स्वर्णचौर्यादिदोषेण पतितो ब्रह्मशापतः ९९
कुलटायां च शूद्रायां चित्रकारस्य वीर्यतः । बभूवाट्टालिकाकारः पतितो जारदोषतः ॥
अट्टालिकाकारबीजात्कुम्भकारस्य योषिति । बभूव कोटकः सद्यः पतितो गृहकारकः ॥
कुम्भकारस्य बीजेन सद्यः कोटकयोषिति । बभूव तैलकारश्च कुटिलः पतितो भुवि ॥
सद्यः क्षत्रियबीजेन राजपुत्रस्य योषिति । बभूव तीवरश्चैव पतितो जारदोषतः ॥९९॥
तीवरस्य तु बीजेन तैलकारस्य योषिति । बभूव पतितो दस्युर्लेटश्च परिकीर्तितः ॥ १००॥
लेटस्तीवरकन्यायां जनयामास षट् सुतान् । माल्लं मन्त्रं मातरं च भण्डं कोलं कलंदरम् ॥
ब्राह्मण्यां शूद्रवीर्येण पतितो जारदोषतः । सद्यो बभूव चण्डालः सर्वस्मादधमोऽशुचिः ॥
तीवरेण च चण्डाल्यां चर्मकारो बभूव ह । चर्मकार्यां च चण्डालान्मांसच्छेदो बभूव ह ॥
मांसच्छेद्यां तीवरेण कोंचश्च परिकीर्तितः । कोंचस्त्रियां तु कैवर्तात्कर्तारः परिकीर्तितः ॥
सद्यश्चाण्डालकन्यायां लेटवीर्येण शौनक । बभूवतुस्तौ द्वौ पुत्रौ दुष्टौ हड्डिडमौ तथा ।
क्रमेण हड्डिकन्यायां सद्यश्चाण्डालवीर्यतः । बभूवुः पञ्च पुत्राश्च दुष्टा वनचराश्च ते ॥
लेटात्तीवरकन्यायां गङ्गातीरे च शौनक । बभूव सद्यो यो बालो गङ्गापुत्रः प्रकीर्तितः ॥
गङ्गापुत्रस्य कन्याया वीर्याद्वै वेषधारिणः । बभूव वेषधारी च पुत्रो युङ्गी प्रकीर्तितः ॥
वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव ह । शुण्डियोषिति वैश्यात्तु पौण्ड्रकश्च बभूव ह ॥
क्षत्रात्करणकन्यायां राजपुत्रो बभूव ह । राजपुत्र्यां तु करणादागरीति प्रकीर्तितः ॥
क्षत्रवीर्येण वैश्यायां कैवर्तः परिकीर्तितः । कलौ तीवरसंसर्गाद्धीवरः पतितो भुवि ॥
तीवर्यां धीवरात्पुत्रो बभूव रजकः स्मृतः । रजक्यां तीवराच्चैव कोयालीति बभूव ह ॥
नापिताद्गोपकन्यायां सर्वस्वी तस्य योषिति । क्षत्राद्बभूव व्याधश्च बलवान्मृगहिंसकः ॥
तीवराच्छुण्डिकन्यायां बभूवुः सप्त पुत्रकाः । ते कलौ हड्डिसंसर्गाद्बभूवुर्दस्यवः सदा ॥
ब्राह्मण्यामृषिवीर्येण ऋतोः प्रथमवासरे । कुत्सितश्चोदरे जातः कुदरस्तेन कीर्तितः ॥
तदशौचं विप्रतुल्यं पतितो ऋतुदोषतः । सद्यः कोटकसंसर्गादधमो जगतीतले॥११६॥
क्षत्रवीर्येण वैश्यायामृतोः प्रथमवासरे । जातः पुत्रो महादस्युर्बलवांश्च धनुर्धरः॥११७॥
चकार वागतीतं च क्षत्रियेणापि वारितः । तेन जात्या स पुत्रश्च वागतीतः प्रकीर्तितः ॥
क्षत्रवीर्येण शूद्रायामृतुदोषेण पापतः । बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ॥११९॥

---

१ छ. ख. °र्भधारो ।

अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः। शौचाचारविहीनाश्च दुर्धर्षा धर्मवर्जिताः ॥
म्लेच्छात्कुविन्दकन्यायां जोलाजातिर्बभूव । जोलात्कुविन्दकन्यायां शराङ्कः परिकीर्तितः॥
वर्णसंकरदोषेण बह्व्यश्चाश्रुतजातयः। तासां नामानि संख्याश्च को वा वक्तुं क्षमो द्विज॥
वैद्योऽश्विनीकुमारेण जातो विप्रस्य योषिति। वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः ॥
ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणाः। तेभ्यश्च जाताः शूद्रायां ये व्यालग्राहिणो भुवि

शौनक उवाच—

कथं ब्राह्मणपत्न्यां तु सूर्यपुत्रोऽश्विनीसुतः। अहो केनाविवेकेन वीर्याधानं चकार ह ॥

सौतिरुवाच—

गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः। ददर्श कामुकः शान्तः पुष्पोद्याने च निर्जने॥
तया निवारितो यत्नाद्बलेन बलवान्सुरः। अतीव सुन्दरीं दृष्ट्वा वीर्याधानं चकार सः ॥
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोहरे। सद्यो बभूव पुत्रश्च तप्तकाञ्चनसंनिभः॥१२८॥
सपुत्रा स्वामिनो गेहं जगाम व्रीडिता सती। स्वामिनं कथयामास यन्मार्गे दैवसंकटम् ॥
विप्रो रोषेण तत्याज तं च पुत्रं स्वकामिनीम्। सरिद्बभूव योगेन सा च गोदावरी स्मृता॥
पुत्रं चिकित्साशास्त्रं च पाठयामास यत्नतः। नानाशिल्पं च मन्त्रं च स्वयं स रविनन्दनः॥
विप्रश्च वेतनाज्ज्योतिर्गणनाच्च निरन्तरम्। वेदधर्मपरित्यक्तो बभूव गणको भुवि॥१३१॥
लोभी विप्रश्च शूद्राणामग्रे दानं गृहीतवान्। ग्रहणे मृतदानानामग्रदानी बभूव सः॥१३२॥
कश्चित्पुमान्ब्रह्मयज्ञे यज्ञकुण्डात्समुत्थितः। स सूतो धर्मवक्ता च मत्पूर्वपुरुषः स्मृतः॥
पुराणं पाठयामास तं च ब्रह्मा कृपानिधिः। पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः॥१३५॥
वैश्यायां सूतवीर्येण पुमानेको बभूव ह। स भट्टो वावदूकश्च सर्वेषां स्तुतिपाठकः॥१३६॥
एवं ते कथितः किंचित्पृथिव्यां जातिनिर्णयः। वर्णसंकरदोषेण बह्व्योऽन्याः सन्ति जातयः
संबन्धो येषु येषां यः सर्वजातिषु सर्वतः। तत्त्वं ब्रवीमि वेदोक्तं ब्रह्मणा कथितं पुरा॥
पिता तातस्तु जनको जन्मदाता प्रकीर्तितः। अम्बा माता च जननी जनयित्री प्रसूरपि॥
पितामहः पितृपिता तत्पिता प्रपितामहः। अत ऊर्ध्वं ज्ञातयश्च सगोत्राः परिकीर्तिताः॥
मातामहः पिता मातुः प्रमातामह एव च। मातामहस्य जनकस्तत्पिता वृद्धपूर्वकः ॥
पितामही पितुर्माता तच्छ्वश्रूः प्रपितामही। तच्छ्वश्रूश्च परिज्ञेया सा वृद्धप्रपितामही ॥
मातामही मातृमाता मातृतुल्या च पूजिता। प्रमातामहीति ज्ञेया प्रमातामहकामिनी ॥

१ क. °हृग्यश्च शठजा°। २ क. °षु संमतः। स्वां तं ग्र°।

वृद्धमातामही ज्ञेया तत्पितुः कामिनी तथा । पितृभ्राता पितृव्यश्च मातृभ्राता च मातुलः ॥
पितृष्वसा पितुर्मातृष्वसा मातुः स्वसा स्मृता । सूनुश्च तनयः पुत्रो दायादश्चाऽऽत्मजस्तथा
धनभाग्वीर्यजश्चैव पुंसि[1] जन्ये च वर्तते । जन्यायां दुहिता कन्या चाऽऽत्मजा परिकीर्तिता ॥
पुत्रपत्नी वधूर्ज्ञेया जामाता दुहितुः पतिः । पतिः प्रियश्च भर्ता च स्वामी कान्ते च वर्तते ॥
देवरः स्वामिनो भ्राता ननान्दा स्वामिनः स्वसा । श्वशुरः स्वामिनस्तातः श्वश्रूश्च स्वामिनः प्रसूः ॥ १४७ ॥
भार्या जाया प्रिया कान्ता स्त्री च पत्नी प्रकीर्तिता । पत्नीभ्राता श्यालकश्च स्वसा पत्न्याश्च श्यालिका ॥ १४९ ॥
पत्नीमाता तथा श्वश्रूस्तत्पिता श्वशुरः स्मृतः । सगर्भः सोदरो भ्राता सगर्भा भगिनी स्मृता
भगिनीजो भागिनेयो भ्रातृजो भ्रातृपुत्रकः । आवुत्तो भगिनीकान्तो भगिनीपतिरेव च ॥
श्यालीपतिस्तु भ्राता च श्वशुरैकत्वहेतुना । श्वशुरस्तु पिता ज्ञेयो जन्मदातुः समो मुने ॥
अन्नदाता भयत्राता पत्नीतातस्तथैव च । विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम् ॥
अन्नदातुश्च या पत्नी भगिनी गुरुकामिनी । माता च तत्सपत्नी च कन्या पुत्रप्रिया तथा ॥
मातुर्माता पितुर्माता श्वश्रूपित्रोः स्वसा तथा । पितृव्यस्त्री मातुलानी मातरश्च चतुर्दश ॥
पौत्रस्तु पुत्रपुत्रे च प्रपौत्रस्तत्सुतेऽपि च । तत्पुत्राद्याश्च ये वंश्याः कुलजाश्च प्रकीर्तिताः
कन्यापुत्रश्च दौहित्रस्तत्पुत्राद्याश्च बान्धवाः । भागिनेयसुताद्याश्च पुरुषा बान्धवाः स्मृताः ॥
भ्रातृपुत्रस्य पुत्राद्यास्ते पुनर्ज्ञातयः स्मृताः । गुरुपुत्रस्तथा भ्राता पोष्यः परमबान्धवः ॥
गुरुकन्या च भगिनी पोष्या मातृसमा मुने । पुत्रस्य च गुरुर्भ्राता पोष्यः सुस्निग्धबान्धवः ॥
पुत्रस्य श्वशुरो भ्राता बन्धुर्वैवाहिकः स्मृतः । कन्यायाः श्वशुरे चैव तत्संबन्धः प्रकीर्तितः ॥
गुरुश्च कन्यकायाश्च भ्राता सुस्निग्धबान्धवाः । गुरुश्वशुरभ्रातॄणां गुरुतुल्यः प्रकीर्तितः
बन्धुता येन सार्धं च तन्मित्रं परिकीर्तितम् । मित्रं सुखप्रदं ज्ञेयं दुःखदो रिपुरुच्यते ॥
बान्धवो दुःखदो दैवान्निःसंबन्धोऽसुखप्रदः । संबन्धास्त्रिविधाः पुंसां विप्रेन्द्र जगतीतले ॥
विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्तितः । मित्रं तु प्रीतिजं ज्ञेयं स संबन्धः सुदुर्लभः
मित्रमाता मित्रभार्या मातृतुल्या न संशयः । मित्रभ्राता मित्रपिता भ्रातृतातसमौ नृणाम्
चतुर्थं नामसंबन्धमित्याह कमलोद्भवः । जारश्चोपपतिर्बन्धुर्दुष्टसंभोगकर्तरि ॥ १६६ ॥
उपपत्न्यां नवज्ञा च प्रेयसी चित्तहारिणी । स्वामितुल्यश्च जारश्च नवज्ञा गृहिणीसमा ॥

---

[1] क. °सि जीवे च ।

संबन्धो देशभेदे च सर्वदेशे विगर्हितः। अवैदिको निन्दितस्तु विश्वामित्रेण निर्मितः॥
दुस्त्यजश्च महद्भिस्तु देशभेदे विधीयते। अकीर्तिजनकः पुंसां योषितां च विशेषतः॥
तेजीयसां न दोषाय विद्यमाने युगे युगे॥ १७०॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे जातिसंबन्धनिर्णयो नाम दशमोऽध्यायः॥ १०॥

---

अथैकादशोऽध्यायः।

---

**शौनक उवाच—**

द्विजः स भार्यां संत्यज्य किं चकार विशेषतः। अश्विनोर्वा महाभाग किं नाम कस्य वंशजौ॥

**सौतिरुवाच—**

द्विजश्च सुतपा नाम भारद्वाजो महामुनिः। तपश्चकार कृष्णस्य लक्षवर्षं हिमालये॥
महातपस्वी तेजस्वी प्रज्वलन्ब्रह्मतेजसा। ज्योतिर्ददर्श कृष्णस्य गगने सहसा क्षणम्॥
वरं स वव्रे निर्लिप्तमात्मानं प्रकृतेः परम्। न च मोक्षं ययाचे तं दास्यं भक्तिं च निश्चलाम्॥
बभूवाऽऽकाशवाणीति कुरु दारपरिग्रहम्। पश्चाद्दास्यं प्रदास्यामि भक्तिं भोगक्षये द्विज
पितॄणां मानसीं कन्यां ददौ तस्मै विधिः स्वयम्। तस्यां कल्याणमित्रश्च बभूव मुनिपुंगवः
यस्य स्मरणमात्रेण न भवेत्कुलिशाद्भयम्। न द्रष्टव्यं बन्धुमात्रं नूनं तत्स्मरणाल्लभेत्॥
कल्याणमित्रजननीं परित्यज्य महामुनिः। शशाप सूर्यपुत्रं च यज्ञभागवर्जितो भव॥८॥
ससोदरश्च वा पूज्यो भवेति च सुराधम। व्याधिग्रस्तो जडाङ्गश्च भूयात्तेऽकीर्तिमानिति॥
इत्युक्त्वा सुतपा गेहं प्रतस्थे सूनुना सह। अश्विभ्यां सहितः सूर्यः प्रययौ च तदन्तिकम्॥
पुत्राभ्यां व्याधियुक्ताभ्यां सूर्यस्त्रिजगतां पतिः। मुनीन्द्रं वै सुतपसं स तुष्टाव च शौनक॥

**सूर्य उवाच—**

क्षमस्व भगवन्विप्र विष्णुरूप युगे युगे। मम पुत्रापराधं च भारद्वाज मुनीश्वर॥१२॥
ब्रह्मविष्णुमहेशाद्याः सुराः सर्वे च संततम्। भुञ्जते विप्रदत्तं तु फलपुष्पजलादिकम्॥
ब्राह्मणा वाहिता देवाः शश्वद्विश्वेषु पूजिताः। न च विप्रात्परो देवो विप्ररूपी स्वयं हरिः॥
ब्राह्मणे परितुष्टे च तुष्टो नारायणः स्वयम्। नारायणे च संतुष्टे संतुष्टाः सर्वदेवताः॥
नास्ति गङ्गासमं तीर्थं न च कृष्णात्परः सुरः। न शंकराद्वैष्णवश्च न सहिष्णुर्धरापरा॥

न च सत्यात्परो धर्मो न साध्वी पार्वतीपरा । न दैवाद्बलवान्कश्चिन्न च पुत्रात्परः प्रियः
न च व्याधिसमः शत्रुर्न च पूज्यो गुरोः परः । नास्ति मातृसमो बन्धुर्न च मित्रं पितुः परम् ॥
एकादशीव्रतान्नान्यत्तपो नानशनात्परम् । परं सर्वधनं रत्नं विद्यारत्नं परं ततः ॥
सर्ववर्णात्परो विप्रो नास्ति विप्रसमो गुरुः । वेदवेदाङ्गतत्त्वज्ञ इत्याह कमलोद्भवः ॥१०॥
सूर्यस्य वचनं श्रुत्वा भारद्वाजो ननाम तम् । नीरुजौ चापि तत्पुत्रौ चकार तपसः फलात् ॥
पश्चाच्च तव पुत्रौ च यज्ञभाजौ भविष्यतः । इत्युक्त्वा तं च सुतपाः प्रणम्याहस्करं मुनिः ॥
जगाम गङ्गां संत्रस्तो हरिसेवनतत्परः । पुत्राभ्यां सहितः सूर्यो जगाम निजमन्दिरम्
बभूवतुस्तौ पूज्यौ च यज्ञभाजौ द्विजाशिषा । एतत्सूर्यकृतं विप्र स्तोत्रं यो मानवः पठेत्
विप्रपादप्रसादेन सर्वत्र विजयी भवेत् ॥ २४ ॥
ब्राह्मणेभ्यो नम इति प्रातरुत्थाय यः पठेत् । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे । सागरे यानि तीर्थानि विप्रपादेषु तानि च
विप्रपादोदकं पीत्वा यावत्तिष्ठति मेदिनी । तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥
विप्रपादोदकं पुण्यं भक्तियुक्तश्च यः पिबेत् । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः
महारोगी यदि पिबेद्विप्रपादोदकं द्विज । मुच्यते सर्वरोगाच्च मासमेकं तु भक्तितः २९॥
अविद्यो वा सविद्यो वा संध्यापूतो हि यो द्विजः । स एव विष्णुसदृशो न हरौ विमुखो यदि ॥
घ्नन्तं विप्रं शपन्तं वा न हन्यान्न च तं शपेत् । गोभ्यः शतगुणं पूज्यो हरिभक्तश्च स स्मृतः
पादोदकं च नैवेद्यं भुङ्क्ते विप्रस्य यो द्विजः । नित्यं नैवेद्यभोजी च राजसूयफलं लभेत्
एकादश्यां न भुङ्क्ते यो नित्यं कृष्णं समर्चयेत् । तस्य पादोदकं प्राप्य स्थलं तीर्थं भवेद्ध्रुवम्
यो भुङ्क्ते भोजनोच्छिष्टं नित्यं नैवेद्यभोजनम् । कृष्णदेवस्य पूतोऽसौ जीवन्मुक्तो महीतले
अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम् । द्विजानां कुलजातानामित्याह कमलोद्भवः ॥
ब्रह्मा च ब्रह्मपुत्राश्च सर्वे विष्णुपरायणाः । ब्राह्मणस्तत्कुले जातो विमुखश्च हरौ कथम् ॥
पित्रोर्मातामहादीनां संसर्गस्य गुरोश्च वा । दोषेण विमुखाः कृष्णे विप्रा जीवन्मृताश्च ते ॥
स किंगुरुः स किंतातः स किंपुत्रः स किंसखा । स किंराजा स किंबन्धुर्नदद्याद्यो हरौ मतिम्
अवैष्णवाद्द्विजाद्विप्र चण्डालो वैष्णवो वरः । सगणः श्वपचो मुक्तो ब्राह्मणो नरकं व्रजेत् ॥
संध्याहीनोऽशुचिर्नित्यं कृष्णे वा विमुखो द्विजः । स एव ब्राह्मणाभासो विषहीनो यथोरगः
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविशति । तं × वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिः ॥

× संध्याहीनो ह्यवैष्णवः । तत्र विष्णुस्मरणादेः सर्वत्र तैराचरणात् । स्मार्ताश्च पञ्चायतनपूजकाः ।

१ ख. सर्वाश्रमैः प° । २ क. °ाज्ञया । ए° ।

पुंसां मातामहादीनां शतैः सार्धं हरेः पदम्। प्रयाति वैष्णवः पुंसामात्मनः कुलकोटिभिः ॥
ब्रह्मक्षत्रियविट्शूद्राश्चतस्रो जातयो यथा। स्वतन्त्रा जातिरेका च विश्वस्मिन्वैष्णवाभिधा ॥
ध्यायन्ति वैष्णवाः शश्वद्गोविन्दपदपङ्कजम्। ध्यायते तांश्च गोविन्दः शश्वत्तेषां च संनिधौ॥
सुदर्शनं संनियोज्य भक्तानां रक्षणाय च। तथाऽपि नहि निश्चिन्तोऽवतिष्ठद्भक्तसंनिधौ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे विष्णुवैष्णवब्राह्मणप्रशंसा नामैकादशोऽध्यायः ॥ ११ ॥

===

अथ द्वादशोऽध्यायः।

---

शौनक उवाच—

ऋषिवंशप्रसंगेन बभूवुर्विविधाः कथाः। उपालम्भेन प्रस्तावात्कौतुकेन श्रुता मया ॥ १॥
प्रजा वा ससृजुः के वा ऊर्ध्वरेताश्च कश्चन। पित्रा सह विरोधेन नारदः किं चकार सः॥
पितुः शापेन पुत्रस्य किं बभूव विरोधतः। पितुर्वा पुत्रशापेन सौते तत्कथ्यतां शुभम् ॥

सौतिरुवाच—

हंसो यतिश्चारणिश्च वोढुः पञ्चशिखस्तथा। अपान्तरमाश्चैव सनकाद्याश्च शौनक। ४॥
एतैर्विनाऽन्ये बहवो ब्रह्मपुत्राश्च संततम्। सांसारिकाः प्रजावन्तो गुर्वाज्ञापरिपालकाः ॥
अपूज्यः पुत्रशापेन स्वयं ब्रह्मा प्रजापतिः। तेनैव ब्रह्मणो मन्त्रं नोपासन्ते विपश्चितः ॥६॥
नारदो गुरुशापेन गन्धर्वश्च बभूव सः। कथयामि सुविस्तीर्णं तद्वृत्तान्तं निशामय ॥ ७ ॥
गन्धर्वराजः सर्वेषां गन्धर्वाणां वरो महान्। परमैश्वर्यसंयुक्तः पुत्रहीनो हि कर्मणा ॥८॥
गुर्वाज्ञया पुष्करे स परमेण समाधिना। तपश्चकार शंभोश्च कृपणो दीनमानसः ॥ ९ ॥
शिवस्य कवचं स्तोत्रं मन्त्रं च द्वादशाक्षरम्। ददौ गन्धर्वराजाय वसिष्ठश्च कृपानिधिः ॥
जजाप परमं मन्त्रं दिव्यं वर्षशतं मुने। पुष्करे स निराहारः पुत्रदुःखेन तापितः ॥११॥
विरामे शतवर्षस्य ददर्श पुरतः शिवम्। भासयन्तं दश दिशो ज्वलन्तं ब्रह्मतेजसा ॥
महत्तेजः स्वरूपं च भगवन्तं सनातनम्। ईषद्धासं प्रसन्नास्यं भक्तानुग्रहकारकम् ॥
तपोरूपं तपोबीजं तपस्याफलदं फलम्। शरणागतभक्ताय दातारं सर्वसंपदाम् ॥१४॥
त्रिशूलपट्टिशधरं वृषभस्थं दिगम्बरम्। शुद्धस्फटिकसंकाशं त्रिनेत्रं चन्द्रशेखरम्॥१५॥
तप्तस्वर्णप्रभाजुष्टजटाजालधरं वरम्। नीलकण्ठं च सर्वज्ञं नागयज्ञोपवीतकम् ॥ १६ ॥

---

१ क विश्वेषु।

संहर्तारं च सर्वेषां कालं मृत्युंजयं परम् । ग्रीष्ममध्याह्नमार्तण्डकोटिसंकाशमीश्वरम् ॥
तत्त्वज्ञानप्रदं शान्तं मुक्तिदं हरिभक्तिदम्। दृष्ट्वा ननाम सहसा गन्धर्वो दण्डवद्भुवि॥
वसिष्ठदत्तस्तोत्रेण तुष्टाव परमेश्वरम् । वरं वृणुष्वेति शिवस्तमुवाच कृपानिधिः ॥
स ययाचे हरेर्भक्तिं पुत्रं परमवैष्णवम् । १९ ॥
गन्धर्वस्य वचः श्रुत्वा चाहसीच्चन्द्रशेखरः। उवाच दीनं दीनेशो दीनबन्धुः सनातनः ॥

**महादेव उवाच—**

कृतार्थस्त्वं वरादेकादन्यच्चर्वितचर्वणम् । गन्धर्वराज वृणुषे को वा तृप्तोऽतिमङ्गले ॥
यस्य भक्तिर्हरौ वत्स सुदृढा सर्वमङ्गला । स समर्थः सर्वविश्वं पातुं कर्तुं च लीलया॥
आत्मनः कुलकोटिं च शतं मातामहस्य च । पुरुषाणां समुद्धृत्य गोलोकं याति निश्चितम्
त्रिविधानि च पापानि कोटिजन्मार्जितानि च । निहत्य पुण्यभोगं च हरिदास्यं लभेद्ध्रुवम्
तावत्पत्नी सुतस्तावत्तावदैश्वर्यमीप्सितम्। सुखं दुःखं नृणां तावद्यावत्कृष्णे न मानसम्
कृष्णे मनसि संजाते भक्तिखड्गो दुरत्ययः। नराणां कर्मवृक्षाणां मूलच्छेदं करोत्यहो॥
*भवेद्येषां सुकृतिनां पुत्राः परमवैष्णवाः। कुलकोटिं च तेषां त उद्धरन्त्येव लीलया ॥
चारितार्थः पुमानेकद्वारमिच्छुर्वरादहो। किं वरेण द्वितीयेन पुंसां तृप्तिर्न मङ्गले ॥२८॥
धनं संचितमस्माकं वैष्णवानां सुदुर्लभम्। श्रीकृष्णे भक्तिदास्यं च न वयं दातुमुत्सुकाः॥
वरयान्यं वरं वत्स यत्ते मनसि वाञ्छितम्। इन्द्रत्वममरत्वं वा ब्रह्मत्वं लभ दुर्लभम्॥३०॥
सर्वसिद्धिं महायोगं ज्ञानं मृत्युंजयादिकं। सुखेन सर्वं दास्यामि हरिदास्यं त्यज ध्रुवम् ॥
शंकरस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुकः। उवाच दीनो दीनेशं दातारं सर्वसंपदाम् ॥

**गन्धर्व उवाच—**

यत्पक्ष्मचालनेनैव ब्रह्मणः पतनं भवेत् । तद्ब्रह्मत्वं स्वप्नतुल्यं कृष्णभक्तो न चेच्छति ॥
इन्द्रत्वममरत्वं वा सिद्धयोगादिकं शिव। ज्ञानं मृत्युंजयाद्यं वा नहि भक्तस्य वाञ्छितम्
सालोक्यसार्ष्टिसामीप्यसायुज्यं श्रीहरेरपि। तत्र निर्वाणमोक्षं च नहि वाञ्छन्ति वैष्णवाः
शश्वत्तत्र दृढा भक्तिर्हरिदास्यं सुदुर्लभम्। स्वप्ने जागरणे भक्ता वाञ्छन्त्येवं वरं वरम्
तद्दास्यं वैष्णवसुतं देहि कल्पतरो वरम् । त्वां प्राप्य लभते तुच्छं वरं सर्ववरोऽवरः ॥
न दास्यसीदं चेच्छंभो वरं दुष्कृतिनं च माम्। कृत्वा हि स्वशिरश्छेदं प्रदास्यामि हुताशने॥
गन्धर्ववचनं श्रुत्वा तमुवाच कृपानिधिः। भक्तं दीनं च भक्तेशो भक्तानुग्रहकारकः॥

---

* भवेयुरित्यर्थः। एकवचनं त्वार्षम्।

शंकर उवाच—

हरिभक्तिं हरेर्दास्यं पुत्रं परमवैष्णवम् । चिरायुषं च गुणिनं शश्वत्सुस्थिरयौवनम् ॥
ज्ञानिनं सुन्दरवरं गुरुभक्तं जितेन्द्रियम् । गन्धर्वराजप्रवरं वरेमं* लभ मा शुचः ॥ ४१ ॥
इत्युक्त्वा शंकरस्तस्माज्जगाम स्वालयं मुने । गन्धर्वराजः संतुष्ट आजगाम स्वमन्दिरम् ॥
प्रफुल्लमानसाः सर्वे मानवाः सिद्धकर्मणः । नारदस्तस्य भार्यायां लेभे जन्म च भारते ॥
सुषाव पुत्रं सा वृद्धा पर्वते गन्धमादने । गुरुर्वसिष्ठो भगवान्नाम चक्रे यथोचितम् ॥
बालकस्य च तत्रैव मङ्गलं मङ्गले दिने । उपशब्दोऽधिकार्थश्च पूज्ये च बर्हणः पुमान् ॥
पूज्यानामधिको बालस्तेनोपबर्हणाभिधः ॥ ४९ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे नारदजन्मकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

अथ त्रयोदशोऽध्यायः ।

सौतिरुवाच—

पुत्रोत्सवे च रत्नानि धनानि विविधानि च । गन्धर्वराजः प्रददौ ब्राह्मणेभ्यो मुदाऽन्वितः ॥
उपबर्हणस्तु कालेन हरेर्मन्त्रं सुदुर्लभम् । वसिष्ठेन तु संप्राप्य स चक्रे दुष्करं तपः ॥
एकदा गण्डकीतीरे तं च संप्राप्तयौवनम् । गन्धर्वपत्न्यो ददृशुर्मूर्च्छामापुश्च तत्क्षणम् ॥
ताश्च तीव्रं तपः कृत्वा प्राणान्संत्यज्य योगतः । पश्चाच्छ्ता बभूवुश्च कन्याश्चित्ररथस्य च
उपबर्हणगन्धर्वं ताश्च तं वव्रिरे पतिम् । मुदा माला ददुस्तस्मै कामुक्यः पितुराज्ञया ॥
गृहीत्वा ताश्च गन्धर्वो युवा सुस्थिरयौवनः । दिव्यं त्रिलक्षवर्षं च रेमे रहसि कामुकः ॥
ततोऽपि सुचिरं राज्यं कृत्वा ताभिः सहानिशम् । जगाम ब्रह्मणः स्थानं हरिगाथां जगौ मुने
दृष्ट्वा स रम्भारम्भोरुं नर्तने कठिनं स्तनम् । बभूव स्खलनं तस्य गन्धर्वस्य महात्मनः ॥
द्रुतं तत्याज संगीतं मूर्च्छां प्राप सभातले । उच्चैः प्रजहसुर्देवा ब्रह्मा कोपाच्छशाप तम् ॥
व्रज त्वं शूद्रयोनिं च गान्धर्वीं तनुमुत्सृज । काले वैष्णवसंसर्गान्मत्पुत्रस्त्वं भविष्यसि ॥
विना विपत्तेर्महिमा पुंसां नैव भवेत्सुत । सुखं दुःखं च सर्वेषां क्रमेण प्रभवेदिति ॥
इत्येवमुक्त्वा स विधिरगच्छत्पुष्कराद्गृहम् । उपबर्हणगन्धर्वः स जहौ तां तनुं तदा ॥

---

* वरमिममित्यर्थः । संधिर्विभक्तिलोपश्चाऽऽर्षः ।

---

१ क. °वाः सर्वकामिनः । ना° । २ ख. तस्यैव ।

मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् । विशुद्धमाज्ञाख्यं चेति भित्त्वा षट्चक्रमेव च ॥
इडां सुषुम्नां मेधां च पिङ्गलां प्राणधारिणीम् । सर्वज्ञानप्रदां चैव मनःसंयमिनीं तथा ॥ १४
विशुद्धां च निरुद्धां च वायुसंचारिणीं तथा । तेजःशुष्ककरीं चैव बलपुष्टिकरीं तथा ॥
बुद्धिसंचारिणीं चैव ज्ञानजृम्भणकारिणीम् । सर्वप्राणहरां चैव पुनर्जीवनकारिणीम् ॥ १६
एताः षोडशधा नाडीर्भित्त्वा वै हंसमेव च । मनसा सहितं ब्रह्मरन्ध्रमानीय योगतः ॥ १७
स्थित्वा मुहूर्तमात्मानमात्मन्येव युयोज ह । जातिस्मरश्च योगीन्द्रः संप्राप ब्रह्म शौनक ॥
वीणां त्रितन्त्रीं दुष्प्राप्यां वामस्कन्धे निधाय च । शुद्धस्फटिकमालां च विधृत्वा दक्षिणे करे
संजप्यन्परमं ब्रह्म वेदसारं परात्परम् । परं निस्तारबीजं च कृष्ण इत्यक्षरद्वयम् ॥ २०
प्राच्यां कृत्वा शिरःस्थानं पश्चिमे चरणद्वयम् । विधाय दर्भशयनं शयानः पुरुषो यथा ॥
गन्धर्वराजस्तं दृष्ट्वा भार्यया सह तत्क्षणम् । योगेन ब्रह्म संप्राप श्रीकृष्णं मनसा स्मरन् ॥
पत्न्यश्च बान्धवाः सर्वे विलप्य रुरुदुर्भृशम् । जग्मुः क्रमेण शोकार्ता मोहिता विष्णुमायया ॥
पश्चाच्च योषितां मध्ये प्रधाना महिषी च या । साध्वी मालावती नाम्ना परमा प्रेयसी वरा ॥
उच्चै रुरोद सा तीव्रं कान्तं कृत्वा च वक्षसि । इत्युवाच च शोकार्ता कान्तं संबोध्य चैव हि ॥

मालावत्युवाच—

हे नाथ रमण श्रेष्ठ विदग्ध रसिकेश्वर । दर्शनं देहि मां बन्धो निमग्नां शोकसागरे ॥ २६ ॥
विस्रम्भके सुवसने र[3]म्ये चन्दनकानने । पुष्पभद्रानदीतीरे पुष्पोद्याने मनोहरे ॥ २७ ॥
चन्दनाचलसांनिध्ये चारुचन्दनकानने । पुष्पचन्दनतल्पे च चन्दनानिलवासिते ॥ २८ ॥
गन्धमादनशैलैकदेशे रम्ये नदीतटे । पुंस्कोकिलनिनादे च मालतीजलशालिनि ॥ २९ ॥
श्रीशैले श्रीवने दिव्ये श्रीनिवासनिषेविते । श्रीयुक्ते श्रीपदाम्भोजे पूतेऽच्युतकृते शुभे ॥
पुरा या या कृता क्रीडा वसन्ते रहसि त्वया । मया च दुर्हृदा सार्धं तया वै दूयते मनः ॥
सुधातुल्येन वचसा सिक्ताऽहं च पुरा त्वया । दूयते सततं तेन परमात्माऽतिदारुणः ॥
साधुना सह संसर्गो वैकुण्ठादपि दुर्लभः । अहो ततोऽतिविच्छेदो मरणादपि दुष्करः ॥
तस्मात्तेषां च विच्छेदः साधुशोककरः परः । ततोऽपि बन्धुविच्छेदः शोकः परमदारुणः
ततोऽपत्यवियोगो हि मरणादतिरिच्यते । सर्वस्मात्पतिभेदो हि तत्परं नास्ति संकटम् ॥
शयने भोजने स्नाने स्वप्ने जागरणेऽपि च । स्वामिविच्छेददुःखं च नूतनं च दिने दिने ॥
सर्वशोकं विस्मरेत्स्त्री स्वामिसंयोगमात्रतः । बन्धुमन्यं न पश्यामि यं दृष्ट्वा विस्मरेत्पतिम् ॥

---

१ ख. °णद्वारि° । २ क. °स्रस्तके । ३ क. °म्ये नन्द° ।

नातो विशिष्टं पश्यामि बान्धवं स्वामिना विना। साध्वीनां कुलजातानामित्याह कमलोद्भवः
हे दिगीशाश्च दिक्पाला हे धर्म त्वं प्रजापते ; गिरीश कमलाकान्त पतिदानं च देहि मे॥
इत्युक्त्वा विरहार्ता सा कन्या चित्ररथस्य च। मूर्च्छां संप्राप तत्रैव दुर्गमे गहने वने॥
विचेतना तत्र तस्थौ कान्तं कृत्वा स्ववक्षसि। परिपूर्णं दिवानक्तं सर्वैर्देवैश्च रक्षिता॥४१॥
प्रभाते चेतनां प्राप्य विललाप भृशं मुहुः। इत्युवाच पुनस्तत्र हरिं संबोध्य सा सती॥

मालावत्युवाच—

हे कृष्ण जगतां नाथ नाथ नाहं जगद्बहिः। त्वमेव जगतां पाता मां न पासि कथं प्रभो॥
अयं भर्ताऽस्य भार्याऽहं ममेति तव मायया। त्वमेव संभवो भर्ता सर्वेषां सर्वकारणः॥
गन्धर्वः कर्मणा कान्तः कान्ताऽहं चास्य कर्मणा। क्व गतः कर्मभोगान्ते कुत्र संस्थाप्य मां प्रियाम्॥ ४५॥
को वा कस्याः पतिः पुत्रः का वा कस्य प्रिया प्रभो। संयुनक्ति विधाता च वियुनक्ति च कर्मणा॥ ४६॥
संयोगे परमानन्दो वियोगे प्राणसंकटम्। शश्वज्जगति मूर्खस्य नाऽऽत्मारामस्य निश्चितम्॥
नश्वरो विषयः सत्यं भुवि भोगश्च बान्धवः। स्वयं त्यक्तः सुखायैव दुःखाय त्याजितः परैः
तस्मात्सन्तः स्वयं त्यक्त्वा परमैश्वर्यमीप्सितम्। ध्यायन्ते सततं कृष्णपादपद्मं निरापदम्।
सर्वत्र ज्ञानिनः सन्तः का स्त्री ज्ञानवती भुवि। ततो मह्यं विमूढायै दातुमर्हसि वाञ्छितम्॥
न मे वाञ्छाऽमरत्वे च शक्रत्वे मोक्षवर्त्मनि। इमं कान्तं वरं देहि चतुर्वर्गकरं परम्॥
यावती कामिनीजातिर्जगत्यां जगदीश्वर। कस्यैचित्त्वं हि दत्तश्च तेन धात्रेदृशः पतिः॥
तस्मै दत्ताः गुणाः सर्वे रूपाणि विविधानि च। सुशीलानि च सर्वाणि चामरत्वं विना हरे
रूपेण च गुणेनैव तेजसा विक्रमेण च। ज्ञानेन शान्त्या संतुष्ट्या हरितुल्यः प्रभुर्मम।
हरिभक्तो हरिसमो गाम्भीर्ये सागरो यथा। दीप्तिमान्सूर्यतुल्यश्च शुद्धो वह्निसमस्तथा॥
चन्द्रतुल्यः सुदृश्यश्च कन्दर्पसमसुन्दरः। बुद्ध्या बृहस्पतिसमः काव्ये कविसमस्तथा॥
वाणी च सर्वशास्त्रज्ञा प्रतिमायां भृगोरिव। कुबेरतुल्यो धनवान्महान्दाता मनोरिव। ५७॥
धर्मे धर्मसमो धर्मी सत्ये सत्यव्रताधिकः। कुमारतुल्यतपसा स्वाचारे ब्रह्मणा समः॥
ऐश्वर्ये शक्रतुल्यश्च सहिष्णुः पृथिवीसमः। एवंभूतो मृतः कान्तः प्राणा यान्ति न मे कथम्
अहो सुरा यज्ञभाजो घृतं भोक्तुं क्षमा भुवि। क्षणेनायज्ञभाजश्च करिष्यामि स्वलीलया॥
नारायण जगत्कान्त नाहमेव जगद्बहिः। शीघ्रं जीवय मत्कान्तमन्यथा त्वां शपाम्यहम्॥

---

१ ख. अरे सु°।

प्रजापते पुत्रशापात्त्वमपूज्यो महीतले। तवैवानधिकारित्वं करिष्याम्यधुना भवे ॥६२॥
हे शंभो ज्ञानलोपं ते करिष्यामि शपेन च। धर्मलोपं च धर्मस्य करिष्याम्येव लीलया॥
यमाधिकारं दूरे च करिष्यामि न संशयः। सत्यं कालं शपिष्यामि मृत्युकन्यां सुनिष्ठुराम्
शपामि सर्वानत्रैव जरां व्याधिं विनाऽधुना। व्याधिना जरया मृत्युर्न ह्यभूच्च पतेर्मम॥
इत्युक्त्वा कौशिकीतीरे चागच्छच्छप्तुमेव तान्। मालावती महासाध्वी शवं कृत्वा स्ववक्षसि॥ ६६॥
तां शप्तुमुद्यतां दृष्ट्वा ब्रह्मा देवपुरोगमः। जगाम शरणं विष्णुं तीरं क्षीरपयोनिधेः॥
तत्र स्नात्वा च तुष्टाव परमात्मानमीश्वरम्। विष्णुं ब्रह्मा जगत्कान्तमित्युवाच ह भीतवत्

ब्रह्मोवाच—

उपबर्हणपत्नी सा कन्या चित्ररथस्य च। कान्तहेतोश्च मां देवाञ्छपेत्त्वं रक्ष माधव॥६९॥
स्मरन्ति साधवः सन्तो जपन्ति मुनयो मुदा। स्वप्ने जागरणे चैव सर्वकार्येषु माधवम्॥
शरणागतदीनार्तपरित्राणपरायण। रक्ष रक्ष हृषीकेश व्रजामः शरणं वयम्॥ ७१॥
पूजा मे पुत्रशापेन विहता सांप्रतं प्रभो। अधिकारहतं मां च कुरुते मालती सती॥
सर्वाधिकारो ब्रह्माण्डे त्वया दत्तः पुरा प्रभो। संपदेतादृशी नाथ यास्यत्येवाधुना मम॥

महादेव उवाच—

त्वया दत्तं महाज्ञानं गुह्यं सर्वेषु दुर्लभम्। शतमन्वन्तरतपःफलेन पुष्करे पुरा॥ ७४॥
ऐश्वर्यं वा धनं वाऽपि विद्या वा विक्रमोऽथवा। ज्ञानस्य परमार्थस्य कलां नार्हन्ति षोडशीम्
सर्वाज्ञातं सर्वगुप्तमत्यन्तं दुर्लभं परम्। मम तत्त्वज्ञानरत्नं शापाद्यियाति योषितः॥७६॥
अहो पतिव्रतातेजः सर्वेषां तेजसां परम्। तेजोनलेन दग्धं मां रक्ष रक्ष हरे हरे॥ ७७॥

धर्म उवाच—

सर्वरत्नात्परं रत्नं धर्म एव सनातनः। यास्यत्येवंविधो धर्मस्त्वया दत्तः पुरा प्रभो॥७८॥
सप्तमन्वन्तरतपःफलेन परमेश्वर। प्राप्तो धर्मोऽधुना याति शापेन योषितः प्रभो॥७९॥

देवा ऊचुः—

यज्ञभाजो घृतभुजो वयमेव त्वया कृताः। योषिच्छापेन तत्सर्वमधुना याति माधव॥८०॥
इत्युक्त्वा संयताः सर्वे तस्थुस्तत्र भयार्दिताः। एतस्मिन्नन्तरेऽकस्माद्वाग्बभूवाशरीरिणी॥
यूयं गच्छत तन्मूलं विप्ररूपी जनार्दनः। पश्चाद्यास्यति शान्त्यर्थमिति वो रक्षणाय च॥

---

१ क. देवा ब्रह्मपुरोगमाः॥ प्रजग्मुः श॰। २ क. ॰न प्रतिपादितम्॥ ७४॥ ऐ॰।

श्रुत्वा तद्वचनं देवाः प्रहृष्टमनसोऽमुखाः । जग्मुर्मालावतीस्थानं कौशिकीतीरमीश्वराः ॥
तामेव ददृशुर्देवा देवीं मालावतीं सतीम् । रत्नसारेन्द्रभूषाभिरुज्ज्वलां कमलाकलाम् ॥
वह्निशुद्धांशुकाधानां सिन्दूरबिन्दुभूषिताम् । शरच्चन्द्रप्रभां शान्तां द्योतयन्तीं दिशस्त्विषा ॥
पतिसेवामहापर्वचिरसंचिततेजसा । प्रज्वलन्तीं सुप्रदीप्तशिखां वह्नेरिवोत्तमाम् ॥८१॥
योगासनं कुर्वतीं च *भुववक्षःस्थलास्थिताम् । सुरम्यां स्वामिनो वीणां बिभ्रतीं दक्षिणे करे ॥
तर्जन्यङ्गुष्ठकोटिभ्यां शुद्धस्फटिकमालिकाम् । भक्त्या स्नेहेन कान्तस्य बिभ्रतीं योगमुद्रया ॥
चारुचम्पकवर्णाभां बिम्बोष्ठीं रत्नमालिनीम् । यथा षोडशवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥
बृहन्नितम्बभारार्तां पीनश्रोणिपयोधराम् । पश्यन्तीं शवमीशस्य शुभदृष्ट्या पुनः पुनः ॥
एवंभूतां च तां दृष्ट्वा देवास्ते विस्मयं ययुः । स्थगितां च क्षणं तत्र धार्मिका धर्मभीरवः ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे मालावतीवि-
लापो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथ चतुर्दशोऽध्यायः ।

सौतिरुवाच—

तत्र स्थित्वा क्षणं देवा ब्रह्मेशानपुरोगमाः । ययुर्मालावतीमूलं परं मङ्गलदायकाः॥ १ ॥
मालावती सुरान्दृष्ट्वा प्रणनाम पतिव्रता । रुरोद कान्तं संस्थाप्य देवानां संनिधौ मुने ॥
एतस्मिन्नन्तरे तत्र कश्चिद्ब्राह्मणबालकः । आजगाम सुराणां च सभामतिमनोहरः ।। २ ॥
दण्डी छत्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम् । दीर्घपुस्तकहस्तश्च सुप्रशान्तश्च सुस्मितः
चन्दनोक्षितसर्वाङ्गः प्रज्वलन्ब्रह्मतेजसा । सुरान्संभाष्य तत्रैव विस्मितान्विष्णुमायया ॥
तत्रोवास सभामध्ये तारामध्ये यथा शशी । उवाच देवान्सर्वांश्च मालतीं च विचक्षणः॥

ब्राह्मण उवाच—

कथमत्र सुराः सर्वे ब्रह्मेशानपुरोगमाः । स्वयं विधाता जगतां स्रष्टा वै केन कर्मणा ॥
सर्वब्रह्माण्डसंहर्ता शंभुरत्र स्वयं विभुः । अहो त्रिजगतां साक्षी धर्मो वै सर्वकर्मणाम् ॥
कथं रविः कथं चन्द्रः कथमत्र हुताशनः । कथं कालो मृत्युकन्या कथं वाऽत्र यमादयः

* शवं भुवः स्थले स्थितं यस्याः सा तामिति हि समासः कार्योऽत्र । 'इत्युक्त्वा कौशिकी-तीरं जगाम शम्भुमेव सा। मालावती महासाध्वी शवं कृत्वा स्ववक्षसि' इति पूर्वमुक्तं स्मर्तव्यम् । तेन हि शवस्य वक्षःस्थले स्थितामिति न विप्रतिपत्तव्यम् ।

हे मालावति ते क्रोडे कोऽतिसुष्ठुः शवोऽनघे । जीविकायाः कथं मूले जीवितश्च पुमान्करः ॥
इत्युक्त्वा तांश्च तां विप्रो विरराम सभातले । मालावती तं प्रणम्य समुवाच विचक्षणम् ॥

मालावत्युवाच—

आनन्दपूर्वकं वन्दे विप्ररूपं जनार्दनम् । तुष्टा देवा हरिस्तुष्टो यस्य पुण्यजलेन च ॥
अवधानं कुरु विभो शोकार्तायाः निवेदने । समा कृपा सतां शश्वद्योग्यायोग्ये कृपावताम् ॥
उपबर्हणभार्याऽहं कन्या चित्ररथस्य च । सर्वे मालावतीं कृत्वा वदन्ते विप्रपुंगव ॥
दिव्यं लक्षयुगं रम्ये स्थाने स्थाने मनोहरे । कृता स्वच्छन्दतः क्रीडा चानेन स्वामिना सह ॥
प्रिये स्नेहो हि साध्वीनां यावान्विप्रेन्द्र योषिताम् । सर्वं शास्त्रानुसारेण जानासि त्वं विचक्षण ॥
अकस्माद्ब्रह्मणः शापात्प्राणांस्तत्याज मत्पतिः । देवानुद्दिश्य विलपे यथा जीवति मत्पतिः ॥
स्वकार्यसाधने सर्वे व्यग्राश्च जगतीतले । भावाभावं न जानन्ति केवलं स्वार्थतत्पराः ॥
सुखं दुःखं भयं शोकः संतापः कर्मणां नृणाम् । ऐश्वर्यं परमानन्दो जन्म मृत्युश्च मोक्षणम् ॥
देवाश्च सर्वजनका दातारः कर्मणां फलम् । कर्तारः कर्मवृक्षाणां मूलच्छेदं च लीलया ॥
नहि देवात्परो बन्धुर्नहि देवात्परो बली । दयावान्नहि देवाच्च न च दाता ततः परः ॥
सर्वान्देवानहं याचे पतिदानं ममेप्सितम् । धर्मार्थकाममोक्षाणां फलदांश्च सुरद्रुमान् ॥
यदि दास्यन्ति देवा मे कान्तदानं यथेप्सितम् । भद्रं तदाऽन्यथा तेभ्यो दास्यामि स्त्रीवधं ध्रुवम् ॥ २१ ॥
शपिष्यामि च सर्वांश्च दारुणं दुर्निवारकम् । दुर्निवार्यः सतीशापस्तपसा केन वार्यते ॥
इत्युक्त्वा मालती साध्वी शोकार्ता सुरसंसदि । विरराम द्विजश्रेष्ठस्तामुवाच च शौनक ॥

ब्राह्मण उवाच—

कर्मणां फलदातारो देवाः सत्यं च मालति । न सद्यः सुचिरेणैव धान्यं कृषकवन्नृणाम् ॥
गृही च कृषकद्वारा क्षेत्रे धान्यं वपेत्सति । तदङ्कुरो भवेत्काले काले वृक्षः फलत्यपि ॥
काले सुपक्वं भवति काले प्राप्नोति तद्गृही । एवं सर्वं समुन्नेयं चिरेण कर्मणः फलम् ॥
अर्थी वपति संसारे गृहस्थो विष्णुमायया । काले तदङ्कुरो वृक्षः काले प्राप्नोति तत्फलम् ॥
पुण्यवान्पुण्यभूमौ च करोति सुचिरं तपः । तेषां च फलदातारो देवाः सत्यं न संशयः ॥
ब्राह्मणानां मुखे क्षेत्रे श्रेष्ठेऽनूषर एव च । यो यज्जुहोति भक्त्या च स तत्प्राप्नोति निश्चितम् ॥
न बलं न च सौन्दर्यं नैश्वर्यं न धनं सुतः । नैव स्त्री न च सत्कान्तः किं भवेत्तपसा विना ॥

---

१ क. 'च कर्मण'।

सेवते प्रकृतिं यो हि भक्त्या जन्मनि जन्मनि । स लभेत्सुन्दरीं कान्तां विनीतां च गुणा॰
न्विताम् ॥ ३३ ॥
श्रियं च निश्चलां पुत्रं पौत्रं भूमिं धनं प्रजाम् । प्रकृतेश्च वरेणैव लभेद्भक्तोऽवलीलया ॥
शिवं शिवस्वरूपं च शिवदं शिवकारणम् । ज्ञानानन्दं महात्मानं परं मृत्युंजयं वरम् ॥
तमीशं सेवते यो हि भक्त्या जन्मनि जन्मनि । पुमान्प्राप्नोति सत्कान्तां कामिनी चापि
सत्पतिम् ॥ ३६ ॥
विद्यां ज्ञानं सुकवितां पुत्रं पौत्रं परां श्रियम् । बलं धनं विक्रमं च लभेद्धरवरेण सः ॥
ब्रह्माणं भजते यो हि लभेत्सोऽपि प्रजां श्रियम् । विद्यामैश्वर्यमानन्दं वरेण ब्रह्मणो नरः ॥
यो नरो भजते भक्त्या दीननाथं दिनेश्वरम् । विद्यामारोग्यमानन्दं धनं पुत्रं लभेद्ध्रुवम् ॥
गणेश्वरं यो भजते देवदेवं सनातनम् । सर्वाग्रपूज्यं सर्वेशं भक्त्या जन्मनि जन्मनि ॥ ४० ॥
विघ्ननाशो भवेत्तस्य स्वप्ने जागरणेऽनिशम् । परमानन्दमैश्वर्यं पुत्रं पौत्रं धनं प्रजाः ॥
ज्ञानं विद्यां सुकवितां लभते तद्वरेण च । भजते यो हि विष्णुं च लक्ष्मीकान्तं सुरेश्वरम् ॥
वरार्थी चेल्लभेत्सर्वं निर्वाणमन्यथा ध्रुवम् । शान्तं निषेव्य पातारं सत्यं सत्यं लभेन्नरः ॥
सर्वं तपः सर्वधर्मं यशः कीर्तिमनुत्तमाम् । विष्णुं निषेव्य सर्वेशं यो मूढो लभते वरम् ॥
विडम्बितो विधात्राऽसौ मोहितो विष्णुमायया । माया नारायणीशाना सर्वप्रकृतिरश्विरी
सा कृपां कुरुते यं च विष्णुमन्त्रं ददाति तम् । धर्मं यो भजते धर्मी सर्वधर्मं लभेद्ध्रुवम् ॥
इह लोके सुखं भुक्त्वा याति विष्णोः परं पदम् । यो यं देवं भजेद्भक्त्या स चाऽऽदौ
लभते च तम् ॥ ४७ ॥
काले पश्चात्तेन सार्धं परं विष्णोः पदं लभेत् । श्रीकृष्णं भजते यो हि निर्गुणं प्रकृतेः परम्
ब्रह्मविष्णुशिवादीनां सेव्यं बीजं परात्परम् । अक्षरं परमं ब्रह्म भगवन्तं सनातनम् ॥
साकारं च निराकारं ज्योतिः स्वेच्छामयं विभुम् । सर्वाधारं च सर्वेशं परमानन्दमीश्वरम्
निर्लिप्तं साक्षिरूपं च भक्तानुग्रहविग्रहम् । जीवन्मुक्तः स सत्यं हि न वरं लभते सुधीः ॥
स सर्वं मन्यते तुच्छं सालोक्यादिचतुष्टयम् । ब्रह्मत्वममरत्वं वा मोक्षं यत्तुच्छवत्सति ॥
ऐश्वर्यं लोष्टतुल्यं च नश्वरं चैव मन्यते । इन्द्रत्वं च मनुत्वं च चिरजीवित्वमेव वा ॥ ५३ ॥
जलबुद्बुदवद्बुद्ध्या चातितुच्छं न गण्यते । स्वप्ने जागरणे वाऽपि शश्वत्सेवां च वाञ्छति
दास्यं विना न याचेत श्रीकृष्णस्य पदं परम् । तत्पादाब्जे दृढां भक्तिं लब्ध्वा पूर्णो निर-
न्तरम् ॥ ५५ ॥

१ क. °च प्रियेणै° । २ क. °म् । वरं ध्रु° । ३ क. च सर्वेषां परमात्मानमी° ।

परिपूर्णतमं ब्रह्म निषेव्यं सुस्थिरः सदा । आत्मनः कुलकोटिं च शतं मातामहस्य च ॥
श्वशुरस्य शतं पूर्वमुद्धृत्य चावलीलया । दासं दासीं प्रसूं भार्यां पुत्रादपि परं शतम् ॥
उद्धरेत्कृष्णभक्तश्च गोलोकं याति निश्चितम् । तावद्गर्भे वसेत्कामी तावती यमयातना
तावद्गृही च भोगार्थी यावत्कृष्णं न सेवते । गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति ॥
यमस्तल्लिखनं दूरं करोति तत्क्षणं भिया । मधुपर्कादिकं ब्रह्मा पुरैव तन्नियोजयेत् ॥
अहो विलङ्घ्य मल्लोकं मार्गेणानेन यास्यति । तस्य वै निष्कृतिर्नास्ति कल्पकोटिशतैरपि
दुरितानि च भीतानि कोटिजन्मकृतानि च । तं विहाय पलायन्ते वैनतेयं यथोरगाः
पुरातनं कृतं कर्म यद्यत्तस्य शुभाशुभम् । छिनत्ति कृष्णश्चक्रेण तीक्ष्णधारेण संततम् ॥
तं विहाय जरा मृत्युर्याति चक्रभिया सति । अन्यथा शतखण्डं तां कुरुते च सुदर्शनः॥
निःशङ्को याति गोलोकं विहाय मानवीं तनुम् । गत्वा दिव्यां तनुं धृत्वा श्रीकृष्णं सेवते सदा ॥
यावत्कृष्णो हि गोलोके तावद्भक्तो वसेत्सदा । निमेषं मन्यते दासो नश्वरं ब्रह्मणो वयः

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे विष्णुमालावती-
संवादो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

=====

अथ पञ्चदशोऽध्यायः ।

---

ब्राह्मण उवाच—

केन रोगेण हि मृतोऽधुना साध्वि तव प्रियः । सर्वरोगचिकित्सां च जानामि च चिकित्सकः
मृततुल्यं मृतं रोगात्सप्ताहाभ्यन्तरे सति । महाज्ञानेन तं जीवं जीवयाम्यवलीलया । २॥
राजमृत्युं यमं कालं व्याधिमानीय त्वत्पुरः । निबध्य दातुं शक्तोऽहं व्याधो बध्वा पशुं यथा
यतो न संचरेद्व्याधिर्देहेषु देहधारिणाम् । व्याधीनां कारणं यद्यत्सर्वं जानामि सुन्दरि॥
यतो न संचरेद्व्याधिर्बीजं दुष्टममङ्गलम् । तदुपायं विजानामि शास्त्रतत्त्वानुसारतः ॥
यो वा योगेन खेदेन देहत्यागं करोति च । तस्य तं जीवनोपायं जानामि योगधर्मतः ॥
ब्राह्मणस्य वचः श्रुत्वा स्फीता मालावती सती । सस्मिता स्निग्धचित्ता सा तमुवाच प्रहर्षिता

मालावत्युवाच—

---

१ क. °गृही च भोगोऽपि या°। २ क. पुनरेव नियो° । ३ क. °स्वकानु । ४ क. °तं लोकास°।
५ क. °या ॥ २ ॥ जरामृत्युं जराका° ।

अहो श्रुतं किमाश्चर्यं वचनं बालवक्त्रतः । वयसाऽतिशिशुर्दृष्टो ज्ञाने योगविदां परम् ॥
त्वया कृता प्रतिज्ञा च कान्तं जीवयितुं मम । विपरीतं न सद्वाक्यं तत्क्षणं जीवितः पतिः
जीवयिष्यति मत्कान्तं पश्चाद्वेदविदां वरः । यद्यत्पृच्छामि संदेहात्तन्मे वक्तुमर्हति ॥
सभायां जीविते कान्ते तस्य तीर्थस्य संनिधौ । त्वां हि प्रष्टुं न शक्ताऽहं विद्यमाने मदीश्वरे
एते ब्रह्मादयो देवा विद्यमानाश्च संसदि । त्वं च वेदविदां श्रेष्ठो न च कश्चिन्मदीश्वरः ॥
नारी रक्षति भर्ता चेन्न कोऽपि खण्डितुं क्षमः । शास्तिं करोति यदि स न कोऽपि रक्षिता भुवि
एवं वेदेषु नो शक्तिः शक्ते वा ब्रह्मरुद्रयोः । स्त्रीपुंभावश्च बोद्धव्यः स्वामी कर्ता च योषिताम्
स्वामी कर्ता च हर्ता च शास्ता पोष्टा च रक्षिता । अभीष्टदेवः पूज्यश्च न गुरुः स्वामिनः परः
कन्या सत्कुलजाता या सा कान्तवशवर्तिनी । या स्वतन्त्रा च सा दुष्टा स्वभावात्कुटिला
ध्रुवम् ॥ १६ ॥
दुष्टा परपुमांसं च सेवते या नराधमा । सा निन्दति पतिं शश्वदसद्वंशप्रसूतिका ॥१७॥
उपबर्हणभार्याऽहं कन्या चित्ररथस्य च । वधूर्गन्धर्वराजस्य कान्तभक्ता सदा द्विज ॥
सर्वं कारयितुं शक्तस्त्वं च वेदविदां वर । कालं यमं मृत्युकन्यां मदभ्याशं समानय ॥
मालावतीवचः श्रुत्वा विप्रो वेदविदां वरः । सभामध्ये समाहूय तान्प्रत्यक्षं चकार ह ॥
ददर्श मृत्युकन्यां च प्रथमं मालती सती । कृष्णवर्णां घोररूपां रक्ताम्बरधरां वराम्॥
सस्मितां षड्भुजां शान्तां दयायुक्तां महासतीम् । कालस्य स्वामिनो वामे चतुःषष्टि-
सुतान्विताम् ॥ २२ ॥
कालं नारायणांशं च ददर्श पुरतः सती । महोग्ररूपं विकटं ग्रीष्मसूर्यसमप्रभम् ॥२३॥
षड्वक्त्रं षोडशभुजं चतुर्विंशतिलोचनम् । षट्पादं कृष्णवर्णं च रक्ताम्बरधरं परम् ॥
देवस्य देवं विकृतं सर्वसंहाररूपिणम् । कालाधिदेवं सर्वेशं भगवन्तं सनातनम् ।२५॥
ईषद्धास्यप्रसन्नास्यमक्षमालाकरं वरम् । जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् ॥२६॥
सती ददर्श पुरतो व्याधिसंघान्सुदुर्जयान् । वयसाऽतिमहावृद्धांस्तनंधान्मातृसंनिधौ ॥
स्थूलपादं कृष्णवर्णं धर्मिष्ठं रविनन्दनम् । जपन्तं परमं ब्रह्म भगवन्तं सनातनम् ॥२७॥
धर्माधर्मविचारज्ञं परं धर्मस्वरूपिणम् । पापिनामपि शास्तारं ददर्श पुरतो यमम् ॥
तांश्च दृष्ट्वा च निःशङ्का पप्रच्छ प्रथमं यमम् । मालावती महासाध्वी प्रहृष्टवदनेक्षणा ॥

मालावत्युवाच—

हे धर्मराज धर्मिष्ठ धर्मशास्त्रविशारद । कालव्यतिक्रमे कान्तं कथं हरसि मे विभो ॥

---

१ क. °श्च यो ब्रह्मन्स्वा° ।

यम उवाच—

अप्राप्तकालो म्रियते न कश्चिज्जगतीतले । ईश्वराज्ञां विना साध्वि नामृतं चालयाम्यहम् ।
अहं कालो मृत्युकन्या व्याधयश्च सदुर्जयाः । निषेकेण प्राप्तकालं कालयन्तीश्वराज्ञया ॥
मृत्युकन्या विधाराज्ञा यं प्राप्नोति निषेकतः । तमहं कालयाम्येव पृच्छतां केन हेतुना ॥

मालावत्युवाच—

त्वमपि स्त्री मृत्युकन्या जानासि स्वामिवेदनम् । कथं हरसि मत्कान्तं जीवितायां मयि प्रिये

मृत्युकन्योवाच—

पुरा विश्वसृजा सृष्टाऽप्यहमेवात्र कर्मणि । न च क्षमा परित्यक्तुं बहुना तपसा सति ॥
सती सतीनां मध्ये च काचित्तेजस्विनी वरा । मामेव भस्मसात्कर्तुं क्षमा यदि भवेद्भवे ॥
सर्वोपच्छान्तिरेवेह तदा भवति सुन्दरि । पुत्राणां स्वामिनः पश्चाद्भविता यद्भविष्यति ॥
कालेन प्रेरिताऽहं च मत्पुत्रा व्याधयश्च वै । न मत्सुतानां दोषश्च न च मे शृणु निश्चितम् ॥
पृच्छ कालं महात्मानं धर्मज्ञं धर्मसंसदि । तदा यदुचितं भद्रे तत्करिष्यसि निश्चितम् ॥

मालावत्युवाच—

हे कालकर्मणां साक्षिन्कर्मरूप सनातन । नारायणांश भगवन्नमस्तुभ्यं पराय च ॥४१॥
कथं हरसि मत्कान्तं जीवितायां मयि प्रभो । जानासि सर्वदुःखं च सर्वज्ञस्त्वं कृपानिधे ॥

कालपुरुष उवाच—

को वाऽहं को यमः का च मृत्युकन्या च व्याधयः । वयं भ्रमामः सततमीशाज्ञापरिपालकाः ॥
यस्य सृष्टा च प्रकृतिर्ब्रह्मविष्णुशिवादयः । सुरा मुनीन्द्रा मनवो मानवाः सर्वजन्तवः ॥
ध्यायन्ते तत्पदाम्भोजं योगिनश्च विचक्षणाः । जपन्ति शश्वन्नामानि पुण्यानि परमात्मनः ॥
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् । स्रष्टा ब्रह्माऽऽज्ञया यस्य पाता विष्णुर्यदाज्ञया
संहर्ता शंकरः सर्वजगतां यस्य शासनात् । धर्मश्च कर्मणां साक्षी यस्याऽऽज्ञापरिपालकः ॥
राशिचक्रं ग्रहाः सर्वे भ्रमन्ति यस्य शासनात् । दिगीशाश्चैव दिक्पाला यस्याऽऽज्ञापरिपालकाः ॥ ४८ ॥
यस्याऽऽज्ञया च तरवः पुष्पाणि च फलानि च । बिभ्रत्येव ददत्येव काले मालावति सति ॥

१ क. 'क्षिन्धर्मक' । २ क. 'निधिः ।

यस्याऽऽज्ञया जलाधारा सर्वाधारा वसुंधरा। क्षमावती च पृथिवी कम्पिता न भयेन च ॥
सहसा मोहिता माया मायया यस्य संततम्। सर्वप्रसूर्या प्रकृतिः सा भीता यद्भयादहो
यस्यान्तं न विदुर्वेदा वस्तूनां भावगा अपि। पुराणानि च सर्वाणि यस्यैव स्तुतिपाठकाः ॥
यस्य नाम विधिर्विष्णुः सेवते सुमहान्विराट्। षोडशांशो भगवतः स एव तेजसो विभोः ॥
सर्वेश्वरः कालकालो मृत्योर्मृत्युः परात्परः। सर्वविघ्नविनाशाय तं कृष्णं परिचिन्तय ॥
सर्वाभीष्टं च भर्तारं प्रदास्यति कृपानिधिः। इमे यत्प्रेरिताः सर्वे स दाता सर्वसंपदाम् ॥
इत्युक्त्वा कालपुरुषो विरराम च शौनक। कथां कथितुमारेभे पुनरेव तु ब्राह्मणः ॥९१॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे मालावती-
कालपुरुषसंवादे पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः ।

ब्राह्मण उवाच—

दृष्टः कालो यमो मृत्युकन्या व्याधिगणा अहो। कस्तेऽधुना च संदेहस्तं पृच्छ कन्यके शुभे ॥
ब्राह्मणस्य वचः श्रुत्वा हृष्टा मालावती सती। यन्मनोनिहितं प्रश्नं चकार जगदीश्वरम् ॥

मालावत्युवाच—

त्वया यः कथितो व्याधिः प्राणिनां प्राणहारकः। तत्कारणं च विविधं सर्वं वेदे निरूपितम्
यतो न संचरेद्व्याधिर्दुर्निवारोऽशुभावहः। तमुपायं च साकल्यं भवान्वक्तुमिहार्हति ॥
यद्यत्पृष्टमपृष्टं वा ज्ञातमज्ञातमेव वा। सर्वं कथय तद्ब्रह्मं त्वं गुरुर्दीनवत्सलः ॥ ५ ॥
मालावतीवचः श्रुत्वा विप्ररूपी जनार्दनः। संहितां वक्तुमारेभे संहितार्थं च वैद्यकीम् ॥

ब्राह्मण उवाच—

वन्दे तं सर्वतत्त्वज्ञं सर्वकारणकारणम्। वेदवेदाङ्गबीजस्य बीजं श्रीकृष्णमीश्वरम् ॥७॥
स ईशश्चतुरो वेदानसृजे मङ्गलालयान्। सर्वमङ्गलमङ्गल्यबीजरूपः सनातनः ॥ ८ ॥
ऋग्यजुःसामाथर्वाख्यान्दृष्ट्वा वेदान्प्रजापतिः। विचिन्त्य तेषामर्थं चैवाऽऽयुर्वेदं चकार सः
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः। स्वतन्त्रसंहिता तस्माद्भास्करश्च चकार सः ॥

---

१ क. 'रः सर्वका'। २ ख. 'वे देवनि'। ३ ख. वैदिकीम्।

भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम् । प्रददौ पाठयामास ते चक्रुः संहितास्ततः
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च । व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय
धन्वन्तरिर्दिवोदासः काशीराजोऽश्विनीसुतौ । नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः ॥
जाबालो जाजलिः पैलः करथोऽगस्त्य एव च । एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः
चिकित्सातत्त्वविज्ञानं नामतन्त्रं मनोहरम् । धन्वन्तरिश्च भगवांश्चकार प्रथमे सति ॥
चिकित्सादर्पणं नाम दिवोदासश्चकार सः । चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः॥
चिकित्सासारतन्त्रं च भ्रमघ्नं चाश्विनीसुतौ । तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्दनम् । ज्ञानार्णवं महातन्त्रं यमराजश्चकार ह ॥
च्यवनो जीवदानं च चकार भगवानृषिः । चकार जनको योगी वैद्यसंदेहभञ्जनम् ॥
सर्वसारं चन्द्रसुतो जाबालस्तन्त्रसारकम् । वेदाङ्गसारं तन्त्रं च चकार जाजलिर्मुनिः ॥
पैलो निदानं करथस्तन्त्रं सर्वधरं परम् । द्वैधनिर्णयतन्त्रं च चकार कुम्भसंभवः ॥
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश । व्याधिप्रणाशबीजानि बलाधानकराणि च
मथित्वा ज्ञानमन्थेनैवाऽऽयुर्वेदपयोनिधिम् । ततस्तस्मादुदाजह्रुर्नवनीतानि कोविदाः ॥
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम् । आयुर्वेदं सर्वबीजं सर्वं जानामि सुन्दरि ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः । एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
आयुर्वेदस्य विज्ञाता चिकित्सासु यथार्थवित् । धर्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्तितः ॥
जनकः सर्वरोगाणां दुर्वारो दारुणो ज्वरः । शिवभक्तश्च योगी च निष्ठुरो विकृताकृतिः ॥
भीमस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥
मन्दाग्निस्तस्य जनको मन्दाग्नेर्जनकास्त्रयः । पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥
वायुजः पित्तजश्चैव श्लेष्मजश्च तथैव च । ज्वरभेदाश्च त्रिविधाश्चतुर्थश्च त्रिदोषजः ॥
पाण्डुश्च कामलः कुष्ठः शोथः प्लीहा च शूलकः । ज्वरातिसारग्रहणीकासव्रणहलीमकाः॥
मूत्रकृच्छ्रश्च गुल्मश्च रक्तदोषविकारजः । विषमेहश्च कुब्जश्च गोदश्च गलगण्डकः ॥
भ्रमरी संनिपातश्च विषूची दारुणी सति । एषां भेदप्रभेदेन चतुःषष्टी रुजः स्मृताः ॥
मृत्युकन्यासुताश्चैते जरा तस्याश्च कन्यका । जरा च भ्रातृभिः सार्धं शश्वद्भ्रमति भूतले ॥
एते चोपायवेत्तारं न गच्छन्ति च संयतम् । पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः ॥
चक्षुर्जलं च व्यायामः पादाधस्तैलमर्दनम् । कर्णयोर्मूर्ध्नि तैलं च जराव्याधिविनाशनम् ॥
वसन्ते भ्रमणं वह्निसेवां स्वल्पां करोति यः । बालां च सेवते काले जरा तं नोपगच्छति ॥

---

१ क. 'मन्थेनेवा' । २ ख. 'नासि सु' ।

प्रातःशीतोदकस्नायी सेवते चन्दनद्रवम् । नोपयाति जरा तं च निदाघेऽनिलसेवकम् ॥
प्रावृष्युष्णोदकस्नायी घनतोयं न सेवते । समये च समाहारी जरा तं नोपगच्छति ॥
शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत् । प्रातःस्नायी समाहारी जरा तं नोपगच्छति ॥
प्रातःस्नायी च हेमन्ते काले वह्निं च सेवते । भुङ्क्ते नवान्नमुष्णं च जरा तं नोपगच्छति ॥
शिशिरेऽशुकवह्निं च न(क)वोष्णान्नं च सेवते । यः कवोष्णोदकस्नायी जरा तं नोपगच्छति
सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् । घृतं च सेवते यो हि जरा तं नोपगच्छति
भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम् । नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति ॥ ४४ ॥
दधि हैयङ्गवीनं च नवनीतं तथा गुडम् । नित्यं भुङ्क्ते संयमी यो जरा तं नोपगच्छति ॥
शुष्कमांसं स्त्रियं वृद्धां बालार्कं तरुणं दधि । संसेवन्तं जरा याति प्रहृष्टा भ्रातृभिः सह ॥
रात्रौ ये दधि सेवन्ते पुंश्चलीश्च रजस्वलाः । तानुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि ॥
रजस्वला च कुलटा चावीरा जारदूतिका । शूद्रयाजकपत्नी या ऋतुहीना च या सति ॥
यो हि तासामन्नभोजी ब्रह्महत्यां लभेत्तु सः । तेन पापेन सार्धं सा जरा तमुपगच्छति ॥
पापानां व्याधिभिः सार्धं मित्रता संततं ध्रुवम् । पापं व्याधिजराबीजं विघ्नबीजं च निश्चितम्
पापेन जायते व्याधिः पापेन जायते जरा । पापेन जायते दैन्यं दुःखं शोको भयं कलिः
तस्मात्पापं महावैरं दोषबीजममङ्गलम् । भारते सततं सन्तो नाऽऽचरन्ति भयातुराः ॥
स्वधर्माचारयुक्तं च दीक्षितं हरिसेवकम् । गुरुदेवातिथीनां च भक्तं सक्तं तपःसु च ॥
व्रतोपवासयुक्तं च सदा तीर्थनिषेवकम् । रोगा द्रवन्ति तं दृष्ट्वा वैनतेयमिवोरगाः ॥
एताञ्जरा न सेवेत व्याधिसंघश्च दुर्जयः । सर्वं बोध्यमसमये काले सर्वं प्रसिष्यति[3] ॥
ज्वरश्च सर्वरोगाणां जनकः कथितः सति । पित्तश्लेष्मसमीराश्च ज्वरस्य जनकास्त्रयः
एते यथा संचरन्ति स्वयं यान्ति च देहिषु । तमेव विविधोपायं साध्वि मत्तो निशामय
क्षुधि जाज्वल्यमानायामाहाराभाव एव । च प्राणिनां जायते पित्तं चक्रे च मणिपूरके ॥
तालबिल्वफलं भुक्त्वा जलपानं च तत्क्षणम् । तदैव तु भवेत्पित्तं सद्यः प्राणहरं परम्
तप्तोदकं च शिरसि(शिशिरे) भाद्रे तिक्तं विशेषतः । दैवग्रस्तश्च यो भुङ्क्ते पित्तं तस्य प्रजायते ॥ ६० ॥
सशर्करं च धान्याकं पिष्टं शीतोदकान्वितम् । चणकं सर्वगव्यं च दधितक्रविवर्जितम्
बिल्वतालफलं पक्वं सर्वमैक्षवमेव च । आर्द्रकं मुद्गसूपं च तिलपिष्टं सशर्करम् ॥ ॥

१ ख. प्रातः शी° । २ ख. प्रातःस्ना° । ३ क. °र्वं गमिष्य° । ४ ख. °द्गयूषं च ।

पित्तक्षयकरं सद्यो बलपुष्टिप्रदं परम् । पित्तनाशं च तद्बीजमुक्तमन्यन्निबोध मे ॥६३॥
भोजनानन्तरं स्नानं जलपानं विना तृषा । तिलतैलं स्निग्धतैलं स्निग्धमामलकीद्रवम् ॥
पर्युषितान्नं तक्रं च पक्कं रम्भाफलं दधि । मेघाम्बु शर्करातोयं सुस्निग्धजलसेवनम् ॥
नारिकेलोदकं रूक्षस्नानं पर्युषितं जलम् । तरमुज्जापक्कफलं सुपक्कं कर्कटीफलम् ॥६६॥
खातस्नानं च वर्षासु मूलकं श्लेष्मकारकम् । ब्रह्मरन्ध्रे च तज्जन्म महद्वीर्यविनाशनम् ॥
वह्निस्वेदं भ्रष्टभक्ष्यं पक्कतैलविशेषकम् । भ्रमणं शुष्कमक्षं च शुष्कपक्कहरीतकी ॥६८॥
पिण्डारकमपक्कं च रम्भाफलमपक्ककम् । वेसवारः सिन्धुवारं अनाहारमपानकम् ॥६९॥
सघृतं रोचनाचूर्णं सघृतं शुष्कशर्करम् । मरीचं पिप्पलं शुष्कमार्द्रकं जीवकं मधु ॥
द्रव्याण्येतानि गान्धर्वि सद्यः श्लेष्महराणि च । बलपुष्टिकराण्येव वायुबीजं निशामय
भोजनानन्तरं सद्यो गमनं धावनं तथा । छेदनं वह्नितापश्च शश्वद्भ्रमणमैथुनम्(ने) ॥
वृद्धस्त्रीगमनं चैव मनःसंताप एव च । अतिरूक्षमनाहारं युद्धं कलहमेव च ॥७३॥
कटुवाक्यं भयं शोकः केवलं वायुकारणम् । आज्ञाख्यचक्रे तज्जन्म निशामय तदौषधम् ॥
पक्कं रम्भाफलं चैव सबीजं शर्करोदकम् । नारिकेलोदकं चैव सद्यस्तक्रं सुपिष्टकम् ॥
माहिषं दधि मिष्टं च केवलं वा सशर्करम् । सद्यःपर्युषितान्नं च सौवीरं शीतलोदकम् ॥
पक्कतैलविशेषं च तिलतैलं च केवलम् । लाङ्गली तालखर्जूरमुष्णमामलकीद्रवम् ॥७७॥
शीतलेऽष्णोदकस्नानं सुस्निग्धं चन्दनद्रवम् । स्निग्धपद्मपत्रतल्पं सुस्निग्धव्यजनानि च ॥
एतत्ते कथितं वत्से सद्यो वायुप्रणाशनम् । वायवस्त्रिविधाः पुंसां क्लेशसंतापकामजाः ॥
व्याधिसंघश्च कथितस्तन्त्राणि विविधानि च । तानि व्याधिप्रणाशाय कृतानि सद्भिरेव च
तन्त्राण्येतानि सर्वाणि व्याधिक्षयकराणि च । रसायनादयो येषु चोपायाश्च सुदुर्लभाः
न शक्तः कथितुं साध्वि यथार्थं वत्सरेण च । तेषां च सर्वतन्त्राणां कृतानां च विचक्षणैः
केन रोगेण त्वत्कान्तो मृतः कथय शोभने । तदुपायं करिष्यामि येन जीवेदयं सति ॥

**सौतिरुवाच—**

ब्राह्मणस्य वचः श्रुत्वा कन्या चित्ररथस्य च । कथां कथितुमारेभे सा गान्धर्वी प्रहर्षिता ॥

**मालावत्युवाच—**

योगेन प्राणांस्तत्याज ब्रह्मणः शापहेतुना । सभायां लज्जितः कान्तो मम विप्र निशामय
सर्वं श्रुतमपूर्वं च शुभाख्यानं मनोहरम् । भवेद्भवे कुतः केषां महल्लभ्यं विपाद्विना ॥

---

१ क. 'रमना' । २ क. जीरकं म' । ३ क 'मुस्तमा' ।

अधुना मत्प्राणकान्तं देहि देहि विचक्षण। गत्वा वः स्वामिना सार्धं यास्यामि स्वगृहं प्रति
मालावतीवचः श्रुत्वा विप्ररूपी जनार्दनः। सभां जगाम देवानां शीघ्रं विप्रस्तदन्तिकात्

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे चिकित्साप्रणयने षोडशोऽध्यायः ॥ १६ ॥

---

अथ सप्तदशोऽध्यायः।

---

सौतिरुवाच—

दृष्ट्वा द्विजं देवसंघः प्रत्युत्थानं चकार च। परस्परं च संभाषा बभूव तत्र संसदि ॥
मा तं बुबुधिरे देवाः श्रीहरिं विप्ररूपिणम्। पौर्वापर्यं विस्मृताश्च मोहिता विष्णुमायया
सुरान्संबोध्य विप्रश्च वाचा मधुरया द्विज, उवाच सत्यं परमं प्राणिनां यच्छुभावहम् ॥

ब्राह्मण उवाच—

उपबर्हणभार्येयं कन्या चित्ररथस्य च। ययाचे जीवदानं च स्वामिनः शोककर्षिता ॥
अधुना किमनुष्ठानमस्य कार्यस्य निश्चितम्। तन्मां ब्रूत सुराः सर्वे नित्यं यत्समयोचितम
शप्तुकामा सुरान्सर्वान्साध्वी तेजस्विनी वरा। अहं क्षेमाय युष्माकमागतो बोधिता सती
स्तुतिः कृता च युष्माभिः श्वेतद्वीपे हरेरपि। युष्माकमीशो विष्णुश्च कथमेवात्र नाऽऽगतः
बभूवाऽऽकाशवाणीति पश्चाद्यास्यति केशवः। विपरीतं कथं भूतं वाणीवाक्यमचञ्चलम्
ब्राह्मणस्य वचः श्रुत्वा स्वयं ब्रह्मा जगद्गुरुः। उवाच वचनं सत्यं हितं परममङ्गलम् ॥

ब्रह्मोवाच—

मत्पुत्रो नारदः शप्तो गन्धर्वश्चोपबर्हणः। योगेन प्राणांस्तत्याज पुनः शापान्ममैव हि
कालं लक्षयुगं व्याप्य स्थितिरस्य महीतले। शूद्रयोनिं ततः प्राप्य भविता मत्सुतः पुनः
अस्य कालावशेषस्य किंचिदस्ति द्विजोत्तम। तत्तु वर्षसहस्रं चैवाऽऽयुरस्यास्ति सांप्रतम्
दास्यामि जीवदानं च स्वयं विष्णोः प्रसादतः। यथैनं न स्पृशेच्छापस्तत्करिष्यामि निश्चितम
नाऽऽगतो हरिरत्रेति त्वया यत्कथितं द्विज। हरिः सर्वत्र सर्वात्मा विग्रहः कुत आत्मनः
स्वेच्छामयः परं ब्रह्म भक्तानुग्रहविग्रहः। सर्वं पश्यति सर्वज्ञः सर्वत्रास्ति सनातनः ॥
विषिश्च व्याप्तिवचनो नुश्च सर्वत्रवाचकः। सर्वव्यापी च सर्वात्मा तेन विष्णुः प्रकीर्तितः
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः
कर्मारम्भे च मध्ये वा शेषे विष्णुं च यः स्मरेत्। परिपूर्णं तस्य कर्म वैदिकं च भवेद्द्विज ॥

---

१ क. मत्प्रभोः प्राणदाने देहि मे'। २ क. 'ति निश्चितम्।

अहं स्रष्टा च जगतां विधाता संहरो हरः । धर्मश्च कर्मणां साक्षी यस्याऽऽज्ञापरिपालकः ॥
कालः संहरते लोकान्यमः शास्ता च पापिनाम् । उपैति मृत्युः सर्वांश्च भिया यस्याऽऽज्ञया सदा ॥ २० ॥
सर्वेशा या च सर्वाद्या प्रकृतिः सर्वसूः पुरा । सा भीता यस्य पुरतो यस्याऽऽज्ञापरिपालिका ॥

महेश्वर उवाच—

पुत्राणां ब्रह्मणस्तेषां कस्य वंशोद्भवो भवान् । वेदानधीत्य भवता ज्ञातः कः सार एव च ॥
शिष्यः कस्य मुनीन्द्रस्य कस्त्वं नाम्ना च भो द्विज । विमर्ष्यर्कातिरिक्तं च शिशुरूपोऽसि सांप्रतम् ॥ २१ ॥
विडम्बयसि देवांश्च विष्णुमस्माकमीश्वरम् । हृदिस्थं च न जानासि परमात्मानमीश्वरम् ॥
यस्मिन्गते पतेद्देहो देहिनां परमात्मनि । प्रयान्ति सर्वे तत्पश्चान्नरदेवानुगा इव ॥२५॥
जीवस्तत्प्रतिबिम्बश्च मनो ज्ञानं च चेतना । प्राणाश्चेन्द्रियवर्गाश्च बुद्धिर्मेधा धृतिः स्मृतिः ॥
निद्रा दया च तन्द्रा च क्षुत्तृष्णा पुष्टिरेव च । श्रद्धा संतुष्टिरिच्छा च क्षमा लज्जादिकाः स्मृताः ॥ २७ ॥
प्रयाति यत्पुरः शक्तिरीश्वरे गमनोन्मुखे । एते सर्वे च शक्तिश्च यस्याऽऽज्ञापरिपालकाः ॥
ईश्वरे च स्थिते देही क्षमश्च सर्वकर्मसु । गतेऽस्पृश्यः शवस्त्याज्यः कस्तं देही न मन्यते ॥
स्वयं ब्रह्मा च जगतां विधाता सर्वकारकः । पादारविन्दमनिशं ध्यायते द्रष्टुमक्षमः ॥ ३० ॥
युगलक्षं तपस्तप्तं श्रीकृष्णस्य च वेधसा । तदा बभूव ज्ञानी च जगत्स्रष्टुं क्षमस्तदा ॥ ३१ ॥
असंख्यकालं सुचिरं तपस्तप्तं हरेर्मया । तृप्तिं जगाम न मनस्तृप्यते केन मङ्गले ॥ ३२ ॥
अधुना पञ्चवक्त्रेण यन्नामगुणकीर्तनम् । गायन्भ्रमामि सर्वत्र निःस्पृहः सर्वकर्मसु ॥ ३३ ॥
मत्तो याति च मृत्युश्च यन्नामगुणकीर्तनात् । शश्वज्जपन्तं तन्नाम दृष्ट्वा मृत्युः पलायते ॥
सर्वब्रह्माण्डसंहर्ताऽप्यहं मृत्युंजयाभिधः । सुचिरं तपसा यस्य गुणनामानुकीर्तनात् ॥
काले तत्र विलीनोऽहमाविर्भूतस्ततः पुनः । न कालो मम संहर्ता न मृत्युर्यत्प्रसादतः ॥
गोलोके यः स वैकुण्ठे श्वेतद्वीपे स एव च । अंशांशिनोर्न भेदश्च ब्रह्मन्वह्निस्फुलिंगवत् ॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । अष्टाविंशतिमे शक्रे गते च ब्रह्मणो दिनम् ॥
एतत्संख्याविशिष्टस्य शतवर्षायुषो विधेः । पाते लोचनपातश्च यद्विष्णोः परमात्मनः ॥
अहं कलानावृषभः कृष्णस्य परमात्मनः । पारं महिम्नः को गच्छेन्न जानामि च किंचन
इत्युक्त्वा शंकरस्तत्र विरराम च शौनक । धर्मश्च वक्तुमारेभे यः साक्षी सर्वकर्मणाम् ॥

---

१ क. °अ । विभास्यर्कातिरिक्तश्च । २ क नमस्यते । ३ क. °तृ । इन्द्रायुश्चैव दि° ।

धर्म उवाच—

यत्पाणिपादौ सर्वत्र चक्षुश्च सर्वदर्शनम् । सर्वान्तरात्मा प्रत्यक्षोऽप्रत्यक्षश्च दुराश्रमः ॥
अगुणाऽपि समां विष्णुर्नयाति इति यद्वचः । त्वयोक्तं तत्कथा बुद्ध्या मुनीनां च मतिभ्रमः
महन्निन्दा भवेद्यत्र नैव साधुः शृणोति ताम् । निन्दकः श्रोतृभिः सार्धं कुम्भीपाकं व्रजेद्ध्रुवम्
श्रुत्वा देवान्महन्निन्दां श्रीविष्णोः स्मरणाद्बुधः । मुच्यते सर्वपापेभ्यः पुण्यं प्राप्नोति दुर्लभम्
कामतोऽकामतो वाऽपि विष्णुनिन्दां करोति यः । यः शृणोति हसति वा सभामध्ये नराधमः
कुम्भीपाके पचति स यावद्वै ब्रह्मणो वयः । स्थलं भवेदपूतं च सुरापात्रं यथा द्विज ॥
प्राणी च नरकं याति श्रुतं तत्रैव चेद्ध्रुवम् । विष्णुनिन्दा च त्रिविधा ब्रह्मणा कथिता पुरा
अप्रत्यक्षं च कुरुते किंवा तं च न मन्यते । देवान्यसाम्यं कुरुते ज्ञानहीनो नराधमः॥४९॥
तस्यात्र निष्कृतिर्नास्ति यावद्वै ब्रह्मणः शतम् । गुरोर्निन्दां यः करोति पितुर्निन्दां नराधमः
स याति कालसूत्रं च यावच्चन्द्रदिवाकरौ ॥ ५० ॥
विष्णुर्गुरुश्च सर्वेषां जनको ज्ञानदायकः । पोष्टा पाता भयत्राता वरदाता जगत्त्रये ॥५१॥
एषां च वचनं श्रुत्वा त्रयाणां विप्रपुंगव । प्रहस्योवाच तान्देवान्वाचा मधुरया पुनः ॥

ब्राह्मण उवाच—

का कृता विष्णुनिन्दाऽहो हे देवा धर्मशालिनः । नाऽऽगतो हरिरत्रेति व्यर्थाऽऽकाशसरस्वती
इति प्रोक्तं मया भद्रं ब्रूत धर्मार्थमीश्वराः । सभायां पाक्षिकाः सन्तो घ्नन्ति स्म शतपूरुषान्
यूयं च भावुका ब्रूत विष्णुः सर्वत्र संततम् । इति चेत्तत्कथं याताः श्वेतद्वीपं वराय च ॥
अंशांशिनोर्न भेदश्चेदात्मनश्चेति निश्चितम् । कलां हित्वा निषेवन्ते सन्तः पूर्णतमं कथम्
कोटिजन्मदुराराध्यमसाध्यमसतामपि । आशा बलवती पुंसां कृष्णं सेवितुमिच्छति ॥
किं क्षुद्राः किं महान्तश्च वाच्छन्ति परमं पदम् । लब्धुमिच्छति चन्द्रं च बाहुभ्यां वामनो यथा ॥ ५८ ॥
यो विष्णुर्विषयी विश्वे श्वेतद्वीपनिवासकृत् । यूयं ब्रह्मेशधर्माश्च दिक्पालाश्च दिगीश्वराः॥
ब्रह्मविष्णुशिवाद्याश्च सुरलोकाश्चराचराः । एवं कतिविधाः सन्ति प्रतिविश्वेषु संततम् ॥
विश्वानां च सुराणां च कः संख्यां कर्तुमीश्वरः । सर्वेषामीश्वरः कृष्णो भक्तानुग्रहविग्रहः
ऊर्ध्वं च सर्वब्रह्माण्डाद्वैकुण्ठं सत्यमीप्सितम् । तस्मादूर्ध्वं च गोलोकः पञ्चाशत्कोटियोजनम् ॥ ६२ ॥
चतुर्भुजश्च वैकुण्ठे लक्ष्मीकान्तः सनातनः । सुनन्दनन्दकुमुदपार्षदादिभिरावृतः ॥६३॥
गोलोके द्विभुजः कृष्णो राधाकान्तः सनातनः । गोपाङ्गनादिभिर्युक्तो द्विभुजैर्गोपपार्षदैः ॥

परिपूर्णतमं ब्रह्म स चाऽऽत्मा सर्वदेहिनाम् । स्वेच्छामयश्च विहरेद्रासे वृन्दावने सदा ॥
तज्ज्योतिर्मण्डलाकारं सूर्यकोटिसमप्रभम् । ध्यायन्ते योगिनः सन्तः संततं च निरामयम् ।
नवीननीरदश्यामं द्विभुजं पीतवाससम् । कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ॥ ३७॥
किशोरवयसं शश्वच्छान्तं सस्मितमीश्वरम् । ध्यायन्ते वैष्णवाः सन्तः सेवन्ते सत्यविग्रहम् ॥
यूयं च वैष्णवा ब्रूत कस्य वंशोद्भवो भवान् । शिष्यः कस्य मुनीन्द्रस्येत्येवं मां च पुनः पुनः
यस्य वंशोद्भवोऽहं च यस्य शिष्यश्च बालकः । तस्येदं वचनं ज्ञानं देवसंघा निबोधत ॥
शीघ्रं जीवय गन्धर्वं देवेश्वर सुरेश्वर । व्यक्ते विचारे मूर्खः को वाग्युद्धे किं प्रयोजनम् ॥
इत्युक्त्वा बालकस्तत्र विप्ररूपी जनार्दनः । विरराम सभामध्ये प्रजहास च शौनक ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौ० ब्रह्मखण्डे विष्णुसुरसंघसंवादे
विष्णुप्रशंसाप्रणयनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथाष्टादशोऽध्यायः ।

सौतिरुवाच—

देवाः सार्धं ब्राह्मणेन मोहिता विष्णुमायया । प्रययुर्मालतीमूलं ब्रह्मेशानपुरोगमाः ॥
ब्रह्मा कमण्डलुजलं ददौ गात्रे शवस्य च । संचारं मनसस्तस्य चकार सुन्दरं वपुः ॥
ज्ञानदानं ददौ तस्मै ज्ञानानन्दः शिवः स्वयम् । धर्मज्ञानं स्वयं धर्मो जीवदानं च ब्रह्मणः
वह्निदर्शनमात्रेण बभूव जठरानलः । कामदर्शनमात्रेण सर्वकामः सुनिश्चितम् ॥ ४ ॥
तस्य वायोरधिष्ठानाज्जगत्प्राणस्वरूपिणः । निःश्वासस्य च संचारः प्राणानां च बभूव ह ॥
सूर्याधिष्ठानमात्रेण दृष्टिशक्तिर्बभूव ह । वाक्यं वाणीदर्शनेन शोभा श्रीदर्शनेन च । ६ ॥
शवस्तथाऽपि नोत्तस्थौ यथा शेते जडस्तथा । विशिष्टबोधनं प्राप चाधिष्ठानं विनाऽऽत्मनः
ब्रह्मणो वचनात्साध्वी तुष्टाव परमेश्वरम् । स्नात्वा शीघ्रं सरित्तोये धृत्वा धौते च वाससी

मालावत्युवाच—

वन्दे तं परमात्मानं सर्वकारणकारणम् । विना येन शवाः सर्वे प्राणिनो जगतीतले ॥
निर्लिप्तं साक्षिरूपं च सर्वेषां सर्वकर्मसु । विद्यमानमदृष्टं च सर्वैः सर्वत्र सर्वदा ॥ १० ॥
येन सृष्टा च प्रकृतिः सर्वाधारा परात्परा । ब्रह्मविष्णुशिवादीनां प्रसूर्या त्रिगुणात्मिका ॥
जगत्स्रष्टा स्वयं ब्रह्मा नियतो यस्य सेवया । पाता विष्णुश्च जगतां संहर्ता शंकरः स्वयम् ॥

---

१ क. °वाः शान्ताः से° ।

ध्यायन्ते यं सुराः सर्वे मुनयो मनवस्तथा। सिद्धाश्च योगिनः सन्तः संततं प्रकृतेः परम्॥
साकारं च निराकारं परं स्वेच्छामयं विभुम्। वरं वरेण्यं वरदं वरार्हं वरकारणम्॥
तपःफलं तपोबीजं तपसां च फलप्रदम्। स्वयं तपःस्वरूपं च सर्वरूपं च सर्वतः॥१९॥
सर्वाधारं सर्वबीजं कर्म तत्कर्मणां फलम्। तेषां च फलदातारं तद्बीजं क्षयकारणम्॥
स्वयं तेजःस्वरूपं च भक्तानुग्रहविग्रहम्। सेवा ध्यानं न घटते भक्तानां विग्रहं विना॥
तत्तेजो मण्डलाकारं सूर्यकोटिसमप्रभम्। अतीव कमनीयं च रूपं तत्र मनोहरम्॥
नवीननीरदश्यामं शरत्पङ्कजलोचनम्। शरत्पार्वणचन्द्रास्यमीषद्धास्यसमन्वितम्॥
कोटिकन्दर्पलावण्यं लीलाधाम मनोहरम्। चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम्॥
द्विभुजं मुरलीहस्तं पीतकौशेयवाससम्। किशोरवयसं शान्तं राधाकान्तमनन्तकम्॥
गोपाङ्गनापरिवृतं कुत्रचिन्निर्जने वने। कुत्रचिद्रासमध्यस्थं राधया परिषेवितम्॥२२॥
कुत्रचिद्गोपवेषं च वेष्टितं गोपबालकैः। शतशृङ्गाचलोत्कृष्टे रम्ये वृन्दावने वने॥२३॥
निकरं कामधेनूनां रक्षन्तं शिशुरूपिणम्। गोलोके विरजातीरे पारिजातवने वने॥२४॥
वेणुं क्वणन्तं मधुरं गोपीसंमोहकारणम्। निरामये च वैकुण्ठे कुत्रचिच्च चतुर्भुजम्॥२५॥
लक्ष्मीकान्तं पार्षदैश्च सेवितं च चतुर्भुजैः। कुत्रचित्स्वांशरूपेण जगतां पालनाय च॥
श्वेतद्वीपे विष्णुरूपं पद्मया परिषेवितम्। कुत्रचित्स्वांशकलया ब्रह्माण्डे ब्रह्मरूपिणम्॥
शिवस्वरूपं शिवदं स्वांशेन शिवरूपिणम्। स्वात्मनः षोडशांशेन सर्वाधारं परात्परम्॥
स्वयं महाविराड्रूपं विश्वौघो यस्य लोमसु। लीलया स्वांशकलया जगतां पालनाय च॥
नानावतारं बिभ्रन्तं बीजं तेषां सनातनम्। वसन्तं कुत्रचित्सन्तं योगिनां हृदये सताम्॥
प्राणरूपं प्राणिनां च परमात्मानमीश्वरम्। तं च स्तोतुमशक्ताऽहमबला निर्गुणं विभुम्॥
निर्लक्ष्यं च निरीहं च सारं वाङ्मनसोः परम्। यं स्तोतुमक्षमोऽनन्तः सहस्रवदनेन च॥
पञ्चवक्त्रश्चतुर्वक्त्रो गजवक्त्रः षडाननः। यं स्तोतुं न क्षमा मा[illegible] मोहिता यस्य मायया
यं स्तोतुं न क्षमा श्रीश्च जडीभूता सरस्वती। वेदा न शक्ता यं स्तोतुं को वा विद्वांश्च वेदवित्
किं स्तौमि तमनीहं च शोकार्ता स्त्री परात्परम्। इत्युक्त्वा सा च गान्धर्वी विरराम रुरोद च
कृपानिधिं प्रणनाम भयार्ता च पुनः पुनः। कृष्णश्च शक्तिभिः सार्धमधिष्ठानं चकार ह॥
भर्तुरभ्यन्तरे तस्याः परमात्मा निराकृतिः। उत्थाय शीघ्रं वीणां च धृत्वा च वाससी॥
प्रणनाम देवसंघं ब्राह्मणं पुरतः स्थितम्। नेदुर्दुन्दुभयो देवाः पुष्पवृष्टिं च चक्रिरे॥३८॥
दृष्ट्वा चोपरि दम्पत्योः प्रददुः परमाशिषम्। गन्धर्वो देवपुरतो ननर्त च जगौ क्षणम्॥

१ क. 'द्वीजभ'। २ क. 'लोहेशे र'। ३ क. 'रं धामधे'।

जीवितं पुरतः प्राप देवानां च वरेण च । जगाम पत्न्या सार्धं च पित्रा मात्रा च हर्षितः ॥
उपबर्हणगन्धर्वो गन्धर्वनगरं पुनः । मालावती रत्नकोटिं धनानि विविधानि च ॥ ४१ ॥
प्रददौ ब्राह्मणेभ्यश्च भोजयामास तान्सती । वेदांश्च पाठयामास कारयामास मङ्गलम् ॥
महोत्सवं च विविधं हरेर्नामैकमङ्गलम् । जग्मुर्देवाश्च स्वस्थानं विप्ररूपी हरिः स्वयम् ॥
एतत्ते कथितं सर्वं स्तवराजं च शौनक । इदं स्तोत्रं पुण्यरूपं पूजाकाले तु यः पठेत् ॥
हरिभक्तिं हरेर्दास्यं लभते वैष्णवो जनः। वरार्थी यः पठेद्भक्त्या चाऽऽस्तिकः परमास्थया॥
धर्मार्थकाममोक्षाणां निश्चितं लभते फलम् । विद्यार्थी लभते विद्यां धनार्थी लभते धनम्॥
भार्यार्थी लभते भार्यां पुत्रार्थी लभते सुतम् । धर्मार्थी लभते धर्मं यशोऽर्थी लभते यशः ।
भ्रष्टराज्यो लभेद्राज्यं प्रजाभ्रष्टः प्रजां लभेत् । रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्
भयान्मुच्येत भीतस्तु धनं नष्टधनो लभेत् । दस्युग्रस्तो महारण्ये हिंस्रजन्तुसमन्वितः ॥
दावाग्निदग्धो मुच्येत निमग्नश्च जलार्णवे ॥ ४९ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे गन्धर्वजीवदाने महापुरुषस्तोत्र-
प्रणयनं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

अथैकोनविंशोऽध्यायः ।

---

**सौतिरुवाच—**

मालावती धनं दत्त्वा ब्राह्मणेभ्यः प्रहर्षिता । चकार विविधं वेशं स्वात्मनः स्वामिनः कृते॥
भर्तुश्चकार शुश्रूषां पूजां च समयोचिताम् । तेन सार्धं सुरसिका रेमे सा सुचिरं मुदा ॥
महापुरुषस्तोत्रं च पूजां च कवचं मनुम् । विस्मृतं बोधयामास स्वयं रहसि सुव्रता ॥
पुरा दत्तं वसिष्ठेन स्तोत्रपूजादिकं हरेः । गन्धर्वाय च मालत्यै मन्त्रमेकं च पुष्करे ॥
विस्मृतं स्तोत्रकवचं वसिष्ठश्च कृपानिधिः । गन्धर्वराजं रहसि बोधयामास शूलिनः ॥
एवं चकार राज्यं च कुबेरभवनोपमे । आश्रमे परमानन्दो गन्धर्वो बान्धवैः सह ॥ ६ ॥
यथातथागताभिश्च स्त्रीभिरन्याभिरेव च । आगत्य ताभिः स्वस्वामी संप्राप्तः परया मुदा ॥

**शौनक उवाच—**

किं स्तोत्रं कवचं विष्णोर्मन्त्रपूजाविधिः पुरा । दत्तो वसिष्ठस्ताभ्यां च तं भवान्वक्तुमर्हति॥
द्वादशाक्षरमन्त्रं च शूलिनः कवचादिकम् । दत्तं गन्धर्वराजाय वसिष्ठेन च किं पुरा ॥९॥
तदपि ब्रूहि हे सौते श्रोतुं कौतूहलं मम । शंकरस्तोत्रकवचं मन्त्रं दुर्गतिनाशनम् । १०॥

सौतिरुवाच—

तुष्टाव येन स्तोत्रेण मालती परमेश्वरम् । तदेव स्तोत्रं दत्तं च मन्त्रं च कवचं शृणु ॥
ॐ नमो भगवते रासमण्डलेशाय स्वाहा । इदं मन्त्रं कल्पतरुं प्रददौ षोडशाक्षरम् ॥
पुरा दत्तं कुमाराय ब्रह्मणा पुष्करे हरेः । पुरा दत्तं च कृष्णेन गोलोके शंकराय च ॥
ध्यानं च विष्णोर्वेदोक्तं शाश्वतं सर्वदुर्लभम् । मूलेन सर्वं देयं च नैवेद्यादिकमुत्तमम् ॥ १४ ॥
अतीव गुप्तकवचं पितुर्वक्त्रान्मया श्रुतम् । पित्रे दत्तं पुरा विप्र गङ्गायां शूलिना ध्रुवम् ॥
शूलिने ब्रह्मणा दत्तं गोलोके रासमण्डले । धर्माय गोपीकान्तेन कृपया परमाद्भुतम् । १६ ॥

ब्रह्मोवाच—

राधाकान्त महाभाग कवचं यत्प्रकाशितम् । ब्रह्माण्डपावनं नाम कृपया कथय प्रभो ॥
मां महेशं च धर्मं च भक्तं च भक्तवत्सल । त्वत्प्रसादेन पुत्रेभ्यो दास्यामि भक्तिसंयुतः ॥

श्रीकृष्ण उवाच—

शृणु वक्ष्यामि ब्रह्मेशधर्मेदं कवचं परम् । अहं दास्यामि युष्मभ्यं गोपनीयं सुदुर्लभम् ॥
यस्मै कस्मै न दातव्यं प्राणतुल्यं ममैव हि । यत्तेजो मम देहेऽस्ति तत्तेजः कवचेऽपि च ॥
कुरु सृष्टिमिमं धृत्वा धाता त्रिजगतां भव । संहर्ता भव हे शंभो मम तुल्यो भवे भव ॥
हे धर्म त्वमिदं धृत्वा भव साक्षी च कर्मणाम् । तपसां फलदातारो यूयं भवत मद्वरात् ॥
ब्रह्माण्डपावनस्यास्य कवचस्य हरिः स्वयम् । ऋषिश्छन्दश्च गायत्री देवोऽहं जगदीश्वरः
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः । त्रिलक्षवारपठनात्सिद्धिदं कवचं विधे ॥ २४ ॥
यो भवेत्सिद्धकवचो मम तुल्यो भवेच्च सः । तेजसा सिद्धियोगेन ज्ञानेन विक्रमेण च ॥
प्रणवो मे शिरः पातु नमो रासेश्वराय च । भालं पायान्नेत्रयुग्मं नमो राधेश्वराय च ॥ २६ ।
कृष्णः पायाच्छ्रोत्रयुग्मं हे हरे घ्राणमेव च । जिह्विकां वह्निजाया तु कृष्णायेति च सर्वतः
श्रीकृष्णाय स्वाहेति च कण्ठं पातु षडक्षरः । ह्रीं कृष्णाय नमो वक्त्रं क्लींपूर्वश्च भुजद्वयम् ॥
नमो गोपाङ्गनेशाय स्कन्धावष्टाक्षरोऽवतु । दन्तपङ्क्तिमोष्ठयुग्मं नमो गोपीश्वराय च ॥
ॐ नमो भगवते रासमण्डलेशाय स्वाहा । स्वयं वक्षःस्थलं पातु मन्त्रोऽयं षोडशाक्षरः ॥
ऐं कृष्णाय स्वाहेति च कर्णयुग्मं सदाऽवतु । ॐ विष्णवे स्वाहेति च कपोलं सर्वतोऽवतु ॥
ॐ हरये नम इति पृष्ठं पादं सदाऽवतु । ॐ गोवर्धनधारिणे स्वाहा सर्वशरीरकम् ॥
प्राच्यां मां पातु श्रीकृष्ण आग्नेय्यां पातु माधवः । दक्षिणे पातु गोपीशो नैर्ऋत्यां नन्दनन्दनः
वारुण्यां पातु गोविन्दो वायव्यां राधिकेश्वरः । उत्तरे पातु रासेश ऐशान्यामच्युतः स्वयम् ॥
सततं सर्वतः पातु परो नारायणः स्वयम् । इति ते कथितं ब्रह्मन्कवचं परमाद्भुतम्

मम जीवनतुल्यं च युष्मभ्यं दत्तमेव च । अश्वमेधसहस्राणि वाजपेयशतानि च ॥
कलां नार्हन्ति तान्येव कवचस्यैव धारणात् ॥ ३१ ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः । स्नात्वा तं च नमस्कृत्य कवचं धारयेत्सुधीः ॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः । यदि स्यात्सिद्धकवचो विष्णुरेव भवेद्द्विज[1] ॥

सौतिरुवाच—

शिवस्य कवचं स्तोत्रं श्रूयतामिति शौनक । वसिष्ठेन च यद्दत्तं गन्धर्वाय च यो मनुः ॥
ॐ नमो भगवते शिवाय स्वाहेति च मनुः । दत्तो वसिष्ठेन पुरा पुष्करे कृपया विभो ॥
अयं मन्त्रो रावणाय प्रदत्तो ब्रह्मणा पुरा । स्वयं शंभुश्च बाणाय तथा दुर्वाससे पुरा ॥
मूलेन सर्वं देयं च नैवेद्यादिकमुत्तमम् । ध्यायेन्नित्यादिकं ध्यानं वेदोक्तं सर्वसंमतम् ॥
ॐ नमो महादेवाय । बाणासुर उवाच—
महेश्वर महाभाग कवचं यत्प्रकाशितम् । संसारपावनं नाम कृपया कथय प्रभो ॥४३॥

महेश्वर उवाच—

शृणु वक्ष्यामि हे वत्स कवचं परमाद्भुतम् । अहं तुभ्यं प्रदास्यामि गोपनीयं सुदुर्लभम् ॥
पुरा दुर्वाससे दत्तं त्रैलोक्यविजयाय च । ममैवेदं च कवचं भक्त्या यो धारयेत्सुधीः ॥
जेतुं शक्नोति त्रैलोक्यं भगवन्नवलीलया । संसारपावनस्यास्य कवचस्य प्रजापतिः॥४६॥
ऋषिश्छन्दश्च गायत्री देवोऽहं च महेश्वरः । धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥
पञ्चलक्षजपेनैव सिद्धिदं कवचं भवेत् । यो भवेत्सिद्धकवचो मम तुल्यो भवेद्भुवि ॥
तेजसा सिद्धियोगेन तपसा विक्रमेण च ॥ ४८ ॥
शंभुर्मे मस्तकं पातु मुखं पातु महेश्वरः । दन्तपङ्क्तिं नीलकण्ठोऽप्यधरोष्ठं हरः स्वयम् ॥
कण्ठं पातु चन्द्रचूडः स्कन्धौ वृषभवाहनः । वक्षःस्थलं नीलकण्ठः पातु पृष्ठं दिगम्बरः ॥
सर्वाङ्गं पातु विश्वेशः सर्वदिक्षु च सर्वदा । स्वप्ने जागरणे चैव स्थाणुर्मे पातु संततम्॥५०॥
इति ते कथितं बाण कवचं परमाद्भुतम् । यस्मै कस्मै न दातव्यं गोपनीयं प्रयत्नतः ॥
यत्फलं सर्वतीर्थानां स्नानेन लभते नरः । तत्फलं लभते नूनं कवचस्यैव धारणात् ॥५२॥
इदं कवचमज्ञात्वा भजेन्मां यः सुमन्दधीः । शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः[2] ॥

सौतिरुवाच—

इदं च कवचं प्रोक्तं स्तोत्रं च शृणु शौनक । मन्त्रराजः कल्पतरुर्वसिष्ठो दत्तवान्पुरा॥५५॥

---

१ क. °ज । इति महापुरुषब्रह्माण्डकथनं नाम कवचं संपूर्णम् । शि० । २ क. °स्यात्मकं । ३ क. °क. ॥ इति ब्रह्मवैवर्ते शंकरकवचम् । सौ० ।

ॐ नमः शिवाय । बाणासुर उवाच--

वन्दे सुराणां सारं च सुरेशं नीललोहितम् । योगीश्वरं योगबीजं योगिनां च गुरोर्गुरुम् ॥
ज्ञानानन्दं ज्ञानरूपं ज्ञानबीजं सनातनम् । तपसां फलदातारं दातारं सर्वसंपदाम् ॥
तपोरूपं तपोबीजं तपोधनधनं वरम् । वरं वरेण्यं वरदमीड्यं सिद्धगणैर्वरैः ॥ ९८ ॥
कारणं भुक्तिमुक्तीनां नरकार्णवतारणम् । आशुतोषं प्रसन्नास्यं करुणामयसागरम् ॥
हिमचन्दनकुन्देन्दुकुमुदाम्भोजसंनिभम् । ब्रह्मज्योतिःस्वरूपं च भक्तानुग्रहविग्रहम् ॥
विषयाणां विभेदेन बिभ्रतं बहुरूपकम् । जलरूपमग्निरूपमाकाशरूपमीश्वरम् ॥ ६१ ॥
वायुरूपं चन्द्ररूपं सूर्यरूपं महत्प्रभुम् । आत्मनः स्वपदं दातुं समर्थमवलीलया ॥६२॥
भक्तजीवनमीशं च भक्तानुग्रहकारकम्[१] । वेदा न शक्ता यं स्तोतुं किमहं स्तौमि तं प्रभुम्
अपरिच्छिन्नमीशानमहो वाङ्मनसोः परम् । व्याघ्रचर्माम्बरधरं वृषभस्थं दिगम्बरम् ॥
त्रिशूलपट्टिशधरं सस्मितं चन्द्रशेखरम् ॥ ६४ ॥
इत्युक्त्वा स्तवराजेन नित्यं बाणः सुसंयतः । प्राणमच्छंकरं भक्त्या दुर्वासाश्च मुनीश्वरः
इदं दत्तं वसिष्ठेन गन्धर्वाय पुरा मुने । कथितं च महास्तोत्रं शूलिनः परमाद्भुतम् ॥
इदं स्तोत्रं महापुण्यं पठेद्भक्त्या च यो नरः । स्नानस्य सर्वतीर्थानां फलमाप्नोति निश्चितम् ॥ ६७ ॥
अपुत्रो लभते पुत्रं वर्षमेकं शृणोति यः । संयतश्च हविष्याशी प्रणम्य शंकरं गुरुम् ॥
गलत्कुष्ठी महाशूली वर्षमेकं शृणोति यः । अवश्यं मुच्यते रोगाद्व्यासवाक्यमिति श्रुतम्॥
कारागारेऽपि बद्धो यो नैव प्राप्नोति निर्वृतिम् । स्तोत्रं श्रुत्वा मासमेकं मुच्यते बन्धनाद्ध्रुवम् ॥ ७० ॥
भ्रष्टराज्यो लभेद्राज्यं भक्त्या मासं शृणोति यः । मासं श्रुत्वा संयतश्च लभेद्भ्रष्टधनो धनम्
यक्ष्मग्रस्तो वर्षमेकमास्तिको यः शृणोति चेत् । निश्चितं मुच्यते रोगाच्छंकरस्य प्रसादतः॥
यः शृणोति सदा भक्त्या स्तवराजमिमं द्विज । तस्यासाध्यं त्रिभुवने नास्ति किंचिच्च शौनक
कदाचिद्बन्धुविच्छेदो न भवेत्तस्य भारते । अचलं परमैश्वर्यं लभते नात्र संशयः ॥ ७४ ॥
सुसंयतोऽतिभक्त्या च मासमेकं शृणोति यः । अभार्यो लभते भार्यां सुविनीतां सतीं वराम्॥
महामूर्खश्च दुर्मेधा मासमेकं शृणोति यः । बुद्धिं विद्यां च लभते गुरूपदेशमात्रतः ॥७६॥
कर्मदुःखी दरिद्रश्च मासं भक्त्या शृणोति यः । ध्रुवं वित्तं भवेत्तस्य शंकरस्य प्रसादतः ॥
इह लोके सुखं भुक्त्वा कृत्वा कीर्तिं सुदुर्लभाम् । नानाप्रकारधर्मं च यात्यन्ते शंकरालयम् ॥

---

१ क. °पं महर्षीणां म° । २ क. °म् । वेदा । ३ क. °र्थं प्रातरुत्थाय यः पठेत् । स्ना° ।

पार्षदप्रवरो भूत्वा सेवते तत्र शंकरम् । यः शृणोति त्रिसंध्यं च नित्यं स्तोत्रमनुत्तमम् ॥

इति श्रीब्रह्मवैवर्ते महापुराणे सौतिशौनकसंवादे ब्रह्मखण्डे विष्णुशंकरस्तोत्रकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

अथ विंशोऽध्यायः ।

सौतिरुवाच—

मुदा मालावतीसार्धं गन्धर्वश्चोपबर्हणः । रेमे कालावशेषं च ताभिश्च निर्जने वने ॥ १ ॥
गन्धर्वराजो मुमुदे पुत्रदारादिभिः सह । नानाविधं क्रतुवरं महत्पुण्यं चकार ह ॥ २ ॥
राजत्वं बुभुजे राजा कुबेरभवनोपमे । रेमे सुशीलया सार्धं स्थिरयौवनयुक्तया ॥ ३ ॥
गन्धर्वराजः काले च गङ्गातीरे मनोहरे । पत्न्या सार्धममुं त्यक्त्वा वैकुण्ठं च ययौ मुदा
शैवः शिवप्रसादेन पुत्रस्य विष्णुसेवया । बभूव दासो वैकुण्ठे विष्णोः श्यामचतुर्भुजः ॥५॥
कृत्वा पित्रोश्च सत्कारं गन्धर्वश्चोपबर्हणः । ब्राह्मणेभ्यो ददौ विप्र धनानि विविधानि च ॥
काले स्वयं ब्रह्मशापात्प्राणांस्त्यक्त्वा विचक्षणः । स जज्ञे वृषलीगर्भे ब्रह्मबीजेन शौनक ॥
मालावती वह्निकुण्डे पुष्करे भारते भुवि । कृत्वा तु वाञ्छितं कामं प्राणांस्तत्याज सा सती ॥
सृञ्जयस्य तु पत्न्यां च मनुवंशोद्भवस्य च । जज्ञे नृपस्य साध्वी सा पुण्या जातिस्मरा वरा ॥
उपबर्हणगन्धर्वः पतिर्मे भवितेति च । इतिकामा कामुकी सा सुन्दरी सुन्दरीवरा ॥ १० ॥

शौनक उवाच—

ब्रह्मवीर्याच्छूद्रपत्न्यां गन्धर्वश्चोपबर्हणः । जातः केन प्रकारेण तद्भवान्वक्तुमर्हति ॥ ११ ॥

सौतिरुवाच—

कान्यकुब्जे च देशे च द्रुमिलो नाम राजकः । कलावती तस्य पत्नी वन्ध्या चापि पतिव्रता ॥
स्वामिदोषेण सा वन्ध्या काले च भर्तुराज्ञया । उपतस्थे वने घोरे[1] नारदं काश्यपं मुनिम् ॥
ध्यायमानं च श्रीकृष्णं ज्वलन्तं ब्रह्मतेजसा । तस्थौ सुवेशं कृत्वा सा ध्यानान्ते च मुनेः पुरः
ग्रीष्ममध्याह्नमार्तण्डप्रभातुल्येन तेजसा । तपन्तं दूरतोऽप्येवं समीपं गन्तुमक्षमा ॥ १५ ॥
ध्यानान्ते च मुनिश्रेष्ठः परं कृष्णपरायणः । ददर्श पुरतो दूरे सुन्दरीं स्थिरयौवनाम् ॥ १६ ॥
चारुचम्पकवर्णाभां शरत्पङ्कजलोचनाम् । शरत्पार्वणचन्द्रास्यां रत्नभूषणभूषिताम् ॥ १७ ॥
बृहन्नितम्बभारार्तां पीनश्रोणिपयोधराम् । शोभितां पीतवस्त्रेण सस्मितां रक्तलोचनाम् ॥

---

१ क. °रे वरदं कस्य° ।

मोहितां मुनिरूपेण कामबाणप्रपीडितःम् । दर्शयन्तीं स्तनश्रोणिं मैथुनासक्तचेतसा ॥१९॥
सिन्दूरबिन्दुभूषाढ्यां सुचारुकज्जलोज्ज्वलःम् । पादालक्तकशोभाढ्यां रूपेणैव यथोर्वशीम्॥
मुनिः पप्रच्छ दृष्ट्वा तां का त्वं कामिनि निर्जने। कस्य पत्नी कथं वाऽत्र सत्यं ब्रूहि च पुंश्चलि
मुनेश्च वचनं श्रुत्वा कम्पिता च कलावती। उवाच विनयेनैव कृत्वा च श्रीहरिं हृदि ॥२२॥

कलावत्युवाच—

गोपिकाऽहं द्विजश्रेष्ठ द्रुमिलस्य च कामिनी। पुत्रार्थिनी चाऽऽगताऽहं त्वन्मूलं भर्तुराज्ञया॥
वीर्याधानं कुरु मयि स्त्री नोपेक्ष्या ह्युपस्थिता। तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा॥२४॥
वृषलीवचनं श्रुत्वा चुकोप मुनिसत्तमः। उवाच नित्यं सत्यं च कोपप्रस्फुरिताधरः॥

काश्यप उवाच—

यः स्वलक्ष्मीं च भोगार्हीं पराय दातुमिच्छति। तं सा त्यजति मूढं च वेदवाद इति ध्रुवम् ॥
न त्वं द्रुमिलभोगार्हा पुनरेव भविष्यसि। विरक्तेन स्वयं त्यक्ता न गृह्णाति च त्वां पुनः ॥
यः शूद्रपत्नीं गृह्णाति ब्राह्मणो ज्ञानदुर्बलः। स चाण्डालो भवेत्सत्यं न कर्मार्हो द्विजातिषु ॥
पितृश्राद्धे च यज्ञे च शिलास्पर्शे सुरार्चने। नाधिकारश्च तस्यैवमित्याह कमलोद्भवः॥२९॥
कुम्भीपाकं स्वयं याति पातयित्वा च पूरुषान्। मातामहान्स्वात्मनश्च दश पूर्वान्दशापरान्॥
तत्तर्पणं मूत्रमेव पिण्डः सद्यः पुरीषकम्। शालग्रामस्य तत्स्पर्शे चोपवासस्त्रिरात्रकम्॥३१॥
तदिष्टदेवो गृह्णाति न नैवेद्यं न र ज्जलम्। संन्यासिनां ब्राह्मणानां तदन्नं च पुरीषवत्॥३२॥
कुम्भीपाके पच्यते स शक्रान्तं यावदेव हि। एकविंशतिपुरुषैः सार्धं सत्यं च पुंश्चलि ॥३३॥
पत्रोच्छिष्टं च यो भुङ्क्ते शूद्राणां ब्राह्मणाधमः। तत्तुल्योऽधरभोजी चैवेत्याङ्गिरसभाषितम्
शूद्रो वा यदि गृह्णाति ब्राह्मणीं ज्ञान दुर्बल। स पच्यते कालसूत्रे यावदिन्द्राश्चतुर्दश॥३५॥
अष्टादशेन्द्रावच्छिन्नं कालं च कालसूत्रके। ब्राह्मणी पच्यते तत्र भक्षिता क्रिमिभिर्ध्रुवम् ॥
ततश्चाण्डालयोनौ च लब्ध्वा जन्म च ब्राह्मणी। शूद्रश्च कुष्ठी भवति ज्ञातिभिः परिवर्जितः॥
इत्युक्त्वा च मुनिश्रेष्ठो विरराम च शौनक। वृषली तत्पुरस्तस्थौ शुष्ककण्ठौष्ठतालुका
+एतस्मिन्नन्तरे तेन पथा याति च मेनका। तस्या ऊरुं स्तनं दृष्ट्वा मुनेर्वीर्यं पपात ह ॥
ऋतुस्नाता च वृषली कृत्वा तद्भक्षणं मुदा। मुनिं प्रणम्य सा हृष्टा प्रययौ भर्तुरन्तिकम्॥
गत्वा प्रणम्य द्रुमिलं कान्ता कान्तं मनोहरम्। सर्वं निवेदयामास वृत्तान्तं गर्भहेतुकम्॥
कलावतीवचः श्रुत्वा प्रहृष्टवदनेक्षणः। उवाच कान्तां मधुरं परिणामसुखावहम्॥४२॥

---

+ एतच्छ्लोकार्धं क. पुस्तके नास्ति।

---

१ क. 'कज्जलोचनाम्' पा०।

द्रुमिल उवाच—

विप्रस्य वीर्यं त्वद्गर्भे वैष्णवस्य महात्मनः । वैष्णवो भविता बालस्त्वं च भाग्यवती सती ॥
यद्गर्भे वैष्णवो जातो यस्य वीर्येण वा सति । तयोर्याति च वैकुण्ठं पुरुषाणां शतं शतम् ॥
तौ च विष्णुविमानेन सद्रत्ननिर्मितेन च । यातौ वैकुण्ठनगरं जन्ममृत्युजराहरम् ॥४९
कस्यचिद्ब्राह्मणस्यैव गेहं गच्छ शुभानने । पश्चान्ममान्तिकं भद्रे यास्यसीति हरेः पुरम् ॥
इत्युक्त्वा गोपराजश्च स्नात्वा कृत्वा तु तर्पणम् । संपूज्याभीष्टदेवं च ब्राह्मणेभ्यो धनं ददौ
अश्वानां च चतुर्लक्षं गजानां लक्षमेव च । शतं मत्तगजेन्द्राणां ब्राह्मणेभ्यो ददौ मुदा ॥
उच्चैःश्रवःपञ्चलक्षं रथानां च सहस्रकम् । शकटानां त्रिलक्षं च ब्राह्मणेभ्यो ददौ मुदा ॥
गवां द्वादशलक्षं च महिषाणां त्रिलक्षकम्[1] । त्रिलक्षं राजहंसानां ब्राह्मणेभ्यो ददौ मुदा
पारावतानां लक्षं च शुकानां च शतं मुने । लक्षं च दासदासीनां ब्राह्मणेभ्यो ददौ मुदा ॥
ग्रामाणां च सहस्रं च नगराणां शतं शतम् । धान्यतण्डुलशैलं च ब्राह्मणेभ्यो ददौ मुदा ॥
शतकोटिं सुवर्णानां रत्नानां च सहस्रकम् । मुद्राणां कोटिकलशं ब्राह्मणेभ्यो ददौ मुदा ॥
ददौ तैजसपात्राणां भूषणानामसंख्यकम् । तां स्त्रियं रत्नभूषाढ्यां ब्राह्मणेभ्यो ददौ मुदा ॥
राज्यं दत्त्वा महाराजोऽप्यन्तर्बाह्ये हरिं स्मरन् । जगाम बदरीं गोपो मनोगामी मुदाऽन्वितः
तत्र मासं तपः कृत्वा गङ्गातीरे मनोहरे । प्राणांस्तत्याज योगेन सद्यो दृष्टो महर्षिभिः ॥
स च विष्णुविमानेन रत्नेन्द्रनिर्मितेन च । संयुक्तो विष्णुदूतैश्च वैकुण्ठं च जगाम ह ॥
तत्र प्राप्य हरेर्दास्यं हरिदासो बभूव सः । वृत्तान्तं च कलावत्याः श्रूयतामिति शौनक ॥
गते कलावती नाथे उच्चैश्च प्ररुरोद ह । वह्नौ प्राणांस्त्यक्तुकामा ब्राह्मणेनैव रक्षिता ॥
ब्राह्मणो मातरित्युक्त्वा तां गृहीत्वा मुदाऽन्वितः । जगाम रत्नपूर्णं च स्वगेहं च क्षणेन च ।
सा विप्रगेहे साध्वी च सुषाव तनयं वरम् । तप्तकाञ्चनवर्णाभं ज्वलन्तं ब्रह्मतेजसा ॥६१॥
तत्रस्था योषितः सर्वा ददृशुर्बालकं शुभम् । ग्रीष्ममध्याह्नमार्तण्डजितं तं ब्रह्मतेजसा ॥
कामदेवाधिकं रूपे चन्द्राधिकशुभाननम् । शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ॥
हस्तपादादिललितं सुकपोलं मनोहरम्[2] । पद्मचक्राङ्कितं पादपद्मं वाऽतुलमुज्ज्वलम् ॥
करयुग्मं वाऽतुलं च रुदन्तं च स्तनार्थिनम् । योषितो बालकं दृष्ट्वा प्रययुः स्वाश्रमं मुदा ॥
पुत्रदारयुतो विप्रः प्रहृष्टश्च ननर्त ह । स बालो ववृधे तत्र शुक्लपक्षे यथा शशी ॥६६॥
पुपोष ब्राह्मणस्तां च सपुत्रां च यथा सुताम् ॥ ६७ ॥

---

१ क. °रैः पदम् । २ क. °नां च त्रिलक्षकम् ।

इति श्रीब्रह्म० महा० ब्रह्म० सौ० उपबर्हणजन्मकथनं नाम विंशोऽध्यायः ॥ २० ॥

अथैकविंशोऽध्यायः ।

सौतिरुवाच—

बभूव काले बालश्च क्रमेण पञ्चहायनः। जातिस्मरो ज्ञानयुक्तः पूर्वमन्त्रस्मृतः सदा ॥
गीयते सततं कृष्णयशोनामगुणादिकम्। क्षणं रोदिति नृत्येन पुलकाञ्चितविग्रहः ॥
कृष्णसंबन्धिनीं गाथां शृणोति यत्र तत्र वै। तत्संबन्धिपुराणं च तत्र तिष्ठति बालकः ॥
धूलिधूसरसर्वाङ्गो धूलिनैवेद्यमीप्सितम्। धूलिषु प्रतिमां कृत्वा धूलिना पूजयेद्धरिम् ॥
पुत्रमाह्वयते माता प्रातराशाय चेन्मुने। हरिं संपूजयामीति मातरं संवदेत्पुनः ॥ ५ ॥

शौनक उवाच—

किन्नाम बालकस्यास्य जन्मन्यत्र बभूव ह। व्युत्पत्त्या संज्ञया वाऽपि तद्भवान्वक्तुमर्हति

सौतिरुवाच—

अनावृष्ट्यवशेषे च काले बालो बभूव ह। नारं ददौ जन्मकाले तेनायं नारदाभिधः ॥
ददाति नारं ज्ञानं च बालकेभ्यश्च बालकः। जातिस्मरो महाज्ञानी तेनायं नारदाभिधः ॥
वीर्येण नारदस्यैव बभूव बालको मुने। मुनीन्द्रस्य वरेणैव तेनायं नारदाभिधः ॥९॥

शौनक उवाच—

शिशुनाम च विज्ञातं व्युत्पत्त्या च यथोचितम्। मुनीन्द्रस्य कथं नाम नारदश्चेति मङ्गलम् ॥

सौतिरुवाच—

अपुत्रकाय विप्राय धर्मपुत्रो नरो मुनिः। ददौ पुत्रं कश्यपाय तेनायं नारदाभिधः ॥ ११ ॥

शौनक उवाच—

अधुना नामव्युत्पत्तिः श्रुता सौते शिशोरपि। शूद्रयोनौ ब्रह्मपुत्रः कथं स नारदाभिधः ॥

सौतिरुवाच—

कल्पान्तरे ब्रह्मकण्ठाद्बभूवुर्बहवो नराः। नरान्ददौ तत्कण्ठं च तेन तन्नारदं स्मृतम् ॥
ततो बभूव बालश्च नरदात्कण्ठदेशतः। अतो ब्रह्मा नाम चक्रे नारदश्चेति मङ्गलम् ॥
सांप्रतं शिशुवृत्तान्तं सावधानं निशामय। उपालम्भरहस्येन विशिष्टं किं प्रयोजनम् ॥
ववृधे गोपिकाबालो विप्रगेहे दिने दिने। सुपुत्रां पालितां चक्रे ब्राह्मणः स्वसुतां यथा ॥
एतस्मिन्नन्तरे विप्रा आययुर्विप्रमन्दिरम्। शिशवः पञ्चवर्षीया महातेजस्विनो यथा ॥
प्रच्छन्नं कृतवन्तश्च ग्रीष्ममध्याह्नभास्करम्। मधुपर्कादिकं दत्त्वा ताञ्ननाम गृही द्विज ॥

---

१ ख. 'र्नं हृत'।

फलमूलादिकं काले चत्वारो मुनिपुंगवाः । विप्रदत्तं बुभुजिरे तच्छेषं बुभुजे शिशुः ॥
चतुर्थको मुनिस्तस्मै कृष्णमन्त्रं ददौ मुदा । तेषां दासः स बभूव द्विजस्य मातुराज्ञया ॥
एकदा शिशुमाता च गच्छन्ती निशि वर्त्मनि । ममार सर्पदष्टा च तत्क्षणं स्मरती हरिम्
सद्यो जगाम वैकुण्ठं विष्णुयानेन सा सती । विष्णुपार्षदसंयुक्ता सद्रत्ननिर्मितेन च ॥
प्रातर्बालो द्विजैः सार्धं प्रययौ विप्रमन्दिरात् । तत्त्वज्ञानं ददुस्तस्मै ब्रह्माणाश्च कृपालवः
ब्रह्मपुत्राः शिशुं त्यक्त्वा स्वस्थानं प्रययुः किल । महाज्ञानी शिशुस्तस्थौ गङ्गातीरे मनोहरे
तत्र स्नात्वा विप्रदत्तं विष्णुमन्त्रं जजाप सः । क्षुत्पिपासारोगशोकहरं वेदेषु दुर्लभम् ॥
महारण्ये च घोरे च अश्वत्थमूलसंनिधौ । कृत्वा योगासनं तस्थौ सुचिरं तत्र बालकः ॥

शौनक उवाच—

कं मन्त्रं बालकः प्राप कुमारेण च धीमता । दत्तं परं श्रीहरेश्च तद्भवान्वक्तुमर्हति ॥२७॥

सौतिरुवाच—

कृष्णेन दत्तो गोलोके कृपया ब्रह्मणे पुरा । द्वाविंशत्यक्षरो मन्त्रो वेदेषु च सुदुर्लभः ॥
तं च ब्रह्मा ददौ भक्त्या कुमाराय च धीमते । कुमारेण स दत्तश्च मन्त्रश्च शिशवे द्विज
ॐ श्री नमो भगवते रासमण्डलेश्वराय । श्रीकृष्णाय स्वाहेति च मन्त्रोऽयं कल्पपादपः॥
महापुरुषस्तोत्रं च पूर्वोक्तं कवचं च यत् । अस्यौपयोगिकं ध्यानं सामवेदोक्तमेव च ॥
तेजोमण्डलरूपे च सूर्यकोटिसमप्रभे । योगिभिर्वाञ्छितं ध्याने योगैः सिद्धगणैः सुरैः ॥
ध्यायन्ते वैष्णवा रूपं तदभ्यन्तरसंनिधौ । अतीव कमनीयानिर्वचनीयं मनोहरम् ॥
नवीनजलदश्यामं शरत्पङ्कजलोचनम् । शरत्पार्वणचन्द्रास्यं पक्वबिम्बाधिकाधरम् ॥
मुक्तापङ्क्तिविनिन्दैकदन्तपङ्क्तिमनोहरम् । सस्मितं मुरलीन्यस्तहस्तालम्बनमेव च ॥
कोटिकन्दर्पलावण्यं लीलाधाम मनोहरम् । चन्द्रलसप्रभाजुष्टं पुष्टश्रीयुक्तविग्रहम् ॥ ३६ ॥
त्रिभङ्गभङ्गिकायुक्तं द्विभुजं पीतवाससम् । रत्नकेयूरवलयरत्ननूपुरभूषितम् ॥ ३७ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् । मयूरपुच्छचूडं च रत्नमालाविभूषितम् ॥ ३८ ॥
शोभितं जानुपर्यन्तं मालतीवनमालया । चन्दनोक्षितसर्वाङ्गं भक्तानुग्रहकारकम् ॥३९॥
मणिना कौस्तुभेन्द्रेण वक्षःस्थलसमुज्ज्वलम् । वीक्षितं गोपिकाभिश्च शश्वद्भ्रीडितलोचनैः॥
स्थिरयौवनयुक्ताभिर्वेष्टिताभिश्च संततम् । भूषणैर्भूषिताभिश्च राधावक्षःस्थलस्थितम् ॥
ब्रह्मविष्णुशिवाद्यैश्च पूजितं वन्दितं स्तुतम् । किशोरं राधिकाकान्तं शान्तरूपं परात्परम्

---

१ क. °रं देवेषु । २ क. °रमेव च । ३ क. °म् । वेष्टितं गो° ।

निर्लिप्तं साक्षिरूपं च निर्गुणं प्रकृतेः परम् । ध्यायेत्सर्वेश्वरं तं च परमात्मानमीश्वरम् ॥
इदं ते कथितं ध्यानं स्तोत्रं च कवचं मुने । मन्त्रोपयोगिकं सत्यं मन्त्रश्च कल्पपादपः ॥
सांप्रतं बालकस्तस्थौ ध्यानस्थस्तत्र शौनक । दिव्यं वर्षसहस्रं च निराहारः कृशोदरः ॥
शक्तिमान्सरिपुश्च सिद्धमन्त्रप्रभावतः । ददर्श बालको ध्याने दिव्यं लोकं च बालकम् ॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । किशोरवयसं श्यामं गोपवेशं च सस्मितम् ॥
गोपैर्गोपाङ्गनाभिश्च वेष्टितं पीतवाससम् । द्विभुजं मुरलीहस्तं चन्दनेन विचर्चितम् ॥
ब्रह्मविष्णुशिवाद्यैश्च स्तूयमानं परात्परम् । दृष्ट्वा च सुचिरं शान्तं शान्तश्च गोपिकासुतः
विरराम च शोकार्तो यदा तद्द्रष्टुमक्षमः । रुरोदाश्वत्थमूले च न दृष्ट्वा बालकं शिशुः ॥
बभूवाऽऽकाशवाणीति रुदन्तं बालकं प्रति । सत्यं प्रबोधयुक्तं च हितमेव मिताक्षरम् ॥
सकृद्यद्दर्शितं रूपं तदेव नाधुना पुनः । अविपक्वकषायाणां दुर्दर्शं च कुयोगिनाम् ॥
एतस्मिन्विग्रहेऽतीते संप्राप्ते दिव्यविग्रहे । पुनर्द्रक्ष्यासि गोविन्दं जन्ममृत्युहरं हरिम् ॥
इति श्रुत्वा बालकश्च विरराम मुदाऽन्वितः । काले तत्याज तीर्थे च तनुं कृष्णं हृदि स्मरन्
नेदुर्दुन्दुभयः स्वर्गे पुष्पवृष्टिर्बभूव ह । बभूव शापमुक्तश्च नारदश्च महामुनिः ॥९१॥
तनुं त्यक्त्वा स जीवश्च विलीनो ब्रह्मविग्रहे । बभूव प्राक्तनान्नित्यः कालभेदे तिरोहितः
आविर्भावस्तिरोभावः स्वेच्छया नित्यदेहिनाम् । जन्ममृत्युजराव्याधिर्भक्तानां नास्ति शौनक
इति श्रीब्र० महा० ब्र० सौ० नारदशापविमोचनं नामैकविंशोऽध्यायः ॥२१॥

अथ द्वाविंशोऽध्यायः ।

सौतिरुवाच—

कति कल्पान्तरेऽतीते स्रष्टुः सृष्टिविधौ पुनः । मरीचिमिश्रैर्मुनिभिः सार्धं कण्ठाद्बभूव सः ॥
विधेर्नरदनाम्नश्च कण्ठदेशाद्बभूव सः । नारदश्चेति विख्यातो मुनीन्द्रस्तेन हेतुना ॥
यः पुत्रश्चेतसो धातुर्बभूव मुनिपुंगवः । तेन प्रचेता इति च नाम चक्रे पितामहः ॥
बभूव धातुर्यः पुत्रः सहसा दक्षपार्श्वतः । सर्वकर्माणि दक्षश्च तेन दक्षः प्रकीर्तितः ॥
वेदेषु कर्दमः शब्दश्छायायां वर्तते स्फुटः । बभूव कर्दमाद्बालः कर्दमस्तेन कीर्तितः
तेजोभेदे मरीचिश्च वेदेषु वर्तते स्फुटम् । जातः सद्योऽतितेजस्वी मरीचिस्तेन कीर्तितः
क्रतुसंघश्च बालेन कृतो जन्मान्तरेऽधुना । ब्रह्मपुत्रेऽपि तन्नाम क्रतुरित्यभिधीयते ॥
प्रधानाङ्गं मुखं धातुस्ततो जातश्च बालकः । इरस्तेजस्विवचनोऽप्यङ्गिरास्तेन कीर्तितः
अतितेजस्विनि भृगुर्वर्तते नाम्नि शौनक । जातः सद्योऽतितेजस्वी भृगुस्तेन प्रकीर्तितः

बालोऽप्यरुणवर्णश्च जातः सद्योऽतितेजसा । प्रज्वलन्नूर्ध्वतपसा चारुणिस्तेन कीर्तितः
हंसा आत्मवशा यस्य योगेन योगिनो ध्रुवम् । बालः परमयोगीन्द्रस्तेन हंसी प्रकीर्तितः ॥
वशीभूतश्च शिष्यश्च जातः सद्यो हि बालकः । अतिप्रियश्च धातुश्च वशिष्ठस्तेन कीर्तितः
संततं यस्य यत्नश्च तपःसु बालकस्य च । प्रकीर्तितो यतिस्तेन संयतः सर्वकर्मसु ॥
पुलस्तपःसु वेदेषु वर्तते हः स्फुटेऽपि च । स्फुटस्तपःसमूहश्च पुलहस्तेन बालकः ॥
पुलस्तपःसमूहश्च यस्यास्ति पूर्वजन्मनाम् । तपःसंघस्वरूपश्च पुलस्त्यस्तेन बालकः ॥
त्रिगुणायां प्रकृत्यां त्रिर्विष्णावश्च प्रवर्तते । तयोर्भक्तिः समा यस्य तेन बालोऽत्रिरुच्यते
जटा वह्निशिखारूपाः पञ्च सन्ति च मस्तके । तपस्तेजोभवा यस्य स च पञ्चशिखः स्मृतः
अपान्तरतमे देशे तपस्तेपेऽन्यजन्मनि । अपान्तरतमा नाम शिशोस्तेन प्रकीर्तितम् ॥
स्वयं तपः समाप्नोति वाहयेत्प्रापयेत्परान् । वोढुं समर्थस्तपसि वोढुस्तेन प्रकीर्तितः ॥
तपसस्तेजसा बालो दीप्तिमान्सततं मुने । तपःसु रोचते चित्तं रुचिस्तेन प्रकीर्तितः ॥
कोपकाले बभूवुर्ये स्रष्टुरेकादश स्मृताः । रोदनादेव रुद्राश्च कोपितास्तेन हेतुना ॥२०॥

शौनक उवाच—

रुद्रेष्वेकतमो वाऽन्यो महेश इति मे भ्रमः । भवान्पुराणतत्त्वज्ञः संदेहं छेत्तुमर्हति ॥२१॥

सौतिरुवाच—

विष्णुः सत्त्वगुणः पाता ब्रह्मा स्रष्टा रजोगुणः । तमोगुणास्ते रुद्राश्च दुर्निवारा भयंकराः
कालाग्निरुद्रः संहर्ता तेष्वेकः शंकरांशकः । शुद्धसत्त्वस्वरूपश्च शिवश्च शिवदः सताम् ॥
अन्ये कृष्णस्य च कलास्तावंशौ विष्णुशंकरौ । समौ सत्त्वस्वरूपौ द्वौ परिपूर्णतमस्य च
उक्तं रुद्रोद्भवे काले कथं विस्मरसि द्विज । मायया मोहिताः सर्वे मुनीनां च मतिभ्रमः
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो भगवांश्चतुर्थो ब्रह्मणः सुतः ॥
ब्रह्मा स्रष्टुं पूर्वपुत्रानुवाच ते न सेहिरे । तेन प्रकोपितो धाता रुद्राः कोपोद्भवा मुने ॥
सनकश्च सनन्दश्च तौ द्वावानन्दवाचकौ । आनन्दितौ च बालौ द्वौ भक्तिपूर्णतमौ सदा
सनातनश्च श्रीकृष्णो नित्यः पूर्णतमः स्वयम् । तद्भक्तस्तत्समः सत्यं तेन बालः सनातनः
सनत्तु नित्यवचनः कुमारः शिशुवाचकः । सनत्कुमारं तेनेममुवाच कमलोद्भवः ॥३०॥
ब्रह्मणो बालकानां च व्युत्पत्तिः कथिता मुने । सांप्रतं नारदाख्यानं श्रूयतां च यथाक्रमम्
इति श्रीब्र० महा० ब्र० सौ० ब्रह्मपुत्रव्युत्पत्तिकथनं नाम द्वाविंशोऽध्यायः ॥२२॥

---

१ क. स्फुटं तपःस्वरूपं च । २ ख. °मो बालो म° । ३ क. °वंभूतास्तु° ।

अथ त्रयोविंशोऽध्यायः ।

---

सौतिरुवाच—

स्रष्टा सृष्टिविधानेन नियोज्य सर्वबालकान् । नारदं प्रेरयामास सृष्टिं कर्तुं च शौनक
हितं सत्यं वेदसारं परिणामसुखावहम् । उवाच नारदं ब्रह्मा वेदवेदाङ्गपारगम् ॥२॥

ब्रह्मोवाच—

एहि वत्स कुलश्रेष्ठ नारद प्राणवल्लभ । ज्ञानदीपशिखाज्ञानतिमिरक्षयकारक ॥ ३ ॥
सर्वेषामपि वन्द्यानां जनकः परमो गुरुः । विद्यादाता मन्त्रदाता द्वौ समौ च पितुः परौ
तवाहं जनकः पुत्र विद्यादाता च पालकः । ममाऽऽज्ञया च मत्प्रीत्या कुरु दारपरिग्रहम्
स च शिष्यः सोऽपि पुत्रो यश्चाऽऽज्ञां पालयेद्गुरोः । न क्षेमं तस्य मूढस्य यो गुरोरवचस्करः
स पण्डितः स च ज्ञानी स क्षेमी स च पुण्यवान् । गुरोर्वचस्करो यो हि क्षेमं तस्य पदे पदे॥
सर्वेषामाश्रमाणां च प्रधानः पुण्यवान्गृही । स्त्रीपुत्रपौत्रयुक्तं च मन्दिरं तपसः फलम्
पितरः पूर्वकाले च तिथिकाले च देवताः । सर्वे गृहस्थमायान्ति निपानमिव धेनवः
नित्यं नैमित्तिकं काम्यं कुर्वन्ति गृहिणः सदा । इह एतत्सुखं पुण्यं स्वर्गभोगः परत्र च ॥
जीवन्मुक्तो गृहस्थश्च स्वधर्मपरिपालकः । यशस्वी पुण्यवांश्चैव कीर्तिमान्धनवान्सुखी ॥
यशस्वी कीर्तिमान्यो हि मृतो जीवति संततम् । यशःकीर्तिविहीनो हि जीवन्नपि मृतो
हि सः ॥ १२ ॥
ब्रह्मणो वचनं श्रुत्वा नारदो मुनिसत्तमः । उवाच विनयं भीतः शुष्ककण्ठौष्ठतालुकः ॥

नारद उवाच—

एकदा वाग्विरोधेन चोभयोस्तातपुत्रयोः । हानिर्बभूव दैवेन महती वाऽयशस्करी ॥
मया प्राप्तं च त्वच्छापाद्गान्धर्वं शौद्रमेव च । जन्म कर्म च मच्छापात्त्वमपूज्यो भवे भव ॥
बभूव शापो मुक्तो मे काले ते भविता विधे । दोषाय कल्पते शश्वद्विरोधो न गुणाय च ॥
स पिता स गुरुर्बन्धुः स पुत्रः समधीश्वरः । यः श्रीकृष्णपादपद्मे दृढां भक्तिं च कारयेत् ॥
असद्वर्त्मनि चाज्ञानाद्गच्छन्ति यदि बालकाः । निवर्तयति तानेव स पिता करुणानिधिः ॥
कारयित्वा कृष्णपादे भक्तित्यागं च यः पिता । अन्यस्मिन्विषये पुत्रं स किं हन्त प्रवर्तयेत्
दारग्रहो हि दुःखाय केवलं न सुखाय च । तपःस्वर्गभक्तिमुक्तिकर्मणां व्यवधानकः ॥
योषितस्त्रिविधा ब्रह्मन्गृहिणां मूढचेतसाम् । साध्वी भोग्या च कुलटास्ताः सर्वाः स्वार्थतत्पराः

---

१ क. 'रः सर्वका' ।

परलोकप्रिया साध्वी तथेह यशसाऽऽत्मनः । कामस्नेहाच्च कुरुते भर्तुः सेवां च संततम् ॥
भोग्या भोगार्थिनी शश्वत्कामस्नेहेन केवलम् । कुरुते कान्तसेवां च न च भोगादृते क्षणम्
वस्त्रालंकारसंभोगसुस्निग्धाहारमुत्तमम् । यावत्प्राप्नोति सा भोग्या तावच्च वशगा प्रिया ॥
कुलाङ्गारसमा नारी कुलटा कुलनाशिनी । कपटात्कुरुते सेवां स्वामिनो न च भक्तितः ॥
सदा पुंयोगमाशंसुर्मनसा मदनातुरा । आहारादधिकं जारं प्रार्थयन्ती नवं नवम् ॥
जारार्थे स्वपतिं तात हन्तुमिच्छति पुंश्चली । तस्यां यो विश्वसेन्मूढो जीवनं तस्य निष्फलम्
कथिता योषितः सर्वा उत्तमाधममध्यमाः । स्वात्मारामा विजानन्ति मनस्तासां न पण्डिताः
हृदयं क्षुरधाराभं शरत्पद्मोत्सवं मुखम् । सुधासमं सुमधुरं वचनं स्वार्थसिद्धये ॥२९॥
प्रकोपे विषतुल्यं च विश्वासे सर्वनाशनम् । दुर्ज्ञेयं तदभिप्रायं निगूढं कर्म केवलम् ॥
सदा तासामविनयः प्रबलं साहसं परम् । दोषोत्कर्षश्छलोत्कर्षः शश्वन्माया दुरत्यया ॥
पुंसश्चाष्टगुणः कामः शश्वत्कामो जगद्गुरो । आहारो द्विगुणो नित्यं नैष्ठुर्यं च चतुर्गुणम् ॥
कोपः पुंसः षड्गुणश्च व्यवसायश्च निश्चितम् । यत्रेमे दोषनिवहाः काऽऽस्था तत्र पितामह
का क्रीडा किं सुखं पुंसो विण्मूत्रमलवेश्मनि । तेजः प्रणष्टं संभोगे दिवाऽऽलापे यशःक्षयः
धनक्षयोऽतिप्रीतौ चात्यासक्तौ च वपुःक्षयः । साहित्ये पौरुषं नष्टं कलहे माननाशनम् ॥
सर्वनाशश्च विश्वासे ब्रह्मन्नारीषु किं सुखम् ॥ ३९ ॥
यावद्धनी च तेजस्वी सश्रीको योग्यतापरः । पुमान्नारीं वशीं कर्तुं समर्थस्तावदेव हि ॥
रोगिणं निर्धनं वृद्धं योषिद्द्वै प्रेक्षतेऽप्रियम् । लोकाचारभयात्तस्मै ददात्याहारमल्पकम्
इत्येवं कथितं सर्वं ब्रह्मन्नात्मागमो यथा । सर्वं जानासि सर्वज्ञ स्वात्मारामेश्वरो भवान्
अनुग्रहं कुरु विभो विदायं देहि सांप्रतम् । कृष्णभक्तिं प्रार्थयामि त्वयि कल्पतरोः परे
इत्युक्त्वा नारदस्तत्र धृत्वा तातपदाम्बुजम् । आज्ञां ययाचे पितरं गन्तुं तपसि मङ्गले ॥
कृताञ्जलिपुटो भूत्वा भक्तिनम्रात्मकंधरः । कृत्वा प्रदक्षिणं नत्वा ब्रह्माणं गन्तुमुद्यतः ॥
गच्छन्तं तनयं दृष्ट्वा विधाता जगतां मुने । रुरोदोच्चैर्मुक्तकण्ठं महासांसारिको यथा ॥
करे धृत्वा समालिङ्ग्य चुचुम्ब च पुनः पुनः । चिरं वक्षसि कृत्वा च वासयामास जानुनि
स्वात्मारामेश्वरो ब्रह्मा योगीन्द्राणां गुरोर्गुरुः । भेदं सोढुं न शक्तोऽभूद्विच्छेदो दुःसहो नृणाम् ॥ ४४ ॥
कातरः पुत्रभेदेन मोहितो विष्णुमायया । शोकार्तो वक्तुमारेभे सुतं संबोध्य शौनक ॥

इति श्रीब्रह्म० महा० ब्रह्म० सौ० ब्रह्मनारदसंवादो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अथ चतुर्विंशोऽध्यायः ।

श्रीब्रह्मोवाच—

त्वं गच्छ तपसे वत्स किं मे संसारकर्मणि । अहं यास्यामि गोलोकं विज्ञातुं कृष्णमीश्वरम्
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो वैरागीचतुर्थः पुत्र एव च ॥२॥
यती हंसी चारुणिश्च वोढुः पञ्चशिखस्तथा । पुत्रास्तपस्विनः सर्वे किं मे संसारकर्मणि
वच स्वरो मरीचिर्मे अङ्गिराश्च भृगुस्तथा । रुचिरत्रिः कर्दमश्च प्रचेताश्च क्रतुर्मनुः ॥
वसिष्ठो वशगः शश्वत्सर्वेषु च सुतेषु च । अन्येऽविवेकिनोऽसाध्याः किं मे संसारकर्मणि
निबोध वत्स वक्ष्यामि वेदोक्तं वचनं शुभम् । पारम्पर्यक्रमपरं चतुर्वर्गफलप्रदम् ॥६॥
धर्मार्थकाममोक्षांश्च सर्वे वाञ्छन्ति पण्डिताः । वेदप्रणिहितानेतान्समासु मुनिशंसितान्
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । आदौ विप्रो यज्ञसूत्रं परिधाय सुखं सुखी ॥
समधीत्य ततो वेदान्ददाति गुरुदक्षिणाम् । ततः प्रकृष्टकुलजां सुविनीतां समुद्वहेत् ॥
सा साध्वी कुलजा या च पतिसेवासु तत्परा । सद्वंशे दुर्विनीता च संभवेन्न कदाचन ॥
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥ १० ॥
असद्वंशप्रसूता या पित्रोर्दोषेण नारद । दुर्विनीता च सा दुष्टा स्वतन्त्रा सर्वकर्मसु ॥
न वत्स दुष्टाः सर्वाश्च योषितः कमलाकलाः । स्ववेश्यांशाश्च कुलटा असद्वंशसमुद्भवाः
निर्गुणं स्वामिनं साध्वी सेवते च प्रशंसति । न सेवते च कुलटा प्रियं निन्दति सद्गुणम् ॥
साधुः सद्वंशजां कन्यां प्रयत्नेन परिग्रहेत् । तस्यां पुत्रान्समुत्पाद्य वृद्धस्तु तपसे व्रजेत् ॥
वरं हुतवहे वासः सर्पवक्त्रे च कण्टके । एतेभ्यो दुःखदो वासः स्त्रिया दुर्मुखया सह ॥
मत्तोऽधीतस्त्वया वेदो मह्यं च गुरुदक्षिणाम् । पुत्र देहीदमेवेह कुरु दारपरिग्रहम् ॥
वत्स त्वं कुलजातां च पूर्वपत्नीं च मालतीम् । विवाहं कुरु कल्याण कल्याणे च दिनेऽनघ
मनुवंशोद्भवस्येह सृञ्जयस्य गृहे सती । त्वत्कृते जन्म लब्ध्वा च कुरुते भारते तपः ॥
गृहाण परमां रत्नमालां च कमलाकलाम् । भारते न भवेद्व्यर्थं जनानां तपसः फलम् ॥
आदौ भवेद्गृही लोको वानप्रस्थस्ततः परम् । ततस्तपस्वी मोक्षाय क्रम एष श्रुतौ श्रुतः ॥
वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता । वैष्णव त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनम् ॥
अन्तर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत ॥ २२ ॥
नान्तर्बाह्ये हरिर्यस्य तस्य किं तपसा फलम् । तपसा हरिराराध्यो नान्यः कश्चन विद्यते

१ क. 'निर्बाहिः क' ।

पुत्र तत्र कृतं कृष्णसेवनं परमं तपः । वत्स मद्वचनेनैव गृहे स्थित्वा हरिं भज ॥२४॥
गृही भव मुनिश्रेष्ठ गृहीणां सर्वदा सुखम् । कामिन्यां सुखसंभोगः स्वर्गभोगसमो मतः ॥
तद्दर्शनमुपस्पर्शं वाञ्छन्त्येव मुमुक्षवः । सर्वस्पर्शसुखात्स्त्रीणामुपस्पर्शसुखं वरम् ॥२६॥
ततः सुखतमे पुत्रदर्शनस्पर्शने मुने । सर्वेभ्यः प्रेयसी कान्ता प्रिया तेन प्रकीर्तिता ॥
पुत्रप्रयोजना कान्ता शतकान्ताप्रियः सुत. । नास्ति पुत्रात्परो बन्धुर्नास्ति पुत्रात्परः प्रियः
सर्वेभ्यो जयमन्विच्छेत्पुत्रादेकात्पराजयम् । न चाऽऽत्मनोऽप्रियोऽर्थश्च तस्मादपि सुत. प्रियः
अतः प्रियतमे पुत्रे न्यसेदात्मपरं धनम् । इत्येवमुक्त्वा स ब्रह्मा विरराम च शौनक ॥
उवाच वचनं तातं नारदो ज्ञानिनां वरः ॥ ३० ॥

नारद उवाच—

स्वयं विज्ञाय सर्वार्थं स्वपुत्रं वेददर्शने । प्रवर्तयत्यसन्मार्गे स दयालुः कथं पिता ॥३१॥
जलबुद्बुदवत्सर्वं संसारमतिनश्वरम् । जलरेखा यथा मिथ्या तथा ब्रह्मञ्जगत्त्रयम् ॥३२॥
विहाय हरिदास्यं च विषये यन्मनश्चलम् । दुर्लभं मानवं जन्म मा भूत्तन्निष्फलं क्वचित् ॥
का वा कस्य प्रिया पुत्रो बन्धुः को वा भवार्णवे । कर्मोर्मिभिर्योजना च तदपायो वियोजना
सुकर्म कारयेद्यो हि तन्मित्रं स पिता गुरुः । दुर्बुद्धिं जनयेद्यो हि स रिपुः स्यात्कथं पिता
इत्येवं कथितं तात वेदबीजं यथागमम् । ध्रुवं तथाऽपि कर्तव्यं तवाऽऽज्ञापरिपालनम् ॥
आदौ यास्यामि भगवन्नरनारायणाश्रमम् । नारायणकथां श्रुत्वा करिष्ये दारसंग्रहम् ॥
इत्येवमुक्त्वा स मुनिर्विरराम पितुः पुरः । पुष्पवृष्टिस्तदुपरि तत्क्षणेन बभूव ह ॥३८॥
क्षणं पितुः पुरः स्थित्वा नारदो मुनिसत्तमः । उवाच च पुनर्वेदं वचनं मङ्गलप्रदम् ॥

नारद उवाच—

देहि मे कृष्णमन्त्रं च यन्मनोवाञ्छितं मम । तत्संबन्धि च यज्ज्ञानं यत्र तद्गुणवर्णनम् ॥
ततः पश्चात्करिष्यामि त्वत्प्रीत्या दारसंग्रहम् । मानसे परिपूर्णे च कार्यं कर्तुं पुमान्सुखी ॥
नारदस्य वचः श्रुत्वा प्रहृष्टः कमलोद्भवः । उवाच पुनरेवेदं पुत्रं ज्ञानविदां वरः ॥४२॥

ब्रह्मोवाच—

पत्युर्मन्त्रं पितुर्मन्त्रं न गृह्णीयाद्विचक्षणः । विविक्ताश्रमिणां चैव नैव मन्त्रः सुखदायकः ॥
निषेकाल्लभ्यते मन्त्रो गुरुर्भर्ता च कामिनी । विद्या सुखं भयं दुःखं पुरुषैः स्वेच्छया न च
महेश्वरस्तव गुरुः प्राक्तनो नः पुरातनः । गच्छ वत्स शिवं शान्तं शिवदं ज्ञानिनां गुरुम् ॥

---

१ क. 'मिथ्या सह सं'। २ क. न पुत्रः सु'। ३ क. 'भक्ता च ।

तत एव भवान्मन्त्रं ज्ञानं लब्ध्वा पुरातनात् । नारायणकथां श्रुत्वा शीघ्रमागच्छ मद्गृहम्
इत्युक्त्वा जगतां धाता विरराम च शौनक । प्रणम्य पितरं भक्त्या शिवलोकं ययौ मुनिः

इति श्री० म० सौ० ब्र० ब्रह्मनारदोक्तसंसारसुखासुखवर्णनं नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

===

अथ पञ्चविंशोऽध्यायः ।

---

सौतिरुवाच—

क्षणेन विप्रप्रवरो मुदाऽन्वितो जगाम शंभोः सदनं मनोहरम् ॥
ऊर्ध्वं ध्रुवाद्योजनलक्षमीप्सितं महार्हरत्नौघविनिर्मितं महत् ॥ १ ॥
निराश्रये योगबलेन शंभुना धृतं विचित्रं विविधालयान्वितम् ॥
इष्टं सुपुण्याशयसाधकैर्वरैर्मुनीन्द्रवर्यैः परिपूरितं शुभम् ॥ २ ॥
मयूखशून्यं रविचन्द्रयोर्मुने हुताशनैर्वेष्टितमेव केवलम् ॥
प्राकाररूपैरतिरिक्तवर्धितैरुच्चैरसंख्याप्रमितैः शिखोज्ज्वलैः ॥ ३ ॥
पुरं वरं योजनलक्षविस्तृतं त्रिकोटिरत्नेन्द्रगृहान्वितं सदा ॥
विराजितं हीरकसारनिर्मितैश्चित्रैर्विचित्रैर्विविधैर्मनोहरैः ॥ ४ ॥
माणिक्यमुक्तामणिदर्पणैर्युतं न स्वप्नदृष्टं द्विज विश्वकर्मणः ॥
आकल्पमेकैः शिवसेवितैर्जनैर्निषेवितं संततमेव शौनक ॥ ५ ॥
सिद्धैर्नियुक्तं शतकोटिलक्षकैस्त्रिकोटिलक्षैश्च युतं स्वपार्षदैः ॥
युक्तं त्रिलक्षैर्विकटैश्च भैरवैः क्षेत्रैश्च लक्षशतैश्च वेष्टितम् ॥ ६ ॥
सुरद्रुमैर्वेष्टितमेव संततं मन्दारवृक्षप्रवरैः सुपुष्पितैः ॥
विराजितं सुन्दरकामधेनुभिर्यथा[२] बलाकाशतकैर्नभस्तलम् ॥ ७ ॥
दृष्ट्वा मुनिर्विस्मयमाप मानसे किं नात्र चित्रं सुरयोगिनां गुरौ ।
लोकं त्रिलोकाच्च विलक्षणं परं भीमृत्युरोगार्तिजराहरं वरम् ॥ ८ ॥
दूरे सभामण्डलमध्यगं शिवं ददर्श शान्तं शिवदं मनोहरम् ।
पञ्चत्रिनेत्रं विधुपञ्चवक्त्रकं गङ्गाधरं निर्मलचन्द्रशेखरम् ॥ ९ ॥
प्रतप्तहेमाभजटाधरं विभुं दिगम्बरं शुभ्रमनन्तमक्षरम् ।
मन्दाकिनीपुष्करबीजमालया कृष्णेति नामैव मुदा जपन्तम् ॥ १० ॥

---

१ क. 'रैर्मुनीन्द्रवरैरञ्चलितं दिवानिशम् । २ क. किमत्र चि' ।

सुनीलकण्ठं भुजगेन्द्रमण्डितं योगीन्द्रसिद्धेन्द्रमुनीन्द्रवन्दितम् ।
सिद्धेश्वरं सिद्धविधानकारणं मृत्युंजयं कालयमान्तकारकम् ॥ ११ ॥
प्रसन्नहास्यास्यमनोहरं वरं विश्वाश्रयाणां शिवदं वरप्रदम् ।
सदाऽऽशुतोषं भवरोगवर्जितं भक्तप्रियं भक्तजनैकबन्धुम् ॥ १२ ॥
गत्वा समीपं मुनिरेष शूलिनं ननाम मूर्ध्ना पुलकाङ्कविग्रहः ।
वीणां त्रितन्त्रीं क्वणयन्पुनर्जगौ कृष्णं स तुष्टाव कलं सुकण्ठः ॥ १३ ॥
दृष्ट्वा मुनीन्द्रप्रवरं च सस्मितं विधेः सुतं वेदविदां वरिष्ठम् ।
योगीन्द्रसिद्धेन्द्रमहर्षिभिः सह हर्षेण पीठादुदपश्यदीश्वरः ॥ १४ ॥
ददौ च तस्मै मुनये ससंभ्रमादालिङ्गनं चाऽऽशिषमासनादिकम् ।
पप्रच्छ मद्रागमनप्रयोजनं तपोधनं तं तपसां च शौनक ॥ १५ ॥
सद्रत्नसिंहासनसुन्दरे परश्चोवास शंभुर्वरपार्षदैः सह ।
नोवास धातुस्तनयः कृताञ्जलिस्तुष्टाव भक्त्या प्रणतः प्रभुं द्विज ॥ १६ ॥
गन्धर्वराजेन कृतेन नारदः स्तोत्रेण रम्येण शुभप्रदेन च ।
स्तुत्वा प्रणामं पुनरेव कृत्वा भवाज्ञयोवास भवस्य वामतः ॥ १७ ॥
चकार तत्रैव निवेदनं शिवे मनोऽभिलाषं निजकामपूरके ।
श्रुत्वा मुनेस्तद्वचनं कृपानिधिर्द्रुतं प्रतिज्ञाय चकार चोमिति ॥ १८ ॥

इति श्री० म० सौ० ब्र० कैलासं प्रति नारदागमनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## अथ षड्विंशोऽध्यायः ।

---

**सौतिरुवाच—**

हरिस्तोत्रं च कवचं मन्त्रं पूजाविधिं परम् । हरं ययाचे देवर्षिर्ध्यानं च ज्ञानमेव च ॥ १ ॥
स्तोत्रं च कवचं मन्त्रं ध्यानं पूजाविधिं तथा । तत्प्राक्तनीयज्ञानं च ददौ तस्मै महेश्वरः
सर्वं प्राप्य मुनिश्रेष्ठः परिपूर्णमनोरथः । उवाच प्रणतो भक्त्या गुरुं प्रणतवत्सलम् ॥ ३ ॥

**नारद उवाच—**

आह्निकं ब्राह्मणानां च वद वेदविदां वर । स्वधर्मपालनं नित्यं यतो भवति निश्चयः

**श्रीमहेश्वर उवाच—**

ब्राह्मे मुहूर्ते चोत्थाय ब्रह्मरन्ध्रस्थपङ्कजे । सूक्ष्मे सहस्रपत्रे स्वे निर्मले ग्लानिवर्जिते ॥ ५ ॥
रात्रिवासं परित्यज्य गुरुं तत्रैव चिन्तयेत् । व्याख्यामुद्राकरं प्रीतं सस्मितं शिष्यवत्सलम् ॥

प्रसन्नवदनं शान्तं परितुष्टं निरन्तरम् । सत्साक्षात्ब्रह्मस्वरूपं च परमं चिन्तयेत्सदा ॥ ७ ॥
ध्यात्वैवं गुरुमाराध्य हृत्पद्मे निर्मले सिते । सहस्रपत्रे विस्तीर्णे देवमिष्टं विचिन्तयेत् ॥
यस्य देवस्य यद्ध्यानं यद्रूपं तद्विचिन्तयेत् । गृहीत्वा तदनुज्ञां च कर्तव्यं समयोचितम् ॥
आदौ ध्यात्वा गुरुं नत्वा संपूज्य विधिपूर्वकम् । पश्चात्तदाज्ञामादाय ध्यायेदिष्टं प्रपूजयेत् ॥
गुरुप्रदर्शितो देवो मन्त्रः पूजाविधिर्जपः । न देवेन गुरुर्दृष्टस्तस्माद्देवाद्गुरुः परः ॥ ११ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः प्रकृतिरीशाद्या गुरुश्चन्द्रोऽनलो रविः ॥ १२ ॥
गुरुर्वायुश्च वरुणो गुरुर्माता पिता सुहृत् । गुरुरेव परं ब्रह्म नास्ति पूज्यो गुरोः परः ॥
अभीष्टदेवे रुष्टे च समर्थो रक्षणे गुरुः । न समर्था गुरौ रुष्टे रक्षणे सर्वदेवताः ॥ १४ ॥
यस्य तुष्टो गुरुः शश्वज्जयस्तस्य पदे पदे । यस्य रुष्टो गुरुस्तस्य सर्वनाशश्च सर्वदा ॥
न संपूज्य गुरुं देवं यो मूढः पूजयेत्क्रमात् । ब्रह्महत्याशतं पापी लभते नात्र संशयः ॥
सामवेदे च भगवानित्युवाच हरिः स्वयम् । तस्मादभीष्टदेवाच्च गुरुः पूज्यतमः परः ॥
गुरुमिष्टं स्वयं ध्यात्वा स्तुत्वा वै साधको मुने । निर्मलं स्थलमासाद्य विण्मूत्रं तूत्सृजेन्मुदा ॥
जलं जलसमीपं च सरन्ध्रं प्राणिसंनिधिम् । देवालयसमीपं च वृक्षमूलं च वर्त्म च ॥ १९ ॥
हलोत्कर्षस्थलं चैव सस्यक्षेत्रं च गोष्ठकम् । नदीकन्दरगर्भं च पुष्पोद्यानं च पङ्किलम् ॥
ग्रामाद्यभ्यन्तरं चैव नृणां गृहसमीपकम् । शकुंतैस्तु शरवणं श्मशानं वह्निसंनिधिम् ॥
क्रीडास्थलं महारण्यं मञ्चकाधःस्थलं तथा । वृक्षच्छायायुतं स्थानमन्तःप्राणवपर्णकम् ॥
दूर्वास्थानं कुशस्थानं वल्मीकस्थानमेव च । वृक्षारोपणभूमिं च कार्यार्थं च परिष्कृतम् ॥
एतत्सर्वं परित्यज्य सूर्यतापविवर्जितम् । कृत्वा मलं पुरीषं च मूत्रं च परिवर्जयेत् ॥
पुरीषमूत्रोत्सर्गं च दिवा कुर्यादुदङ्मुखः । पश्चिमाभिमुखो रात्रौ संध्यायां दक्षिणामुखः ॥
मौनी भूत्वा च निःश्वासं यथा गन्धो न संचरेत् । त्यक्त्वा मृदा समाच्छाद्य शौचं कुर्या-
द्विचक्षणः ॥ २१ ॥
कृत्वा तु कोष्ठशौचं च जलशौचं ततः परम् । मृद्युक्तं तज्जलं चैव तत्प्रमाणं निशामय ॥
एकां लिङ्गे मृदं दद्याद्वामहस्ते चतुष्टयम् । उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रकीर्तितम् ॥
मूत्रशौचं द्विगुणितं मैथुनानन्तरं यदि । मैथुनानन्तरं यद्वा मूत्रशौचं चतुर्गुणम् ॥ २९ ॥
एकां लिङ्गे गुदे तिस्रस्तथा वामकरे दश । उभयोः सप्त दातव्याः पादः षड्भिः शुध्यति ॥
पुरीषशौचं विप्राणां गृहिणामिदमेव च । विधवानां द्विगुणितं शौचमेवं प्रकीर्तितम् ॥

---

१ क. च शिष्याणां चित्तनायकम् ॥ ७ ॥ ध्यात्वा हृदाऽऽज्ञामादाय ह° । २ क. °मिष्टमुर° ध्या° । ३ क. °षे । °वेदोक्तं स्थ° ।

यतीनां वैष्णवानां च ब्रह्मचर्यब्रह्मचारिणाम् । चतुर्गुणं च गृहिणां तेषां शौचं प्रकीर्तितम् ॥
नो यावदुपनीयेत द्विजः शूद्रस्तथाऽङ्गना । गन्धलेपक्षयकरं तेषां शौचं प्रकीर्तितम् ॥ ३३ ॥
शौचं क्षत्रविशोश्चैव द्विजानां गृहिणां समम् । द्विगुणं वैष्णवादीनां मुनीनां परिकीर्तितम् ॥
न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता । प्रायश्चित्तं प्रयुञ्जीत विहितातिक्रमे कृते ॥
शौचं तन्नियमं मत्तः सावधानं निशामय । मृच्छौचे च शुचिर्विप्रोऽप्यशुचिश्च व्यतिक्रमे ॥
वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा । शौचावशिष्टां गेहाच्च नाऽऽदद्याल्लेपसंभवाम् ॥
अन्तःप्राण्यवपन्नां च हलोत्खातां विशेषतः । कुशमूलोत्थितां चैव दूर्वामूलोत्थितां तथा ॥
अश्वत्थमूलानीतां च तथैव शयनोत्थिताम् । चतुष्पथाच्च गोष्ठानां गोष्पदानां तथैव च ॥
सस्यस्थलानां क्षेत्राणामुद्यानानां मृदं त्यजेत् । स्नातो वाऽप्यथवाऽस्नातो विप्रः शौचेन शुध्यति
शौचहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । कृत्वा शौचमिदं विप्रो मुखं प्रक्षालयेत्सुधीः ॥
आदौ षोडश गण्डूषैर्मुखशुद्धिं विधाय च । दन्तकाष्ठेन दन्तांश्च तत्पश्चात्परिमार्जयेत् ॥
पुनः षोडशगण्डूषैर्मुखशुद्धिं समाचरेत् । दन्तमार्जनकाष्ठानां नियमं शृणु नारद ॥ ४३ ॥
निरूपितं सामवेदे हरिणा चाऽऽह्निकक्रमे । अपामार्गं सिन्धुवारमाम्रं च करवीरकम् ॥ ४४ ॥
खदिरं च शिरीषं च जातिपुन्नागशालकम् । अशोकमर्जुनं चैव क्षीरिवृक्षं कदम्बकम् ॥
जम्बूकं बकुलं तोकमं पलाशं च प्रशस्तकम् । बदरीं पारिभद्रं च मन्दारं शाल्मलिं तथा ॥
वृक्षं कण्टकयुक्तं च लतादि परिवर्जयेत् । पिप्पलं च प्रियालं च तिन्तिडीकं च तालकम् ॥
खर्जूरं नारिकेलं च तालं च परिवर्जयेत् । दन्तशौचविहीनश्च सर्वशौचविहीनकः ॥ ४८ ॥
शौचहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । कृत्वा शौचं शुचिर्विप्रो धृत्वा धौते च वाससी ॥
प्रक्षाल्य पादावाचम्य प्रातःसंध्यां समाचरेत् । एवं त्रिसंध्यं संध्यां च कुरुते कुशलो द्विजः
स स्नातः सर्वतीर्थेषु त्रिसंध्यं यः समाचरेत् । संध्यात्रितयहीनः स्यादनर्हः सर्वकर्मसु ॥
यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् । नोपातिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ॥
स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः । पूर्वां संध्यां परित्यज्य मध्यमां पश्चिमां तथा ॥
ब्रह्महत्यामात्महत्यां प्रत्यहं लभते द्विजः । एकादशीविहीनो यः संध्याहीनश्च यो द्विजः ॥
कल्पं व्रजेत्कालसूत्रं यथा हि वृषलीपतिः । प्रातः संध्यां विधायैवं गुरुमिष्टं सुरं रविम् ॥
ब्रह्माणमीशं विष्णुं च मायां पद्मां सरस्वतीम् । प्रणम्य गुरुमाज्यं च दर्पणं मधु काञ्चनम् ॥
स्पृष्ट्वा स्नानादिकं काले कुर्यात्साधकसत्तमः । पुष्करिण्यां तु वाप्यां वा प्रत्यहं स्नानं समाचरेत्
समुद्धृत्य पञ्च पिण्डानादौ धर्मी विचक्षणः । नद्यां नदे कन्दरे वा तीर्थे वा स्नानमाचरेत् ॥

---

१ क. °मू । ५६ ॥ हृद्वा ।

कुर्यात्स्नात्वा तु संकल्पं ततः स्नानं पुनर्मुने। श्रीकृष्णप्रीतिकामश्च वैष्णवानां महात्मनाम्
संकल्पो गृहिणां चैव कृतपातकनाशनः। विप्रः कृत्वा तु संकल्पं मृदं गात्रे प्रलेपयेत्॥
वेदोक्तमन्त्रेणानेन देहशुद्धिकृते नरः। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे॥
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्। उद्धृताऽसि वराहेण कृष्णेन शतबाहुना॥
आरुह्य मम गात्राणि सर्वं पापं प्रमोचय। पुण्यं देहि महाभागे स्नानानुज्ञां कुरुष्व माम्
इत्युक्त्वा च जले नाभिप्रमाणे मन्त्रपूर्वकम्। चतुर्हस्तप्रमाणां च कृत्वा मण्डलिकां शुभाम्
तीर्थान्यावाहयेत्तत्र हस्तं दत्त्वा तपोधन। यानि यानि च तीर्थानि सर्वाणि कथयामि ते॥
गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन्संनिधिं कुरु॥
नलिनी नन्दिनी सीता मालिनी च महापगा। विष्णुपादाब्जसंभूता गङ्गा त्रिपथगामिनी
पद्मावती भोगवती स्वर्णरेखा च कौशिकी। दक्षा पृथ्वी च सुभगा विश्वकाया शिवाऽमृता
विद्याधरी सुप्रसन्ना तथा लोकप्रसाधिनी। क्षेमा च वैष्णवी शान्ता शान्तिदा गोमती सती
सावित्री तुलसी दुर्गा महालक्ष्मीः सरस्वती। कृष्णप्राणाधिका राधा लोपामुद्रा दिती रतिः
अहल्या चादितिः संज्ञा स्वधा स्वाहाऽप्यरुन्धती। शतरूपा देवहूतिरित्याद्याः संस्मरेत्सुधीः
स्मृत्वा स्नात्वा महापूतः कुर्यात्तु तिलकं बुधः। बाह्वोर्मूले ललाटे च कण्ठदेशे च वक्षसि
स्नानं दानं तपो होमो देवता पितृकर्म च। तत्सर्वं निष्फलं याति ललाटे तिलकं विना॥
ब्राह्मणस्तिलकं कृत्वा कुर्यात्संध्यां च तर्पणम्। नमस्कृत्य सुरान्भक्त्या गृहं गच्छेन्मुदाऽन्वितः॥ ७४॥
प्रक्षाल्य पादौ यत्नेन धृत्वा धौते च वाससी। मन्दिरं प्रविशेत्प्राज्ञ इत्याह हरिरेव च॥
विना पादक्षालनं यः स्नात्वा विशति मन्दिरम्। तस्य स्नानादिकं नष्टं जपहोमादिपञ्चकम्
परित्राय शिरवलं गृहं च प्रविशेद्गृही। रुष्टा लक्ष्मीर्गृहाद्याति शापं दत्त्वा सुदारुणम्॥
जङ्घोर्ध्वतश्च यो विप्रः पादौ प्रक्षालयेद्यदा। तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति
उपविश्याऽऽसने ब्रह्मन्शुचिराचम्य साधकः। पूजां कुर्यात्तु वेदोक्तां भक्तियुक्तो हि संयतः
शालग्रामे मणौ मन्त्रे प्रतिमायां जले स्थले। गोपृष्ठे वा गुरौ विप्रे प्रशस्तमर्चनं हरेः॥
सर्वेषु शस्तापूजा च शालग्रामे च नारद। सुराणामेव सर्वेषां यत्राधिष्ठानमेव च॥८१॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। शालग्रामोदकेनैव योऽभिषेकं समाचरेत्॥
शालग्रामजलं भक्त्या नित्यमश्नाति यो नरः। जीवन्मुक्तः स च भवेद्यात्यन्ते कृष्णमन्दिरम्
शालग्रामशिलाचक्रं यत्र तिष्ठति नारद। सचक्रो भगवांस्तत्र सर्वतीर्थानि निश्चितम्॥

---

१ क. °हार्थ्यसं°। २ क. सुपत्ना च त°। ३ क. °न्ता प्रमदा गो°।

तत्र यो हि मृतो देही ज्ञानाज्ञानेन दैवतः । रत्ननिर्मितयानेन स याति श्रीहरेः पदम् ॥
शालग्रामं विनाऽन्यत्र कः साधुः पूजयेद्धरिम् । कृत्वा तत्र हरेः पूजां परिपूर्णं फलं लभेत् ॥
पूजाधारश्च कथितः श्रूयतां पूजनक्रमः । हरेः पूजा बहुमता कथयामि यथागमम् ॥८७॥
कश्चिद्ददाति हरये चोपचारांश्च षोडश । सुन्दराणि पवित्राणि नित्यं भक्त्या च वैष्णवः ॥
कश्चिद्द्वादश वस्तूनि पञ्च वस्तूनि कश्चन । येषामेव यथा शक्तिर्भक्तिर्मूलं च पूजने ॥८९॥
आसनं वसनं पाद्यमर्घ्यमाचमनीयकम् । पुष्पं चन्दनधूपं च दीपं नैवेद्यमुत्तमम् ॥ ९० ॥
गन्धं माल्यं च शय्यां च ललितां सुविलक्षणाम् । जलमन्नं च ताम्बूलं साधारं देयमेव च ॥
गन्धान्नतल्पताम्बूलं विना द्रव्याणि द्वादश । पाद्यार्घ्यजलनैवेद्यपुष्पाण्येतानि पञ्च च ॥९२॥
सर्वाण्येतानि मूलेन दद्यात्साधकसत्तमः । गुरूपदिष्टं मूलं च प्रशस्तं सर्वकर्मसु ॥ ९३ ॥
आदौ कृत्वा भूतशुद्धिं प्राणायामं ततः परम् । अङ्गप्रत्यङ्गयोर्न्यासं मन्त्रन्यासं ततः परम् ॥
वर्णन्यासं विनिर्वर्त्य चार्घ्यपात्रं विनिर्दिशेत् । त्रिकोणमण्डलं कृत्वा तत्र कूर्मं प्रपूजयेत् ॥
जलेनाऽऽपूर्य शङ्खं च तत्र संस्थापयेद्द्विजः । जलं संपूज्य विधिवत्तीर्थान्यावाहयेत्ततः ॥
पूजोपकरणं तेन जलेन क्षालयेत्पुनः । ततो गृहीत्वा पुष्पं च कृत्वा योगासनं शुचिः ॥९७॥
ध्यानेन गुरुदत्तेन ध्यायेत्कृष्णमनन्यधीः । ध्यात्वा पाद्यादिकं सर्वं दद्यान्मूलेन साधकः ॥
अङ्गप्रत्यङ्गदेवं च तन्त्रोक्तं पूजयेद्धरिम् । मूलं जप्त्वा यथाशक्ति देवे मन्त्रं[3] समर्पयेत् ॥
दत्त्वोपहारं विविधं स्तुत्वा च कवचं पठेत् । ततः कृत्वा परीहारं मूर्ध्ना च प्रणमेद्भुवि ॥
कृत्वा वै देवपूजां च यज्ञं कुर्याद्विचक्षणः । श्रौतस्मार्ताग्नियुक्तं च बलिं दद्यात्ततो मुने १०१॥
नित्यश्राद्धं यथाशक्ति दानं वित्तानुरूपकम् । कृत्वा कृती स विहरेत्क्रम एष श्रुतौ श्रुतः ॥
इति ते कथितं सर्वं वेदोक्तं सूत्रमुत्तमम् । आह्निकस्य च विप्राणां किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० ब्रह्म० शिवनारदसंवाद आह्निकनिरूपणं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## अथ सप्तविंशोऽध्यायः ।

**नारद उवाच—**

भक्ष्यं किं वाऽप्यभक्ष्यं च द्विजानां गृहिणां प्रभो । यतीनां वैष्णवानां च विधवाब्रह्मचारिणाम् ॥
किं कर्तव्यमकर्तव्यमभोग्यं भोग्यमेव वा । सर्वं कथय सर्वज्ञ सर्वेश सर्वकारण ॥ २ ॥

१ क. 'क्रियया मू' । २ ख. देवम' । ३ ख. 'न्त्रं विसर्जये' ।

महेश्वर उवाच—

कश्चित्तपस्वी विप्रश्च निराहारी चिरं मुनिः। कश्चित्समीरणाहारी फलाहारी च कश्चन ॥
अन्नाहारी यथाकाले गृही च गृहिणीयुतः। येषामिच्छा च या ब्रह्मन्रुचीनां विविधा गतिः॥
हविष्यान्नं ब्राह्मणानां प्रशस्तं गृहिणां सदा। नारायणोच्छिष्टमिष्टमन्नं यमनिवेदितम् ॥
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम्। विण्मूत्रं सर्वथा प्रोक्तमन्नं च हरिवासरे॥ ६॥
ब्राह्मणः कामतोऽन्नं च यो भुङ्क्ते हरिवासरे। त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः
न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं च नारद। गृहिभिर्ब्राह्मणैरन्नं संप्राप्ते हरिवासरे ॥ ८ ॥
गृही शैवश्च शाक्तश्च ब्राह्मणो ज्ञानदुर्बलः। प्रयाति कालसूत्रं च भुक्त्वा च हरिवासरे ॥
कृमिभिः शालिमानैश्च भक्षितस्तत्र तिष्ठति। विण्मूत्रभोजनं कृत्वा यावदिन्द्राश्चतुर्दश ॥
जन्माष्टमीदिने रामनवमीदिवसे हरेः। शिवरात्रौ च यो भुङ्क्ते सोऽपि द्विगुणपातकी ॥
उपवासासमर्थश्च फलं मूलं जलं पिबेत्। नष्टे शरीरे स भवेदन्यथा चाऽऽत्मघातकः ॥
सकृद्भुङ्क्ते हविष्यान्नं विष्णोर्नैवेद्यमेव च। न भवेत्प्रत्यवायी स चोपवासफलं लभेत् ॥
एकादश्यामनाहारी गृही विप्रश्च भारते। स च तिष्ठति वैकुण्ठे यावद्वै ब्रह्मणो वयः॥
गृहिणां शैवशाक्तानामिदमुक्तं च नारद। विशेषतो वैष्णवानां यतीनां ब्रह्मचारिणाम् ॥
नित्यनैवेद्यभोजी यः श्रीविष्णोः स हि वैष्णवः। नित्यं शतोपवासानां जीवन्मुक्तफलं लभेत्
वाञ्छन्ति तस्य संस्पर्शं तीर्थान्यखिलदेवताः। आलापं दर्शनं चैव सर्वपापप्रणाशनम् ॥
द्विरन्नमन्नं पृथुकं शुद्धं देशविशेषके। नात्यन्तशस्तं विप्राणां भक्षणे न निवेदने ॥
अभक्ष्यं वै यतीनां च विधवाब्रह्मचारिणम्। ताम्बूलं च यथा ब्रह्मन्तथैवन्नंस्तु न भुक्तम् ॥
ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। तपस्विनां च विप्रेन्द्र गोमांससदृशं स्मृतम् ॥
सर्वेषां ब्राह्मणानां च यदभक्ष्यं शृणु नारद। यदुक्तं सामवेदे च हरिणा चाऽऽह्निकक्रमे ॥
ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम्। दुग्धं लवणसार्धं च सद्यो गोमांसभक्षणम् ॥
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु। ऐक्षवं ताम्रपात्रस्थं सुरातुल्यं न संशयः॥
उत्थाय वामहस्तेन यस्तोयं पिबति द्विजः। सुरापी च स विज्ञेयः सर्वधर्मबहिष्कृतः॥
अनिवेद्यं हरेरन्नं भुक्तशेषं च नित्यशः। पीतशेषजलं चैव गोमांससदृशं मुने ॥२९॥
वार्त्ताकुफलं चैव गोमांसं कार्तिके स्मृतम्। माघे च मूलकं चैव कलम्बीशयने तथा
श्वेतवर्णं च तालं च मसूरं मत्स्यमेव च। सर्वेषां ब्राह्मणानां च त्याज्यं सर्वत्र देशके ॥
मत्स्यांश्च कामतो भुक्त्वा सोपवासस्त्र्यहं वसेत्। प्रायश्चित्तं ततः कृत्वा शुद्धिमाप्नोति वाडवः

१ क. °ह्मन्रुचीनां वि°। २ क. °वमन्ना°। ३ ख. कलिङ्गमपमिश्रमर्थे°।

प्रतिपत्सु च कूष्माण्डमभक्ष्यं ह्यर्थनाशनम् । द्वितीयायां च बृहतीं भोजनेन स्मरेद्धरिम् ॥
अभक्ष्यं च पटोलं च शत्रुवृद्धिकरं परम् । तृतीयायां चतुर्थ्यां च मूलकं धननाशनम् ॥
कलङ्ककारणं चैव पञ्चम्यां बिल्वभक्षणम् । तिर्यग्योनिं प्रापयेत्तु षष्ठ्यां वै निम्बभक्षकम् ॥
रोगवृद्धिकरं चैव नराणां तालभक्षणम् । सप्तम्यां च तथा तालं शरीरस्य च नाशकम् ॥
नारीकेलफलं भक्ष्यमष्टम्यां बुद्धिनाशकम् । तुम्बी नवम्यां गोमांसं दशम्यां च कलम्बिका ॥
एकादश्यां तथा शिम्बी द्वादश्यां पूतिका तथा । त्रयोदश्यां च वार्ताकी न भक्ष्या पुत्रनाशनम्
चतुर्दश्यां माषभक्ष्यं महापापकरं परम् । पञ्चदश्यां तथा मांसमभक्ष्यं गृहिणां मुने ॥
गृहिणां प्रोक्षितं मांसं भक्ष्यमन्यदिनेषु च । प्रातःस्नाने तथा श्राद्धे पार्वणे व्रतवासरे ॥
प्रशस्तं सार्षपं तैलं पक्वतैलं च नारद । कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च ॥ ३७ ॥
रवौ श्राद्धे व्रताहे च दुष्टं स्त्रीतिलतैलकम् । मांसं च रक्तशाकं च कांस्यपात्रे च भोजनम् ॥
निषिद्धं शयनं चैव कूर्ममांसं च मन्त्रितम् । निषिद्धं सर्ववर्णानां दिवा स्वस्त्रीनिषेवणम् ॥
रात्रौ च दधिभक्ष्यं च शयनं संध्ययोर्दिने । रजस्वलास्त्रीगमनमेतन्नरककारणम् ॥ ४०॥
उदक्यावीरयोरन्नं पुंश्चल्यन्नमभक्षकम् । शूद्रान्नं याजकान्नं च शूद्रश्राद्धान्नमेव च ॥
अभक्ष्यान्नं च विप्रर्षे यदन्नं वृषलीपतेः । *ब्रह्मन्वार्धुषिकान्नं च गणकान्नमभक्षकम् ॥
अग्रदानिद्विजान्नं च चिकित्साकारकस्य च । हस्तचित्राहरौ तैलमग्राह्यं चाप्यभक्षकम् ॥
मूले मृगे भाद्रपदे मांसं गोमांसतुल्यकम् । मघायां कृत्तिकायां वै चोत्तरासु च नारद ॥
करोति मैथुनं यो हि कुम्भीपाकं स च व्रजेत् । रोहिण्यां च विशाखायां मैत्रे चैवोत्तरासु च ॥
१अमायां कृत्तिकायां च द्विजैः क्षौरं विवर्जितम् ॥
कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत्पितॄन् । रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत् ॥
यत्कर्तव्यमकर्तव्यं यद्भोज्यं यदभोज्यकम् । सर्वं तुभ्यं निगदितं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे नारदं प्रति शिवोपदेशभक्ष्याभक्ष्यादिविवरणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अथाष्टाविंशोऽध्यायः ।

**नारद उवाच—**

श्रुतं सर्वं जगन्नाथ त्वत्प्रसादाज्जगद्गुरो । भवान्ब्रह्मस्वरूपं च वद ब्रह्मनिरूपणम् ॥ १ ॥

---

* अयं सार्धश्लोकः ख. पुस्तके नास्ति ।

---

१ ख. मघायामिति पाठः ।

प्रभो किं ब्रह्म साकारं किं निराकारमीश्वर । किं तद्विशेषणं किंवाऽप्यविशेषणमेव च ॥
किंवा दृश्यमदृश्यं वा लिप्तं देहेषु किं न वा । किंवा तल्लक्षणं शस्तं वेदे वा किं निरूपितम् ॥
ब्रह्मातिरिक्ता प्रकृतिः किंवा ब्रह्मस्वरूपिणी । प्रकृतेर्लक्षणं किंवा सारभूतं श्रुतौ श्रुतम् ॥
प्राधान्यं कस्य सृष्टौ च द्वयोर्मध्ये वरं परम् । विचार्य मनसा सर्वं सर्वज्ञ वद मां ध्रुवम् ॥
नारदस्य वचः श्रुत्वा पञ्चवक्त्रः प्रहस्य च । भगवान्कर्तुमारेभे परब्रह्मनिरूपणम् ॥ ६ ॥

महादेव उवाच—

यद्यत्पृष्टं त्वया वत्स निगूढं ज्ञानमुत्तमम् । सुदुर्लभं च वेदेषु पुराणेषु च नारद ॥ ७ ॥
अहं ब्रह्मा च विष्णुश्च शेषो धर्मो महान्विराट् । सर्वं निरूपितं ब्रह्मन्नस्माभिः श्रुतिभिर्मुने ॥
यद्विशेषणयुक्तं च दृश्यं प्रत्यक्षमेव च । तन्निरूपितमस्माभिर्वेदे वेदविदां वर ॥ ९ ॥
वैकुण्ठे च पुरा पृष्टे धर्मेण ब्रह्मणा तदा । यदुवाच हरिः किंचिन्निबोध कथयामि ते ॥
सारभूतं च तत्त्वानामज्ञानान्धकलोचनम् । द्वैधभ्रमतमोध्वंससुप्रकृष्टप्रदीपकम् ॥ ११ ॥
परमात्मस्वरूपं च परं ब्रह्म सनातनम् । सर्वदेहस्थितं साक्षिस्वरूपं देहिकर्मणाम् ॥ १२ ॥
प्राणाः पञ्च स्वयं विष्णुर्मनो ब्रह्मा प्रजापतिः । सर्वज्ञानस्वरूपोऽहं शक्तिः प्रकृतिरीश्वरी
आत्माधीना वयं सर्वे स्थिते तस्मिन्वयं स्थिताः । गते गताश्च परमे नरदेवमिवानुगाः ॥
जीवस्तत्प्रतिबिम्बं च सर्वभोगी हि कर्मणाम् । यथाऽर्कचन्द्रयोर्बिम्बं जलपूर्णघटेषु च ॥
बिम्बं घटेषु भग्नेषु प्रलीनं चन्द्रसूर्ययोः । तथा लयप्रसङ्गे स जीवो ब्रह्मणि लीयते ॥
एकमेव परं ब्रह्म शेषे वत्स भवक्षये । वयं प्रलीनास्तत्रैव जगदेतच्चराचरम् ॥ १७ ॥
तच्च ज्योतिःस्वरूपं च मण्डलाकारमेव च । ग्रीष्ममध्याह्नमार्तण्डकोटिकोटिसमप्रभम् ॥
आकाशमिव विस्तीर्णं सर्वव्यापकमव्ययम् । सुखदृश्यं यथा चन्द्रबिम्बं योगिभिरेव च ॥
वदन्ति योगिनस्तत्तु परं ब्रह्म सनातनम् । दिवानिशं च ध्यायन्ते सत्यं तत्सर्वमङ्गलम् ॥
निरीहं च निराकारं परमात्मानमीश्वरम् । स्वेच्छामयं स्वतन्त्रं च सर्वकारणकारणम् ॥
परमानन्दरूपं च परमानन्दकारणम् । परं प्रधानं पुरुषं निर्गुणं प्रकृतेः परम् ॥ २२ ॥
तत्रैव लीना प्रकृतिः सर्वबीजस्वरूपिणी । यथाऽग्नौ दाहिका शक्तिः प्रभा सूर्ये यथा मुने ॥
यथा दुग्धे च धावल्यं जले शैत्यं यथैव च । यथा शब्दश्च गगने यथा गन्धः क्षितौ सदा
तथा हि निर्गुणं ब्रह्म निर्गुणा प्रकृतिस्तथा । सृष्ट्युन्मुखेन तद्ब्रह्म चांशेन पुरुषः स्मृतः ॥
स एव सगुणो वत्स प्राकृतो विषयी स्मृतः । त्रिगुणा सा हि तत्रैव परस्येच्छामयी स्मृता ॥
यथा मृदा कुलालश्च घटं कर्तुं क्षमः सदा । तथा प्रकृत्या तद्ब्रह्म सृष्टिं स्रष्टुं क्षमं मुने ॥

१ क. 'वान्वक्तु' । २ ख. परा छायाम' ।

स्वर्णेन कुण्डलं कर्तुं स्वर्णकारः क्षमो यथा । तथा ब्रह्म तया सार्धं सृष्टिं कर्तुमिहेश्वरः(म्) ॥
कुलालसृष्टा न च मृन्नित्या चैव सनातनी । न स्वर्णकारसृष्टं तत्स्वर्णं वा नित्यमेव च ॥२९॥
नित्यं तत्परमं ब्रह्म नित्या च प्रकृतिः स्मृता । द्वयोः समं च प्राधान्यमिति केचिद्वदन्ति हि ॥
मृदं स्वर्णं समाहर्तुं कुलालस्वर्णकारकौ । न समर्थौ च मृत्स्वर्णं तयोराहरणे क्षमम् ॥३१॥
तस्मात्तत्प्रकृतेर्ब्रह्म परमेव च नारद । इति केचिद्वदन्त्येवं द्वयोर्वै नित्यता ध्रुवम् ॥ ३२ ॥
केचिद्वदन्ति तद्ब्रह्म स्वयं च प्रकृतिः पुमान् । ब्रह्मातिरिक्तप्रकृतिर्वदन्तीति च केचन ॥३३॥
तद्ब्रह्म परमं धाम सर्वकारणकारणम् । तद्ब्रह्मलक्षणं ब्रह्मन्निदं किंचिच्छ्रुतौ श्रुतम् ॥ ३४ ॥
ब्रह्म चाऽऽत्मा च सर्वेषां निर्लिप्तं साक्षिरूपि च, सर्वव्यापि च सर्वादि लक्षणं च श्रुतौ श्रुतम्
तद्ब्रह्म शक्तिः प्रकृतिः सर्वबीजस्वरूपिणी । यतस्तच्छक्तिमद्ब्रह्म चेदं प्रकृतिलक्षणम् ॥३६॥
तेजोरूपं च तद्ब्रह्म ध्यायन्ते योगिनः सदा । वैष्णवास्तन्न मन्यन्ते मद्भक्ताः सूक्ष्मबुद्धयः ॥
तत्तेजः कस्य नाऽऽश्चर्यं ध्यायन्ते पुरुषं विना । कारणेन विना कार्यं कुतो वा प्रभवेद्भुवि ॥
ध्यायन्ते वैष्णवास्तस्मात्तत्र रूपं मनोहरम् । स्वेच्छामयस्य पुंसश्च साकारस्याऽऽत्मनः सदा
तत्तेजोमण्डलाकारे सूर्यकोटिसमप्रभे । नित्यं स्थलं च प्रच्छन्नं गोलोकाभिधमेव च ॥४०॥
लक्षकोट्या योजनानां चतुरस्रं मनोहरम् । रत्नेन्द्रसारनिर्माणैर्गोपीभिश्चाऽऽवृतं सदा ॥
सुदृश्यं वर्तुलाकारं यथा चन्द्रस्य मण्डलम् । नानारत्नैश्च खचितं निराधारं तदिच्छया ॥
ऊर्ध्वं च नित्यवैकुण्ठात्पञ्चाशत्कोटियोजनम् । गोगोपगोपीसंयुक्तं कल्पवृक्षसमन्वितम् ॥
कामधेनुभिराकीर्णं रासमण्डलमण्डितम् । वृन्दावनवनाच्छन्नं विरजावेष्टितं मुने ॥ ४४ ॥
शतशृङ्गैः शातकुम्भैः सुदीप्तं श्रीमदीप्सितम् । लक्षकोट्या परिमितैराश्रमैः सुमनोहरैः ॥
शतमन्दिरसंयुक्तमाश्रमं सुमनोहरम् । रत्नप्राकारपरिखाविचित्रेण विराजितम् ॥ ४६ ॥
अमूल्यरत्ननिर्माणं लक्षमन्दिरसुन्दरम् । आश्रमं चतुरस्रं च चन्द्रबिम्बाकृतं वरम् ॥४७॥
गोलोकमध्यदेशस्थमतीव सुमनोहरम् । *प्राकारपरिखायुक्तं पारिजातवनान्वितम् ॥४९॥
कौस्तुभेन्द्रेण मणिना राजितं परमोज्ज्वलम् । हरिसारसुसंक्लृप्तसोपानैश्चातिसुन्दरैः ॥४९॥
मणीन्द्रसाररचितैः कपाटैर्दर्पणान्वितैः । नानाचित्रविचित्राढ्यैराश्रमं च सुसंस्कृतम् ॥५८॥
षोडशद्वारसंयुक्तं सुदीप्तं रत्नदीपकैः[1] । रत्नसिंहासने रम्ये महार्घमणिनिर्मिते ॥ ५१ ॥
नानाचित्रविचित्राढ्ये वसन्तं वरमीश्वरम् । नवीननीरदश्यामं किशोरवयसं शिशुम् ॥५२॥
शरन्मध्याह्नमार्तण्डप्रभामोचकलोचनम् । शरत्पार्वणपूर्णेन्दुशुभ्रमदीप्तिमदाननम् ॥ ५३ ॥

---

* इदं श्लोकद्वयं ख. पुस्तके न विद्यते ।

---

१ क. °कैः । तत्र सिं° । २ क. °हृनराजीवप्र° । ३ क. °न्दुशोभाच्छादनमान° ।

कोटिकन्दर्पलावण्यलीलानिन्दितमन्मथम् । कोटिचन्द्रप्रभाजुष्टं पुष्टं श्रीयुक्तविग्रहम् ॥५४॥
सस्मितं मुरलीहस्तं सुप्रशस्तं सुमङ्गलम् । परमोत्तमपीतांशुकयुगेन समुज्ज्वलम् ॥ ५५ ॥
चन्दनोक्षितसर्वाङ्गं कौस्तुभेन विराजितम् । आजानुमालतीमालावनमालाविभूषितम् ॥
त्रिभङ्गभङ्गसंयुक्तं मणिमाणिक्यभूषितम् । मयूरपुच्छचूडं च सद्रत्नमुकुटोज्ज्वलम् ॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम् । रत्नकुण्डलयुग्मेन गण्डस्थलसुशोभितम् ॥ ५८ ॥
मुक्तापङ्क्तिसदृक्षामदशनं सुमनोहरम् । पक्वबिम्बाधरोष्ठं च नासिकोन्नतिशोभनम् ॥
वीक्षितं गोपिकाभिश्च वेष्टिताभिः समन्ततः । स्थिरयौवनयुक्ताभिः सस्मिताभिश्च सादरम् ॥
भूषिताभिश्च सद्रत्ननिर्मितैर्भूषणैः परम् । सुरेन्द्रैश्च मुनीन्द्रैश्च मुनिभिर्मानवेन्द्रकैः ॥५९॥
ब्रह्मविष्णुशिवानन्तधर्माद्यैर्वन्दितं मुदा । भक्तप्रियं भक्तनाथं भक्तानुग्रहकारकम् ॥ ६० ॥
रासेश्वरं सुरसिकं राधावक्षस्थलस्थितम् । एवंरूपमरूपं तं मुने ध्यायन्ति वैष्णवाः ॥६१॥
सततं ध्येयमस्माकं परमात्मानमीश्वरम् । अक्षरं परमं ब्रह्म भगवन्तं सनातनम् ॥ ६२ ॥
स्वेच्छामयं निर्गुणं च निरीहं प्रकृतेः परम् । सर्वाधारं सर्वबीजं सर्वज्ञं सर्वमेव च ॥ ६३ ॥
सर्वेश्वरं सर्वपूज्यं सर्वसिद्धिकरं परम् । स एव भगवानादिर्गोलोके द्विभुजः स्वयम् ॥६४॥
गोपवेषश्च गोपालैः पार्षदैः परिवेष्टितः । परिपूर्णतमः श्रीमान् श्रीकृष्णो राधिकेश्वरः ॥
सर्वान्तरात्मा सर्वत्र प्रत्यक्षः सर्वगः स्मृतः । कृषिश्च सर्ववचनो नकारश्चाऽऽत्मवाचकः ॥
सर्वात्मा च परं ब्रह्म तेन कृष्णः प्रकीर्तितः । कृषिश्च सर्ववचनो नकारश्चाऽऽदिवाचकः ॥
सर्वादिपुरुषो व्यापी तेन कृष्णः प्रकीर्तितः । स एवांशेन भगवान्वैकुण्ठे च चतुर्भुजः ॥
चतुर्भुजैः पार्षदैस्तैरावृतः कमलापतिः । स एव कलया विष्णुः पाता च जगतां प्रभुः ॥
श्वेतद्वीपे सिन्धुकन्यापतिरेव चतुर्भुजः । एतत्ते कथितं सर्वं परब्रह्मस्वरूपकम् ॥ ७० ॥
अस्माकं चिन्तनीयं च सेव्यं वन्दितमीप्सितम् । इत्युक्त्वा शंकरस्तत्र विरराम च शौनक ॥
गन्धर्वराजस्तोत्रेण तुष्टुवे तं च नारदः । मुनिस्तोत्रेण संतुष्टो भगवानादिरच्युतः ॥
ज्ञानं मृत्युंजयस्तस्मै प्रददौ वरमीप्सितम् । मुनीन्द्रस्तं संप्रणम्य प्रहृष्टवदनेक्षणः ॥७२॥
तदाज्ञया पुण्यरूपं ययौ नारायणाश्रमम् ॥ ७३ ॥

इति श्रीब्रह्मवैवर्ते म० ब्र० सौ० ब्रह्मस्वरूपवैकुण्ठादिवर्णनं नारदप्रस्थानं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

===

१ क. °म् । बहुभिसंस्कारपी° । २ क. °क मुक्तामा° । ३ क. °ङ्क्तिविनिवेशयद° । ४ क. सर्वसारं स° । ५ क. °ह्मनिरूपणम् ।

## अथैकोनत्रिंशोऽध्यायः ।

सौतिरुवाच—

ददर्शाऽऽश्रममाश्चर्यं देवर्षिर्नारदस्तथा । ऋषेर्नारायणस्यैव बदरीवनसंयुतम् ॥ १ ॥
नानावृक्षलताकीर्णं पुंस्कोकिलरुतश्रुतम् । शरभेन्द्रैः केसरीन्द्रैर्व्याघ्रौघैः परिवेष्टितम् ॥
ऋषीन्द्रस्य प्रभावेण हिंसाभयविवर्जितम् । महारण्यमगम्यं च स्वर्गादपि मनोहरम् ॥ ३ ॥
(*त्रिषष्टिकोटिसिद्धौघैरावृतं सूर्यवर्चसम् । ऋषीन्द्राणां च पञ्चाशत्कोटिभिश्चान्वितं मुदा
विद्याधराणां नृत्यं तत्पश्यन्तं सस्मितं द्विज । गन्धर्वकृष्णसंगीतं श्रुतवन्तं मनोहरम् ॥ )
सिद्धेन्द्राणां मुनीन्द्राणामाश्रमाणां त्रिकोटिभिः । आवृतं चन्दनारण्यैः पारिजातवनान्वितम्
ददर्श तमृषीन्द्रं च सभामध्ये मनोहरम् । रत्नसिंहासनस्थं च वसन्तं योगिनां गुरुम् ॥५॥
जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् । प्रणनाम च तं दृष्ट्वा ब्रह्मपुत्रश्च शौनक ॥६॥
उत्थाय सहसाऽऽलिङ्ग्य युयुजे परमाशिषम् । पप्रच्छ कुशलं स्नेहाच्चकारातिथिपूजनम् ॥
रत्नसिंहासने रम्ये वासयामास नारदम् । निवसन्नासने रम्ये वर्त्मश्रमविवर्जितः ॥८ ॥
उवाच तमृषिश्रेष्ठं भगवन्तं सनातनम् । अधीत्य वेदान्सर्वांश्च पितुः स्थाने सुदुर्गमान् ॥
ज्ञानं संप्राप्य योगीन्द्रान्मन्त्रं वै शंकराद्विभो । मनो मे नहि तृप्नोति दुर्निवारं च चञ्चलम् ॥
दृष्टं मया त्वत्पदाब्जं मनसा प्रेरितेन च । किंचिज्ज्ञानविशेषं च लब्धुमिच्छामि सांप्रतम्
यत्र कृष्णगुणाख्यानं जन्ममृत्युजरापहम् ॥ १२ ॥
ब्रह्मविष्णुशिवाद्याश्च सुरेन्द्राश्च सुरा विभो । कं चिन्तयन्ति मुनयो मनवश्च विचक्षणाः ॥
कस्मात्सृष्टिश्च भवति कुत्र वा संप्रलीयते । को वा सर्वेश्वरो विष्णुः सर्वकारणकारकः ॥
सर्वेश्वरस्य किं रूपं कर्म वा किं जगत्पते । विचार्य मनसा सर्वं तद्भवान्वक्तुमर्हति ॥
नारदस्य वचः श्रुत्वा प्रहस्य भगवानृषिः । कथां कथितुमारेभे पुण्यां भुवनपावनीम् ॥
इति श्री० म० ब्र० सौ० नारायणं प्रति नारदप्रश्नो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशोऽध्यायः ।

श्रीनारायण उवाच—

लम्बोदरो हरिरुमापतिरीशशेषब्रह्मादयः सुरगणा मनवो मुनीन्द्राः ।

* इदं श्लोकद्वयं ख. पुस्तके नास्ति ।

वाणीशिवात्रिपथगाकमलादिकाश्च संचिन्तयेद्भगवतश्चरणारविन्दम् ॥ १ ॥
संसारसागरमतीव गभीरघोरं दावाग्निसर्पपरिवेष्टितचेष्टिताङ्गम् ।
संलङ्घ्य गन्तुमभिवाञ्छति यो हि दास्यं संचिन्तयेद्भगवतश्चरणारविन्दम् ॥ २ ॥
गोवर्धनोद्धरणकीर्तिरतीव खिन्ना मूर्धारिता च दशनाग्रत एव चाऽऽर्द्रा ।
विश्वानि लोमविवरेषु बिभर्तुरादेः संचिन्तयेद्भगवतश्चरणारविन्दम् ॥ ३ ॥
वेदाङ्गवेदमुखनिःसृतकीर्तिरंशैर्वेदाङ्गवेदजनकस्य हरेर्विधातुः ।
जन्मान्तकादिभयशोकविदीर्णदेहः संचिन्तयेद्भगवतश्चरणारविन्दम् ॥ ४ ॥
गोपाङ्गनावदनपङ्कजषट्पदस्य रासेश्वरस्य रसिकारमणस्य पुंसः ।
वृन्दावने विहरतो व्रजवेषविष्णोः संचिन्तयेद्भगवतश्चरणारविन्दम् ॥ ५ ॥
चक्षुर्निमेषपतितो जगतां विधाता तत्कर्म वत्स कथितुं भुवि कः समर्थः ।
त्वं चापि नारदमुने परमादरेण संचिन्तनं कुरु हरेश्चरणारविन्दम् ॥ ६ ॥
यूयं वयं तस्य कलाकलांशा कलाकलांशा मनवो मुनीन्द्राः ।
कलाविशेषा भवपद्मामुख्या महान्विराड् यस्य कलाविशेषः ॥ ७ ॥
सहस्रशीर्षा शिरसः प्रदेशे बिभर्ति सिद्धार्थसमं च विश्वम् ।
कूर्मे च शेषो मशको गजे यथा कूर्मश्च कृष्णस्य कलाकलांशः ॥ ८ ॥
गोलोकनाथस्य विभोर्यशोऽमलं श्रुतौ पुराणे नहि किंचन स्फुटम् ।
न पाद्ममुख्याः कथितुं समर्थाः सर्वेश्वरं तं भज पाद्मपुत्र ॥ ९ ॥
विश्वेषु सर्वेषु च विश्ववासः सन्त्येव शश्वद्विधिविष्णुरुद्राः ।
तेषां च संख्याः श्रुतयश्च देवाः परं न जानन्ति तमीश्वरं भज ॥ १० ॥
करोति सृष्टिं स विधेर्विधाता विधाय नित्यां प्रकृतिं जगत्प्रसूम् ।
ब्रह्मादयः प्राकृतिकाश्च सर्वे भक्तिप्रदां श्रीं प्रकृतिं भजन्ति ॥ ११ ॥
ब्रह्मस्वरूपा प्रकृतिर्न भिन्ना यया च सृष्टिं कुरुते सनातनः ।
स्त्रियश्च सर्वाः कलया जगत्सु माया च सर्वे च तया विमोहिताः ॥ १२ ॥
नारायणी सा परमा सनातनी शक्तिश्च पुंसः परमात्मनश्च ।
आत्मेश्वरश्चापि यया च शक्तिमांस्तया विना स्रष्टुमशक्त एव ॥ १३ ॥
गत्वा विवाहं कुरु वत्स सांप्रतं कर्तुं प्रयुक्तश्च पितुर्निदेशः ।
गुरोर्निदेशप्रतिपालको भवेः सर्वत्र पूज्यो विजयी च संततम् ॥ १४ ॥

---

१ क. °काभरण° । २ ख. °मः । श्रिय° ।

स्वपत्नीं पूजयेद्यो हि वस्त्रालंकारचन्दनैः । प्रकृतिस्तस्य संतुष्टा यथा कृष्णो द्विजार्चने ॥
सा च योषित्स्वरूपा च प्रतिविश्वेषु मायया । योषितामपमानेन पराभूता च सा भवेत् ॥
दिव्या स्त्री पूजिता येन पतिपुत्रवती सती । प्रकृतिः पूजिता तेन सर्वमङ्गलदायिनी ॥
मूलप्रकृतिरेका सा पूर्णब्रह्मस्वरूपिणी । सृष्टौ पञ्चविधा सा च विष्णुमाया सनातनी ॥
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः । सर्वासां प्रेयसी कान्ता सा राधा परिकीर्तिता
नारायणप्रिया लक्ष्मीः सर्वसंपत्स्वरूपिणी । वागधिष्ठातृदेवी या सा च पूज्या सरस्वती ॥
सावित्री वेदमाता च पूज्यरूपा विधेः प्रिया । शंकरस्य प्रिया दुर्गा यस्याः पुत्रो गणेश्वरः

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे भगवत्स्तुति-
तत्स्वरूपमायास्वरूपवर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

====

## समाप्तमिदं श्रीमद्ब्रह्मवैवर्तपुराणस्याऽऽदिमं ब्रह्मखण्डम् ॥

*

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं—

# ब्रह्मवैवर्तपुराणम् ।

## तत्र द्वितीयं प्रकृतिखण्डम् ।

### अथ प्रथमोऽध्यायः ।

—:•⊙:•—

नारद उवाच—

गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती । सावित्री वै सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता ॥

आविर्बभूव सा केन का वा सा ज्ञानिनां वरा । किंवा तल्लक्षणं ब्रूहि साऽभवत्पञ्चधा कथम् ॥

सर्वासां चरितं पूजाविधानं कथमीप्सितम् । अवतारं कुत्र कस्यास्तन्मां व्याख्यातुमर्हसि

नारायण उवाच—

प्रकृतेर्लक्षणं वत्स को वा वक्तुं क्षमो भवेत् किंचित्तथाऽपि वक्ष्यामि यच्छ्रुतं धर्मवक्त्रतः

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता

गुणे प्रकृष्टसत्त्वे च प्रशब्दो वर्तते श्रुतौ । मध्यमे कृश्च रजसि तिशब्दस्तमसि स्मृतः

त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता । प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥

प्रथमे वर्तते प्रश्च कृतिः स्यात्सृष्टिवाचकः । सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिता

योगेनाऽऽत्मा सृष्टिविधौ द्विधारूपो बभूव सः । पुमांश्च दक्षिणार्धाङ्गो वामाङ्गः प्रकृतिःस्मृतः

सा च ब्रह्मस्वरूपा स्यान्माया नित्या सनातनी । यथाऽऽत्मा च तथा शक्तिर्यथाऽग्नौ दाहिका स्मृता ॥ १० ॥

अत एव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते । सर्वं ब्रह्ममयं ब्रह्मञ्छश्वत्पश्यति नारद ॥ ११ ॥

स्वेच्छामयस्येच्छया च श्रीकृष्णस्य सिसृक्षया । साऽऽविर्बभूव सहसा मूलप्रकृतिरीश्वरी ॥

तदाज्ञया पञ्चविधा सृष्टिकर्मणि भेदतः । अथ भक्तानुरोधाद्वा भक्तानुग्रहविग्रहा ॥ १३ ॥

गणेशमाता दुर्गा या शिवरूपा शिवप्रिया । नारायणी विष्णुमाया पूर्णब्रह्मस्वरूपिणी ॥

ब्रह्मादिदेवैर्मुनिभिर्मनुभिः पूजिता सदा । सर्वाधिष्ठातृदेवी सा ब्रह्मरूपा सनातनी ॥१५॥

यशोमङ्गलधर्मश्रीसत्यपुण्यप्रदायिनी । मोक्षहर्षप्रदात्रीयं शोकदुःखार्तिनाशिनी ॥१६॥

---

१ क. °नं गुणमी° । २ क. °ष्णुरूपा पू° । ३ क. °र्महद्भिः पू° । ४ क. °नी । शुभमोक्षहर्षदात्री शोकार्तिदुर्गना° ।

शरणागतदीनार्तपरित्राणपरायणा । तेजःस्वरूपा परमा तदधिष्ठातृदेवता ॥ १७ ॥
सर्वशक्तिस्वरूपा च शक्तिरीशस्य संततम् । सिद्धेश्वरी सिद्धरूपा सिद्धिदा सिद्धिदेश्वरी
बुद्धिर्निद्रा क्षुत्पिपासा छाया तन्द्रा दया स्मृतिः । जातिः क्षान्तिश्च शान्तिश्च कान्तिर्भ्रा-
न्तिश्च चेतना ॥ १९ ॥
तुष्टिः पुष्टिस्तथा लक्ष्मीर्वृत्तिर्माता तथैव च । सर्वशक्तिस्वरूपा सा कृष्णस्य परमात्मनः ॥
उक्तः श्रुतौ श्रुतगुणश्चातिस्वल्पो यथाऽऽगमम् । गुणोऽस्त्यनन्तोऽनन्ताया अपरां च
निशामय ॥ २१ ॥
शुद्धसत्त्वस्वरूपा या पद्मा च परमात्मनः । सर्वसंपत्स्वरूपा या तदधिष्ठातृदेवता ॥ २२ ॥
कान्ता दान्ताऽतिशान्ता च सुशीला सर्वमङ्गला । लोभान्मोहात्कामरोषान्मदाहंकारतस्तथा
त्यक्ताऽनुरक्ता पत्युश्च सर्वाद्या च पतिव्रता । प्राणतुल्या भगवतः प्रेमपात्री प्रियंवदा ॥
सर्वसस्यात्मिका सर्वजीवनोपायरूपिणी । महालक्ष्मीश्च वैकुण्ठे पतिसेवापरायणा ॥ २५ ॥
स्वर्गे च स्वर्गलक्ष्मीश्च राजलक्ष्मीश्च राजसु । गृहे च गृहलक्ष्मीश्च मर्त्यानां गृहिणां तथा
सर्वेषु प्राणिद्रव्येषु शोभारूपा मनोहरा । प्रीतिरूपा पुण्यवतां प्रभारूपा नृपेषु च ॥ २७ ॥
वाणिज्यरूपा वणिजां पापिनां कलहंकरी । दयामयी भक्तमाता भक्तानुग्रहकारिका ॥
चपले चपला भक्तसंपदो रक्षणाय च । जगज्जीवन्मृतं सर्वं यया देव्या विना मुने ॥ २९ ॥
शक्तिर्द्वितीया कथिता वेदोक्ता सर्वसंमता । सर्वपूज्या सर्ववन्द्या चान्यां मत्तो निशामय
वाग्बुद्धिविद्याज्ञानाधिदेवता परमात्मनः । सर्वविद्यास्वरूपा या सा च देवी सरस्वती ॥
सुबुद्धिः कविता मेधा प्रतिभा स्मृतिदा नृणाम् । नानाप्रकारसिद्धान्तभेदार्थकल्पनाप्रदा ॥
व्याख्याबोधस्वरूपा च सर्वसंदेहभञ्जनी । विचारकारिणी ग्रन्थकारिणी शक्तिरूपिणी ॥
सर्वसंगीतसंधानतालकारणरूपिणी । विषयज्ञानवाग्रूपा प्रतिविश्वं च जीविनाम् ॥ ३४ ॥
यया विना च विश्वौघो मूको मृतसमः सदा । व्याख्यामुद्राकरा शान्ता वीणापुस्तकधारिणी
शुद्धसत्त्वस्वरूपा या सुशीला श्रीहरिप्रिया । हिमचन्दनकुन्देन्दुकुमुदाम्भोजसंनिभा ॥
जपन्ती परमात्मानं श्रीकृष्णं रत्नमालया । तपःस्वरूपा तपसां फलदात्री तपस्विनी ॥
सिद्धिविद्यास्वरूपा च सर्वसिद्धिप्रदा सदा । देवी तृतीया गदिता श्रीयुक्ता जगदम्बिका
यथागमं यथाकिंचिदपरां संनिबोध मे । माता चतुर्णां वेदानां वेदाङ्गानां च च्छन्दसाम् ॥

---

१ क. 'बीजमन्त्रस्वरूपा च शक्तिबीजस्य सांप्रतम् । २ क. 'क्ष्मीर्धृतिर्मा' । ३ क. श्रुतिगु' । ४ क. 'लहाङ्कुरा व' । ५ क. 'णी ॥ ३३ ॥ स्वरसं' । ६ क. 'व्यासूत्रक'।

संध्यावन्दनमन्त्राणां तन्त्राणां च विचक्षणा । द्विजातिजातिरूपा च जपरूपा तपस्विनी
ब्राह्मण्यतेजोरूपा च सर्वसंस्कारकारिणी । पवित्ररूपा सावित्री गायत्री ब्रह्मणः प्रिया ॥
तीर्थानि यस्याः संस्पर्शं दर्शं वाञ्छन्ति शुद्धये । शुद्धस्फटिकसंकाशा शुद्धसत्त्वस्वरूपिणी
परमानन्दरूपा च परमा च सनातनी । परब्रह्मस्वरूपा च निर्वाणपददायिनी ॥४३॥
ब्रह्मतेजोमयी शक्तिस्तदधिष्ठातृदेवता । यत्पादरजसा पूतं जगत्सर्वं च नारद ॥४४॥
देवी चतुर्थी कथिता पञ्चमीं वर्णयामि ते । प्रेमप्राणाधिदेवी या पञ्चप्राणस्वरूपिणी ॥
प्राणाधिकप्रियतमा सर्वाद्या सुन्दरी वरा । सर्वसौभाग्ययुक्ता च मानिनी गौरवान्विता ॥
वामार्धाङ्गस्वरूपा च गुणैस्तेजसा समा । परावरा सर्वमाता परमाद्या सनातनी ॥
परमानन्दरूपा च धन्या मान्या च पूजिता । रासक्रीडाधिदेवी च कृष्णस्य परमात्मनः ॥
रासमण्डलसंभूता रासमण्डलमण्डिता । रासेश्वरी सुरसिका रासावासनिवासिनी ॥४९॥
गोलोकवासिनी देवी गोपीवेषविधायिका । परमाह्लादरूपा च संतोषामर्षरूपिणी ॥
निर्गुणा च निराकारा निर्लिप्ताऽऽत्मस्वरूपिणी । निरीहा निरहंकारा भक्तानुग्रहविग्रहा
वेदानुसारध्यानेन विज्ञेया सा विचक्षणैः । दृष्टिर्दृष्टा सहस्रेषु सुरेन्द्रैर्मुनिपुंगवैः ॥ ५२ ॥
वह्निशुद्धांशुकाधाना रत्नालंकारभूषिता । कोटिचन्द्रप्रभाजुष्टश्रीयुक्ता भक्तविग्रहा ॥
श्रीकृष्णभक्तदास्यैकदायिनी सर्वसंपदाम् । अवतारे च वाराहे वृषभानुसुता च या ॥
यत्पादपद्मसंस्पर्शपवित्रा च वसुंधरा । ब्रह्मादिभिरदृष्टा या सर्वदृष्टा च भारते ॥५५॥
स्त्रीरत्नसारसंभूता कृष्णवक्षःस्थलोज्ज्वला । यथा घने नवघने लोला सौदामिनी मुने ॥
षष्टिवर्षसहस्राणि प्रतप्तं ब्रह्मणा पुरा । यत्पादपद्मनखरदृष्टये चाऽऽत्मशुद्धये ॥५७॥
स्वप्नेऽपि नैव दृष्टः स्यात्प्रत्यक्षे तु च का कथा । तेनैव तपसा दृष्टा भुवि वृन्दावने वने॥
कथिता पञ्चमी देवी सा राधा परिकीर्तिता । अंशरूपा कलारूपा कलांशांशसमुद्भवा ॥
प्रकृतेः प्रतिविश्वं च रूपं स्यात्सर्वयोषितः । परिपूर्णतमाः पञ्चविधा देव्यः प्रकीर्तिताः॥
या या प्रधानांशरूपा वर्णयामि निशामय । प्रधानांशस्वरूपा च गङ्गा भुवनपावनी॥६१॥
विष्णुपादाब्जसंभूता द्रवरूपा सनातनी । पापिपापेध्मदाहाय ज्वलदिन्धनरूपिणी॥ ६२॥
दर्शनस्पर्शनस्नानपानैर्निर्वाणदायिनी । गोलोकस्थानगमनसुसोपानस्वरूपिणी ॥ ६३ ॥

---

१ क. °पा सरस्वती । २ क. °सा भूतं ज° । ३ क. °र्वाभ्यः सुन्दरी परा । ४ क. °रा सारभूता° । ५ क. विज्ञातां च नि° । ६ ख. °स्थलस्थिता । तथा । ७ क. °णा तपः य° । ८ क. °ष्टा भुवि वृ° ।

पवित्ररूपा तीर्थानां सरितां च परा वरा। शंभुमौलिजटामेरुमुक्तापङ्क्तिस्वरूपिणी ६४ ॥
तपःसंपादिनी सद्यो भारते च तपस्विनाम्। शङ्खपद्मक्षीरनिभा शुद्धसत्त्वस्वरूपिणी ॥
निर्मला निरहंकारा साध्वी नारायणप्रिया। प्रधानांशस्वरूपा च तुलसी विष्णुकामिनी॥
विष्णुभूषणरूपा च विष्णुपादस्थिता सती। तपःसंकल्पपूजादि सद्यः संपादनी मुने ॥
सारभूता च पुष्पाणां पवित्रा पुण्यदा सदा। दर्शनस्पर्शनाभ्यां च सद्यो निर्वाणदायिनी
कलौ कलुषशुष्केध्मदाहनायाग्निरूपिणी। यत्पादपद्मसंस्पर्शात्सद्यः पूता वसुंधरा ॥ ६९॥
यत्स्पर्शदर्शे वाञ्छन्ति तीर्थानामात्मशुद्धये। यया विना च विश्वेषु सर्वं कर्मास्ति निष्फलम्
मोक्षदा या मुमुक्षूणां कामिनां सर्वकामदा। कल्पवृक्षस्वरूपा च भारते वृक्षरूपिणी ॥
त्राणाय भारतानां च प्रजानां परदेवता। प्रधानांशस्वरूपा च मनसा कश्यपात्मजा ॥
शंकरप्रियशिष्या च महाज्ञानविशारदा। नागेश्वरस्यानन्तस्य भगिनी नागपूजिता ॥ ७३॥
नागेश्वरी नागमाता सुन्दरी नागवाहिनी। नागेन्द्रगणयुक्ता सा नाभूषणभूषिता ॥
नागेन्द्रवन्दिता सिद्धयोगिनी नागवासिनी। विष्णुभक्ता विष्णुरूपा विष्णुपूजापरायणा॥
तपःस्वरूपा तपसां फलदात्री तपस्विनी। दिव्यं त्रिलक्षवर्षं च तपस्तप्तं यया हरेः ॥
तपस्विनीषु पूज्या च तपस्विषु च भारते। सर्वमन्त्राधिदेवी च ज्वलन्ती ब्रह्मतेजसा ॥
ब्रह्मस्वरूपा परमा ब्रह्मभावनतत्परा। जरत्कारुमुनेः पत्नी कृष्णांशभुपतिव्रता॥ ७८ ।
आस्तीकस्य मुनेर्माता प्रवरस्य तपस्विनाम्। प्रधानांशस्वरूपा या देवसेना च नारद ॥
मातृका सा पूज्यतमा सा च षष्ठी प्रकीर्तिता। शिशूनां प्रतिविश्वं तु प्रतिपालनकारिणी
तपस्विनी विष्णुभक्ता कार्तिकेयस्य कामिनी। षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्तिता ॥
पुत्रपौत्रप्रदात्री च धात्री च जगतां सदा। सुन्दरी युवती रम्या सततं भर्तुरन्तिके ॥
स्थाने शिशूनां परमा वृद्धरूपा च योगिनी। पूजा द्वादशमासेषु यस्याः षष्ठ्यास्तु संततम्
पूजा च सूतिकागारे परषष्ठदिने शिशोः। एकविंशतिमे चैव पूजा कल्याणहेतुकी॥ ८४॥
शश्वन्नियमिता चैषा नित्या काम्याऽप्यतः परा। मातृरूपा दयारूपा शश्वद्रक्षणकारिणी ।
जले स्थले चान्तरिक्षे शिशूनां स्वप्नगोचरा। प्रधानांशस्वरूपा या देवी मङ्गलचण्डिका॥
प्रकृतेर्मुखसंभूता सर्वमङ्गलदा सदा। सृष्टौ मङ्गलरूपा च संहारे कोपरूपिणी ॥ ८७ ॥
तेन मङ्गलचण्डी सा पण्डितैः परिकीर्तिता। प्रतिमङ्गलवारेषु प्रतिविश्वेषु पूजिता ॥
पञ्चोपचारैर्भक्त्या च योषिद्भिः परिपूजिता। पुत्रपौत्रधनैश्वर्ययशोमङ्गलदायिनी ॥ ८९॥

---

१ क. °मृ चन्द्रप°। २ क. °य भवतीनां°। ३ क. °न्द्रगुण°। ४ क. °री सुरभी र°। ५ क. °श्चद्रियति भास्येषा।

शोकसंतापपापार्तिदुःखदारिद्र्यनाशिनी । परितुष्टा सर्ववाञ्छाप्रदात्री सर्वयोषिताम् ॥
रुष्टा क्षणेन संहर्तुं शक्ता विश्वं महेश्वरी । प्रधानांशस्वरूपा च काली कमललोचना ॥
दुर्गाललाटसंभूता रणे शुम्भनिशुम्भयोः । दुर्गार्धांशस्वरूपा स्याद्गुणैः सा तेजसा समा ॥
कोटिसूर्यप्रभाजुष्टदिव्यसुन्दरविग्रहा । प्रधाना सर्वशक्तीनां वरा बलवती परा । ९३॥
सर्वसिद्धिप्रदा देवी परमा सिद्धियोगिनी । कृष्णभक्ता कृष्णतुल्या तेजसा विक्रमैर्गुणैः ॥
कृष्णभावनया शश्वत्कृष्णवर्णा सनातनी ॥ ९४ ॥
ब्रह्माण्डं सकलं हर्तुं शक्ता निःश्वासमात्रतः । रणं दैत्यैः समं तस्याः क्रीडया लोकरक्षया
धर्मार्थकाममोक्षांश्च दातुं शक्ता सुपूजिता । ब्रह्मादिभिः स्तूयमाना मुनिभिर्मनुभिर्नरैः ॥
प्रधानांशस्वरूपा च प्रकृतिश्च वसुंधरा । आधारभूता सर्वेषां सर्वसस्यप्रसूतिका ॥९७॥
रत्नाकारा रत्नगर्भा सर्वरत्नाकराश्रया । प्रजादिभिः प्रजेशैश्च पूजिता वन्दिता सदा ॥
सर्वोपजीव्यरूपा च सर्वसंपद्विधायिनी । यया विना जगत्सर्वं निराधारं चराचरम् ॥
प्रकृतेश्च कला या यास्ता निबोध मुनीश्वर । यस्य यस्य च याः पत्न्यस्ताः सर्वा वर्णयामि ते
स्वाहादेवी वह्निपत्नी त्रिषु लोकेषु पूजिता । यया विना हविर्दत्तं न ग्रहीतुं सुराः क्षमाः ॥
दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्र पूजिता । यया विना च विश्वेषु सर्वं कर्म च निष्फलम् ॥
स्वधा पितॄणां पत्नी च मुनिभिर्मनुभिर्नरैः । पूजिता पैतृकं दानं निष्फलं च यया विना ॥
स्वस्तिदेवी वायुपत्नी प्रतिविश्वेषु पूजिता । आदानं च प्रदानं च निष्फलं च यया विना ॥
पुष्टिर्गणपतेः पत्नी पूजिता जगतीतले । यया विना परिक्षीणाः पुमांसो योषितोऽपि च ॥
अनन्तपत्नी तुष्टिश्च पूजिता वन्दिता सदा । यया विना न संतुष्टाः सर्वलोकाश्च सर्वतः ॥
ईशानपत्नी संपत्तिः पूजिता च सुरैर्नरैः । सर्वे लोका दरिद्राश्च विश्वेषु च यया विना ॥
धृतिः कपिलपत्नी च सर्वैः सर्वत्र पूजिता । सर्वे लोका अधीराः स्युर्जगत्सु च यया विना ॥
यमपत्नी क्षमा साध्वी सुशीला सर्वपूजिता । समुन्मत्ताश्च रुद्राश्च सर्वे लोका यया विना ॥
क्रीडाधिष्ठातृदेवी सा कामपत्नी रतिः सती । केलिकौतुकहीनाश्च सर्वे लोका यया विना ॥
सत्यपत्नी सती मुक्तिः पूजिता जगतां प्रिया । यया विना भवेल्लोको बन्धुतारहितः सदा ॥
मोहपत्नी दया साध्वी पूजिता च जगत्प्रिया । सर्वे लोकाश्च सर्वत्र निष्फलाश्च यया विना ॥
पुण्यपत्नी प्रतिष्ठा सा पुण्यरूपा च पूजिता । यया विना जगत्सर्वं जीवन्मृतसमं मुने ॥
सुकर्मपत्नी कीर्तिश्च धन्या मान्या च पूजिता । यया विना जगत्सर्वं यशोहीनं मृतं यथा ॥

---

१ क. °द्दपुष्टजाज्वल्यवि° ।

क्रिया उद्योगपत्नी च पूजिता सर्वसंगता । यया विना जगत्सर्वमुच्छिन्नमिव नारद ॥
अधर्मपत्नी मिथ्या सा सर्वधूर्तैश्च पूजिता । यया विना जगत्सर्वमुच्छिन्नं विधिनिर्मितम् ॥
सत्ये अदर्शना या च त्रेतायां सूक्ष्मरूपिणी । अर्धावयवरूपा च द्वापरे संहृता ह्रिया ॥
कलौ महाप्रगल्भा च सर्वत्र व्याप्तिकारणात् । कपटेन सह भ्रात्रा भ्रमत्येव गृहे गृहे ॥
शान्तिर्लज्जा च भार्ये द्वे सुशीलस्य च पूजिते । याभ्यां विना जगत्सर्वमुन्मत्तमिव नारद ॥
ज्ञानस्य तिस्रो भार्याश्च बुद्धिर्मेधा स्मृतिस्तथा । याभिर्विना जगत्सर्वं मूढं मृतसमं सदा
मूर्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा । परमात्मा च विश्वौघा निराधारा यया विना
सर्वत्र शोभारूपा च लक्ष्मीर्मूर्तिमती सती । श्रीरूपा मूर्तिरूपा च मान्या धन्या च पूजिता
कालाग्निरुद्रपत्नी च निद्रा या सिद्धयोगिनाम् । सर्वलोकाः समाच्छन्ना मायायोगेन रात्रिषु
कालस्य तिस्रो भार्याश्च संध्या रात्रिर्दिनानि चै । याभिर्विना विधात्रा च संख्यां कर्तुं न
शक्यते ॥ १२४ ॥

क्षुत्पिपासे लोभभार्ये धन्ये मान्ये च पूजिते । याभ्यां व्याप्तं जगत्क्षोभयुक्तं चिन्तितमेव च ॥
प्रभा च दाहिका चैव द्वे भार्ये तेजसस्तथा । याभ्यां विना जगत्स्रष्टुं विधाता च नहीश्वरः ।
कालकन्ये मृत्युजरे प्रज्वरस्य प्रिये प्रिये । याभ्यां जगत्समुच्छिन्नं विधात्रा निर्मिते विधौ
निद्राकन्या च तन्द्रा सा प्रीतिरन्यासुखप्रिये । याभ्यां व्याप्तं जगत्सर्वं विधिपुत्रविधेर्विधौ ॥
वैराग्यस्य च द्वे भार्ये श्रद्धा भक्तिश्च पूजिते । याभ्यां शश्वज्जगत्सर्वं जीवन्मुक्तमिदं मुने
अदितिर्देवमाता च सुरभिश्च गवां प्रसूः । दितिश्च दैत्यजननी कद्रूश्च विनता दनुः ॥ १३० ॥
उपयुक्ता. सृष्टिविधावेताश्च प्रकृतेः कलाः । कलाश्चान्याः सन्ति बह्व्यस्तासु काश्चिन्निबोध मे
रोहिणी चन्द्रपत्नी च संज्ञा सूर्यस्य कामिनी । शतरूपा मनोर्भार्या शचीन्द्रस्य च गेहिनी ॥
तारा बृहस्पतेर्भार्या वसिष्ठस्याप्यरुन्धती । अहल्या गौतमस्त्री स्यादनसूयाऽत्रिकामिनी ॥
देवहूतिः कर्दमस्य प्रसूतिर्दक्षकामिनी । पितॄणां मानसी कन्या मेनका साऽम्बिकाप्रसूः ॥
लोपामुद्रा तथाऽऽहूतिः कुबेरस्य तु कामिनी । वरुणानी यमस्त्री च बलेर्विन्ध्यावलीति च ॥
कुन्ती च दमयन्ती च यशोदा देवकी सती । गान्धारी द्रौपदी शैब्या सावित्री सत्यवत्प्रिया
वृषभानुप्रिया साध्वी राधामाता कलावती । मन्दोदरी च कौसल्या सुभद्रा कैकयी तथा ॥
रेवती सत्यभामा च कालिन्दी लक्ष्मणा तथा । मित्रविन्दा नाग्नजिती तथा जाम्बवती परा
लक्ष्मणा रुक्मिणी सीता स्वयं लक्ष्मीः प्रकीर्तिता । कला योजनगन्धा च व्यासमाता महासती

---

१ क. °त्नी ईर्ष्या सा । २ क. व्यापिकाबलात् । ३ क. °द्रा या सिद्धयोगिनी । स° । ४ क. °न्ना यया योगेन रा° । ५ क. च । प्रभा च सा° ।

बाणपुत्री तथोषा च चित्रलेखा च तत्सखी । प्रभावती भानुमती तथा मायावती सती ॥
रेणुका च भृगोर्माता हलिमाता च रोहिणी । एकाऽनंशा च दुर्गा सा श्रीकृष्णभगिनी सती
बह्व्यः सन्ति कलाश्चैवं प्रकृतेरेव भारते । या याश्च ग्रामदेव्यस्ताः सर्वाश्च प्रकृतेः कलाः॥
कलांशांशसमुद्भूताः प्रतिविश्वेषु योषितः । योषितामपमानेन प्रकृतेश्च पराभवः ॥ १४३ ॥
ब्राह्मणी पूजिता येन पतिपुत्रवती सती । प्रकृतिः पूजिता तेन वस्त्रालंकारचन्दनैः॥ १४४॥
कुमारी चाष्टवर्षीया वस्त्रालंकारचन्दनैः । पूजिता येन विप्रस्य प्रकृतिस्तेन पूजिता ॥
सर्वाः प्रकृतिसंभूता उत्तमाधममध्यमाः । सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च पतिव्रताः ॥
मध्यमा राजसश्चांशास्ताश्च भोग्याः प्रकीर्तिताः । सुखसंभोगवेत्यश्च स्वकार्ये तत्पराः सदा॥
अधमास्तमसश्चांशा अज्ञातकुलसंभवाः । दुर्मुखाः कुलटा धूर्ताः स्वतन्त्राः कलहप्रियाः ॥
पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः। प्रकृतेस्तमसश्चांशाः पुंश्चल्यः परिकीर्तिताः
एवं निगदितं सर्वं प्रकृतेर्भेदपञ्चकम् । ताः सर्वाः पूजिताः पृथ्व्यां पुण्यक्षेत्रे च भारते ॥
पूजिता सुरथेनाऽऽदौ दुर्गा दुर्गार्तिनाशिनी । द्वितीया रामचन्द्रेण रावणस्य वधार्थिना ॥
तत्पश्चाज्जगतां माता त्रिषु लोकेषु पूजिता । जाताऽऽदौ दक्षपत्न्यां च निहन्तुं दैत्यदान-
वान् ॥ १५२ ॥
ततो देहं परित्यज्य यज्ञे भर्तुश्च निन्दया । जज्ञे हिमवतः पत्न्यां लेभे पशुपतिं पतिम् ॥
गणेशश्च स्वयं कृष्णः स्कन्दो विष्णुकलोद्भवः । बभूवतुस्तौ तनयौ पश्चात्तस्याश्च नारद
लक्ष्मीर्मङ्गलभूपेन प्रथमं परिपूजिता । त्रिषु लोकेषु तत्पश्चाद्देवतामुनिमानवैः ॥ १५५॥
सावित्री प्रथमं चापि भक्त्या वै परिपूजिता । तत्पश्चात्त्रिषु लोकेषु देवतामुनिमानवैः ॥
आदौ सरस्वती देवी ब्रह्मणा परिपूजिता । तत्पश्चात्त्रिषु लोकेषु देवतामुनिमानवैः १५७
प्रथमं पूजिता राधा गोलोके रासमण्डले । पौर्णमास्यां कार्तिकस्य कृष्णेन परमात्मना ॥
गोपिकाभिश्च गोपैश्च बालिकाभिश्च बालकैः । गवां गणैः सुरगणैस्तत्पश्चान्मायया हरेः
तदा ब्रह्मादिभिर्देवैर्मुनिभिर्मनुभिस्तथा । पुष्पधूपादिभिर्भक्त्या पूजिता वन्दिता सदा ॥
पृथिव्यां प्रथमं देवी सुयज्ञेन च पूजिता । शंकरेणोपदिष्टेन पुण्यक्षेत्रे च भारते॥ १६२॥
त्रिषु लोकेषु तत्पश्चादाज्ञया परमात्मनः । पुष्पधूपादिभिर्भक्त्या पूजिता मुनिभिः सुरैः
कला या या समुद्भूताः पूजितास्ताश्च भारते । पूजिता ग्रामदेव्यश्च ग्रामे च नगरे मुने ॥
एवं ते कथितं सर्वं प्रकृतेश्चरितं शुभम् । यथागमं लक्षणं च किं भूयः श्रोतुमिच्छसि ॥

---

१ क. 'वश्याश्च स्व' ।

इति श्रीब्र० म० प्रकृ० नारायणनारदसंवादे प्रकृतिस्वरूपतद्भेदवर्णनं
नाम प्रथमोऽध्यायः ॥ १ ॥

अथ द्वितीयोऽध्यायः ।

नारद उवाच—

समासेन श्रुतं सर्वं देवीनां चरितं विभो । विबोधनार्थं बोधस्य व्यासतो वक्तुमर्हसि ॥१॥
सृष्टेराद्या सृष्टिविधौ कथमाविर्बभूव ह । कथं वा पञ्चधा भूता वद वेदविदां वर ॥ २ ॥
भूता या याश्च कलया तया त्रिगुणया भवे । व्यासेन तासां चरितं श्रोतुमिच्छामि सांप्रतम्
तासां जन्मानुकथनं ध्यानं पूजाविधिं परम् । स्तोत्रं कवचमैश्वर्यं शौर्यं वर्णय मङ्गलम् ॥

नारायण उवाच—

नित्यात्मा च नभो नित्यं कालो नित्यो दिशो यथा विश्वेषां गोकुलं नित्यं नित्यो गोलोक
एव च ॥ ५ ॥
तदेकदेशो वैकुण्ठो लम्बभागः स नित्यकः । तथैव प्रकृतिर्नित्या ब्रह्मलीना सनातनी ॥
यथाऽग्नौ दाहिका चन्द्रे पद्मे शोभा प्रभा रवौ । शश्वद्युक्ता न भिन्ना सा तथा प्रकृतिरात्मनि
विना स्वर्णं स्वर्णकारः कुण्डलं कर्तुमक्षमः । विना मृदा कुलालो हि घटं कर्तुं नहीश्वरः॥८॥
न हि क्षमस्तथा ब्रह्मा सृष्टिं स्रष्टुं तया विना । सर्वशक्तिस्वरूपा सा तया स्याच्छक्तिमान्सदा
ऐश्वर्यवचनः शक् च तिः पराक्रमवाचकः । तत्स्वरूपा तयोर्दात्री या सा शक्तिः प्रकीर्तिता
समृद्धिबुद्धिसंपत्तियशसां वचनो भगः । तेन शक्तिर्भगवती भगरूपा च सा सदा ॥११॥
तया युक्तः सदाऽऽत्मा च भगवांस्तेन कथ्यते । स च स्वेच्छामयः कृष्णः साकारश्च निरा-
कृतिः ॥ १२ ॥
तेजोरूपं निराकारं ध्यायन्ते योगिनः सदा । वदन्ति ते परं ब्रह्म परमात्मानमीश्वरम् ॥१३॥
अदृश्यं सर्वद्रष्टारं सर्वज्ञं सर्वकारणम् । सर्वदं सर्वरूपान्तमरूपं सर्वपोषकम् ॥ १४ ॥
वैष्णवास्तं न मन्यन्ते तद्भक्ताः सूक्ष्मदर्शिनः । वदन्ति इति ते कस्य तेजस्तेजस्विनं विना ॥
तेजोमण्डलमध्यस्थं ब्रह्मतेजस्विनं परम् । स्वेच्छामयं सर्वरूपं सर्वकारणकारणम् ॥१६॥
अतीव सुन्दरं रूपं बिभ्रतं सुमनोहरम् । किशोरवयसं शान्तं सर्वकान्तं परात्परम्॥१७॥
नवीननीरदाभासं रासैकश्याममुन्दरम् । शरन्मध्याह्नपद्मौघशोभामोचकलोचनम् ॥
मुक्तासारमहास्वच्छदन्तपङ्क्तिमनोहरम् । मयूरपुच्छचूडं च मालतीमाल्यमण्डितम् ॥
सुनासं सस्मितं शश्वद्भक्तानुग्रहकारकम् । ज्वलदग्निविशुद्धैकपीतांशुकसुशोभितम् ॥२०॥

द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम् । सर्वाधारं च सर्वेशं सर्वशक्तियुतं विभुम् ॥२१॥
सर्वैश्वर्यप्रदं सर्वं स्वतन्त्रं सर्वमङ्गलम् । परिपूर्णतमं सिद्धं सिद्धिदं सिद्धिकारणम् ॥२२॥
ध्यायन्ते वैष्णवाः शश्वद्देवरूपं सनातनम् । जन्ममृत्युजराव्याधिशोकभीतिहरं परम् ॥
ब्रह्मणो वयसा यस्य निमेष उपचर्यते । स च ऽऽत्मा परमं ब्रह्म कृष्ण इत्यभिधीयते ॥
कृषिस्तद्भक्तिवचनो नश्च तद्दास्यवाचकः । भक्तिदास्यप्रदाता यः स कृष्णः परिकीर्तितः
कृषिश्च सर्ववचनो नकारो बीजवाचकः । सर्वबीजं परं ब्रह्म कृष्ण इत्यभिधीयते ॥२६॥
असंख्यब्रह्मणां पाते कालेऽतीतेऽपि नारद । [1]यद्गुणानां नास्ति नाशस्तत्समानो गुणेन च
स कृष्णः सर्वसृष्ट्यादौ सिसृक्षुस्त्वेक एव च । सृष्ट्युन्मुखस्तदंशेन कालेन प्रेरितः प्रभुः
स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह । स्त्रीरूपा वामभागांशाद्दक्षिणांशः पुमान्स्मृतः
तां ददर्श महाकामी कामाधारः सनातनः । अतीव कमनीयां च चारुचम्पकसंनिभाम् ॥
पूर्णेन्दुबिम्बसदृशनितम्बयुगलां पराम् । सुचारुकदलीस्तम्भसदृशश्रोणिसुन्दरीम् ॥३१॥
श्रीयुक्तश्रीफलाकारस्तनयुग्ममनोरमाम् । पुष्ट्या युक्तां सुललितां मध्यक्षीणां मनोहराम् ॥
अतीव सुन्दरीं शान्तां सस्मितां वक्रलोचनाम् । वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥
शश्वच्चक्षुश्चकोराभ्यां पिबन्तीं संततं मुदा । कृष्णस्य[3] सुन्दरमुखं चन्द्रकोटिविनिन्दकम् ॥
कस्तूरीबिन्दुभिः सार्धमधश्चन्दनबिन्दुना । समं सिन्दूरबिन्दुं च भालमध्ये च बिभ्रतीम् ॥
सुवक्रकबरीभारं मालतीमाल्यभूषितम् । [4]रत्नेन्द्रसारहारं च दधतीं कान्तकामुकीम् ॥३६॥
कोटिचन्द्र[5]प्रभाजुष्टपुष्टशोभासमन्विताम् । गमने राजहंसीं तां दृष्ट्वा खञ्जनगञ्जनीम् ॥
अतिमात्रं तया सार्धं रासेशो रासमण्डले । रासोल्लासेषु रहसि रासक्रीडां चकार ह ॥३८॥
नानाप्रकारशृङ्गारं शृङ्गारो मूर्तिमानिव । चकार सुखसंभोगो यावद्वै ब्रह्मणो वयः ॥३९॥
ततः स च परिश्रान्तस्तस्या योनौ जगत्पिता । चकार वीर्याधानं च नित्यानन्दः शुभक्षणे॥
गात्रतो योषितस्तस्याः सुरतान्ते च सुव्रत । निःससार श्रमजलं श्रान्तायास्तेजसा हरेः ॥
महासुरतखिन्नाया निःश्वासश्च बभूव ह । तदाधारश्रमजलं तत्सर्वं विश्वगोलकम् ॥ ४२ ॥
स च निःश्वासवायुश्च सर्वाधारो बभूव ह । निःश्वासवायुः सर्वेषां जीविनां च भवेषु च॥४३॥
बभूव मूर्तिमद्वायोर्वामाङ्गात्प्राणवल्लभा । तत्पत्नी सा च तत्पुत्राः प्राणाः पञ्च च जीविनाम्
[illegible]नः समानश्चैवोदानो व्यान एव च बभूवुरेव तत्पुत्रा अधःप्राणाश्च पञ्च च॥४५॥
[illegible]र्माधिदेवश्च बभूव वरुणो महान् । तद्वामाङ्गाच्च तत्पत्नी वरुणानी बभूव सा ॥ ४६ ॥

---

१ क यद्दंशानां ना° । २ क. °रीं रासां स° । ३ क. °स्य मुखचन्द्रं च च° । ४ क वज्रे॰न्द्रसा° । ५ क. °टिसूर्यप्र° । ६ क. द्वमा° ।

अथ सा कृष्णशक्तिश्च कृष्णाद्गर्भं दधार ह । शतमन्वन्तरं यावज्ज्वलन्ती ब्रह्मतेजसा ॥
कृष्णप्राणाधिदेवी सा कृष्णप्राणाधिकप्रिया । कृष्णस्य सङ्गिनी शश्वत्कृष्णवक्षःस्थलस्थिता
शतमन्वन्तरातीतकाले परमसुन्दरी । सुषावाण्डं सुवर्णाभं विश्वाधारालयं परम् ॥ ४९ ॥
दृष्ट्वा चाण्डं हि सा देवी हृदयेन विदूयता । उत्ससर्ज च कोपेन तदण्डं गोलके जले ॥
दृष्ट्वा कृष्णश्च तत्त्यागं हाहाकारं चकार ह । शशाप देवीं देवेशस्तत्क्षणं च यथोचितम् ॥
यतोऽपत्यं त्वया त्यक्तं कोपशीले सुनिष्ठुरे । भव त्वमनपत्याऽपि चाद्यप्रभृति निश्चितम् ॥
या यास्त्वदंशरूपाश्च भविष्यन्ति सुरस्त्रियः । अनपत्याश्च ताः सर्वास्त्वत्समा नित्ययौवनाः
एतस्मिन्नन्तरे देवीजिह्वाग्रात्सहसा ततः । आविर्बभूव कन्यैका शुक्लवर्णा मनोहरा ॥
पीतवस्त्रपरीधाना वीणापुस्तकधारिणी । रत्नभूषणभूषाढ्या सर्वशास्त्राधिदेवता ॥ ५५ ॥
अथ कालान्तरे सा च द्विधारूपा बभूव ह । वामार्धाङ्गा च कमला दक्षिणार्धा च राधिका ॥
एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव ह । दक्षिणार्धः स्याद्द्विभुजो वामार्धश्च चतुर्भुजः
उवाच वाणीं श्रीकृष्णस्त्वमस्य भव कामिनी । अत्रैव मानिनी राधा नैव भद्रं भविष्यति
एवं लक्ष्मीं संप्रददौ तुष्टो नारायणाय वै । संजगाम च वैकुण्ठं ताभ्यां सार्धं जगत्पतिः ॥
अनपत्ये च ते द्वे च यतो राधांशसंभवे । नारायणाङ्गादभवन्पार्षदाश्च चतुर्भुजाः ॥ ६० ॥
तेजसा वयसा रूपगुणाभ्यां च समा हरेः । बभूवुः कमलाङ्गाच्च दासीकोट्यश्च तत्समाः
अथ गोलोकनाथस्य लोम्नां विवरतो मुने । आसन्नसंख्यगोपाश्च वयसा तेजसा समाः ॥
रूपेण सुगुणेनैव वेषाद्या विक्रमेण च । प्राणतुल्याः प्रियाः सर्वे बभूवुः पार्षदा विभोः ॥
राधाङ्गलोमकूपेभ्यो बभूवुर्गोपकन्यकाः । राधातुल्याश्च सर्वास्ता नान्यतुल्याः प्रियंवदाः
रत्नभूषणभूषाढ्याः शश्वत्सुस्थिरयौवनाः । अनपत्याश्च ताः सर्वाः पुंसः शापेन संततम्
एतस्मिन्नन्तरे विप्र सहसा कृष्णदेहतः । आविर्बभूव सा दुर्गा विष्णुमाया सनातनी ॥
देवी नारायणीशाना सर्वशक्तिस्वरूपिणी । बुद्ध्यधिष्ठातृदेवी सा कृष्णस्य परमात्मनः
देवीनां बीजरूपा च मूलप्रकृतिरीश्वरी । परिपूर्णतमा तेजःस्वरूपा त्रिगुणात्मिका ॥ ६८ ॥
तप्तकाञ्चनवर्णाभा सूर्यकोटिसमप्रभा । ईषद्धास्यप्रसन्नास्या सहस्रभुजसंयुता ॥ ६९ ॥
नानाशस्त्रास्त्रनिकरं बिभ्रती सा त्रिलोचना । वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ७० ॥
यस्याश्चांशांशकलया बभूवुः सर्वयोषितः । सर्वविश्वस्थिता लोका मोहिता मायया यया ॥
सर्वैश्वर्यप्रदात्री च कामिनां गृहमेधिनाम् । कृष्णभक्तिप्रदात्री च वैष्णवानां च वैष्णवी ॥

---

१ क. °न ब्रह्माण्डगो° । २ क. °ने । भूताश्चाऽऽसं° । ३ क. स्ता राधादास्यः प्रि° ।

मुमुक्षूणां मोक्षदात्री सुखिनां सुखदायिनी । स्वर्गेषु स्वर्गलक्ष्मीः सा गृहलक्ष्मीर्गृहेष्वसौ ॥
तपस्विषु तपस्या च श्रीरूपा सा नृपेषु च । या चाग्नौ दाहिकारूपा प्रभारूपा च भास्करे ॥
शोभास्वरूपा चन्द्रे च पद्मेषु च सुशोभना । सर्वशक्तिस्वरूपा या श्रीकृष्णे परमात्मनि ॥
यया च शक्तिमानात्मा यया वै शक्तिमज्जगत् । यया विना जगत्सर्वं जीवन्मृतमिव स्थितम् ॥
या च संसारवृक्षस्य बीजरूपा सनातनी । स्थितिरूपा बुद्धिरूपा फलरूपा च नारद ॥
क्षुत्पिपासा दया श्रद्धा निद्रा तन्द्रा क्षमा धृतिः । शान्तिर्लज्जा तुष्टिपुष्टिभ्रान्तिकान्त्यादिरूपिणी ॥ ७८ ॥
सा च संस्तूय सर्वेशं तत्पुरः समुपस्थिता । रत्नसिंहासनं तस्यै प्रददौ राधिकेश्वरः ॥
एतस्मिन्नन्तरे तत्र सस्त्रीकश्च चतुर्मुखः । पद्मनाभनाभिपद्मान्निःससार पुमान्मुने ॥ ८० ॥
कमण्डलुधरः श्रीमांस्तपस्वी ज्ञानिनां वरः । चतुर्मुखस्तं तुष्टाव प्रज्वलन्ब्रह्मतेजसा ॥ ८१ ॥
सुदती सुन्दरी श्रेष्ठा शतचन्द्रसमप्रभा । वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ॥ ८२ ॥
रत्नसिंहासने रम्ये स्तुत्वा वै सर्वकारणम् । उवास स्वामिना सार्धं कृष्णस्य पुरतो मुदा ॥
एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव सः । वामार्धाङ्गो महादेवो दक्षिणो गोपिकापतिः ॥
शुद्धस्फटिकसंकाशः शतकोटिरविप्रभः । त्रिशूलपट्टिशधरो व्याघ्रचर्मधरो हरः ॥ ८५ ॥
तप्तकाञ्चनवर्णाभजटाभारधरः परः । भस्मभूषणगात्रश्च सस्मितश्चन्द्रशेखरः ॥ ८६ ॥
दिगम्बरो नीलकण्ठः सर्पभूषणभूषितः । बिभ्रद्दक्षिणहस्तेन रत्नमालां सुसंस्कृताम् ॥
प्रजपन्पञ्चवक्त्रेण ब्रह्मज्योतिः सनातनम् । सत्यस्वरूपं श्रीकृष्णं परमात्मानमीश्वरम् ॥
कारणं कारणानां च सर्वमङ्गलमङ्गलम् । जन्ममृत्युजराव्याधिशोकभीतिहरं परम् ॥
संस्तूय मृत्योर्मृत्युं तं जातो मृत्युंजयाभिधः । रत्नसिंहासने रम्ये समुवास हरेः पुरः ॥

इति श्री० म० प्र० नारायणनारदसंवादे देवदेव्युत्पत्तिर्नाम द्वितीयोऽध्याय ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

---

श्रीनारायण उवाच—

अथाण्डं तज्जलेऽतिष्ठद्यावद्वै ब्रह्मणो वयः । ततः स्वकाले सहसा द्विधारूपो बभूव सः ॥
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः । क्षणं रोरूयमाणश्च स शिशुः पीडितः क्षुधा ॥
पितृमातृपरित्यक्तो जलमध्ये निराश्रयः । नैकब्रह्माण्डनाथो यो ददर्शोर्ध्वमनाथवत् ॥ ३ ॥

---

१ क. °पा वलरू° ।

स्थूलात्स्थूलतमः सोऽपि नाम्ना देवो महाविराट् । परमाणुर्यथा सूक्ष्मात्परः स्थूलात्तथाऽप्यसौ
तेजसां षोडशांशोऽयं कृष्णस्य परमात्मनः । आधारोऽसंख्यविश्वानां महाविष्णुः सुरेश्वरः
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च । अद्यापि तेषां संख्यां च कृष्णो वक्तुं न हि क्षमः
यथाऽस्ति संख्या रजसां विश्वानां न कदाचन । ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते
प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः । पातालाद्ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम् ॥
तत ऊर्ध्वे च वैकुण्ठो ब्रह्माण्डाद्बहिरेव सः । स च सत्यस्वरूपश्च शश्वन्नारायणो यथा ॥
तदूर्ध्वे चैव गोलोकः पञ्चाशत्कोटियोजनात् । नित्यः सत्यस्वरूपश्च यथा कृष्णस्तथाऽप्ययम् ॥ १० ॥

सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता । एकोनपञ्चाशदुपद्वीपासंख्यवनान्विता ॥ ११ ॥
ऊर्ध्वं सप्त भुवर्लोका ब्रह्मलोकसमन्विताः । पातालानि च सप्ताधश्चैवं ब्रह्माण्डमेव च ॥
ऊर्ध्वं धराया भूर्लोको भुवर्लोकस्ततः परः । स्वर्लोकस्तु ततः पश्चान्महर्लोकस्ततो जनः
ततः परस्तपोलोकः सत्यलोकस्ततः परः । ततः परो ब्रह्मलोकस्तप्तकाञ्चननिर्मितः ॥
एवं सर्वं कृत्रिमं तद्बाह्याभ्यन्तर एव च । तद्विनाशे विनाशश्च सर्वेषामेव नारद ॥१९॥
जलबुद्बुदवत्सर्वं विश्वसंघमनित्यकम् । नित्यौ गोलोकवैकुण्ठौ सत्यौ शश्वदकृत्रिमौ ॥
लोमकूपे च ब्रह्माण्डं प्रत्येकं तस्य निश्चितम् । एषां संख्यां न जानाति कृष्णोऽन्यस्यापि का कथा ॥ १७ ॥

प्रत्येकं प्रतिब्रह्माण्डे ब्रह्मविष्णुशिवादयः । तिस्रः कोट्यः सुराणां च संख्या सर्वत्र पुत्रक
दिगीशाश्चैव दिक्पाला नक्षत्राणि ग्रहादयः । भुवि वर्णाश्च चत्वारोऽधो नागाश्च चराचराः ॥
अथ कालेन स विराडूर्ध्वं दृष्ट्वा पुनः पुनः । डिम्भान्तरं च शून्यं च न द्वितीयं कथंचन ॥
चिन्तामवाप क्षुद्युक्तो रुरोद च पुनः पुनः । ज्ञानं प्राप्य तदा दध्यौ कृष्णं परमपूरुषम् ।
ततो ददर्श तत्रैव ब्रह्मज्योतिः सनातनम् । नवीननीरदश्यामं द्विभुजं पीतवाससम् ॥२२॥
सस्मितं मुरलीहस्तं भक्तानुग्रहकारकम् । जहास बालकस्तुष्टो दृष्ट्वा जनकमीश्वरम् ॥
वरं तस्मै ददौ तुष्टो वरेशः समयोचितम् । मत्समो ज्ञानयुक्तश्च क्षुत्पिपासाविवर्जितः ॥
ब्रह्माण्डासंख्यनिलयो भव वत्स लयावधि । निष्कामो निर्भयश्चैव सर्वेषां वरदो वरः ॥
रोगमृत्युजराशोकपीडादिपरिवर्जितः ॥ २१ ॥

इत्युक्त्वा तद्दक्षकर्णे महामन्त्रं षडक्षरम् । त्रिः कृत्वा प्रजजापाऽऽदौ वेदाङ्गमपरं वरम् ॥
प्रणवादिचतुर्थ्यन्तं कृष्ण इत्यक्षरद्वयम् । वह्निजायान्तमिष्टं च सर्वविघ्नहरं परम् ॥

---

१ क. °णुश्च प्राकृतः । २ क. °पमयी पृ° । ३ क. नाशश्च नाशाय स° । ४ क. °प लुष्कोष्ठो द° ।

मन्त्रं दत्त्वा तदाऽऽहारं कल्पयामास वै प्रभुः । श्रूयतां तद्ब्रह्मपुत्र निबोध कथयामि ते
प्रतिविश्वेषु नैवेद्यं दद्याद्वै वैष्णवो जनः । षोडशांशं विषयिणो विष्णोः पञ्चदशाऽस्य वै॥
निर्गुणस्याऽऽत्मनश्चैव परिपूर्णतमस्य च । नैवेद्येन च कृष्णस्य न हि किंचित्प्रयोजनम् ॥
यद्ददाति च नैवेद्यं यस्मै देवाय यो जनः । स च खादति तत्सर्वं लक्ष्मीदृष्ट्या पुनर्भवेत् ॥
तं च मन्त्रं वरं दत्त्वा तमुवाच पुनर्विभुः । वर अन्यः क इष्टस्ते तं मे ब्रूहि ददामि ते ॥
कृष्णस्य वचनं श्रुत्वा तमुवाच महाविराट् । अदन्तो बालकस्तत्र वचनं समयोचितम् ॥

महाविराडुवाच—

वरं मे त्वत्पदाम्भोजे भक्तिर्भवतु निश्चला । संततं यावदायुर्मे क्षणं वा सुचिरं च वा ॥
त्वद्भक्तियुक्तो यो लोके जीवन्मुक्तः स संततम् । त्वद्भक्तिहीनो मूर्खश्च जीवन्नपि मृतो हि सः
किं तज्जपेन तपसा यज्ञेन यजनेन च । व्रतेनैवोपवासेन पुण्यतीर्थनिषेवया ॥ ३६ ॥
कृष्णभक्तिविहीनस्य पुंसः स्याज्जीवनं वृथा । येनाऽऽत्मना जीवितश्च तमेव नहि मन्यते ॥
यावदात्मा शरीरेऽस्ति तावत्स्याच्छक्तिसंयुतः । पश्चाद्यान्ति गते तस्मिन्न स्वतन्त्राश्च शक्तयः ॥ ३८ ॥
स च त्वं च महाभाग सर्वात्मा प्रकृतेः परः । स्वेच्छामयश्च सर्वाद्यो ब्रह्मज्योतिः सनातनः॥
इत्युक्त्वा बालकस्तत्र विरराम च नारद । उवाच कृष्णः प्रत्युक्तिं मधुरां श्रुतिसुन्दरीम् ॥

श्रीकृष्ण उवाच—

सुचिरं सुस्थिरं तिष्ठ यथाऽहं त्वं तथा भव । असंख्यब्रह्मणां पाते पातस्ते न भविष्यति॥
अंशेन प्रतिविश्वण्डे त्वं च पुत्र विराड् भव । त्वन्नाभिपद्मे ब्रह्मा च विश्वस्रष्टा भविष्यति॥
ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव तु । शिवांशेन भविष्यन्ति सृष्टिसंहरणाय वै ॥४३॥
कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः । पाता विष्णुश्च विषयी रुद्रांशेन भविष्यति ॥
मद्भक्तियुक्तः सततं भविष्यसि वरेण मे । ध्यानेन कमनीयं मां नित्यं द्रक्ष्यसि निश्चितम्
मातरं कमनीयां च मम वक्षःस्थलस्थिताम् । यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत
गत्वा च नाकं ब्रह्माणं शंकरं स उवाच ह । स्रष्टारं स्रष्टुमीशं च संहर्तारं च तत्क्षणम् ॥

श्रीकृष्ण उवाच—

सृष्टिं स्रष्टुं गच्छ वत्स नाभिपद्मोद्भवो भव । महाविराड्लोमकूपे क्षुद्रस्य च विधेः शृणु ॥
गच्छ वत्स महादेव ब्रह्मभालोद्भवो भव । अंशेन च महाभाग स्वयं च सुचिरं तपः ॥४९॥

१ क. 'न पूव'। २ क. पुण्येन तीर्थसे' ३ क. लोके ति'। ४ क. 'त्वा स्वलोकं'। ५ क. 'मीशश्च सं'।

इत्युक्त्वा जगतां नाथो विरराम विधेः सुत । जगाम नत्वा तं ब्रह्मा शिवश्च शिवदायकः
महाविराड्लोमकूपे ब्रह्माण्डे गोलके जले । स बभूव विराट् क्षुद्रो विराडंशेन सांप्रतम्
श्यामो युवा पीतवासाः शयानो जलतल्पके । ईषद्धासः प्रसन्नास्यो विश्वरूपी जनार्दनः
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः । संभूय पद्मदण्डं च बभ्राम युगलक्षकम् ॥९३॥
नान्तं जगाम दण्डस्य पद्मनाभस्य पद्मजः । नाभिजस्य च पद्मस्य चिन्तामाप पितामहः
स्वस्थानं पुनरागत्य दध्यौ कृष्णपदाम्बुजम् । ततो ददर्श क्षुद्रं तं ध्यानेन दिव्यचक्षुषा ॥
शयानं जलतल्पे च ब्रह्माण्डगोलकावृते । यल्लोमकूपे ब्रह्माण्डं तं च तत्परमीश्वरम् ॥
श्रीकृष्णं चापि गोलोकं गोपगोपीसमन्वितम् । तं संस्तूय वरं प्राप ततः सृष्टिं चकार सः ॥
बभूवुर्ब्रह्मणः पुत्रा मानसाः सनकादयः । ततो रुद्राः कपालाच्च शिवस्यैकादश स्मृताः ॥
बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः । चतुर्भुजश्च भगवाञ्श्वेतद्वीपनिवासकृत् ॥
क्षुद्रस्य नाभिपद्मे च ब्रह्मा विश्वं ससर्ज सः । स्वर्गं मृत्युं च पातालं त्रिलोकं सचराचरम् ॥
एवं सर्वं लोमकूपे विश्वं प्रत्येकमेव च । प्रतिविश्वं क्षुद्रविराड्ब्रह्मविष्णुशिवादयः ॥
इत्येवं कथितं वत्स कृष्णसंकीर्तनं शुभम् । सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदनारायणसंवादे विश्वब्रह्माण्डवर्णनं
नाम तृतीयोऽध्यायः ॥ ३ ॥

====

## अथ चतुर्थोऽध्यायः ॥ ४ ॥[1]

---

नारद उवाच—

श्रुतं सर्वमपूर्वं च त्वत्प्रसादात्सुधोपमम् । अधुना प्रकृतीनां च व्यासं वर्णय भोः प्रभो ॥
कस्याः पूजा कृता केन कथं मर्त्ये प्रकाशिता । केन वा पूजिता का वा केन का वा
स्तुता मुने ॥ २ ॥
कवचं स्तोत्रकं ध्यानं प्रभावं चरितं शुभम् । काभिः काभ्यो वरो दत्तस्तन्मे व्याख्यातुमर्हसि

नारायण उवाच—

गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती । सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता
आसां पूजा प्रभावश्च प्रसिद्धः परमाद्भुतः । सुधोपमं च चरितं सर्वमङ्गलकारणम् ॥९॥
प्रकृत्यंशाः कलायाश्च तासां च चरितं शुभम् । सर्वं वक्ष्यामि ते ब्रह्मन्सावधानं निशामय ॥

---

१ ख. आसीत्पूज्या प्रसिद्धा च प्रभावः प॰।

वाणी वसुंधरा गङ्गा षष्ठी मङ्गलचण्डिका । तुलसी मानसी निद्रा स्वधा स्वाहा च दक्षिणा ॥
तेजसा मत्समास्ताश्च रूपेण च गुणेन च । ८ ॥
संक्षेपमासां चरितं पुण्यदं श्रुतिसुन्दरम् । जीवकर्मविपाकं च तच्च वक्ष्यामि सुन्दरम् ॥
दुर्गायाश्चैव राधाया विस्तीर्णं चरितं महत् तच्च पश्चात्प्रवक्ष्यामि संक्षेपात्क्रमतः शृणु ॥
आदौ सरस्वतीपूजा श्रीकृष्णेन विनिर्मिता । यत्प्रसादान्मुनिश्रेष्ठ मूर्खो भवति पण्डितः
आविर्भूता यदा देवी वक्त्रतः कृष्णयोषितः । इयेष कृष्णं कामेन कामुकी कामरूपिणी ॥
स च विज्ञाय तद्भावं सर्वज्ञः सर्वमातरम् । तामुवाच हितं सत्यं परिणामसुखावहम् ॥

श्रीकृष्ण उवाच—

भज नारायणं साध्वि मदंशं च चतुर्भुजम् । युवानं सुन्दरं सर्वगुणयुक्तं च मत्समम् ॥
कामदं कामिनीनां च तासां तं कामपूरकम् । कोटिकन्दर्पलावण्यं लीलान्यक्कृतमन्मथम् ।
कान्ते कान्तं च मां कृत्वा यदि स्थातुमिहेच्छसि । त्वत्तो बलवती राधा न ते भद्रं भविष्यति
यो यस्माद्बलवान्वाणि ततोऽन्यं रक्षितुं क्षमः । कथं परान्साधयति यदि स्वयमनीश्वरः ॥
सर्वेशः सर्वशास्ताऽहं राधां राधितुमक्षमः । तेजसा मत्समा सा च रूपेण च गुणेन च ॥
प्राणाधिष्ठातृदेवी सा प्राणांस्त्यक्तुं च कः क्षमः । प्राणतोऽपि प्रियः कुत्र केषां वाऽस्ति च कश्चन ॥ १९ ॥
त्वं भद्रे गच्छ वैकुण्ठं तव भद्रं भविष्यति । पतिं तमीश्वरं कृत्वा मोदस्व सुचिरं सुखम् ॥
विवर्जिता लोभमोहकामक्रोधेन हिंसया । तेजसा त्वत्समा लक्ष्मी रूपेण च गुणेन च ॥
तया सार्धं तव प्रीत्या सुखं कालः प्रयास्यति । गौरवं चापि तत्तुल्यं करिष्यति पतिर्द्वयोः ॥
प्रतिविश्वेषु ते पूजां महतीं ते मुदाऽन्विताः । माघस्य शुक्लपञ्चम्यां विद्यारम्भेषु सुन्दरि ॥
मानवा मनवो देवा मुनीन्द्राश्च मुमुक्षवः । सन्तश्च योगिनः सिद्धा नागगन्धर्वकिंनराः ॥
मद्वरेण करिष्यन्ति कल्पे कल्पे यथाविधि । भक्तियुक्ताश्च दत्त्वा वै चोपचारांश्च षोडश ॥
काण्वशाखोक्तविधिना ध्यानेन स्तवनेन च । जितेन्द्रियाः संयताश्च पुस्तकेषु घटेऽपि च ॥
कृत्वा सुवर्णगुटिकां गन्धचन्दनचर्चिताम् । कवचं ते ग्रहीष्यन्ति कण्ठे वा दक्षिणे भुजे ॥
पठिष्यन्ति च विद्वांसः पूजाकाले च पूजिते । इत्युक्त्वा पूजयामास तां देवीं सर्वपूजितः
ततस्तत्पूजनं चक्रुर्ब्रह्मविष्णुमहेश्वराः । अनन्तश्चापि धर्मश्च मुनीन्द्राः सनकादयः ॥
सर्वे देवाश्च मनवो नृपा वा मानवादयः । बभूव पूजिता नित्या सर्वलोकैः सरस्वती ॥

नारद उवाच—

पूजाविधानं स्तवनं ध्यानं कवचमीप्सितम् । पूजोपयुक्तं नैवेद्यं पुष्पं वा चन्दनादिकम् ॥

---

१ क. भविष्य० ।

वद वेदविदां श्रेष्ठ श्रोतुं कौतूहलं मम । वर्धते सांप्रतं शश्वत्किमिदं श्रुतिसुन्दरम् ॥३२॥

नारायण उवाच—

श्रृणु नारद वक्ष्यामि काण्वशाखोक्तपद्धतिम् । जगन्मातुः सरस्वत्याः पूजाविधिसमन्विताम् ॥ ३३ ॥

माघस्य शुक्लपञ्चम्यां विद्यारम्भदिनेऽपि च पूर्वेऽह्नि संयमं कृत्वा तत्र स्यात्संयतः शुचिः

स्नात्वा नित्यक्रियां कृत्वा घटं संस्थाप्य भक्तितः, संपूज्य देवषट्कं च नैवेद्यादिभिरेव च

गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम् । संपूज्य संयतोऽग्रे च ततोऽभीष्टं प्रपूजयेत्

ध्यानेन वक्ष्यमाणेन ध्यात्वा बाह्यघटे बुधः । ध्यात्वा पुनः षोडशोपचारैस्तां पूजयेद्व्रती ॥

पूजोपयुक्तं नैवेद्यं यद्यद्वेदे निरूपितम् । वक्ष्यामि सांप्रतं किंचिद्यथाधीतं यथागमम् ॥३८॥

नवनीतं दधि क्षीरं लाजांश्च तिललड्डुकान् । इक्षुमिक्षुरसं शुक्लवर्णं पक्वगुडं मधु ॥३९॥

स्वस्तिकं शर्करां शुक्लधान्यस्याक्षतमक्षतम् । अस्विन्नशुक्लधान्यस्य पृथुकं शुक्लमोदकम् ॥

घृतसैन्धवसंस्कारैर्हविष्यैर्व्यञ्जनैस्तथा । यवगोधूमचूर्णानां पिष्टकं घृतसंस्कृतम् ॥ ४१ ॥

पिष्टकं स्वस्तिकस्यापि पक्वरम्भाफलस्य च । परमान्नं च सघृतं मिष्टान्नं च सुधोपमम् ॥४२॥

नारिकेलं तदुदकं केशरं मूलमार्द्रकम् । पक्वरम्भाफलं चारु श्रीफलं बदरीफलम् ॥४३॥

कालदेशोद्भवं पक्वफलं शुक्लं सुसंस्कृतम् । सुगन्धि शुक्लपुष्पं च गन्धाढ्यं शुक्लचन्दनम् ॥

नवीनं शुक्लवस्त्रं च शङ्खं च सुमनोहरम् । माल्यं च शुक्लपुष्पाणां मुक्ताहीरादिभूषणम् ॥

यद्दृष्टं च श्रुतौ ध्यानं प्रशस्तं श्रुतिसुन्दरम् तन्निबोध महाभाग भ्रमभञ्जनकारणम्॥४५॥

सरस्वतीं शुक्लवर्णां सस्मितां सुमनोहराम् । कोटिचन्द्रप्रभाजुष्टपुष्टश्रीयुक्तविग्रहाम् ॥४६॥

वह्निशुद्धांशुकाधानां सस्मितां सुमनोहराम् । रत्नसारेन्द्रखचितवरभूषणभूषिताम् ॥

सुपूजितां सुरगणैर्ब्रह्मविष्णुशिवादिभिः । वन्दे भक्त्या वन्दितां तां मुनीन्द्रमनुमानवैः ॥

एवं ध्यात्वा च मूलेन सर्वं दत्त्वा विचक्षणः । संस्तूय कवचं धृत्वा प्रणमेद्दण्डवद्भुवि ॥

येषां स्यादिष्टदेवीयं तेषां नित्यं शुभं मुने । विद्यारम्भे च सर्वेषां वर्षान्ते पञ्चमीदिने ॥

सर्वोपयुक्तमूलं च वैदिकाष्टाक्षरः परः । येषां यदुपदेशो वा तेषां तन्मूलमेव च ॥

सरस्वतीचतुर्थ्यन्तो वह्निजायान्त एव च ॥ ५१ ॥

श्रीं ह्रीं स्वरस्वत्यै स्वाहा । लक्ष्मीमायादिकं चैव मन्त्रोऽयं कल्पपादपः ॥ ५२ ॥

पुरा नारायणश्चेमं वाल्मिकाय कृपानिधिः । प्रददौ जाह्नवीतीरे पुण्यक्षेत्रे च भारते ॥

भृगुर्ददौ च शुक्राय पुष्करे सूर्यपर्वणि । चन्द्रपर्वणि मारीचो ददौ वाक्पतये मुदा॥५४॥

१ क. 'व्य संयतोऽभीष्टं तै' । २ क. सूर्यं' ।

भृगवे च ददौ तुष्टो ब्रह्मा बदरिकाश्रमे । आस्तीकाय जरत्कारुर्ददौ क्षीरोदसंनिधौ ॥
विभाण्डको ददौ मेरौ ऋष्यशृङ्गाय धीमते ॥ ११ ॥
शिवः कणादमुनये गौतमाय ददौ मुने । सूर्यश्च याज्ञवल्क्याय तथा कात्यायनाय च ॥
शेषः पाणिनये चैव भरद्वाजाय धीमते । ददौ शाकटायनाय सुतले बलिसंसदि ॥१७॥
चतुर्लक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् । यदि स्यात्सिद्धमन्त्रो हि बृहस्पतिसमो भवेत् ॥
कवचं शृणु विप्रेन्द्र यद्दत्तं विधिना पुरा । विश्वश्रेष्ठं विश्वजयं भृगवे गन्धमादने ॥१९॥

भृगुरुवाच—

ब्रह्मन्ब्रह्मविदां श्रेष्ठ ब्रह्मज्ञानविशारद । सर्वज्ञ सर्वजनक सर्वपूजकपूजित ॥ ६० ॥
सरस्वत्याश्च कवचं ब्रूहि विश्वजयं प्रभो । अयातयाममन्त्राणां समूहो यत्र संयुतः ॥६१॥

ब्रह्मोवाच—

शृणु वत्स प्रवक्ष्यामि कवचं सर्वकामदम् । श्रुतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम् ॥
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने । रासेश्वरेण विभुना रासे वै रासमण्डले ॥६३॥
अतीव गोपनीयं च कल्पवृक्षसमं परम् । अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम् ॥६४॥
यद्धृत्वा पठनाद्ब्रह्मन्बुद्धिमांश्च बृहस्पतिः । यद्धृत्वा भगवाञ्छुक्रः सर्वदैत्येषु पूजितः ॥
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिको मुनिः । स्वायंभुवो मनुश्चैव यद्धृत्वा सर्वपूजितः ॥
कणादो गौतमः कण्वः पाणिनिः शाकटायनः । ग्रन्थं चकार यद्धृत्वा दक्षः कात्यायनः स्वयम्
धृत्वा वेदविभागं च पुराणान्यखिलानि च । चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम् ॥
शातातपश्च संवर्तो वशिष्ठश्च पराशरः । यद्धृत्वा पठनाद्ग्रन्थं याज्ञवल्क्यश्चकार सः ॥
ऋष्यशृङ्गो भरद्वाजश्चाऽऽस्तीको देवलस्तथा । जैगीषव्योऽथ जाबालिर्यद्धृत्वा सर्वपूजितः
कवचस्यास्य विप्रेन्द्र ऋषिरेष प्रजापतिः । स्वयं बृहस्पतिश्छन्दो देवो रासेश्वरः प्रभुः ॥
सर्वतत्त्वपरिज्ञाने सर्वार्थेऽपि च साधने । कवितासु च सर्वासु विनियोगः प्रकीर्तितः ॥
ॐ ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वतः । श्रीं वाग्देवतायै स्वाहा भालं मे सर्वदाऽवतु
ॐ सरस्वत्यै स्वाहेति श्रोत्रं पातु निरन्तरम् । ॐ श्रीं ह्रीं भारत्यै स्वाहा नेत्रयुग्मं सदाऽवतु
ॐ ह्रीं वाग्वादिन्यै स्वाहा नासां मे सर्वतोऽवतु । ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा श्रोत्रं सदाऽवतु
ॐ श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपङ्क्तीः सदाऽवतु । ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदाऽवतु ॥ ७६ ॥

---

१ क. सर्वेश सर्वपू°. २ क. यद्धृत्वाऽभ°. ३ क. °हा चोष्ठे स°.

ॐ श्रीं ह्रीं पातु मे ग्रीवां स्कन्धं मे श्रीं सदाऽवतु। श्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदाऽवतु
ॐ ह्रीं विद्यास्वरूपायै स्वाहा मे पातु नाभिकाम्। ॐ ह्रीं क्लीं वाण्यै स्वाहेति मम पृष्ठं सदाऽवतु
ॐ सर्ववर्णात्मिकायै पादयुग्मं सदाऽवतु। ॐ वागधिष्ठातृदेव्यै सर्वाङ्गं मे सदाऽवतु ॥७९॥
ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदाऽवतु। ॐ ह्रीं जिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु
ॐ ऐं श्रीं ह्रीं सरस्वत्यै बुधजनन्यै स्वाहा। सततं मन्त्रराजोऽयं दक्षिणेमां सदाऽवतु ८१॥
ॐ ह्रीं श्रीं त्र्यक्षरो मन्त्रो नैर्ऋत्यां मे सदाऽवतु। कविजिह्वाग्रवासिन्यै स्वाहा मां वारुणेऽवतु ॥ ८२ ॥
ॐ सदम्बिकायै स्वाहा वायव्ये मां सदाऽवतु। ॐ गद्यपद्यवासिन्यै स्वाहा मामुत्तरेऽवतु
ॐ सर्वशास्त्रवासिन्यै स्वाहैशान्यां सदाऽवतु। ॐ ह्रीं सर्वपूजितायै स्वाहा चोर्ध्वं सदाऽवतु
ऐं ह्रीं पुस्तकवासिन्यै स्वाहाऽधो मां सदाऽवतु। ॐ ग्रन्थबीजरूपायै स्वाहा मां सर्वतोऽवतु
इति ते कथितं विप्र सर्वमन्त्रौघविग्रहम्। इदं विश्वजयं नाम कवचं ब्रह्मरूपकम् ॥८६॥
पुरा श्रुतं धर्मवक्त्रात्पर्वते गन्धमादने। तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः। प्रणम्य दण्डवद्भूमौ कवचं धारयेत्सुधीः ॥८८॥
पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत्। यदि स्यात्सिद्धकवचो बृहस्पतिसमो भवेत् ॥८९॥
महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत्। शक्नोति सर्वं जेतुं स कवचस्य प्रभावतः
इदं ते काण्वशाखोक्तं कथितं कवचं मुने। स्तोत्रं पूजाविधानं च ध्यानं वै वन्दनं तथा ॥

इति श्रीब्रह्म० महा० प्रकृ० नारदनारायणसंवादे सरस्वतीकवचं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ॥ ५ ॥

---

**नारायण उवाच—**

वाग्देवतायाः स्तवनं श्रूयतां सर्वकामदम्। महामुनिर्याज्ञवल्क्यो येन तुष्टाव तां पुरा ॥१॥
गुरुशापाच्च स मुनिर्हतविद्यो बभूव ह। तदा जगाम दुःखार्तो रविस्थानं च पुण्यदम् ॥
संप्राप्य तपसा सूर्यं कोणार्के दृष्टिगोचरे। तुष्टाव सूर्यं शोकेन रुरोद च पुनः पुनः ॥३॥
सूर्यस्तं पाठयामास वेदवेदाङ्गमीश्वरः। उवाच स्तुहि वाग्देवीं भक्त्या च स्मृतिहेतवे ॥
तमित्युक्त्वा दीननाथो ह्यन्तर्धानं जगाम सः। मुनिः स्नात्वा च तुष्टाव भक्तिनम्रात्मकंधरः ॥ ५

---

१ क. प्रदानतः।

याज्ञवल्क्य उवाच—

कृपां कुरु जगन्मातर्मामेवं हततेजसम् । गुरुशापात्स्मृतिभ्रष्टं विद्याहीनं च दुःखितम् ॥
ज्ञानं देहि स्मृतिं देहि विद्यां विद्याधिदेवते । प्रतिष्ठां कवितां देहि शक्तिं शिष्यप्रबोधिकाम्
ग्रन्थनिर्मितिशक्तिं च सच्छिष्यं सुप्रतिष्ठितम् । प्रतिभां सत्सभायां च विचारक्षमतां शुभाम्
लुप्तां सर्वां दैववशान्नवं कुरु पुनः पुनः । यथाऽङ्कुरं जनयति भगवान्योगमायया ॥९॥
ब्रह्मस्वरूपा परमा ज्योतीरूपा सनातनी । सर्वविद्याधिदेवी या तस्यै वाण्यै नमो नमः ॥
यया विना जगत्सर्वं शश्वज्जीवन्मृतं सदा । ज्ञानाधिदेवी या तस्यै सरस्वत्यै नमो नमः ॥
यया विना जगत्सर्वं मूकमुन्मत्तवत्सदा । वागधिष्ठातृदेवी या तस्यै वाण्यै नमो नमः ॥
हिमचन्दनकुन्देन्दुकुमुदाम्भोजसंनिभा । वर्णाधिदेवी या तस्यै चाक्षरायै नमो नमः ॥१३॥
विसर्गबिन्दुमात्राणां यदधिष्ठानमेव च । इत्थं त्वं गीयसे सद्भिर्भारत्यै ते नमो नमः ॥
यया विनाऽत्र संख्याकृत्संख्यां कर्तुं न शक्नुते । कालसंख्यास्वरूपा या तस्यै देव्यै नमो नमः
व्याख्यास्वरूपा या देवी व्याख्याधिष्ठातृदेवता । भ्रमसिद्धान्तरूपा या तस्यै देव्यै नमो नमः
स्मृतिशक्तिर्ज्ञानशक्तिर्बुद्धिशक्तिस्वरूपिणी । प्रतिभा कल्पनाशक्तिर्या च तस्यै नमो नमः
सनत्कुमारो ब्रह्माणं ज्ञानं पप्रच्छ यत्र वै । बभूव जडवत्सोऽपि सिद्धान्तं कर्तुमक्षमः ॥
तदाऽऽजगाम भगवानात्मा श्रीकृष्ण ईश्वरः । उवाच स च तं स्तौहि वाणीमिति प्रजापते ॥
स च तुष्टाव तां ब्रह्मा चाऽऽज्ञया परमात्मनः । चकार तत्प्रसादेन तदा सिद्धान्तमुत्तमम्
यदाऽप्यनन्तं पप्रच्छ ज्ञानमेकं वसुंधरा । बभूव मूकवत्सोऽपि सिद्धान्तं कर्तुमक्षमः ॥
तदा त्वां च स तुष्टाव संत्रस्तः कश्यपाज्ञया । ततश्चकार सिद्धान्तं निर्मलं भ्रमभञ्जनम्
व्यासः पुराणसूत्रं समपृच्छद्वाल्मिकिं यदा । मौनीभूतः स सस्मार त्वामेव जगदम्बिकाम्
तदा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः । स प्राप निर्मलं ज्ञानं प्रमादध्वंसकारणम् ॥
पुराणसूत्रं श्रुत्वा स व्यासः कृष्णकलोद्भवः । त्वां सिषेवे च दध्यौ च शतवर्षं च पुष्करे
तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह । तदा वेदविभागं च पुराणानि चकार ह ॥
यदा महेन्द्रे पप्रच्छ तत्त्वज्ञानं शिवा शिवम् । क्षणं त्वामेव संचिन्त्य तस्यै ज्ञानं ददौ विभुः ॥
पप्रच्छ शब्दशास्त्रं च महेन्द्रश्च बृहस्पतिम् । दिव्यं वर्षसहस्रं च स त्वां दध्यौ च पुष्करे ॥
तदा त्वत्तो वरं प्राप्य दिव्यं वर्षसहस्रकम् । उवाच शब्दशास्त्रं च तदर्थं च सुरेश्वरम् ॥
अध्यापिताश्च यैः शिष्या यैरधीतं मुनीश्वरैः । ते च त्वां परिसंचिन्त्य प्रवर्तन्ते सुरेश्वरि ॥
त्वं संस्तुता पूजिता च मुनीन्द्रमनुमानवैः । दैत्येन्द्रैश्च सुरैश्चापि ब्रह्मविष्णुशिवादिभिः ॥

१ क. °वदोषान्नवी भूतं पुनः कुरु । २ क. °म्बिके । ३ क. प्रदध्यौ स च का° ।

जडीभूतः सहस्रास्यः पञ्चवक्त्रश्चतुर्मुखः । यां स्तोतुं किमहं स्तौमि तामेकास्येन मानवः ॥
इत्युक्त्वा याज्ञवल्क्यश्च भक्तिनम्रात्मकंधरः । प्रणनाम निराहारो रुरोद च मुहुर्मुहुः ।
तदा ज्योतिःस्वरूपा सा तेनादृष्टाऽप्युवाच तम् । सुकवीन्द्रो भवेत्युक्त्वा वैकुण्ठं च जगाम ह ॥ ३१ ॥
महामूर्खश्च दुर्मेधा वर्षमेकं च यः पठेत् । स पण्डितश्च मेधावी सुकविश्च भवेद्ध्रुवम् ॥ ३५॥

इति श्रीब्र० महा० प्रकृति० नारदना० याज्ञवल्क्योक्तवाणीस्तवनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

नारायण उवाच—

सरस्वती सा वैकुण्ठे स्वयं नारायणान्तिके । गङ्गाशापेन कलया कलहाद्भारते सरित् ॥ १ ॥
पुण्यदा पुण्यजननी पुण्यतीर्थस्वरूपिणी । पुण्यवद्भिर्निषेव्या च स्थितिः पुण्यवतां मुने ॥२॥
तपस्विनां तपोरूपा तपस्याकाररूपिणी । कृतपापेध्मदाहाय ज्वलदग्निस्वरूपिणी ॥ ३ ॥
ज्ञाने सरस्वतीतोये गतं यैर्मानवैर्भुवि । तेषां स्थितिश्च वैकुण्ठे सुचिरं हरिसंसदि ॥ ४ ॥
भारते कृतपापश्च स्नात्वा तत्रैव लीलया । मुच्यते सर्वपापेभ्यो विष्णुलोके वसेच्चिरम् ॥
चतुर्दश्यां पौर्णमास्यामक्षयायां दिनक्षये । ग्रहणे च व्यतीपातेऽन्यस्मिन्पुण्यदिनेऽपि च ॥
अनुषङ्गेण यः स्नाति हेलया श्रद्धयाऽपि वा । सारूप्यं लभते नूनं वैकुण्ठे स हरेरपि ॥
सरस्वतीमन्त्रकं च मासमेकं तु यो जपेत् । महामूर्खः कवीन्द्रश्च स भवेन्नात्र संशयः ॥
नित्यं सरस्वतीतोये यः स्नात्वा मुण्डयेन्नरः । न गर्भवासं कुरुते पुनरेव स मानवः ॥९॥
इत्येवं कथितं किंचिद्भारतीगुणकीर्तनम् । सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥

सौतिरुवाच—

नारायणवचः श्रुत्वा नारदो मुनिसत्तमः । पुनः पप्रच्छ संदेहच्छेदं शौनक सत्वरम् ॥

नारद उवाच—

कथं सरस्वतीदेवी गङ्गाशापेन भारते । कलया कलहेनैव समभूत्पुण्यदा सरित् ॥ १२ ॥
श्रवणे श्रुतिसाराणां वर्धते कौतुकं मम । कथामृतानां नो तृप्तिः केन श्रेयसि तृप्यते ॥
कथं शशाप सा गङ्गा पूजितां तां सरस्वतीम् । शान्तसत्त्वस्वरूपा च पुण्यदा सर्वदा नृणाम्
तेजस्विन्योर्द्वयोर्वादकारणं श्रुतिसुन्दरम् । सुदुर्लभं पुराणेषु तन्मे व्याख्यातुमर्हसि ॥

---

१ क. मूर्तं ।

नारायण उवाच—

शृणु नारद वक्ष्यामि कथमेतां पुरातनीम् । यस्याः स्मरणमात्रेण सर्वपापात्प्रमुच्यते ॥
लक्ष्मीः सरस्वती गङ्गा तिस्रो भार्या हरेरपि । प्रेम्णा समास्तास्तिष्ठन्ति सततं हरिसंनिधौ
चकार सैकदा गङ्गा विष्णोर्मुखनिरीक्षणम् । सस्मिता च सकामा च सकटाक्षं पुनः पुनः
विभुर्जहास तद्वक्त्रं निरीक्ष्य च मुदा क्षणम् । क्षमां चकार तद्दृष्ट्वा लक्ष्मीर्नैव सरस्वती
बोधयामास तां पद्मा सत्त्वरूपा च सस्मिता । क्रोधाविष्टा च सा वाणी न च शान्ता बभूव ह
उवाच गङ्गाभर्तारं रक्तास्या रक्तलोचना । कम्पिता कोपवेगेन शश्वत्प्रस्फुरिताधरा ॥२१॥

सरस्वत्युवाच—

सर्वत्र समताबुद्धिः सद्भर्तुः कामिनीः प्रति । धर्मिष्ठस्य वरिष्ठस्य विपरीता खलस्य च॥२२॥
ज्ञातं सौभाग्यमधिकं गङ्गायां ते गदाधर । कमलायां च तत्तुल्यं न च किंचिन्मयि प्रभो ॥
गङ्गायाः पद्मया सार्धं प्रीतिश्चापि सुसंमता । क्षमां चकार तेनेदं विपरीतं हरिप्रिया ॥२४॥
किं जीवनेन मेऽत्रैव दुर्भगायाश्च सांप्रतम् । निष्फलं जीवनं तस्या या पत्युः प्रेमवञ्चिता ॥
त्वां सर्वेशं सत्त्वरूपं ये वदन्ति मनीषिणः । ते मूर्खा न वेदज्ञा न जानन्ति मतिं तव ॥२६॥
सरस्वतीवचः श्रुत्वा दृष्ट्वा तां कोपसंयुताम् । मनसा तु समालोच्य स जगाम बहिःसभाम्॥
गते नारायणे गङ्गामवोचन्निर्भयं रुषा । वागधिष्ठातृदेवी सा वाक्यं श्रवणदुःसहम् ॥२८॥
हे निर्लज्जे सकामे त्वं स्वामिगर्वं करोषि किम् । अधिकं स्वामिसौभाग्यं विज्ञापयितुमिच्छसि
मानहानिं करिष्यामि तवाद्य हरिसंनिधौ । किं करिष्यति ते कान्तो मम वै कान्तवल्लभे ॥
इत्येवमुक्त्वा गङ्गायां जिघृक्षुं केशमुद्यताम् । वारयामास तां पद्मा मध्यदेशस्थिता सती ॥
शशाप वाणी तां पद्मां महाकोपवती सती । वृक्षरूपा सरिद्रूपा भविष्यसि न संशयः॥३२॥
विपरीतं यतो दृष्ट्वा किंचिन्नो वक्तुमर्हसि । संतिष्ठसि सभामध्ये यथा वृक्षो यथा सरित् ॥
शापं श्रुत्वा च सा देवी न शशाप चुकोप न । तत्रैव दुःखिता तस्थौ वाणीं धृत्वा करेण च ॥
अत्युद्धतां च तां दृष्ट्वा कोपप्रस्फुरिताननाम् । उवाच गङ्गा तां देवीं पद्मां पद्मविलोचना ॥

गङ्गोवाच—

त्वमुत्सृज महोग्रां तां पद्मे किं मे करिष्यति । वाग्दुष्टा वागधिष्ठात्री देवीयं कलहप्रिया॥३६॥
यावती योग्यताऽस्याश्च यावती शक्तिरेव वा । तया करोतु वादं च मया सार्धं सुदुर्मुखा ॥
स्वबलं यन्मम बलं विज्ञापयितुमर्हतु । जानन्तु सर्वे ह्युभयोः प्रभावं विक्रमं सति ॥३८ ॥
इत्येवमुक्त्वा सा देवी वाण्यै शापं ददाविति । सरित्स्वरूपा भवतु सा या त्वामशपद्रुषा

१ क. 'त्वा कारयामा'।

अधोमर्त्यं सा प्रयातु सन्ति यत्रैव पापिनः । कलौ तेषां च पापांशं लभिष्यति न संशयः
इत्येवं वचनं श्रुत्वा तां शशाप सरस्वती । त्वमेव यास्यसि महीं पापिपापं लभिष्यसि ॥
एतस्मिन्नन्तरे तत्र भगवानाजगाम ह । चतुर्भुजश्चतुर्भिश्च पार्षदैश्च चतुर्भुजैः ॥ ४२ ॥
सरस्वतीं करे धृत्वा वासयामास वक्षसि । बोधयामास सर्वज्ञः सर्वज्ञानं पुरातनम् ॥
श्रुत्वा रहस्यं तासां च शापस्य कलहस्य च । उवाच दुःखितास्ताश्च वाक्यं सामयिकं विभुः

श्रीभगवानुवाच—

लक्ष्मि त्वं कलया गच्छ धर्मध्वजगृहं शुभे । अयोनिसंभवा भूमौ तस्य कन्या भविष्यसि
तत्रैव दैवदोषेण वृक्षत्वं च लभिष्यसि । मदंशस्यासुरस्यैव शङ्खचूडस्य कामिनी॥४६॥
भूत्वा पश्चाच्च मत्पत्नी भविष्यसि न संशयः । त्रैलोक्यपावनी नाम्ना तुलसीति च भारते
कलया च सरिद्भूत्वा शीघ्रं गच्छ वरानने । भारतं भारतीशापान्नाम्ना पद्मावती भव ॥
गङ्गे यास्यसि चांशेन पश्चात्त्वं विश्वपावनी । भारतं भारतीशापात्पापदाहाय देहिनाम् ॥
भगीरथस्य तपसा तेन नीता सुदुष्करात् । नाम्ना भागीरथी पूता भविष्यसि महीतले ॥
मदंशस्य समुद्रस्य जाया जाये ममाऽऽज्ञया । मत्कलांशस्य भूपस्य शन्तनोश्च सुरेश्वरि ॥
गङ्गाशापेन कलया भारतं गच्छ भारति । कलहस्य फलं भुङ्क्ष्व सपत्नीभ्यां सहाच्युते
स्वयं च ब्रह्मसदनं ब्रह्मणः कामिनी भव । गङ्गा यातु शिवस्थानमत्र पद्मैव तिष्ठतु ॥
शान्ता च क्रोधरहिता मद्भक्ता मत्स्वरूपिणी । महासाध्वी महाभागा सुशीला धर्मचारिणी
यदंशकलया सर्वा धर्मिष्ठाश्च पतिव्रताः । शान्तरूपाः सुशीलाश्च प्रतिविश्वेषु योषितः ॥
तिस्रो भार्यास्त्रयः शालास्त्रयो भृत्याश्च बान्धवाः । ध्रुवं वेदविरुद्धाश्च न ह्येते मङ्गलप्रदाः ॥
स्त्री पुंवच्च गृहे येषां गृहिणां स्त्रीवशः पुमान् । निष्फलं जन्म वै तेषामशुभं च पदे पदे ॥
मुखदुष्टा योनिदुष्टा यस्य स्त्री कलहप्रिया । अरण्यं तेन गन्तव्यं महारण्यं गृहाद्वरम् ॥
जलानां च स्थलानां च फलानां प्राप्तिरेव च । सततं सुलभा तत्र न तेषां तद्गृहेऽपि च ॥
वरमग्नौ स्थितिर्हिंस्रजन्तूनां संनिधौ सुखम् । ततोऽपि दुःखं पुंसां च दुष्टस्त्रीसंनिधौ ध्रुवम्
व्याधिज्वाला विषज्वाला वरं पुंसां वरानने । दुष्टस्त्रीणां मुखज्वाला मरणादतिरिच्यते ॥
पुंसश्च स्त्रीजितस्येह जीवितं निष्फलं ध्रुवम् । यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् ॥
स निन्दितोऽत्र सर्वत्र परत्र नरकं व्रजेत् । यशःकीर्तिविहीनो यो जीवन्नपि मृतो हि सः ॥
बह्वीनां च सपत्नीनां नैकत्र श्रेयसी स्थितिः । एकभार्यः सुखी नैव बहुभार्यः कदाचन ॥
गच्छ गङ्गे शिवस्थानं ब्रह्मस्थानं सरस्वति । अत्र तिष्ठतु मद्गेहे सुशीला कमलालया॥६५॥

---

१ क. 'क्ता मत्स्वरू' । २ ख. जनानां च स्थलानां च पुराणां प्रा° । ३ ख. मद्देहे ।

सुसाध्या यस्य पत्नी च सुशीला च पतिव्रता । इह स्वर्गसुखं तस्य धर्ममोक्षौ परत्र च ॥
पतिव्रता यस्य पत्नी स च मुक्तः शुचिः सुखी । जीवन्मृतोऽशुचिर्दुःखी दुःशीलापतिरेव यः
इत्युक्त्वा जगतां नाथो विरराम च नारद । अत्युच्चै रुरुदुर्देव्यः समालिङ्ग्य परस्परम् ॥
ताश्च सर्वाः समालोच्य क्रमेणोचुः सदीश्वरम् । कम्पिताः साश्रुनेत्राश्च शोकेन च भयेन च

सरस्वत्युवाच—

प्रायश्चित्तं देहि नाथ दुष्टायां जन्मशोधकम् । सत्स्वामिना परित्यक्ताः कुत्र जीवन्ति काः स्त्रियः ॥ ७० ॥
देहत्यागं करिष्यामि ध्रुवं योगेन भारते । अत्युच्चतो निपतनं प्राप्तुमर्हति निश्चितम् ॥ ७१ ॥

गङ्गोवाच—

अहं केनापराधेन त्वया त्यक्ता जगत्पते । देहत्यागं करिष्यामि निर्दोषाया वधं भ्रम ॥
निर्दोषकामिनीत्यागं कुरुते यो जनो भवे । स याति नरकं कल्पं किं ते सर्वेश्वरस्य वा ॥

लक्ष्मीरुवाच—

नाथ सत्त्वस्वरूपस्त्वं कोपः कथमहो तव । प्रसादं कुरु चास्मभ्यं सदीशस्य क्षमा वरा ॥
भारतं भारतीशापाद्यास्यामि कलया यदि । कति कालं स्थितिस्तत्र कदा द्रक्ष्यामि ते पदम्
दास्यन्ति पापिनः पापं मह्यं स्नानावगाहनात् । केन तस्माद्विमुक्ताऽहमागमिष्यामि ते पदम्
कलया तुलसीरूपा धर्मध्वजसुता सती । भूत्वा कदा लभिष्यामि त्वत्पादाम्बुजमच्युत ॥
वृक्षरूपा भविष्यामि तदधिष्ठातृदेवता । मामुद्धरिष्यसि कदा तन्मे ब्रूहि कृपानिधे ॥
गङ्गा सरस्वतीशापाद्यदि यास्यति भारतम् । शापेन मुक्ता पापाच्च कदा त्वां वा लभिष्यति
गङ्गाशापेन सा वाणी यदि यास्यति भारतम् । कदा शापाद्विनिर्मुच्य लभिष्यति पदं तव ॥
तां वाणीं ब्रह्मसदनं गङ्गां वा शिवमन्दिरम् । गन्तुं वदसि हे नाथ तत्क्षमस्व च मद्वचः
इत्युक्त्वा कमला कान्तपदं धृत्वा ननाम च । स्वकेशैर्वेष्टयित्वा च रुरोद च पुनः पुनः ॥
उवाच पद्मनाभस्तां पद्मां कृत्वा स्ववक्षसि । ईषद्धासः प्रसन्नास्यो भक्तानुग्रहकारकः ॥

नारायण उवाच—

त्वद्वाक्यमाचरिष्यामि स्ववाक्यं च सुरेश्वरि । समतां च करिष्यामि शृणु तत्क्रममेव च ॥
भारती यातु कलया सरिद्रूपा च भारतम् । अर्धांशा ब्रह्मसदनं स्वयं तिष्ठतु मद्गृहे ॥
भगीरथेन नीता सा गङ्गा यास्यति भारतम् । पूतं कर्तुं त्रिभुवनं स्वयं तिष्ठतु मद्गृहे ॥
तत्रैव चन्द्रमौलेश्च मौलिं प्राप्स्यति दुर्लभम् । ततः स्वभावतः पूताऽप्यतिपूता भविष्यति ॥

१ क. °रु भार्याभ्यः स° ।

कलांशांशेन गच्छ त्वं भारते कमलोद्भवे । पद्मावती सरिद्रूपा तुलसी वृक्षरूपिणी ॥
कलेः पञ्चसहस्रे च गते वर्षे च मोक्षणम् । युष्माकं सरितां भूयो मद्गृहे चाऽऽगमिष्यथ ॥
संपदां हेतुभूता च विपत्तिः सर्वदेहिनाम् । विना विपत्तेर्महिमा केषां पद्मे भवेद्भवे ॥ ९० ॥
मन्मन्त्रोपासकानां च सतां स्नानावगाहनं तु । युष्माकं मोक्षणं पापात्पापिस्पर्शनहेतुकात् ॥
पृथिव्यां यानि तीर्थानि सन्त्यसंख्यानि सुन्दरि । भविष्यन्ति च पूतानि मद्भक्तस्पर्शदर्शनात् ॥
मन्मन्त्रोपासका भक्ता भ्रमन्ते भारते सति । पूतं कर्तुं भारतं च सुपवित्रां वसुंधराम् ॥ ९३ ॥
मद्भक्ता यत्र तिष्ठन्ति पादं प्रक्षालयन्ति च । तत्स्थानं च महातीर्थं सुपवित्रं भवेद्ध्रुवम् ॥
स्त्रीघ्नो गोघ्नः कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः । जीवन्मुक्तो भवेत्पूतो मद्भक्त० ॥ ९५ ॥
एकादशीविहीनश्च संध्याहीनोऽपि नास्तिकः । नरघाती भवेत्पूतो मद्भक्त० ॥ ९६ ॥
असिजीवी मषिजीवी धावकः शूद्रयाजकः । वृषवाहो भवेत्पूतो मद्भक्त० ॥ ९७ ॥
विश्वासघाती मित्रघ्नो मिथ्यासाक्ष्यप्रदायकः । न्यासहारी भवेत्पूतो मद्भक्त० ॥ ९८ ॥
ऋणग्रस्तो वार्धुषिको जारजः पुंश्चलीपतिः । पूतश्च पुंश्चलीपुत्रो मद्भक्त० ॥ ९९ ॥
शूद्राणां सूपकारश्च देवलो ग्रामयाजकः । अदीक्षितो भवेत्पूतो मद्भक्त० ॥ १०० ॥
अश्वत्थघातकश्चैव मद्भक्तानां च निन्दकः । अनिवेदितभोजी च पूतो मद्भक्तदर्शनात् ॥
मातरं पितरं भार्यां भ्रातरं तनयं सुताम् । गुरोः कुलं च भगिनीं वंशहीनं च बान्धवम् ॥
श्वश्रूं च श्वशुरं चैव यो न पुष्णाति नारद । स महापातकी पूतो मद्भक्त० ॥ १०३ ॥
देवद्रव्यापहारी च विप्रद्रव्यापहारकः । लाक्षालोहरसानां च विक्रेता दुहितुस्तथा ॥ १०४ ॥
महापातकिनश्चैते शूद्राणां शवदाहकाः । भवेयुरेते पूताश्च मद्भक्त० ॥ १०५ ॥

लक्ष्मीरुवाच—

भक्तानां लक्षणं ब्रूहि भक्तानुग्रहकारक । येषां संदर्शनस्पर्शात्सद्यः पूता नराधमाः ॥ १०६ ॥
हरिभक्तिविहीनाश्च महाहंकारसंयुताः । स्वप्रशंसारता धूर्ताः शठा वै साधुनिन्दकाः ॥
पुनन्ति सर्वतीर्थानि येषां स्नानावगाहनात् । येषां च पादरजसा पूता पादोदकान्मही ॥
येषां संदर्शनं स्पर्शं देवा वाञ्छन्ति भारते । सर्वेषां परमो लाभो वैष्णवानां समागमः ॥
नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन विष्णुभक्ताः क्षणादहो

सौतिरुवाच—

महालक्ष्मीवचः श्रुत्वा लक्ष्मीकान्तश्च सस्मितः । निगूढतत्त्वं कथितुमृषिश्रेष्ठोपचक्रमे ॥

---

१ क. °तिः काऽपि °दे° । २ क. °नोऽप्यनाश्रमी । ३ क. °ता लवणस्य च । ४ क. °ताः सगर्वाः सा° ।

श्रीनारायण उवाच—

भक्तानां लक्षणं लक्ष्मि गूढं श्रुतिपुराणयोः । पुण्यस्वरूपं पापघ्नं सुखदं भुक्तिमुक्तिदम् ॥
सारभूतं गोपनीयं न वक्तव्यं खलेषु च । त्वां पवित्रां प्राणतुल्यां कथयामि निशामय ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशेद्गुरः । वदन्ति वेदवेदाङ्गास्तं पवित्रं नरोत्तमम् ॥
पुरुषाणां शतं पूर्वं पूतं तज्जन्ममात्रतः । स्वर्गस्थं नरकस्थं वा मुक्तिं प्राप्नोति तत्क्षणात् ॥
यैः कैश्चिद्यत्र वा जन्म लब्धं येषु च जन्तुषु । जीवन्मुक्तास्ते च पूता यान्ति काले हरेः पदम्
मद्भक्तियुक्तो मत्पूजानियुक्तो मद्गुणान्वितः । मद्गुणश्लाघनीयश्च मन्निविष्टश्च संततम् ॥
मद्गुणश्रुतिमात्रेण सानन्दः पुलकान्वितः । सगद्गदः साश्रुनेत्रः स्वात्मविस्मृतिरेव च ॥
न वाञ्छति सुखं मुक्तिं सालोक्यादिचतुष्टयम् । ब्रह्मत्वममरत्वं वा तद्वाञ्छा मम सेवने ॥
इन्द्रत्वं च मनुत्वं च देवत्वं च सुदुर्लभम् । स्वर्गराज्यादिभोगं च स्वप्नेऽपि नहि वाञ्छति ॥
ब्रह्माण्डानि विनश्यन्ति देवा ब्रह्मादयस्तथा । कल्याणभक्तियुक्तश्च मद्भक्तो न प्रणश्यति
भ्रमन्ति भारते भक्ता लब्ध्वा जन्म सुदुर्लभम् । तेऽपि यान्ति महीं पूतां कृत्वा तीर्थं
ममाऽऽलयम् ॥ १२२ ॥
इत्येतत्कथितं सर्वं कुरु पद्मे यथोचितम् । तदाज्ञातश्च ताश्चक्रुर्हरिस्तस्थौ सुखासने ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सरस्वत्युपाख्यानं नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

---

नारायण उवाच—

पुण्यक्षेत्रे ह्याजगाम भारते सा सरस्वती । गङ्गाशापेन कलया स्वयं तस्थौ हरेः पदम् ॥
भारती भारतं गत्वा ब्राह्मी च ब्रह्मणः प्रिया । वागधिष्ठातृदेवी सा तेन वाणी च कीर्तिता ॥
सर्वं विश्वं परिव्याप्य स्रोतस्येव हि दृश्यते । हरिः सरःसु तस्येयं तेन नाम्ना सरस्वती ॥
सरस्वती नदी सा च तीर्थरूपातिपावनी । पापिपापेध्मदाहाय ज्वलदग्निस्वरूपिणी ॥४॥
पश्चाद्भगीरथानीता महीं भागीरथी शुभा । समाजगाम कलया वाणीशापेन नारद ॥
तत्रैव समये तां च दधार शिरसा शिवः । वेगं सोढुमशक्ताया भुवः प्रार्थनया विभुः ॥
पद्मा जगाम कलया सा च पद्मावती नदी । भारतं भारती शापात्स्वयं तस्थौ हरेः पदम् ॥

---

१ क. 'ण्डादीनि न' ।

ततोऽन्यया सा कलया चालभज्जन्म भारते । धर्मध्वजसुता लक्ष्मीर्विख्याता तुलसीति च ॥
पुरा सरस्वतीशापात्तत्पश्चाद्धरिशापतः । बभूव वृक्षरूपा सा कलया विश्वपावनी ॥९॥
कलेः पञ्चसहस्रं च वर्षं स्थित्वा च भारते । जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम् ॥
यानि सर्वाणि तीर्थानि काशीं वृन्दावनं विना । यास्यन्ति सार्धं ताभिश्च हरेर्वैकुण्ठमाज्ञया
शालग्रामो हरेर्मूर्तिर्जगन्नाथश्च भारतम् । कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥
वैष्णवाश्च पुराणानि शङ्खाश्च श्राद्धतर्पणम् । वेदोक्तानि च कर्माणि ययुस्तैः सार्धमेव च ॥
हरिपूजा हरेर्नाम तत्कीर्तिगुणकीर्तनम् । वेदाङ्गानि च शास्त्राणि ययुस्तैः सार्धमेव च ॥
संतश्च सत्यं धर्मश्च वेदाश्च ग्रामदेवताः । व्रतं तपस्याऽनशनं ययुस्तैः सार्धमेव च ॥१९॥
वामाचाररताः सर्वे मिथ्याकापट्यसंयुताः । तुलसीवर्जिता पूजा भविष्यति ततः परम् ॥
एकादशीविहीनाश्च सर्वे धर्मविवर्जिताः । हरिप्रसङ्गविमुखा भविष्यन्ति ततः परम् ॥
शठाः क्रूरा दाम्भिकाश्च महाहंकारसंयुताः । चौराश्च हिंसकाः सर्वे भविष्यन्ति ततः परम् ।
पुंसां भेदस्तथा स्त्रीणां विवाहो वादनिर्णयः । स्वस्वामिभेदो वस्तूनां न भविष्यत्यतः परम्
सर्वे जनाः स्त्रीवशाश्च पुंश्चल्यश्च गृहे गृहे । तर्जनैर्भर्त्सनैः शश्वत्स्वामिनं ताडयन्ति च ॥
गृहेश्वरी च गृहिणी गृही भृत्याधिकोऽधमः । चेटीभृत्यासमा वध्वः श्वश्रूश्च श्वशुरस्तथा ॥
कर्तारो बलिनो गेहे योनिसंबन्धिबान्धवाः । विद्यासंबन्धिभिः सार्धं संभाषाऽपि न विद्यते
यथाऽपरिचिता लोकास्तथा पुंसश्च बान्धवाः । सर्वकर्माक्षमाः पुंसो योषितामाज्ञया विना
ब्रह्मक्षत्रियविट्शूद्रा जात्याचारविनिर्णयः । संध्या च यज्ञसूत्रं च भावलुप्तं न संशयः ॥
म्लेच्छाचारा भविष्यन्ति वर्णाश्चत्वार एव च । म्लेच्छशास्त्रं पठिष्यन्ति स्वशास्त्राणि विहाय ते
ब्रह्मक्षत्रविशां वंशाः शूद्राणां सेवकाः कलौ ॥ २९ ॥
सूपकारा भविष्यन्ति धावका वृषवाहकाः । सत्यहीना जनाः सर्वे सस्यहीना च मेदिनी
फलहीनाश्च तरवोऽपत्यहीनाश्च योषितः । क्षीरहीनास्तथा गावः क्षीरं सर्पिर्विवर्जितम् ॥
दम्पती प्रीतिहीनौ च गृहिणः सुखवर्जिताः । प्रतापहीना भूपाश्च प्रजाश्च करपीडिताः ॥
जलहीना नदा नद्यो दीर्घिकाः कन्दरादयः । धर्महीनाः पुण्यहीना वर्णाश्चत्वार एव च ॥
लक्षेषु पुण्यवान्कोऽपि न तिष्ठति ततः परम् । कुत्सिता विकृताकारा नरा नार्यश्च बालकाः
कुवार्ताः कुत्सितपथा भविष्यन्ति ततः परम् । केचिद्ग्रामाश्च नगरा नरशून्या भयानकाः
केचित्स्वल्पकुटीरेण नरेण च समन्विताः । अरण्यानि भविष्यन्ति ग्रामेषु नगरेषु च ॥
अरण्यवासिनः सर्वे जनाश्च करपीडिताः । सस्यानि च भविष्यन्ति तडागेषु नदीषु च ॥

१ क. °श्वरूपिणी । २ ख. सत्त्वं च । ३ क. °नानामप कारिणः ।

क्षेत्राणि सस्यहीनानि प्रकृष्टान्यर्थतः परम्। हीनाः प्रकृष्टा धनिनो बलदर्पसमन्विताः ॥
प्रकृष्टवंशजा हीना भविष्यन्ति कलौ युगे। अलीकवादिनो धूर्ताः शठा वै सत्यवादिनः ॥
पापिनः पुण्यवन्तश्चाप्यशिष्टः शिष्ट एव च। जितेन्द्रिया लम्पटाश्च पुंश्चल्यश्च पतिव्रताः
तपस्विनः पातकिनो विष्णुभक्ता अवैष्णवाः। हिंसकाश्च दयायुक्ताश्चौराश्च नरघातिनः ॥
भिक्षुवेषधरा धूर्ता निन्दन्त्युपहसन्ति च। भूतादिसेवानिपुणा जनानां मोदकारिणः ॥
पूजितास्ते भविष्यन्ति वञ्चका ज्ञानदुर्बलाः। वामना व्याधियुक्ताश्च नरा नार्यश्च सर्वतः ॥
अल्पायुषो जरायुक्ता यौवनेषु कलौ युगे। पलिताः षोडशे वर्षे महावृद्धास्तु विंशतौ ॥
अष्टवर्षा च युवती रजोयुक्ता च गर्भिणी। वत्सरान्ते प्रसूता स्त्री षोडशे च जरान्विता ॥
एताः काश्चित्सहस्रेषु वन्ध्याश्चापि कलौ युगे। कन्याविक्रयिणः सर्वे वर्णाश्चत्वार एव च ॥
मातृजायावधूनां च जारोपार्जनतत्पराः। कन्यानां भगिनीनां च जारोपार्जनजीविनः ॥
हरेर्नाम्नां विक्रयिणो भविष्यन्ति कलौ युगे। स्वयमुत्सृज्य दानं च कीर्तिवर्धनहेतवे ॥
ततश्च मनसाऽऽलोच्य स्वयमुल्लङ्घयिष्यति। देववृत्तिं ब्रह्मवृत्तिं वृत्तिं गुरुकुलस्य च ॥
स्वदत्तां परदत्तां वा सर्वमुल्लङ्घयिष्यति। कन्यकागामिनः केचित्केचिच्छ्वश्रूभिगामिनः ॥
केचिद्वधूगामिनश्च केचित्सर्वत्रगामिनः। भगिनीगामिनः केचित्सपत्नीमातृगामिनः ॥
भ्रातृजायागामिनश्च भविष्यन्ति कलौ युगे। अगम्यागमनं चैव करिष्यन्ति गृहे गृहे ॥
आत्मयोनिं परित्यज्य विहरिष्यन्ति सर्वत.। पत्नीनां निर्णयो नास्ति भर्तॄणां च कलौ युगे
प्रजानां चैव वस्तूनां ग्रामाणां च विशेषतः। अलीकवादिनः सर्वे सर्वे चौर्यार्थलम्पटाः ॥
परस्परं हिंसकाश्च सर्वे च नरघातिनः। ब्रह्मक्षत्रविशां वंशा भविष्यन्ति च पापिनः ॥
लाक्षालोहरसानां च व्यापारं लवणस्य च। वृषवाहा विप्रवंशाः शूद्राणां शवदाहिनः ॥
शूद्रान्नभोजिनः सर्वे सर्वे च वृषलीरताः। पञ्चपर्वपरित्यक्ताः कुहूरात्रिषु भोजिनः॥९३॥
यज्ञसूत्रविहीनाश्च संध्याशौचविहीनकाः ॥ ९४ ॥
पुंश्चली वार्धुषाऽवीरा कुट्टिनी च रजस्वला। विप्राणां रन्धनागारे भविष्यन्ति च पाचिकाः॥
अन्नानां निर्णयो नास्ति योनीनां च विशेषत.। आश्रमाणां जनानां च सर्वे म्लेच्छाः कलौ युगे
एवं कलौ संप्रवृत्ते सर्वे म्लेच्छमया भवे। हस्तप्रमाणे वृक्षे चाङ्गुष्ठमाने च मानवे ॥९७॥
विप्रस्य विष्णुयशसः पुत्रः कल्की भविष्यति। नारायणकलांशश्च भगवान्बलिनां बली ॥
दीर्घेण करवालेन दीर्घघोटकवाहनः। म्लेच्छशून्यां च पृथिवीं त्रिरात्रेण करिष्यति ॥
निर्म्लेच्छां वसुधां कृत्वा चान्तर्धानं करिष्यति। अराजका च वसुधा दस्युग्रस्ता भविष्यति

१ क 'नानाभयका'। २ क. 'ना ज्ञानयु'। ३ क. नियमो।

स्थूलप्रमाणं षड्रात्रं वर्षाधाराप्लुता मही । लोकशून्या वृक्षशून्या गृहशून्या भविष्यति ॥
ततश्च द्वादशादित्याः करिष्यन्त्युदयं मुने । प्राप्नोति शुष्कतां पृथ्वी समा तेषां च तेजसा
कलौ गते च दुर्धर्षे संप्रवृत्ते कृते युगे । तपःसत्यसमायुक्तो धर्मः पूर्णो भविष्यति ॥६३॥
तपस्विनश्च धर्मिष्ठा वेदज्ञा ब्राह्मणा भुवि । पतिव्रताश्च धर्मिष्ठा योषितश्च गृहे गृहे ॥
राजानः क्षत्रियाः सर्वे विप्रभक्ताः स्वधर्मिणः । प्रतापवन्तो धर्मिष्ठाः पुण्यकर्मरता सदा
वैश्या वाणिज्यनिरता विप्रभक्ताश्च धार्मिकाः शूद्राश्च पुण्यशीलाश्च धर्मिष्ठा विप्रसेविनः॥
विप्रक्षत्रविशां वंशा विष्णुयज्ञपरायणाः । विष्णुमन्त्ररताः सर्वे विष्णुभक्ताश्च वैष्णवाः ॥
श्रुतिस्मृतिपुराणज्ञा धर्मज्ञा ऋतुगामिनः । लेशो नास्ति ह्यधर्माणां धर्मपूर्णे कृते युगे ॥
धर्मस्त्रिपाच्च त्रेतायां द्विपाच्च द्वापरे स्मृतः । कलौ प्रवृत्ते पादात्मा सर्वलोपस्ततः परम् ।
वाराः सप्त यथा विप्र तिथयः षोडश स्मृताः । यथा द्वादश मासाश्च ऋतवश्च षडेव हि ॥
द्वौ पक्षौ चायने द्वे च चतुर्भिः प्रहरैर्दिनम् । चतुर्भिः प्रहरै रात्रिर्मासस्त्रिंशद्दिनैस्तथा ॥
वर्षः पञ्चविधो ज्ञेयः कालसंख्यां निबोध मे । यथा चाऽऽयान्ति यान्त्येव तथा युगचतुष्टयम्
वर्षे पूर्णे नराणां च देवानां च दिवानिशम् । शतत्रये षष्ट्यधिके नराणां च युगे गते ॥
देवानां च युगो ज्ञेयः कालसंख्याविदां मतः ॥ ७३ ॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । मन्वन्तरसमं ज्ञेयं चेन्द्रायुः परिकीर्तितम् ॥७४॥
अष्टाविंशतिमे चेन्द्रे गते ब्राह्मं दिवानिशम् । अष्टोत्तरे वर्षशते गते पातो विधेर्भवेत् ॥७५॥
प्रलयः प्राकृतो ज्ञेयस्तत्रादृष्टा वसुंधरा । जलप्लुतानि विश्वानि ब्रह्मविष्णुशिवादयः ॥
ऋषयो जीविनः सर्वे लीनाः कृष्णे परात्परे । तत्रैव प्रकृतिर्लीना तेन प्राकृतिको लयः ॥
लये प्राकृतिकेऽतीते पाते च ब्रह्मणो मुने निमेषमात्रः कालश्च कृष्णस्य परमात्मनः ॥
एवं नश्यन्ति सर्वाणि ब्रह्माण्डान्यखिलानि च स्थितौ गोलोकवैकुण्ठौ श्रीकृष्णश्च सपार्षदः
निमेषमात्रः प्रलयो यत्र विश्वं जलप्लुतम् । निमेषानन्तरे काले पुनः सृष्टिः क्रमेण च ॥
एवं कतिविधा सृष्टिर्लयः कतिविधोऽपि वा । कतिकृत्वो गतायाता संख्यां जानाति कः पुमान्
सृष्टीनां च लयानां च ब्रह्माण्डानां च नारद । ब्रह्मादीनां च विश्वण्डे संख्यां जानाति कः पुमान्
ब्रह्माण्डानां च सर्वेषामीश्वरश्चैक एव सः । सर्वेषां परमात्मा च श्रीकृष्णः प्रकृतेः परः ॥
ब्रह्मादयश्च तस्यांशास्तस्यांशश्च महाविराट् । तस्यांशश्च विराट् क्षुद्रस्तस्यांशा प्रकृतिः स्मृता ॥ ८४ ॥
स च कृष्णो द्विधाभूतो द्विभुजश्च चतुर्भुजः । चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम्

ब्रह्मादितृणपर्यन्तं सर्वं प्राकृतिकं भवेत् । यच्च प्राकृतिकं सृष्टं सर्वं नश्वरमेव च ॥ ८६ ॥
विद्धयेकं सृष्टिमूलं तत्सत्यं नित्यं सनातनम् । स्वेच्छामयं परं ब्रह्म निर्लिप्तं निर्गुणं परम् ॥
निरुपाधि निराकारं भक्तानुग्रहविग्रहम् । अतीव कमनीयं च नवीननीरदप्रभम् ॥८८॥
द्विभुजं मुरलीहस्तं गोपवेषं किशोरकम् । सर्वज्ञं सर्वसेव्यं च परमात्मानमीश्वरम् ॥८९॥
करोति धाता ब्रह्माण्डं ज्ञानात्मा कमलोद्भवः । शिवो मृत्युंजयश्चैव संहर्ता सर्वतत्त्ववित्
यस्य ज्ञानाद्यत्तपसा सर्वेशस्तत्समो महान् । महाविभूतियुक्तश्च सर्वज्ञः सर्वदः स्वयम् ॥
सर्वव्यापी सर्वपाता पदाता सर्वसंपदाम् । विष्णुः सर्वेश्वरः श्रीमान्यस्य ज्ञानाज्जगत्पतिः ॥
महामाया च प्रकृतिः सर्वशक्तिमतीश्वरी । यज्ज्ञानाद्यस्य तपसा यद्भक्त्या यस्य सेवया ॥
सावित्री वेदमाता च वेदाधिष्ठातृदेवता । पूज्या द्विजानां वेदज्ञा यज्ज्ञानाद्यस्य सेवया ॥
सर्वविद्याधिदेवी सा पूज्या च विदुषां पुरा । यत्सेवया यत्तपसा यस्य ज्ञानात्सरस्वती ॥
यत्सेवया यत्तपसा प्रदात्री सर्वसंपदाम् । धनेदस्याधिदेवी सा महालक्ष्मीः सनातनी ॥
यत्सेवया यत्तपसा सर्वविश्वेषु पूजिता । सर्वज्ञानाधिदेवी[२] सा सर्वसंपत्प्रदायिनी ॥९७॥
सर्वेश्वरी सर्ववन्द्या सर्वेशं प्राप या पतिम् । सर्वस्तुता च सर्वज्ञा दुर्गा दुर्गतिनाशिनी ॥
कृष्णवामांशसंभूता कृष्णप्राणाधिदेवता । कृष्णप्राणाधिका प्रेम्णा राधिका कृष्णसेवया ॥
सर्वाधिकं च रूपं च सौभाग्यं मानगौरवम् कृष्णवक्षःस्थलस्थानं पत्नीत्वं प्राप सेवया ॥
तपश्चकार सा पूर्वं शतशृङ्गे च पर्वते । दिव्यं युगसहस्रं च निराहाराऽतिकर्शिता ॥
कृशां निःश्वासरहितां दृष्ट्वा चन्द्रकलोपमाम् । कृष्णो वक्षःस्थले कृत्वा रुरोद कृपया विभुः
वरं तस्यै ददौ सारं सर्वेषामपि दुर्लभम् । मम वक्षःस्थले तिष्ठ मयि ते भक्तिरस्त्विति ॥
सौभाग्येन च मानेन प्रेम्णा वै गौरवेण च । त्वं मे श्रेष्ठा परं प्रेम्णा ज्येष्ठा त्वं सर्वयोषिताम्
वरिष्ठा च गरिष्ठा च संस्तुता पूजिता मया । सततं तव साध्योऽहं राध्यश्च प्राणवल्लभे ॥
इत्युक्त्वा जगतां नाथश्चक्रे तच्चेतनां ततः । सपत्नीरहितां तां च चकार प्राणवल्लभाम् ॥
अन्या या याश्च देव्यो वै पूजितास्तस्य सेवया तपसा यादृशी यासां तासां तादृक्फलं मुने ॥
दिव्यं वर्षसहस्रं च तपस्तप्त्वा हिमालये । दुर्गा च तत्पदं ध्यात्वा सर्वपूज्या बभूव ह ॥
सरस्वती तपस्तप्त्वा पर्वते गन्धमादने । लक्षवर्षं च दिव्यं च सर्ववन्द्या बभूव सा ॥
लक्ष्मीर्युगशतं दिव्यं तपस्तप्त्वा च पुष्करे । सर्वसंपत्प्रदात्री सा चाभवत्तस्य सेवया ॥
सावित्री मलये तप्त्वा द्विजपूज्या बभूव सा । षष्टिवर्षसहस्रं च दिव्यं ध्यात्वा च तत्पदम् ॥
शतमन्वन्तरं तप्तं शंकरेण पुरा विभो । शतमन्वन्तरं चैव ब्रह्मणा तस्य भक्तितः ॥

---

१ ख. °नसस्या° । २ ख. °वप्रामाधि° । २ ख. °ष्णप्रेमाधि° । ३ क. °ष्ठा च प्रेष्ठा च प्रेयसी स° । ४ ख. येषां या ।

शतमन्वन्तरं विष्णुस्तप्त्वा पाता बभूव ह । शतमन्वन्तरं धर्मस्तप्त्वा पूज्यो बभूव ह ॥
मन्वन्तरं तपस्तेपे शेषो भक्त्या च नारद । मन्वन्तरं च सूर्यश्च शक्रश्चन्द्रस्तथा गुरुः ॥
दिव्यं शतयुगं चैव वायुस्तप्त्वा च भक्तितः । सर्वप्राणः सर्वपूज्यः सर्वाधारो बभूव सः ॥
एवं कृष्णस्य तपसा सर्वे देवाश्च पूजिताः । मुनयो मानवा भूपा ब्राह्मणाश्चैव पूजिताः ॥
एवं ते कथितं सर्वं पुराणं च यथागमम् । गुरुवक्त्राद्यथा ज्ञातं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० युगतन्माहात्म्यमन्व-
न्तरकालेश्वरगुणनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

अथाष्टमोऽध्यायः ।

नारद उवाच—

हरेर्निमेषमात्रेण ब्रह्मणः पात एव च । तस्य पाते प्राकृतिकः प्रलयः परिकीर्तितः ॥ १ ॥
प्रलये प्राकृते चोक्तं तत्रादृष्टा वसुंधरा । जलप्लुतानि विश्वानि सर्वे लीना हराविति ॥
वसुंधरा तिरोभूता कुत्र वा तत्र तिष्ठति । सृष्टेर्विधानसमये साऽऽविर्भूता कथं पुनः ॥ ३ ॥
कथं बभूव सा धन्या मान्या सर्वाश्रया जया । तस्याश्च जन्म विस्तारं वद मङ्गलकारणम् ॥

श्रीनारायण उवाच—

सर्वादिसृष्टौ सर्वेषां जन्म कृष्णादिति श्रुतिः । आविर्भावस्तिरोभावः सर्वेषु प्रलयेषु च ॥
श्रूयतां वसुधाजन्म सर्वमङ्गलमङ्गलम् । विघ्ननिघ्नं परं पापनाशनं पुण्यवर्धनम् ॥ ६ ॥
अहो केचिद्वदन्तीति मधुकैटभमेदसा । बभूव वसुधा धन्या तद्विरुद्धमतं शृणु ॥ ७ ॥
ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा । आवां जहि न यत्रोर्वी पयसा संवृतेति च ॥
तयोर्जीवनकाले न प्रत्यक्षा च भवेत्स्फुटम् । ततो बभूव मेदश्च मरणान्तरं तयोः ॥ ९ ॥
मेदिनीति च विख्यातेत्युक्ता यैस्तन्मतं शृणु । जलधौता कृशा पूर्वं वर्धिता मेदसा यतः ॥
कथयामि च तज्जन्म सार्थकं सर्वसंमतम् । पुरा श्रुतं च श्रुत्युक्तं धर्मवक्त्राच्च पुष्करे ॥
महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम् । मलो बभूव कालेन सर्वाङ्गव्यापको ध्रुवम् ॥
स च प्रविष्टः सर्वेषां तल्लोम्नां विवरेषु च । कालेन महता तस्माद्बभूव वसुधा मुने ॥ १६ ॥
प्रत्येकं प्रतिलोम्नां च स्थिता कूपेषु सा स्थिरा । आविर्भूता तिरोभूता सा चला च पुनः पुनः
आविर्भूता सृष्टिकाले तज्जलात्पर्युपस्थिता[1] । प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता[2] ॥
प्रतिविश्वेषु वसुधा शैलकाननसंयुता । सप्तसागरसंयुक्ता सप्तद्वीपमिता सती ॥ १६ ॥

---

१ क. 'ता सजला च । २ क 'ज्जलापर्यधःस्थि' ।

हिमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता । ब्रह्मविष्णुशिवाद्यैश्च सुरैर्लोकैस्तथा युता ॥ १७ ॥
पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता । काञ्चनीभूमिसंयुक्ता सर्वदुर्गसमन्विता ॥ १८ ॥
पातालाः सप्त तदधस्तदूर्ध्वं ब्रह्मलोकतः । ध्रुवलोकश्च तत्रैव सर्वं विश्वं च तत्र वै ॥ १९ ॥
एवं सर्वाणि विश्वानि पृथिव्यां निर्मितानि वै । ऊर्ध्वं गोलोकवैकुण्ठौ नित्यौ विश्वपरौ च तौ
नश्वराणि च विश्वानि कृत्रिमाकृत्रिमाणि च । प्रलये प्राकृते ब्रह्मन्ब्रह्मणश्च निपातने ॥
महाविराडादिसृष्टौ सृष्टः कृष्णेन चाऽऽत्मना । नित्ये स्थितः स प्रलये काष्ठाकाशेश्वरैः सह
क्षित्यधिष्ठातृदेवी सा वाराहे पूजिता सुरैः । मनुभिर्मुनिभिर्विप्रैर्गन्धर्वादिभिरेव च ॥ २३ ॥
विष्णोर्वराहरूपस्य पत्नी सा श्रुतिसंमता । तत्पुत्रो मङ्गलो ज्ञेयः सुयशा मङ्गलात्मजः ॥

**नारद उवाच—**

पूजिता केन रूपेण वाराहे च सुरैर्मही । वराहेण च वाराही सर्वैः सर्वाश्रया सती ॥ २५ ॥
तस्याः पूजाविधानं चाऽप्यधश्चोद्धरणक्रमम् । मङ्गलं मङ्गलस्यापि जन्म वासं वद प्रभो ।

**नारायण उवाच—**

वाराहे च वराहश्च ब्रह्मणा संस्तुतः पुरा । उद्दधार महीं हत्वा हिरण्याक्षं रसातलं तु ॥ २७ ॥
जले तां स्थापयामास पद्मपत्रं यथाऽर्णवे । तत्रैव निर्ममे ब्रह्मा सर्वं विश्वं मनोहरम् ॥ २८ ॥
दृष्ट्वा तदधिदेवीं च सकामां कामुको हरिः वराहरूपी भगवान्कोटिसूर्यसमप्रभः ॥ २९ ॥
कृत्वा रतिकरीं शय्यां मूर्तिं च सुमनोहराम् । क्रीडां चकार रहसि दिव्यवर्षमहर्निशम् ॥ ३० ॥
सुखसंभोगसंस्पर्शान्मूर्च्छां संप्राप सुन्दरी । विदग्धया विदग्धेन संगमोऽतिसुखप्रदः ॥ ३१ ॥
विष्णुस्तदङ्गसंश्लेषाद्बुबुधे न दिवानिशम् । वर्षान्ते चेतनां प्राप्य कामी तत्याज कामुकीम्
दधार पूर्वरूपं हि वाराहं चैव लीलया । पूजां चकार भक्त्या च ध्यात्वा च धरणीं सतीम् ॥
धूपैर्दीपैश्च नैवेद्यैः सिन्दूरैरनुलेपनैः । वस्त्रैः पुष्पैश्च बलिभिः संपूज्योवाच तां हरिः ॥ ३४ ॥

**महावराह उवाच—**

सर्वाधारा भव शुभे सर्वैः संपूजिता सती । मुनिभिर्मनुभिर्देवैः सिद्धैर्वा मानवादिभिः ॥ ३५ ॥
जलोच्छ्रासाज्जलत्यागगृहारम्भप्रवेशने । वापीतडागारम्भे च शुभे च कृषिकर्मणि ॥
तव पूजां करिष्यन्ति संभ्रमेण सुरादयः । मूढा ये न करिष्यन्ति यास्यन्ति नरकं च ते ॥ ३७ ॥

**वसुधोवाच—**

वहामि सर्वं वाराहरूपेणाहं तवाज्ञया । लीलामात्रेण भगवन्विश्वं च सचराचरम् ॥ ३८ ॥

---

१ क. सप्तस्वर्गेष॰ । २ ख. ॰न्म व्यासं व॰ । ३ ख. ॰मोऽपि नु॰ । ४ क. कामं तत्याज कामिनी॰ ।

मुक्तां शुक्तिं हरेरर्चां शिवलिङ्गं शिवां तथा। शङ्खं प्रदीपं रत्नं च माणिक्यं हीरकं मणिम्॥
यज्ञसूत्रं च पुष्पं च पुस्तकं तुलसीदलम्। जपमालां पुष्पमालां कर्पूरं च सुवर्णकम्॥४०॥
गोरोचनां चन्दनं च शालग्रामजलं तथा। एतान्वोढुमशक्ताऽहं क्लिष्टा च भगवञ्छृणु॥

श्रीभगवानुवाच—

द्रव्याण्येतानि ये मूढा अर्पयिष्यन्ति सुन्दरी। यास्यन्ति कालसूत्रं ते दिव्यं वर्षशतं त्वयि॥
इत्येवमुक्त्वा भगवान्विरराम च नारद। बभूव तेन गर्भेण तेजस्वी मङ्गलग्रहः॥ ४३॥
पूजां चक्रुः पृथिव्याश्च ते सर्वे चाऽऽज्ञया हरेः। दध्युः काण्वोक्तमार्गेण तुष्टुवुः स्तवनेन च॥
ददुर्मूलेन मन्त्रेण नैवेद्यादिकमेव च। संस्तुता त्रिषु लोकेषु पूजिता सा बभूव ह॥ ४५॥

नारद उवाच—

किं ध्यानं स्तवनं किंवा तस्य मूलं च किं वद। गूढं सर्वपुराणेषु श्रोतुं कौतूहलं मम॥ ४६॥

नारायण उवाच—

आदौ च पृथिवीदेवी वराहेण सुपूजिता। ततो हि ब्रह्मणा पश्चात्ततश्च पृथुना पुरा॥४७॥
ततः सर्वैर्मुनीन्द्रैश्च मनुभिर्नारदादिभिः। ध्यानं च स्तवनं मन्त्रं शृणु वक्ष्यामि नारद॥४८॥
ॐ ह्रीं क्लीं श्रीं वां वसुधायै स्वाहा। इत्यनेन तु मन्त्रेण पूजिता विष्णुना पुरा॥४९॥
श्वेतचम्पकवर्णाभां शतचन्द्रसमप्रभाम्। चन्दनोक्षितसर्वाङ्गीं सर्वभूषणभूषिताम्॥ ५०॥
रत्नाधारां रत्नगर्भां रत्नाकरसमन्विताम्। वह्निशुद्धांशुकाधानां सस्मितां वन्दितां भजे॥
ध्यानेनानेन सा देवी सर्वैर्वै पूजिता भवेत्। स्तवनं शृणु विप्रेन्द्र काण्वशाखोक्तमेव च॥

विष्णुरुवाच—

यज्ञसूकरजाया त्वं जयं देहि जयावहे। जयेऽजये जयाधारे जयशीले जयप्रदे॥५३॥
सर्वाधारे सर्वबीजे सर्वशक्तिसमन्विते। सर्वकामप्रदे देवि सर्वेष्टं देहि मे स्थिरे॥ ५४॥
सर्वसस्यालये सर्वसस्याढ्ये सर्वसस्यदे। सर्वसस्यहरे काले सर्वसस्यात्मिके क्षिते॥५५॥
मङ्गले मङ्गलाधारे माङ्गल्ये मङ्गलप्रदे। मङ्गलार्थे मङ्गलांशे मङ्गलं देहि मे परम्॥५६॥
पुण्यस्वरूपे पुण्यानां बीजरूपे सनातनी। पुण्याश्रये पुण्यवतामालये पुण्यदे भवे॥
सर्वरत्नरूपे रत्नौघे रत्नसारवर प्रदे॥ ५८॥
भूमे भूमिपसर्वस्वे भूमिपालपरायणे। भूमिपाहंकाररूपे भूमिं देहि वसुंधरे॥ ६०॥
इदं स्तोत्रं महापुण्यं तां संपूज्य च यः पठेत्। कोटयन्तरे जन्मनि स संभवेद्भूमिपेश्वरः।
भूमिदानकृतं पुण्यं लभते पठनाज्जनः। दत्तापहारजात्पापान्मुच्यते नात्र संशयः॥६२॥
अम्बुवीचीभूखननात्पापान्मुच्येत स ध्रुवम्। अन्यकूपे कूपदजात्पापान्मुच्येत स ध्रुवम्।

१ क. °पं यन्त्रं च।

परभूश्राद्धजात्पापान्मुच्यते नात्र संशयः । भूमौ वीर्यत्यागपापाद्दीपादिस्थापनात्तथा ॥
पापेन मुच्यते प्राज्ञः स्तोत्रस्य पठनान्मुने । अश्वमेधशतं पुण्यं लभते नात्र संशयः ।
इति श्री० ब० प्र० नारदना० पृथिव्युपाख्याने पृथिवीस्तोत्रं नामाष्टमोऽध्यायः ॥८॥

===

अथ नवमोऽध्यायः ।

---

**नारद उवाच—**

भूमिदानकृतं पुण्यं पापं तद्धरणेन यत् । परभूमौ श्राद्धपापं कूपे कूपदजं तथा ॥१॥
अम्बुवीचीभूखननबीजत्यागजमेव च । दीपादिस्थापनात्पापं श्रोतुमिच्छामि यत्नतः ॥
अन्यद्वा पृथिवीजन्यं पापं यत्प्रश्नतः परम् । यदस्ति तत्प्रतीकारं वद वेदविदां वर ॥

**नारायण उवाच—**

वितस्तिमात्रां भूमिं च यो ददाति च भारते । संध्यापूताय विप्राय स यायाद्विष्णुमन्दिरम्
भूमिं च सर्वसस्याढ्यां ब्राह्मणाय ददाति यः । भूमिरेणुप्रमाणे च वर्षे विष्णुपदे वसेत्
ग्रामं भूमिं च धान्यं च यो ददात्याददाति य. । सर्वपापाद्विनिर्मुक्तौ चोभौ वैकुण्ठवासिनौ
भूमिं दादति यः काले यः साधुश्चानुमोदते । स प्रयाति च वैकुण्ठं मित्रगोत्रसमन्वितः ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । कालसूत्रे तिष्ठति स यावच्चन्द्रदिवाकरौ ॥८॥
तत्पुत्रपौत्रप्रभृतिर्भूमिहीनः श्रिया हतः । सुखहीनो दरिद्रः स्यादन्ते याति च रौरवम् ॥
गवां मार्गं विनिष्कृष्य यश्च सस्यं ददाति सः । दिव्यं वर्षशतं चैव कुम्भीपाके च तिष्ठति ॥
गोष्ठं तडागं निष्कृष्य मार्गं सस्यं ददाति यः । स च तिष्ठत्यसीपत्रे यावदिन्द्राश्चतुर्दश ॥
न पञ्चपिण्डमुद्धृत्य स्नाति कूपे परस्य यः । प्राप्नोति नरकं चैव न स्नानफलमेव च ॥१२॥
कामी भूमौ च रहसि बीजत्यागं करोति यः । स्निग्धरेणुप्रमाणं च वर्षं तिष्ठति रौरवे॥१३॥
अम्बुवीच्यां भूखननं यः करोति च मानवः । स याति कृमिदंशं च स्थितिस्तत्र चतुर्युगम् ॥
परकीये लुप्तकूपे कूपं मूढः करोति यः । पुष्करिण्यां च लुप्तायां तां ददाति च यो नरः ॥
सर्वं फलं परस्यैव तप्तसूर्मिं व्रजेत्तु सः । तत्र तिष्ठति संतप्तो यावदिन्द्राश्चतुर्दश ॥ १६ ॥
परकीयतडागे च पङ्कमुद्धृत्य चोत्सृजेत् । रेणुप्रमाणवर्षं च ब्रह्मलोके वसेन्नरः ॥ १७ ॥
पिण्डं पित्रे भूमिभर्तुर्न प्रदाय च मानवः । श्राद्धं करोति यो मूढो नरकं याति निश्चितम् ॥
भूमौ दीपं योऽर्पयति सोऽन्धः सप्तसु जन्मसु । भूमौ शङ्खं च संस्थाप्य कुष्ठं जन्मान्तरे लभेत्

---

१ ख. "द्धस्यं । २ क. पुत्रौहि" ।

मुक्तामाणिक्यहीरं च सुवर्णं च मणिं तथा। यश्च संस्थापयेद्भूमौ दरिद्रः सप्तजन्मसु ॥
शिवलिङ्गं शिलामर्च्यां यश्चार्पयति भूतले। शतमन्वन्तरं यावत्कृमिभक्षे स तिष्ठति॥२१॥
सूक्तं मन्त्रं शिलातोयं पुष्पं च तुलसीदलम्। यश्चार्पयति भूमौ च स तिष्ठेन्नरके युगम् २२॥
जपमालां पुष्पमालां कर्पूरं रोचनां तथा। यो मूढश्चार्पयेद्भूमौ स याति नरकं ध्रुवम् ॥
मुने चन्दनकाष्ठं च रुद्राक्षं कुशमूलकम्। संस्थाप्य भूमौ नरके वसेन्मन्वन्तरावधि॥२४॥
पुस्तकं यज्ञसूत्रं च भूमौ संस्थापयेत्तु यः। न भवेद्विप्रयोनौ च तस्य जन्मान्तरे जनिः ॥
ब्रह्महत्यासमं पापमिह वै लभते ध्रुवम्। ग्रन्थियुक्तं यज्ञसूत्रं पूज्यं स्यात्सर्ववर्णकैः ॥२६॥
यज्ञं कृत्वा तु यो भूमिं क्षीरेण नहि सिञ्चति। स याति तप्तसूर्मिं च संतप्तः सप्तजन्मसु॥
भूकम्पे ग्रहणे यो हि करोति खननं भुवः। जन्मान्तरे महापापी सोऽङ्गहीनो भवेद्ध्रुवम्।
भवनं यत्र सर्वेषां भूमिस्तेन प्रकीर्तिता। वसु रत्नं या दधाति वसुधा च वसुंधरा॥२९॥
हरेरूरौ च या जाता सा चोर्वी परिकीर्तिता। धरा धरित्री धरणी सर्वेषां धरणात्तु या ॥
इज्या च यागधरणात्क्षोणी क्षीणा लये च या। महालये क्षयं याति क्षितिस्तेन प्रकीर्तिता
काश्यपी कश्यपस्येयमचला स्थितिरूपतः। विश्वंभरा तद्भरणाच्चानन्ताऽनन्तरूपतः ॥
पृथ्वीयं पृथुकन्यात्वाद्विस्तृतत्वान्मही मुने ॥ ३३ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० पृथिव्युपाख्यानं नाम नवमोऽध्यायः ॥९॥

---

अथ दशमोऽध्यायः।

---

**नारद उवाच—**

श्रुतं पृथिव्युपाख्यानमतीव सुमनोहरम्। गङ्गोपाख्यानमधुना वद वेदविदां वर ॥ १ ॥
भारतं भारतीशापादाजगाम सुरेश्वरी। विष्णुस्वरूपा परमा स्वयं विष्णुपदी सती॥२॥
कथं कुत्र युगे केन प्रार्थिता प्रेरिता पुरा। तत्क्रमं श्रोतुमिच्छामि पापघ्नं पुण्यदं शुभम्॥

**नारायण उवाच—**

राजराजेश्वरः श्रीमान्सगरः सूर्यवंशजः। तस्य भार्या च वैदर्भी शैब्या च द्वे मनोहरे ॥
सत्यस्वरूपः सत्येष्टः सत्यवाक्सत्यभावनः। सत्यधर्मविचारज्ञः परं सत्ययुगोद्भवः॥५॥
एकस्यामेव पुत्रश्च बभूव सुमनोहरः। असमञ्ज इति ख्यातः शैब्यायां कुलवर्धनः॥६॥
अन्या चाऽऽराधयामास शंकरं पुत्रकामुकी। बभूव गर्भस्तस्याश्च शिवस्य तु वरेण च ॥

---

१ क. शिवाम°। २ क. शुक्तिपत्रं शि°। ३ क. परसत्त्वगुणोद्भ°।

गते शताब्दे पूर्णे च मांसपिण्डं सुषाव सा । तद्दृष्ट्वा च शिवं ध्यात्वा रुरोदोच्चैः पुनः पुनः
शंभुर्ब्राह्मणरूपेण तत्समीपं जगाम ह । चकार संविभज्यैतत्पिण्डं षष्टिसहस्रधा ॥ ९ ॥
सर्वे बभूवुः पुत्राश्च महाबलपराक्रमाः । ग्रीष्ममध्याह्नमार्तण्डप्रभाजुष्टकलेवराः ॥ १० ॥
कपिलर्षेः कोपदृष्ट्या बभूवुर्भस्मसाच्च ते । राजा रुरोद तच्छ्रुत्वा जगाम मेरगं शुचा ॥
तपश्चचाराऽनघमञ्जो गङ्गानयनकारणात् । तपः कृत्वा लक्षवर्षं ममार कालयोगतः १२
दिलीपस्तस्य तनयो गङ्गानयनकारणात् । तपः कृत्वा लक्षवर्षं ययौ लोकान्तरं नृपः ॥
अंशुमाँस्तस्य पुत्रश्च गङ्गानयनकारणात् । तपः कृत्वा लक्षवर्षं मृतश्च कालयोगतः ॥
भगीरथस्तस्य पुत्रो महाभागवतः सुधीः । वैष्णवो विष्णुभक्तश्च गुणवानजरामरः ॥ १६ ॥
तपः कृत्वा लक्षवर्षं गङ्गानयनकारणात् । ददर्श कृष्णं हृष्टास्यं सूर्यकोटिसमप्रभम् ॥
द्विभुजं मुरलीहस्तं किशोरं गोपवेषकम् । परमात्मानमीशं च भक्तानुग्रहविग्रहम् ॥ १७ ॥
स्वेच्छामयं परं ब्रह्म परिपूर्णतमं विभुम् । ब्रह्मविष्णुशिवाद्यैश्च स्तुतं मुनिगणैर्नुतम् १८ ॥
निर्लिप्तं साक्षिरूपं च निर्गुणं प्रकृतेः परम् । ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम् ॥
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम् । तुष्टाव दृष्ट्वा नृपतिः प्रणम्य च पुनः पुनः ॥
लीलया च वरं प्राप्य वाञ्छितं वंशतारकम् । तत्राऽऽजगाम गङ्गा सा स्मरणात्परमात्मनः
तं प्रणम्य पतस्थौ च तत्पुरः संपुटाञ्जलिः । उवाच भगवांस्तत्र तां दृष्ट्वा सुमनोहराम् ॥
कुर्वतीं स्तवनं दिव्यं पुलकाञ्चितविग्रहाम् ॥ २२ ॥

श्रीकृष्ण उवाच—

भारतं भारतीशापाद्गच्छ शीघ्रं सुरेश्वरि ॥ २३ ॥
सगरस्य सुतान्सर्वान्पूतान्कुरु ममाऽऽज्ञया । त्वत्स्पर्शवायुना पूता यास्यन्ति मम मन्दिरम्
बिभ्रतो दिव्यमूर्तिं ते दिव्यस्यन्दनगामिनः । मत्पार्षदा भविष्यन्ति सर्वकालं निरामयाः ॥
कर्मभोगं समुच्छिद्य कृतं जन्मनि जन्मनि । नानाविधं महत्स्वल्पं पापं स्याद्भारते नृभिः ॥
गङ्गायाः स्पर्शवातेन नश्यतीति श्रुतौ श्रुतम् । स्पर्शनं दर्शनाद्देव्याः पुण्यं दशगुणं ततः ॥
मौसलस्नानमात्रेण सामान्यदिवसे नृणाम् । कोटिजन्मार्जितं पापं नश्यतीति श्रुतौ श्रुतम् ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च । नानाजन्मार्जितान्येव कामतोऽपि कृतानि च
तानि सर्वाणि नश्यन्ति मौसलस्नानतो नृणाम् । पुण्याहस्नानजं पुण्यं वेदा नैव विदन्ति च
केचिद्विदन्ति ते देवि फलमेव यथागमम् । ब्रह्मविष्णुशिवाद्याश्च सर्वं नैव विदन्ति च ॥ २१ ॥

१ क ०म च वनं शु०।

सामान्यदिवसस्नानसंकल्पं शृणु सुन्दरि । पुण्यं दशगुणं चैव मौसलस्नानतः परम् ॥
तत्त्रिंशद्गुणं पुण्यं रविसंक्रमणे दिने । अमायां चापि तत्तुल्यं द्विगुणं दक्षिणायने ॥ ३३ ॥
ततो दशगुणं पुण्यं नराणामुत्तरायणे । चातुर्मास्यां पौर्णमास्यामनन्तं पुण्यमेव च ॥ ३४ ॥
अक्षयायां च तत्तुल्यं नैतद्वेदे निरूपितम् । असंख्यपुण्यफलदमेतेषु स्नानदानकम् ॥ ३५ ॥
सामान्यदिवसे स्नानं ध्यानाच्छतगुणं फलम् । मन्वन्तरेषु देवेशि युगादिषु तथैव च ॥
माघस्य सितसप्तम्यां भीष्माष्टम्यां तथैव च । तथाऽशोकाष्टमीतिथ्यां नवम्यां च तथा हरेः ॥
ततोऽपि द्विगुणं पुण्यं नन्दायां तव दुर्लभम् । दशपापहरायां तु दशम्यां सुमहत्फलम् ॥
नन्दासमं च वारुण्यां महत्पूर्वे चतुर्गुणम् । ततश्चतुर्गुणं पुण्यं द्विमहत्पूर्वके सति ॥ ३९ ॥
पुण्यं कोटिगुणं चैव सामान्यस्नानतो भवेत् । चन्द्रसूर्योपरागेषु स्मृतं दशगुणं ततः ॥ ४० ॥
पुण्येऽप्यर्धोदये काले ततः शतगुणं फलम् । सर्वेषामेव संकल्पो वैष्णवानां विपर्ययः ॥ ४१ ॥
फलसंधानरहिता जीवन्मुक्ताश्च वैष्णवाः । नित्यनैमित्तिकास्ते सर्वेषां सर्वकर्मसु ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशेन्नरः । जीवन्मुक्तं वैष्णवं तं वेदाः सर्वे वदन्ति च ॥
पुरुषाणां शतं पूर्वं पैतृकं च परं शतम् । मातामहस्य च शतं मातरं मातृमातरम् ॥ ४४ ॥
भगिनीं भ्रातरं चैव भागिनेयं च मातुलम् । श्वश्रूं च श्वशुरं चैव गुरुपत्नीं गुरोः सुतम् ॥
गुरुं च ज्ञानदातारं मित्रं च सहचारिणम् । भृत्यं शिष्यं तथा चेटीं प्रजा स्वाश्रमसंनिधौ
उद्धरेदात्मना सार्धं मन्त्रग्रहणमात्रतः । मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ॥ ४७ ॥
तस्य संस्पर्शनात्पूतं तीर्थं च भुवि भारते । तस्यैव पादरजसा सद्यः पूता वसुंधरा ॥ ४८ ॥
पादोदकस्थानमिदं तीर्थमेव भवेद्ध्रुवम् । अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ॥ ४९ ॥
खादन्ति नो वैष्णवाश्च सदा नैवेद्यभोजिनः । विष्णोर्निवेदितान्नं च नित्यं ये भुञ्जते नराः
पूतानि सर्वतीर्थानि तेषां च स्पर्शनाद्धो । विष्णोः पादोदकं पुण्यं नित्यं ये भुञ्जते नराः
तत्पापानि पलायन्ते वैनतेयादिवोरगाः । तेषां दर्शनमात्रेण पूतं च भुवनत्रयम् ॥ ५२ ॥
विष्णोः सुदर्शनं चक्रं सततं तांश्च रक्षति । मद्गुणश्रवणाद्ये च पुलकाङ्कितविग्रहाः ॥
गद्गदाः साश्रुनेत्राश्च नरास्ते वैष्णवोत्तमाः । पुत्रादपि परः स्नेहो मयि येषां निरन्तरम् ॥
गृहाद्याश्च मयि न्यस्तास्ते नरा वैष्णवोत्तमाः ॥ ५४ ॥
आब्रह्मस्तम्बपर्यन्तं मत्तः सर्वं चराचरम् । सर्वेषामहमेवेश इतिज्ञा वैष्णवोत्तमाः ॥ ५५ ॥
असंख्यकोटिब्रह्माण्डे ब्रह्मविष्णुशिवादयः । प्रलये मयि लीयन्ते चेतिज्ञा वैष्णवोत्तमाः ॥
तेजःस्वरूपं परमं भक्तानुग्रहविग्रहम् । स्वेच्छामयं निर्गुणं च निरीहं प्रकृतेः परम् ॥

१ क. °शहरादशम्यां च युगाद्यादिसमं फ° ।

सर्वे प्राकृतिका मत्त आविर्भूतास्तिरोहिताः । इति जानन्ति ये देवि ते नरा वैष्णवोत्तमाः
इत्येवमुक्त्वा देवेशो विरराम तयोः पुरः । उवाच तं त्रिपथगा भक्तिनम्रात्मकंधरा ॥

गङ्गोवाच—

यामि चेद्भारतं नाथ भारतीशापतः पुरा । तवाऽऽज्ञया च राजेन्द्र तपसा चैव सांप्रतम् ॥
यानि कानि च पापानि मह्यं दास्यन्ति पापिनः । तानि मे केन नश्यन्ति तदुपायं वद प्रभो
कति कालं परिमितं स्थितिर्मे तत्र भारते । कदा यास्यामि सर्वेश तद्विष्णोः परमं पदम् ।
ममान्यद्वाञ्छितं यद्यत्सर्वं जानासि सर्ववित् । सर्वान्तरात्मन्सर्वज्ञ तदुपायं वद प्रभो ।

श्रीकृष्ण उवाच—

जानामि वाञ्छितं गङ्गे तव सर्वं सुरेश्वरि । पतिस्ते रुद्ररूपोऽयं लवणोदो भविष्यति ।
ममैवांशः समुद्रश्च त्वं च लक्ष्मीस्वरूपिणी । विदग्धाया विदग्धेन संगमो गुणवान्भुवि ॥
यावत्यः सन्ति नद्यश्च भारत्याद्याश्च भारते । सौभाग्यं तव तास्वेव लवणोदस्य सौरते ॥
अद्यप्रभृति देवेशि कलेः पञ्चसहस्रकम् । वर्षं स्थितिस्ते भारत्या भुवि शापेन भारते ॥
नित्यं वारिधिना सार्धं करिष्यसि रहो रतिम् । त्वमेव रसिका देवी रसिकेन्द्रेण संयुता ॥
त्वां तोषयन्ति स्तोत्रेण भगीरथकृतेन च । भारतस्था जनाः सर्वे पूजयिष्यन्ति भक्तितः
ध्यानेन कौथुमोक्तेन ध्यात्वा त्वां पूजयिष्यति । यः स्तौति प्रणमेन्नित्यं सोऽश्वमेधफलं लभेत्
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥
सहस्रपापिनां स्नानाद्यत्पापं ते भविष्यति । मद्भक्तदर्शने तावत्तदैव हि विनश्यति ॥७२॥
पापिनां तु सहस्राणां शवस्पर्शेन यत्तव । मन्मन्त्रोपासकस्नानात्तदघं च विनश्यति ॥७३॥
यत्र यत्र भवेद्गङ्गे मन्नामगुणकीर्तनम् । तत्रैव त्वमधिष्ठानं करिष्यस्यघमोचनात् ॥७४॥
सार्धं सरिद्भिः श्रेष्ठाभिः सरस्वत्यादिभिः शुभे । तत्तु तीर्थं भवेत्सद्यो यत्र मद्गुणकीर्तनम्
यद्रेणुस्पर्शमात्रेण पूतो भवति पातकी । रेणुप्रमाणं वर्षं च स वैकुण्ठे वसेद्ध्रुवम् ॥७६॥
स्नास्यन्ति त्वयि ये भक्ता मन्नामस्मृतिपूर्वकम् । समुत्सृजन्ति प्राणांश्च ते गच्छन्ति हरेः पदम्
पार्षदप्रवरास्ते च भविष्यन्ति हरेश्चिरम् । असंख्यकं प्राकृतिकं लयं द्रक्ष्यन्ति ते नराः ॥
मृतस्य बहुपुण्येन तच्छवं त्वयि विन्यसेत् । प्रयाति स च वैकुण्ठं यावदस्थ्नां स्थितिस्त्वयि
कायव्यूहं ततः कृत्वा भोजयित्वा स्वकर्मजम् । तस्मै ददामि सारूप्यं तं करोमि च पार्षदम्
अज्ञानी त्वज्जलस्पर्शाद्यदि प्राणान्समुत्सृजेत् । तस्मै ददामि सारूप्यं तं करोमि च पार्षदम्
अन्यत्र वा त्यजेत्प्राणांस्त्वन्नामस्मृतिपूर्वकम् । तस्मै ददामि सारूप्यमसंख्यं प्राकृतं लयम्

---

१ क. °प्राणान्मन्ना° ।

अन्यत्र वा त्यजेत्प्राणान्मन्नामस्मृतिपूर्वकम् । तस्मै ददामि सालोक्यं यावद्वै ब्रह्मणो वयः
तीर्थेऽप्यतीर्थे मरणे विशेषो नास्ति कश्चन । मन्मन्त्रोपासकानां च नित्यं नैवेद्यभोजिनाम्
पूतं कर्तुं स शक्तो हि लीलया भुवनत्रयम् । रत्नेन्द्रसारनिर्माणयानेन सह पार्षदैः ॥
सद्यः स याति गोलोकं मम तुल्यो भवेद्ध्रुवम् ॥ ८९ ॥
मद्भक्तबान्धवा ये ये ते ते पुण्यधियः शुभे । ते यान्ति रत्नयानेन गोलोकं च सुदुर्लभम् ॥
यत्र यत्र मृता ये च ज्ञानाज्ज्ञानेन वा सति जीवन्मुक्ताश्च ते पूता भक्तसंनिधिमात्रतः ॥
इत्युक्त्वा श्रीहरिस्तां च तमुवाच भगीरथम् । स्तुहि गङ्गामिमां भक्त्या पूजां कुरु च सांप्रतम्
भगीरथस्तां तुष्टाव पूजयामास भक्तितः । ध्यानेन कौथुमोक्तेन स्तोत्रेण च पुनः पुनः ॥
श्रीकृष्णं प्रणनामाथ परमात्मानमीश्वरम् । भगीरथश्च गङ्गां च सोऽन्तर्धानं गतो हरिः ॥

नारद उवाच—

स्तोत्रेण केन ध्यानेन केन पूजाक्रमेण च । पूजां चकार नृपतिर्वद वेदविदां वर ॥ ९१ ॥

श्रीनारायण उवाच—

स्नात्वा नित्यक्रियां कृत्वा धृत्वा धौते च वाससी । पादौ प्रक्षाल्य चाऽऽचम्य संयतो भक्तिपूर्वकम् ॥ ९२ ॥
गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवम् । संपूजयेन्नरः शुद्धः सोऽधिकारी च पूजने
गणेशं विघ्ननाशाय निष्पापाय दिवाकरम् । वह्निं स्वशुद्धये विष्णुं मुक्तये पूजयेन्नरः ॥
शिवं ज्ञानाय ज्ञानेशं शिवां बुद्धिविवृद्धये । संपूज्यैतल्लभेत्प्राज्ञो विपरीतमतोऽन्यथा ॥
दध्यावनेन तद्ध्यानं शृणु नारद तत्त्वत । ध्यानं च कौथुमोक्तं वै सर्वपापप्रणाशनम् ॥
श्वेतचम्पकवर्णाभां गङ्गां पापप्रणाशिनीम् । कृष्णविग्रहसंभूतां कृष्णतुल्यां परां सतीम् ॥
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् । शरत्पूर्णेन्दुशतकप्रभाजुष्टकलेवराम् ॥९८॥
ईषद्धास्यप्रसन्नास्यां शश्वत्सुस्थिरयौवनाम् नारायणप्रियां शान्तां सत्सौभाग्यसमन्विताम्
बिभ्रतीं कबरीभारं मालतीमाल्यसंयुताम् । सिन्दूरबिन्दुललितां सार्धं चन्दनबिन्दुभिः ।
कस्तूरीपत्रकं गण्डे नानाचित्रसमन्वितम् । पक्वबिम्बप्रमानैकचार्वोष्ठपुटमुत्तमम् ॥१०१॥
मुक्तापङ्क्तिप्रभाजुष्टदन्तपङ्क्तिमनोहराम् । सुचारुवक्त्रनयनां सकटाक्षमनोरमाम् ॥
कठिनं श्रीफलाकारं स्तनयुग्मं च बिभ्रतीम् । बृहच्छ्रोणीं सुकठिनां रम्भास्तम्भविनिन्दिताम्
स्थलपद्मप्रभाजुष्टपादपद्मयुगं धराम् । रत्नाभरणसंयुक्तं कुङ्कुमाक्तं सयावकम् ।१०४॥
देवेन्द्रमौलिमन्दारमकरन्दकणारुणम् । सुरसिद्धमुनीन्द्रादिदत्तार्घ्यैः संयुतं सदा ॥१०५॥

---

१ ख. °य तदीनां शि° । २ क °रां गति° । ३ ख. °म्भपरिष्कृता° ।

तपस्विमौलिनिकरभ्रमरश्रेणिसंयुतम् । मुक्तिप्रदं मुमुक्षूणां कामिनां स्वर्गभोगदम् ॥ १०६॥
वरां वरेण्यां वरदां भक्तानुग्रहविग्रहाम् । श्रीविष्णोः पददात्रीं च भजे विष्णुपदीं सतीम् ॥
इति ध्यानेन चानेन ध्यात्वा त्रिपथगां शुभाम् । दत्त्वा संपूजयेद्ब्रह्मन्नुपचारांश्च षोडश ॥
आसनं पाद्यमर्घ्यं च स्नानीयं चानुलेपनम् । धूपं दीपं च नैवेद्यं ताम्बूलं शीतलं जलम् ॥
वसनं भूषणं माल्यं गन्धमाचमनीयकम् । मनोहरं सुतल्पं च देयान्येतानि षोडश ॥
दत्त्वा भक्त्या संप्रणमेत्स्तुत्वा तां संपुटाञ्जलिः । संपूज्यैवंप्रकारेण सोऽश्वमेधफलं लभेत् ॥
स्तोत्रं वै कौथुमोक्तं च संवादं विष्णुवेधसोः । शृणु नारद वक्ष्यामि पापघ्नं च सुपुण्यदम् ॥

ॐ नमो गङ्गायै । श्रीब्रह्मोवाच—

श्रोतुमिच्छामि देवेश लक्ष्मीकान्त जगत्प्रभो । विष्णो विष्णुपदीस्तोत्रं पापघ्नं पुण्यकारणम्

श्रीनारायण उवाच—

शिवसंगीतसंमुग्धश्रीकृष्णाङ्गद्रवोद्भवाम् । राधाङ्गद्रवसंभूतां तां गङ्गां प्रणमाम्यहम् ॥
या जन्मसृष्टेरादौ च गोलोके रासमण्डले । सन्निधाने शंकरस्य तां० ॥ ११५ ॥
गोपैर्गोपीभिराकीर्णे शुभे राधामहोत्सवे । कार्तिकीपूर्णिमाजातां तां० ॥ ११६ ॥
कोटियोजनविस्तीर्णा दैर्घ्ये लक्षगुणा ततः । समावृता या गोलोकं तां० ॥ ११७ ॥
षष्टिलक्षैर्योजनैर्या ततो दैर्घ्ये चतुर्गुणा । समावृता या वैकुण्ठं तां० ॥ ११८ ॥
त्रिंशल्लक्षैर्योजनैर्या ततो दैर्घ्ये चतुर्गुणा । आवृता ब्रह्मलोकं या तां० ॥ ११९ ॥
त्रिंशल्लक्षैर्योजनैर्या दैर्घ्ये पञ्चगुणा ततः । आवृता शिवलोकं या तां० ॥ १२० ॥
षड्योजनसुविस्तीर्णा दैर्घ्ये दशगुणा ततः । मन्दाकिनी यैन्द्रलोके तां० ॥ १२१ ॥
लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः । आवृता ध्रुवलोकं या तां० ॥ १२२ ॥
लक्षयोजनविस्तीर्णा दैर्घ्ये षड्गुणिता ततः । आवृता चन्द्रलोकं या तां० ॥ १२३ ॥
योजनैः षष्टिसाहस्रैर्दैर्घ्ये दशगुणा ततः । आवृता सूर्यलोकं या तां० ॥ १२४ ॥
लक्षयोजनविस्तीर्णा दैर्घ्ये षड्गुणिता ततः । आवृता सत्यलोकं या तां० ॥ १२५ ॥
दशलक्षैर्योजनैर्या दैर्घ्ये पञ्चगुणा ततः । आवृता या तपोलोकं तां० ॥ १२६ ॥
सहस्रयोजना या च दैर्घ्ये सप्तगुणा ततः । आवृता जनलोकं या तां० ॥ १२७ ॥
सहस्रयोजनायामा दैर्घ्ये सप्तगुणा ततः । आवृता या च कैलासं तां० ॥ १२८ ॥
पाताले या भोगवती विस्तीर्णा दशयोजना । ततो दशगुणा दैर्घ्ये तां० ॥ १२९ ॥

---

१ क. °न्त जगत्प्र° ।

क्रोशैकमात्रविस्तीर्णा ततः क्षीणा न कुत्रचित् । क्षितौ चालकनन्दा या तां० ॥ १३० ॥
सत्ये या क्षीरवर्णा च त्रेतायामिन्दुसंनिभा । द्वापरे चन्दनाभा च तां० ॥ १३१ ॥
जलप्रभा कलौ या च नान्यत्र पृथिवीतले । स्वर्गे च नित्यं क्षीराभा तां० ॥ १३२ ॥
यस्याः प्रभाव अतुलः पुराणे च श्रुतौ श्रुतः । या पुण्यदा पापहर्त्री तां० ॥ १३३ ॥
यत्तोयकणिकास्पर्शः पापिनां च पितामह । ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत् ॥
इत्येवं कथितं ब्रह्मन्गङ्गापद्यैकविंशतिम् । स्तोत्ररूपं च परमं पापघ्नं पुण्यबीजकम्[1] ३५॥
नित्यं यो हि पठेद्भक्त्या संपूज्य च सुरेश्वरम् । अश्वमेधफलं नित्यं लभते नात्र संशयः ॥
अपुत्रो लभते पुत्रं भार्याहीनो लभेत्प्रियाम् । रोगान्मुच्येत रोगी च बद्धो मुच्येत बन्धनात्
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः । यः पठेत्प्रातरुत्थाय गङ्गास्तोत्रमिदं शुभम् ॥
शुभं भवेत्तु दुःस्वप्ने गङ्गास्नानफलं भवेत् ॥ १३९ ॥

नारायण उवाच—

भगीरथोऽनया स्तुत्या स्तुत्वा गङ्गां च नारद । जगाम तां गृहीत्वा च यत्र नष्टाश्च सागराः
वैकुण्ठं ते ययुस्तूर्णं गङ्गायाः स्पर्शवायुना । भगीरथेन साऽऽनीता तेन भागीरथी स्मृता ॥
इत्येवं कथितं सर्वं गङ्गोपाख्यानमुत्तमम् । पुण्यदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥

नारद उवाच—

शिवसंगीतसंमुग्धे श्रीकृष्णे द्रवतां गते । द्रवतां च गतायां च राधायां किं बभूव ह ॥
तत्रस्थाश्च जना ये ये ते च किं चक्रुरुद्यमम् । एतत्सर्वं सुविस्तीर्णं प्रभो वक्तुमिहार्हसि ॥

नारायण उवाच—

कार्तिकीपूर्णिमायां च राधायाः सुमहोत्सवे । कृष्णः संपूज्य तां राधामवसद्रासमण्डले ॥
कृष्णेन पूजितां तां तु संपूज्याऽऽहृतमानसाः । ऊचुर्ब्रह्मादयः सर्वे ऋषयः सनकादयः ॥
एतस्मिन्नन्तरे कृष्णसंगीतं च सरस्वती । जगौ सुन्दरतानेन वीणया च मनोहरम् ॥
तुष्टो ब्रह्मा ददौ तस्यै महारत्नाढ्यमालिकाम् । शिरोमणीन्द्रसारं च सर्वब्रह्माण्डदुर्लभम् ॥
कृष्णः कौस्तुभरत्नं च सर्वरत्नात्परं वरम् । अमूल्यरत्नखचितं हारसारं च राधिका ॥
नारायणश्च भगवान्वनमालां मनोहराम् । अमूल्यरत्नकालिं च लक्ष्मीर्मकरकुण्डलम् ॥
विष्णुमाया भगवती मूलप्रकृतिरीश्वरी । दुर्गा नारायणीशानी विष्णुभक्तिं सुदुर्लभाम्[2] ॥
धर्मबुद्धिं च धर्मस्तु यशश्च विपुलं भवे । वह्निशुद्धांशुकं वह्निर्वायुश्च मणिनूपुरम् ॥

---

१ क. °तालेन । २ क °णिहारकम् ।

एतस्मिन्नन्तरे शंभुर्ब्रह्मणा प्रेरितो मुहुः। जगौ श्रीकृष्णसंगीतं रासोल्लाससमन्वितम्॥
मूर्छां प्रापुः सुराः सर्वे चित्रपुत्तलिका यथा। क्षणेन चेतनां प्राप्य ददृशू रासमण्डलम्॥
स्थलं सर्वं जलाकीर्णं हीनराधाहरिं तथा। अत्युच्चै रुरुदुः सर्वे गोपा गोप्यः सुरा द्विजाः॥
ध्यानेन धाता बुबुधे सर्वमेतदभीप्सितम्। गतश्च राधया सार्धं श्रीकृष्णो द्रवतामिति॥
ततो ब्रह्मादयः सर्वे तुष्टुवुः परमेश्वरम्। स्वमूर्तिं दर्शय विभो वाञ्छितो वर एष नः॥
एतस्मिन्नन्तरे तत्र वागभूवाशरीरिणी। तामेव शुश्रुवुः सर्वे सुव्यक्तां मधुरां शुभाम्॥
सर्वात्माऽहमियं शक्तिर्भक्तानुग्रहविग्रहा। ममाप्यस्याश्च हे देवा देहेन च किमावयोः॥
मनवो मानवाः सर्वे मुनयश्चैव वैष्णवाः। मन्मन्त्रपूता मां द्रष्टुमागमिष्यन्ति मत्पदम्॥
मूर्तिं द्रष्टुं च सुव्यग्रा यूयं यदि सुरेश्वराः। करोतु शंभुस्तत्रैव मदीयं वाक्यपालनम्॥
स्वयं विधाता त्वं ब्रह्मन्नाज्ञां कुरु जगद्गुरो। कर्तुं शास्त्रविशेषं च वेदाङ्गं सुमनोहरम्॥
अपूर्वमन्त्रनिकरैः सर्वाभीष्टफलप्रदैः। स्तोत्रैश्च कवचैर्ध्यानैर्युतं पूजाविधिक्रमैः॥६१॥
मन्मन्त्रं कवचं स्तोत्रं कृत्वा यत्नेन गोपय। भवन्ति विमुखा ये न जनानां यत्करिष्यति॥
सहस्रेषु शतेष्वेको मन्मन्त्रोपासको भवेत्। ते ते जना मन्त्रपूताश्चाऽऽगमिष्यन्ति मत्पदम्॥
अन्यथा च भविष्यन्ति सर्वे गोलोकवासिनः। निष्फलं भविता सर्वं ब्रह्माण्डं चैव वेधसः॥
जनाः पञ्चप्रकाराश्च युक्ताः सृष्टुर्भवे भवे। पृथिवीवासिनः केचित्केचित्स्वर्गनिवासिनः॥
अधोनिवासिनः केचिद्ब्रह्मलोकनिवासिनः। केचिद्वा वैष्णवाः केचिन्मम लोकनिवासिनः॥
इदं कर्तुं महादेवः करोतु सुरसंसदि। प्रतिज्ञां सुदृढां सद्यस्ततो मूर्तिं च पश्यसि॥६९॥
इत्येवमुक्त्वा गगने विरराम सनातनः। तद्दृष्ट्वा तां जगद्धाता तमुवाच शिवं मुदा॥
ब्रह्मणो वचनं श्रुत्वा ज्ञानेशो ज्ञानिनां वरः। गङ्गातोयं करे धृत्वा स्वीचकार वचस्तु सः॥
संयुक्तं विष्णुमायाद्यैर्मन्त्राद्यैः शास्त्रमुत्तमम्। वेदसारं करिष्यामि कृष्णाज्ञापालनाय च॥
गङ्गातोयमुपस्पृश्य मिथ्या यदि वदेज्जनः स याति कालसूत्रं च यावद्वै ब्रह्मणो वयः॥
इत्युक्ते शंकरे ब्रह्मन्गोलोके सुरसंसदि। आविर्बभूव श्रीकृष्णो राधया सह तत्पुरः॥
ते तं दृष्ट्वा च संहृष्टाः संस्तूय पुरुषोत्तमम्। परमानन्दपूर्णाश्च चक्रुश्च पुनरुत्सवम्॥
कालेन शंभुर्भगवाञ्ज्ञानप्रदीपं चकार सः। इत्येवं कथितं सर्वं सुगोप्यं च सुदुर्लभम्॥
सा चैवं द्रवरूपा या गङ्गा गोलोकसंभवा। राधाकृष्णाङ्गसंभूता भुक्तिमुक्तिफलप्रदा॥
स्थाने स्थाने स्थापिता सा कृष्णेन परमात्मना। कृष्णस्वरूपा परमा सर्वब्रह्माण्डपूजिता॥

इति श्रीब्रह्म० महा० प्रकृ० नारदना० गङ्गोपाख्यानं नाम दशमोऽध्यायः॥ १०॥

---

अथैकादशोऽध्यायः ।

नारद उवाच—

कलेः पञ्चसहस्राब्दे समतीते सुरेश्वरी । क गता सा महाभागा तन्मे व्याख्यातुमर्हसि ॥

नारायण उवाच—

भारतं भारतीशापात्समागत्येश्वरेच्छया । जगाम तं च वैकुण्ठं शापान्ते पुनरेव सा ॥
भारतं भारती त्यक्त्वा चागमत्तद्धरेः पदम् । पद्मावती च शापान्ते गङ्गायाश्चैव नारद ॥
गङ्गा सरस्वती लक्ष्मी चैतास्तिस्रः प्रिया हरेः । तुलसीसहिता ब्रह्मंश्चतस्रः कीर्तिताः श्रुतौ ॥

नारद उवाच—

हेतुना केन देवी वै विष्णुपादाब्जसंभवा । धातुः कमण्डलुस्था च शंकरस्य शिरोगता ॥
बभूव सा मुनिश्रेष्ठ गङ्गा नारायणप्रिया । अहो केन प्रकारेण तन्मे व्याख्यातुमर्हसि ॥

श्रीनारायण उवाच—

पुरा बभूव गोलोके सा गङ्गा द्रवरूपिणी । राधाकृष्णाङ्गसंभूता तदंशा तत्स्वरूपिणी ॥
द्रवाधिष्ठातृरूपा या रूपेणाप्रतिमा भुवि । नवयौवनसंपन्ना रत्नाभरणभूषिता ॥ ८ ॥
शरन्मध्याह्नपद्मास्या सस्मिता सुमनोहरा । तप्तकाञ्चनवर्णाभा शरच्चन्द्रसमप्रभा ॥
स्निग्धप्रभाऽतिसुस्निग्धा शुद्धसत्त्वस्वरूपिणी । सुपीनकठिनश्रोणी सुनितम्बयुगं वरम् ॥
पीनोन्नतं सुकठिनं स्तनयुग्मं सुवर्तुलम् । सुचारुनेत्रयुगलं सुकटाक्षं सुवङ्किमम् ॥ ११ ॥
वङ्किमं कबरीभारं मालतीमाल्यसंयुतम् । सिन्दूरबिन्दुललितं सार्धं चन्दनबिन्दुभिः ॥
कस्तूरीपत्रिकायुक्तं गण्डयुग्मं मनोहरम । बन्धूककुसुमाकारमधरोष्ठं च सुन्दरम् ॥
पक्वदाडिमबीजाभदन्तपङ्क्तिसमुज्ज्वलाम् । वाससी वह्निशुद्धे च नीवीयुक्ते च बिभ्रती ॥
सा सकामा कृष्णपार्श्वे समुत्तस्थे सुलज्जिता वाससा मुखमाच्छाद्य लोचनाभ्यां विभोर्मुखम्[1]
निमेषरहिताभ्यां च पिबन्ती सततं मुदा । प्रफुल्लवदना हर्षान्नवसंगमलालसा ॥ १६ ॥
मूर्छिता प्रभुरूपेण पुलकाङ्कितविग्रहा । एतस्मिन्नन्तरे तत्र विद्यमाना च राधिका ॥ १७ ॥
गोपीत्रिंशत्कोटियुक्ता कोटिचन्द्रसमप्रभा । कोपेन रक्तपद्मास्या रक्तपङ्कजलोचना ॥
श्वेतचम्पकवर्णाभा मत्तवारणगामिनी । अमूल्यरत्नखचितनानाभरणभूषिता ॥ १९ ॥
माणिक्यखचितं हारममूल्यं वह्निशौचकम् । पीताम्बरयुगलं नीवीयुक्तं च बिभ्रती ॥
स्थलपद्मप्रभाजुष्टं कोमलं च सुरञ्जितम् । कृष्णदत्तार्घ्यसंयुक्तं विन्यस्यन्ती पदाम्बुजम् ॥

---

१ ख. °ता । पद्मपत्रसमानाभ्यां लो० ।

रत्नेन्द्रराजखचितविमानादवरुह्य च । सेव्यमाना च सखिभिः श्वेतचामरवायुना ॥२२॥
कस्तूरीबिन्दुतिलकं चन्दनेन्दुसमन्वितम् । दीप्तदीपप्रभाकारं सिन्दूरारुणसुन्दरम् ॥२३॥
दधती भालमध्ये च सीमन्ताधस्तदुज्ज्वलम् । पारिजातप्रसूनादिमालयुक्तं सुवक्रिमम् ॥
सुचारुकबरीभारं कम्पयन्ती च कामिनी । सुचारुनासा संयुक्तमोष्ठं कम्पयती रुषा ॥
गत्वा तस्थौ कृष्णपार्श्वे रत्नसिंहासने वरे । सखीनां च समूहैश्च परिपूर्णा विभोः सभा ॥
तां च दृष्ट्वा समुत्तस्थौ कृष्ण सादरमच्युतः । संभाष्य मधुरालापैः सस्मितश्च ससंभ्रमः
प्रणेमुरतिभक्ताश्च गोपा नम्रात्मकंधरा । तुष्टुवुस्ते च भक्त्या तं तुष्टाव परमेश्वरः ॥२८॥
उत्थाय गङ्गा सहसा संभाषां च चकार सा । कुशलं परिपप्रच्छ भीताऽतिविनयेन च ॥२९॥
नम्रभावस्थिता त्रस्ता शुष्ककण्ठौष्ठतालुका । ध्यानेन शरणापन्ना श्रीकृष्णचरणाम्बुजे ॥
तद्धृत्पद्मे स्थितः कृष्णो भीतायै चाभयं ददौ । बभूव स्थिरचित्ता सा सर्वेश्वरवरेण च ॥
ऊर्ध्वे सिंहासनस्थां च राधां गङ्गा ददर्श सा । सुस्निग्धां सुखदृश्यां च ज्वलन्तीं ब्रह्मतेजसा ॥
असंख्यब्रह्मणामाद्यां चाऽऽदिसृष्टिं सनातनीम् । यथा द्वादशवर्षीयां कन्यां च नवयौवनाम् ॥
विश्ववृन्दे निरुपमां रूपेण च गुणेन च । शान्तां कान्तामनन्तां तामाद्यन्तरहितां सतीम् ॥
शुभां सुभद्रां सुभगां स्वामिसौभाग्यसंयुताम् । सौन्दर्यसुन्दरीं श्रेष्ठां सुन्दरीष्वखिलासु च ॥
कृष्णार्धाङ्गीं कृष्णसमां तेजसा वयसा त्विषा । पूजितां च महालक्ष्म्या महालक्ष्मीश्वरेण च ॥
प्रच्छाद्यमानां प्रभया सभायामस्य सुप्रभाम् । सखीदत्तं च ताम्बूलं गृह्णतीमन्यदुर्लभम् ॥
अजन्यां सर्वजननीं धन्यां मान्यां च मानिनीम् । कृष्णप्राणाधिदेवीं च प्राणप्रियतमां रमाम् ॥
दृष्ट्वा रासेश्वरीं तृप्तिं न जगाम सुरेश्वरी । निमेषरहिताभ्यां च लोचनाभ्यां पपौ च ताम् ॥
एतस्मिन्नन्तरे राधा जगदीशमुवाच सा । वाचा मधुरया शान्ता विनीता सस्मिता मुने ॥

राधिकोवाच —

केयं प्राणेश कल्याणी सस्मिता त्वन्मुखाम्बुजम् । पश्यन्ती सततं पार्श्वे सकामा रक्तलोचना ॥
मूर्च्छां प्राप्नोति रूपेण पुलकाङ्कितविग्रहा । वस्त्रेण मुखमाच्छाद्य निरीक्षन्ती पुनः पुनः ॥
त्वं चापि मां संनिरीक्ष्य सकामः[3] सस्मितः सदा । मयि जीवति गोलोके भूता दुर्वृत्तिरीदृशी ॥
त्वमेव चैवं दुर्वृत्तं वारं वारं करोषि च । क्षमां करोमि ते प्रेम्णा स्त्रीजातिः स्निग्धमानसा ॥
संगृह्येमां प्रियामिष्टां गोलोकाद्गच्छ लम्पट । अन्यथा नहि ते भद्रं भविष्यति सुरेश्वर[4] ॥
दृष्टस्त्वं विरजायुक्तो मया चन्दनकानने । क्षमा कृता मया पूर्वं सखीनां वचनादहो ॥४१॥

---

१ ख. 'रभिसंत्रस्ता गो' । २ क 'वुश्चातिसंतुष्टास्तु' । ३ क. 'म इव स । ४ क. 'ति वजेश्वर ।

त्वया मच्छब्दमात्रेण तिरोधानं कृतं पुरा देहं संत्यज्य विरजा नदीरूपा बभूव सा॥ ४७॥
कोटियोजनविस्तीर्णा ततो दैर्घ्ये चतुर्गुणा। अद्यापि विद्यमाना सा तव सत्कीर्तिरूपिणी॥
गृहं मयि गतायां च पुनर्गत्वा तदन्तिकम्। उच्चैररोदीर्विरजे विरजे चेति संस्मरन्॥४९॥
तदा तोयात्समुत्थाय सा योगसिद्धयोगिनी। साऽलंकारा मूर्तिमती ददौ तुभ्यं च दर्शनम्॥
ततस्तां च समाश्लिष्य वीर्याधानं कृतं त्वया ततो बभूवुस्तस्यां च समुद्राः सप्त चैव हि॥
दृष्टस्त्वं शोभया गोप्या युक्तश्चम्पककानने। सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया॥
शोभा देहं परित्यज्य प्राविशच्चन्द्रमण्डलम्, ततस्तस्याः शरीरं च स्निग्धं तेजो बभूव ह॥
संविभज्य त्वया दत्तं हृदयेन विदूयता रत्नाय किंचित्स्वर्णाय किंचिन्मणिवराय च॥
किंचित्स्त्रीणां मुखाब्जेभ्यः किंचिद्राज्ञे च किंचन। किंचित्पक्वधान्येभ्यो रौप्येभ्यश्चापि किंचन॥ ५५॥
किंचिच्चन्दनपङ्केभ्यस्तोयेभ्यश्चापि किंचन। किंचित्किसलयेभ्यश्च पुष्पेभ्यश्चापि किंचन॥
किंचित्फलेभ्यः सस्येभ्यः सुपक्वेभ्यश्च किंचन। नृपदेवगृहेभ्यश्च संस्कृतेभ्यश्च किंचन॥
किंचिन्नूतनवस्त्रेभ्यो गोरसेभ्यश्च किंचन॥
दृष्टस्त्वं प्रभया गोप्या युक्तो वृन्दावने वने, सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया॥
प्रभा देहं परित्यज्य प्राविशत्सूर्यमण्डलम्। ततस्तस्याः शरीरं च तीक्ष्णं तेजो बभूव ह॥
संविभज्य त्वया दत्तं प्रेम्णा च रुदता पुरा। विभज्य चक्षुषोर्दत्तं लज्जया मद्भयेन च॥
हुताशनाय किंचिच्च नृपेभ्यश्चापि किंचन। किंचित्पुरुषसंघेभ्यो देवेभ्यश्चापि किंचन॥
किंचिद्दस्युगणेभ्यश्च[1] नागेभ्यश्चापि किंचन। ब्राह्मणेभ्यो मुनिभ्यश्च तपस्विभ्यश्च किंचन॥
स्त्रीभ्यः सौभाग्ययुक्ताभ्यो[2] यशस्विभ्य किंचन। तच्च दत्त्वा च सर्वेभ्यः पूर्वं रोदितुमुद्यतः॥
शान्त्या गोप्या युतस्त्वं च दृष्टो वै रासमण्डले। वसन्ते पुष्पशय्यायां माल्यवांश्चन्दनोक्षितः
रत्नप्रदीपैर्युक्तश्च रत्ननिर्मितमन्दिरे। रत्नभूषणभूषाढ्यो रत्नभूषितया सह॥ ६९॥
त्वया दत्तं च ताम्बूलं भुक्तवत्यै सुवासितम्। तया दत्तं च ताम्बूलं भुक्तवांस्त्वं पुरा विभो॥
सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया, शान्तिर्देहं परित्यज्य भिया लीना त्वयि प्रभो
ततस्तस्याः शरीरं च गुणश्रेष्ठं बभूव ह। संविभज्य त्वया दत्तं प्रेम्णा च रुदता पुरा॥६८॥
विश्वे विषादिणे किंचित्सत्त्वरूपाय विष्णवे। शुद्धसत्त्वस्वरूपायै किंचिल्लक्ष्म्यै पुरा विभो॥
त्वन्मन्त्रोपासकेभ्यश्च वैष्णवेभ्यश्च किंचन। तपस्विभ्यश्च धर्माय धर्मिष्ठेभ्यश्च किंचन॥

---

१ क 'स्युजनेभ्य'। २ क. 'भ्यो व्रतिनीभ्य'।

मया पूर्वं हि दृष्टस्त्वं गोप्या च क्षमया सह । सुवेषवान्माल्यवांश्च गन्धचन्दनसंयुतः ॥ ७१ ॥
रत्नभूषितया चारुचन्दनोक्षितया तया । सुखेन मूर्छितस्तल्पे पुष्पचन्दनसंयुते ॥ ७२ ॥
श्लिष्टोऽभूर्निद्रया सद्यः सुखेन नवसंगमात् । मया प्रबोधितौ सा च भवांश्च स्मरणं कुरु
गृहीतं पीतवस्त्रं ते मुरली च मनोहरा । वनमाला कौस्तुभश्च ह्यमूल्यं रत्नकुण्डलम् ॥
पश्चात्त्वद्दत्तं प्रेम्णा च सखीनां वचनादहो । लज्जया कृष्णवर्णोऽभूद्यापि च भवान्प्रभो
क्षमा देहं परित्यज्य लज्जया पृथिवीं गता । ततस्तस्याः शरीरं च गुणश्रेष्ठं बभूव ह ॥
संविभज्य त्वया दत्तं प्रेम्णा च रुदता पुरा । किंचिद्दत्तं विष्णवे च वैष्णवेभ्यश्च किंचन
धर्मिष्ठेभ्यश्च धर्माय दुर्बलेभ्यश्च किंचन । तपस्विभ्योऽपि देवेभ्यः पण्डितेभ्यश्च किंचन
एतत्ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि । त्वद्गुणं बहुविस्तारं जानामि च परं प्रभो ॥
इत्येवमुक्त्वा सा राधा रक्तपङ्कजलोचना । गङ्गां वक्तुं समारेभे नम्रास्यां लज्जितां सतीम्
गङ्गा रहस्यं योगेन ज्ञात्वा वै सिद्धयोगिनी । तिरोभूय सभामध्ये स्वजलं प्रविवेश सा
राधा योगेन विज्ञाय सर्वत्रावस्थितां च ताम् । पानं कर्तुं समारेभे गण्डूषात्सिद्धयोगिनी
गङ्गा रहस्यं योगेन ज्ञात्वा वै सिद्धयोगिनी । श्रीकृष्णचरणाम्भोजं परमं शरणं ययौ
गोलोकं चैव वैकुण्ठं ब्रह्मलोकादिकं तथा । ददर्श राधा सर्वत्र नैव गङ्गां ददर्श सा ॥
सर्वतो जलशून्यं च शुष्कं गोलोकपङ्कजम् । जलजन्तुसमूहैश्च मृतदेहैः समन्वितम् ॥
ब्रह्मविष्णुशिवानन्तधर्मेन्द्रेन्दुदिवाकराः । मनवो मानवाः[1] सर्वे देवाः सिद्धास्तपस्विनः ॥
गोलोकं च समाजग्मुः शुष्ककण्ठौष्ठतालुकाः सर्वे प्रणेमुर्गोविन्दं सर्वेशं प्रकृतेः परम् ॥
वरं वरेण्यं वरदं वरिष्ठं वरकारणम् । वरेशं च वरार्हं च सर्वेषां प्रवरं प्रभुम् ॥ ८८ ॥
निरीहं च निराकारं निर्लिप्तं च निराश्रयम् । निर्गुणं च निरुत्साहं निर्व्यूहं च निरञ्जनम्
स्वेच्छामयं च साकारं भक्तानुग्रहविग्रहम् । सत्यस्वरूपं सत्येशं साक्षिरूपं सनातनम् ॥
परं परेशं परमं परमात्मानमीश्वरम् । प्रणम्य तुष्टुवुः सर्वे भक्तिनम्रात्मकंधराः ॥ ९१ ॥
सगद्गदाः साश्रुनेत्राः पुलकाङ्कितविग्रहाः । सर्वे संस्तूय सर्वेशं भगवन्तं परं हरिम् ॥
ज्योतिर्मयं परं ब्रह्म सर्वकारणकारणम् । अमूल्यरत्नखचितचित्रसिंहासनस्थितम् ॥ ९३ ॥
सेव्यमानं च गोपालैः श्वेतचामरवायुना । गोपालिकानृत्यगीतं पश्यन्तं सस्मितं मुदा ॥
वल्गुवेषैः परिवृतं गोपैश्च शतकोटिभिः । चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् ॥ ९५ ॥
नवीननीरदश्यामं किशोरं पीतवाससम् । यथा द्वादशवर्षीयं बालं गोपालरूपिणम् ॥

---

[1] क. मुनयः ।

कोटिचन्द्रप्रभाजुष्टपुष्टश्रीयुक्तविग्रहम् । स्वतेजसा परिवृतं सुखदृश्यं मनोहरम् ॥९७॥
कोटिकन्दर्पसौन्दर्यलीलालावण्यविग्रहम् । दृश्यमानं च गोपीभिः सस्मिताभिश्च संततम् ॥
भूषणैर्भूषिताभिश्च महारत्नविनिर्मितैः । पिबन्तीभिर्लोचनाभ्यां मुखचन्द्रं प्रभोर्मुदा ॥
प्राणाधिकप्रियतमाराधावक्षःस्थलस्थितम् । तया प्रदत्तं ताम्बूलं भुक्तवन्तं सुवासितम् ॥
परिपूर्णतमं रासे ददृशुः सर्वतः सुराः । मुनयो मानवाः सिद्धास्तपसा च तपस्विन ॥
प्रहृष्टमानसाः सर्वे जग्मुः परमविस्मयम् । परस्परं समालोच्य ते तमूचुश्चतुर्मुखम् ॥
निवेदितुं जगन्नाथं स्वामिनायमभीप्सितम् । ब्रह्मा तद्वचनं श्रुत्वा [2]िं तं विष्णोस्तु दक्षिणे ॥
वामतो व[3]महादेवस्य चागमत्कृष्णमुत्तमम् । परमानन्दयुक्तं च परमानन्दरूपकम् ॥
सर्वं कृष्णमयं धाता चापश्यद्रासमण्डले । सर्वं समानवेषं च समानासनसंस्थितम् ॥
द्विभुजं मुरलीहस्तं वनमालाविभूषितम् । मयूरपुच्छचूडं च कौस्तुभेन विराजितम् ॥
अतीव कमनीयं च सुन्दरं शान्तविग्रहम् । गुणभूषणरूपेण तेजसा वयसा त्विषा ॥
वाससा यशसा[4] कीर्त्या मूर्त्या सुन्दरया समम् । परिपूर्णतमं सर्वं सर्वैश्वर्यसमन्वितम् ॥
कः सेव्यः सेवको वेति दृष्ट्वा निर्वक्तुमक्षमः । क्षणं तेजःस्वरूपं च रूपराशियुतं क्षणम् ॥
निराकारं च साकारं ददर्श द्वैधलक्षणम् ॥ १०९ ॥
एकमेव क्षणं कृष्णं राधया सहितं परम् । प्रत्येकासनसंस्थं च तया च सहितं क्षणम् ॥
राधारूपधरं कृष्णं कृष्णरूपकलत्रकम् । किं स्त्रीरूपं च पुंरूपं विधाता ध्यातुमक्षमः ॥
हृत्पद्मस्थं च श्रीकृष्णं धाता ध्यानेन चेतसा चकार स्तवनं भक्त्या प्रणम्याथ ह्यनेकधा ॥
ततः स चक्षुरुन्मील्य पुनश्च तदनुज्ञया । अपश्यत्कृष्णमेकं च राधावक्षःस्थलस्थितम् ॥
स्वपार्षदैः परिवृतं गोपीमण्डलमण्डितम् । पुनः प्रणेमुस्तं दृष्ट्वा तुष्टुवुश्च पुनश्च ते ॥११४॥
विज्ञाय तदभिप्रायं तानुवाच सुरेश्वरः । स[5]र्वा मा सर्वयज्ञेशः सर्वेशः सर्वभावनः ॥११५॥

**श्रीभगवानुवाच—**

आगच्छ कुशलं ब्रह्मन्नागच्छ कमलापते । इहाऽऽगच्छ महादेव शश्वत्कुशलमस्तु वः ॥
आगताः स्थ महाभागा गङ्गानयनकारणात् । गङ्गा मच्चरणाम्भोजे भयेन शरणं गता ॥
राधेमां पातुमिच्छन्ती दृष्ट्वा मत्संनिधानतः । दास्यामीमां बहिः कृत्वा यूयं कुरुत निर्भयाम् ॥
श्रीकृष्णस्य वचः श्रुत्वा सस्मितः कमलोद्भवः । तुष्टाव सर्वाराध्यां तां राधां श्रीकृष्णपूजिताम् ॥
वक्त्रैश्चतुर्भिः संस्तूय भक्तिनम्रात्मकंधरः । धाता चतुर्णां वेदानामुवाच चतुराननः ॥

---

१ रू. मनवः । २ क. 'त्वा विष्णुं कृत्वा स द°' । ३ क. °देवं च जगाम कृष्णमन्दिरम् । ४ ख. °सा कृत्या मू° । ५ क. 'वान्तरात्मा सर्वज्ञः स० ।

ब्रह्मोवाच —

गङ्गा त्वदङ्गसंभूता प्रभोर्वै रासमण्डले । युवयोर्द्रवरूपा[1] या मुग्धयोः शंकरः स्वराट् ॥
कृष्णांशा च त्वदंशा च त्वत्कन्यासदृशी प्रिया । त्वन्मन्त्रग्रहणं कृत्वा करोतु तव पूजनम्
भविष्यति पतिस्तस्या वैकुण्ठे च चतुर्भुजः । भूगतायाः कलायाश्च लवणोदश्च वारिधिः ॥
गोलोकस्था च या राधा सर्वत्रस्था तथाऽऽत्मिका । तदात्मिका त्वं देवेशि सर्वदा च तवाऽऽत्मजा
ब्रह्मणो वचनं श्रुत्वा स्वी चकार च सस्मिता । बहिर्बभूव सा कृष्णपादाङ्गुष्ठनखाग्रतः ॥
तत्रैव संवृता शान्ता तस्थौ तेषां च मध्यतः । उवास तोयादुत्थाय तदधिष्ठातृदेवता ॥
तत्तोयं ब्रह्मणा किंचित्स्थापितं च कमण्डलौ । किंचिद्दधार शिरसि चन्द्रार्धे चन्द्रशेखरः
गङ्गायै राधिकामन्त्रं प्रददौ कमलोद्भवः । तत्स्तोत्रं कवचं पूजाविधानं ध्यानमेव च ॥
सर्वं तत्सामवेदोक्तं पुरश्चर्याक्रमं तथा । गङ्गा तामेव संपूज्य वैकुण्ठं प्रययौ सती ॥
लक्ष्मीः सरस्वती गङ्गा तुलसी विश्वपावनी । एता नारायणस्यैव चतस्रो योषितो मुने ॥
अथ तं सस्मितः कृष्णो ब्रह्माणं समुवाच ह । सर्वं कालस्य वृत्तान्तं दुर्बोध्यमविपश्चिनाम्

श्रीकृष्ण उवाच—

गृहाण गङ्गां हे ब्रह्मन् हे विष्णो हे महेश्वर । शृणु कालस्य वृत्तान्तं यदतीतं निशामय
यूयं च येऽन्यदेवाश्च मुनयो मनवस्तथा । सिद्धास्तपस्विनश्चैव ये येऽत्रैव समागताः ॥
ते ते जीवन्ति गोलोके कालचक्रविवर्जिते । जलप्लुतं सर्वविश्वमागतं प्राकृते लये ॥
ब्रह्माद्या येऽन्यविश्वस्थास्ते लीना अधुना मयि । वैकुण्ठं च विना सर्वं सजलं पश्य पद्मज ॥
गत्वा सृष्टिं कुरु पुनर्ब्रह्मलोकादिकं परम् । सब्रह्माण्डं विरचय पश्चाद्गङ्गा च यास्यति
एवमन्येषु विश्वेषु सृष्ट्वा ब्रह्मादिकं पुनः । करोम्यहं पुनः सृष्टिं गच्छ शीघ्रं सुरैः सह
मच्चक्षुषोर्निमेषेण ब्रह्मणः पतनं भवेत् । गताः कतिविधास्ते च भविष्यन्ति च वेधसः ॥
इत्युक्त्वा राधिकानाथो जगामान्तःपुरं मुने । देवा गत्वा पुनः सृष्टिं चक्रुरेव प्रयत्नतः ॥
गोलोके च स्थिता गङ्गा वैकुण्ठे शिवलोकके । ब्रह्मलोके तथाऽन्यत्र यत्र यत्र पुरा स्थिता
तत्रैव सा गता गङ्गा चाऽऽज्ञया परमात्मनः । निर्गता विष्णुपादाब्जात्तेन विष्णुपदी स्मृता
इत्येवं कथितं सर्वं गङ्गोपाख्यानमुत्तमम् । सुखदं मोक्षदं सारं[2] किं भूयः श्रोतुमिच्छसि ॥
इति श्रीब्र० महा० प्रकृति० नारदना० गङ्गोपाख्यानं नामैकादशोऽध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ।

---

१ ख. द्रवरूपा च या रासमुग्धया शं० । २ क. साक्षात्किं ।

नारद उवाच—

लक्ष्मीः सरस्वती गङ्गा तुलसी लोकपावनी । एता नारायणस्यैव चतस्रश्च प्रिया इति ॥

गङ्गा जगाम वैकुण्ठमिदमेव श्रुतं मया । कथं सा तस्य पत्नी च बभूव ब्रूहि केशव ॥

नारायण उवाच--

गङ्गा जगाम वैकुण्ठं तत्पश्चाच्च गतो विधिः । गत्वोवाच तया सार्धं प्रणम्य जगदीश्वरम्

ब्रह्मोवाच—

राधाकृष्णाङ्गसंभूता या देवी द्रवरूपिणी । तदधिष्ठातृदेवीयं रूपेणाप्रतिमा भुवि ॥ ४ ॥

नवयौवनसंपन्ना सुशीला सुन्दरी वरा । शुद्धसत्त्वस्वरूपा च क्रोधाहंकारवर्जिता ॥५ ।

यदङ्गसंभवा नान्यं वृणोतीयं च तं विना । तत्रापि मानिनी राधा महातेजस्विनी वरा । ६ ॥

समुद्यता पातुमिमां भीतेयं बुद्धिपूर्वकम् । विवेश चरणाम्भोजे कृष्णस्य परमात्मन. ॥७॥

सर्वं विशुष्कं गोलोकं दृष्ट्वाऽहमगमं तदा । गोलोकं यत्र कृष्णश्च सर्ववृत्तान्तलब्धये ॥

सर्वान्तरात्मा सर्वेषां ज्ञात्वाऽभिप्रायमेव च बहिश्चकार गङ्गां च पादाङ्गुष्ठनखाग्रत ॥

दत्त्वाऽस्यै राधिकामन्त्रं पूरयित्वा च गोलकम् । संप्रणम्य च राधेशं गृहीत्वाऽत्राऽऽगमं विभो

गान्धर्वेण विवाहेन गृहाणेमां सुरेश्वर म् । सुरेश्वरस्त्वं रसिको रसिकां रसभावनः ॥ ११ ॥

त्वं रत्नं पुंसु देवेश स्त्रीरत्नं स्त्रीष्वियं सती । विदग्धाया विदग्धेन संगमो गुणवान्भवेत् ॥

उपस्थितां च यः कन्यां न गृह्णाति मदेन च । तं विहाय महालक्ष्मी रुष्टा याति न संशयः

यो भवेत्पण्डितः सोऽपि प्रकृतिं नावमन्यते । सर्वे प्राकृतिकाः पुंसः कामिन्यः प्रकृतेः कलाः

त्वमेव भगवानाद्यो निर्गुणः प्रकृतेः परः । अर्धाङ्गो द्विभुजः कृष्णोऽप्यर्धाङ्गेन चतुर्भुजः ॥

कृष्णवामाङ्गसंभूता परमा राधिका पुरा । दक्षिणाङ्गात्स्वयं सा च वामाङ्गात्कमला यथा ॥

तेन त्वां सा वृणोत्येव यतस्त्वद्देहसंभवा स्त्रीपुंसौ वै तथैकाङ्गौ यथा प्रकृतिपूरुषौ ॥ १७॥

इत्येवमुक्त्वा धाता च तां समर्प्य जगाम सः । गान्धर्वेण विवाहेन तां जग्राह हरिः स्वयम् ॥

शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम् । रेमे रमापतिस्तत्र गङ्गया सहितो मुदा। १९॥

गां पृथ्वीं च गता यस्मात्स्वस्थानं पुनरागता । निर्गता विष्णुपादाच्च गङ्गा विष्णुपदी स्मृता॥

मूर्छां संप्राप सा देवी नवसंगममात्रतः । रसिका सुखसंभोगाद्रसिकेश्वरसंयुता ॥ २१ ॥

तद्दृष्ट्वा दुःखिता वाणी सापत्न्येर्ष्याविवर्जिता। नित्यमीर्ष्यति तां वाणी न च गङ्गा सरस्वतीम्

गङ्गया सहितस्यैव तिस्रो भार्या रमापतेः । सार्धं तुलस्या पश्चाच्च चतस्रो ह्यभवन्मुने ॥२३॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० गङ्गोपाख्यानं नाम द्वादशोऽध्यायः ॥१२॥

====

१ क. 'भूवेति त्र न श्रुतम् । २ क सर्वज्ञो ह्य' ।

अथ त्रयोदशोऽध्याय. ॥ १३ ॥

**नारद उवाच—**

नारायणप्रिया साध्वी कथं सा च बभूव ह । तुलसी कुत्र संभूता का वा सा पूर्वजन्मनि॥ १ ॥
कस्य वा सा कुले जाता कस्य कन्या तपस्विनी । केन वा तपसा सा च संप्राप प्रकृतेः परम्॥
निर्विकल्पं निरीहं च सर्वसाक्षिस्वरूपकम् । नारायणं परं ब्रह्म परमात्मानमीश्वरम् ॥३॥
सर्वाराध्यं च सर्वेशं सर्वज्ञं सर्वकारणम् । सर्वाधारं सर्वरूपं सर्वेषां परिपालकम् ॥ ४ ॥
कथमेतादृशी देवी वृक्षत्वं समवाप ह । कथं साऽप्यसुरग्रस्ता संबभूव तपस्विनी ॥ ५ ॥
संदिग्धं मे मनो लोलं प्रेरयेन्मां मुहुर्मुहुः । छेत्तुमर्हसि संदेहं सर्वसंदेहभञ्जन ॥ ६ ॥

**नारायण उवाच—**

मनुश्च दक्षसावर्णिः पुण्यवान्वैष्णवः शुचिः । यशस्वी कीर्तिमांश्चैव विष्णोरंशसमुद्भवः ॥
तत्पुत्रो धर्मसावर्णिर्धर्मिष्ठो वैष्णवः शुचिः। तत्पुत्रो विष्णुसावर्णिर्वैष्णवश्च जितेन्द्रियः॥ ८॥
तत्पुत्रो देवसावर्णिर्विष्णुव्रतपरायणः । तत्पुत्रो राजसावर्णिर्महाविष्णुपरायणः ॥ ९ ॥
वृषध्वजश्च तत्पुत्रो वृषध्वजपरायणः । यस्याऽऽश्रमे स्वयं शंभुरासीद्देवयुगत्रयम् ॥ १०॥
पुत्रादपि परः स्नेहो नृपे तस्मिञ्छिवस्य च । न च नारायणं मेने न च लक्ष्मीं सरस्वतीम्॥
पूजां च सर्वदेवानां दूरीभूतां चकार सः । भाद्रे मासि महालक्ष्मीपूजां मत्तोऽत्यजन्नृपः ॥
माघे सरस्वतीपूजां दूरीभूतां चकार सः । यज्ञं च विष्णुपूजां च निनिन्दे न चकार सः॥
न कोऽपि देवो भूपेन्द्रं शशाप शिवकारणात् । भ्रष्टश्रीर्भव भूपेति चाशपत्तं दिवाकरः ॥
शूलं गृहीत्वा तं सूर्यं धृतवाञ्छंकरः स्वयम्। पित्रा सार्धं दिनेशश्च ब्रह्माणं शरणं ययौ ॥
शिवस्त्रिशूलहस्तश्च ब्रह्मलोकं ययौ क्रुधा । ब्रह्मा सूर्यं पुरस्कृत्य वैकुण्ठं च ययौ भिया ॥
शूलं गृहीत्वा तत्रापि धृतवाञ्छंकरो रविम् । ब्रह्मकश्यपमार्तण्डाः संत्रस्ताः शुष्कतालुकाः
नारायणं च सर्वेशं ते ययुः शरणं भिया । मूर्ध्ना प्रणेमुस्ते गत्वा तुष्टुवुश्च पुनः पुनः॥ १८॥
सर्वे निवेदनं चक्रुर्भियस्ते कारणं हरौ ॥ १९ ॥
नारायणश्च कृपयाऽभयं तेभ्यो ददौ मुने । स्थिरा भवत हे भीता भयं किं वो मयि स्थिते ॥
स्मरन्ति ये यत्र तत्र मां विपत्तौ भयान्विताः। तांस्तत्र गत्वा रक्षामि चक्रहस्तस्त्वरान्वितः॥
पाताऽहं जगतां देवाः कर्ताऽहं सततं सदा । स्रष्टा च ब्रह्मरूपेण संहर्ता शिवरूपतः ॥ २२॥
शिवोऽहं त्वमहं चापि सूर्योऽहं त्रिगुणात्मकः।विधाय नानारूपं च कुर्वे सृष्ट्यादिकाः क्रियाः

१ क 'विकारं नि'। २ क 'वमङ्गलकारकम्। ३ क 'त्तो बभञ्ज ह। ४ क सर्वे नि'।

यूयं गच्छत भद्रं वो भविष्यति भयं कुतः । अद्यप्रभृति वो नास्ति मद्वराच्छंकराद्भयम् ॥२४॥
आशुतोषः स भगवाञ्छंकरश्च[1] सतां गतिः । भक्ताधीनश्च भक्तेशो भक्तात्मा भक्तवत्सलः ॥
सुदर्शनं शिवश्चैव मम प्राणाधिकप्रियौ । ब्रह्माण्डेषु न तेजस्वी हे ब्रह्मन्ननयोः परः ॥२६॥
शक्तः स्रष्टुं महादेवः सूर्यकोटिं च लीलया । कोटिं च ब्रह्मणामेवं किमसाध्यं च शूलिनः ॥
बाह्यज्ञानं तत्र किंचिद्ध्यायतो मां दिवानिशम् । मन्नाम मद्गुणं भक्त्या पञ्चवक्त्रेण गीयते
अहमेवं चिन्तयामि तत्कल्याणं दिवानिशम् । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥
शिवस्वरूपो भगवाञ्छिवाधिष्ठातृदेवता । शिवो भवति यस्माच्च शिवं तेन विदुर्बुधाः ॥
एतस्मिन्नन्तरे तत्र चागमच्छंकरः स्वयम् । शूलहस्तो वृषारूढो रक्तपङ्कजलोचनः ॥३१॥
अवरुह्य वृषात्तूर्णं भक्तिनम्रात्मकंधरः । ननाम भक्त्या तं शान्तं लक्ष्मीकान्तं परात्परम् ॥
रत्नसिंहासनस्थं च रत्नालंकारभूषितम् । किरीटिनं कुण्डलिनं चक्रिणं वनमालिनम् ॥
नवीननीरदश्यामं सुन्दरं च चतुर्भुजम् । चतुर्भुजैः सेवितं च श्वेतचामरवायुना ॥ ३४ ॥
चन्दनोक्षितसर्वाङ्गं भूषितं पीतवाससा । लक्ष्मीप्रदत्तताम्बूलं भुक्तवन्तं च नारद ॥३५॥
विद्याधरीनृत्यगीतं शृण्वन्तं सस्मितं मुदा । ईश्वरं परमात्मानं भक्तानुग्रहविग्रहम् ॥ ३६ ॥
तं ननाम महादेवो ब्रह्माणं च ननाम सः । ननाम सूर्यो भक्त्या च संत्रस्तश्चन्द्रशेखरम् ॥
कश्यपश्च महाभक्त्या तुष्टाव च ननाम च । शिवः संस्तूय सर्वेशं समुवास सुखासने ॥
सुखासने सुखासीनं विश्रान्तं चन्द्रशेखरम् । श्वेतचामरवातेन सेवितं विष्णुपार्षदैः ॥३९॥
अक्षोभं सत्त्वसंसर्गात्प्रसन्नं सस्मितं मुदा । स्तूयमानं पञ्चवक्त्रैः परं नारायणं विभुम् ॥
समुवाच प्रसन्नात्मा प्रसन्नं सुरसंसदि । पीयूषतुल्यं मधुरं वचनं सुमनोहरम् ॥ ४१ ॥

श्रीभगवानुवाच—

अत्यन्तमुपहास्यं च शिवप्रश्नं शिवेऽशिवम् । लौकिकं वैदिकं चैव त्वां पृच्छामि तथाऽपि शम्
तपसां फलदातारं दातारं सर्वसंपदाम् । संपत्प्रश्नं तपःप्रश्नमयोग्यं त्वां च सांप्रतम् ॥
ज्ञानाधिदेवे सर्वज्ञे ज्ञानं पृच्छामि किं वृथा । निरापदि विपत्प्रश्नमलं मृत्युंजये हरे ॥४४॥
त्वामेवाऽऽगमने[2] प्रश्नमलं स्वाश्रयमागमे । आगतोऽपि[3] कथं वेगादित्युवाच रमापतिः ॥

श्रीमहादेव उवाच—

वृषध्वजं च मद्भक्तं मम प्राणाधिकप्रियम् । सूर्यः शशाप इति मे हेतुरागमकोपयोः ॥
पुत्रवात्सल्यशोकेन सूर्यं हन्तुं समुद्यतः । स ब्रह्माणं प्रपन्नश्च ससूर्यश्च विधिस्त्वयि ॥

---

१ क. °कर. शंकरः सताम् । २ ख. °मेव वागमनं प्र° । ३ क. °गतस्तत इत्येव वद कोपस्य कारणम् ।

त्वां ये शरणमापन्ना ध्यानेन वचसाऽपि वा । निरापदस्ते निःशङ्का जरा मृत्युश्च तैर्जितः
साक्षाद्ये शरणापन्नास्तत्फलं किं वदामि भोः । हरिस्मृतिश्चाभयदा सर्वमङ्गलदा सदा ॥
किं मे भक्तस्य भविता तन्मे ब्रूहि जगत्प्रभो । श्रीहतस्यास्य मूढस्य सूर्यशापेन हेतुना ॥

श्रीभगवानुवाच—

कालोऽति यातो दैवेन युगानामेकविंशतिः । वैकुण्ठे घटिकार्धेन शीघ्रं याहि नृपालयम् ॥
वृषध्वजो मृतः कालाद्दुर्निवार्यात्सुदारुणात् । हंसध्वजश्च तत्पुत्रो मृतः सोऽपि श्रिया हतः
तत्पुत्रौ च महाभागौ धर्मध्वजकुशध्वजौ । हतश्रियौ सूर्यशापात्तौ वै परमवैष्णवौ ॥१३॥
राज्यभ्रष्टौ श्रिया भ्रष्टौ कमलातापसावुभौ । तयोश्च भार्ययोर्लक्ष्मीः कलया च जनिष्यति
संपद्युक्तौ तदा तौ च नृपश्रेष्ठौ भविष्यतः । मृतस्ते सेवकः शंभो गच्छ यूयं च गच्छत ॥
इत्युक्त्वा च सलक्ष्मीकः सभातोऽभ्यन्तरं गतः । देवा जग्मुश्च संहृष्टाः स्वाश्रमं परया मुदा ॥
शिवश्च तपसे शीघ्रं परिपूर्णतमो ययौ ॥ १७ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्युपाख्यानं नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

===

अथ चतुर्दशोऽध्यायः ।

---

श्रीनारायण उवाच—

लक्ष्मीं तौ च समाराध्य चोग्रेण तपसा मुने । प्रत्येकं वरमिष्टं च संप्रापतुरभीप्सितम् ॥ १ ॥
महालक्ष्म्या वरेणैव तौ पृथ्वीशौ बभूवतुः । धनवन्तौ पुत्रवन्तौ धर्मध्वजकुशध्वजौ ॥ २ ॥
कुशध्वजस्य पत्नी च देवी मालावती सती । सा सुषाव च कालेन कमलांशां सुतां सतीम्
सा च भूतलसंबन्धाज्ज्ञानयुक्ता बभूव ह । कृत्वा वेदध्वनिं स्पष्टमुत्तस्थौ सूतिकागृहे ॥
वेदध्वनिं सा चकार जातमात्रेण कन्यका । तस्मात्तां ते वेदवतीं प्रवदन्ति मनीषिणः ॥५॥
जातमात्रेण सुस्नाता जगाम तपसे वनम् । सर्वैर्निषिद्धा यत्नेन नारायणपरायणा ॥ ६ ॥
एकमन्वन्तरं चैव पुष्करे च तपस्विनी । अत्युग्रां वै तपस्यां तु लीलया च चकार सा ॥
तथाऽपि[3] पुष्टा न कृशा नवयौवनसंयुता । शुश्राव खे च सहसा सा वाचमशरीरिणीम्
जन्मान्तरे ते भर्ता च भविष्यति हरिः स्वयम् । ब्रह्मादिभिर्दुराराध्यं पतिं लप्स्यसि सुन्दरि

---

१ क. °न यात शीघ्रं नृ° । २ क. रथध्व° । ३ क. °पि सा न च क्लिष्टा न° ।

इति श्रुत्वा तु सा हृष्टा चकारच पुनस्तपः । अतीव निर्जनस्थाने पर्वते गन्धमादने १०॥
तत्रैवं सुचिरं तप्त्वा विश्रम्य समुवास सा । ददर्श पुरतस्तत्र रावणं दुर्निवारणम् ॥ ११ ॥
दृष्ट्वा साऽतिथिभक्त्या च पाद्यं तस्मै ददौ किल । सुस्वादु फलमूलं च जलं चापि सुशीतलम्
तच्च भुक्त्वा स पापिष्ठश्चावात्सीत्तत्समीपतः । चकार प्रश्नमिति तां का त्वं कल्याणि चेति च
तां च दृष्ट्वा वरारोहां [१]पीनोन्नतपयोधराम् । शरत्पद्मनिभास्यां च सस्मितां सुदतीं सतीम्
मूर्छामवाप कृपणः कामबाणप्रपीडितः । तां करेण समाकृष्य संभोगं कर्तुमुद्यतः ॥ १९ ॥
सा सती कोपदृष्ट्या च स्तम्भितं तं चकार ह स जडो हस्तपादैश्च किंचिद्वक्तुं न च क्षमः
तुष्टाव मनसा देवीं पद्मांशां पद्मलोचनाम् । सा तत्स्तवेन संतुष्टा प्राकृतं तं मुमोच ह ॥
शशाप च मदर्थे त्वं विनश्यसि सबान्धवः । स्पृष्टाऽहं च त्वया कामाद्विसृजाम्यवलोकय
इत्युक्त्वा सा च योगेन देहत्यागं चकार ह । गङ्गायां तां च संन्यस्य स्वगृहं रावणो ययौ
अहो किमद्भुतं दृष्टं किं कृतं वा मयाऽधुना । इति संचिन्त्य संस्मृत्य विललाप पुनः पुनः ॥
सा च कालान्तरे साध्वी बभूव जनकात्मजा । सीतादेवीति विख्याता यदर्थे रावणो हतः
महातपस्विनी सा च तपसा पूर्वजन्मनः । लेभे रामं च भर्तारं परिपूर्णतमं हरिम् ॥ २३ ॥
संप्राप्य तपसाऽऽराध्य स्वामिनं च जगत्पतिम् । सा रमा सुचिरं रेमे रामेण सह सुन्दरी ॥
जातिस्मरा न स्मरति तपसश्च क्लमं पुरा । सुखेन तज्जहौ सर्वं दुःखं चापि सुखं फले ॥
नानाप्रकारविभवं चकार सुचिरं सती । संप्राप्य सुकुमारं तमतीवं नवयौवनम् ॥ २६ ॥
गुणिनं रसिकं शान्तं कान्तवेषमनुत्तमम् । स्त्रीणां मनोज्ञं रुचिरं तथा लेभे यथेप्सितम् ॥
पितुर्वचःपालनार्थं सत्यसंधो रघूत्तमः । जगाम काननं पश्चात्कालेन च बलीयसा ॥
तस्थौ समुद्रनिकटे सीतया लक्ष्मणेन च । ददर्श तत्र वह्निं च विप्ररूपधरं हरिः । २८ ॥
तं रामं दुःखितं दृष्ट्वा स च दुःखी बभूव ह । उवाच किंचित्सत्येष्टं सत्यं सत्यपरायणः ॥

वह्निरुवाच—

भगवञ्छ्रूयतां वाक्यं कालेन यदुपस्थितम् । सीताहरणकालोऽयं तवैव समुपस्थितः ॥
दैवं च दुर्निवार्यं वै न च दैवात्परं बलम् । मत्प्रसूं मयि संन्यस्य छायां रक्षान्तिकेऽधुना ॥
दास्यामि सीतां तुभ्यं च परीक्षासमये पुनः । देवैः प्रस्थापितोऽहं च न च विप्रो हुताशनः
रामस्तद्वचनं श्रुत्वा न प्रकाश्य च लक्ष्मणम् । स्वच्छन्दं स्वी चकारासौ हृदयेन विदूयता ॥
वह्निर्योगेन सीतावन्मायासीतां चकार ह । तत्तुल्यगुणरूपाङ्गीं ददौ रामाय नारद । ३४ ॥

---

१ क. पीनश्रेणीप॰ । २ क. राध्यं सुराराध्यं च॰ । ३ क. ॰रा च स्म॰ । ४ क. ॰व सुमनोहरा ।
५ क. ॰नोज्ञरूपं च त॰ । ६ ख. ॰रूपां तां द॰ ।

सीतां गृहीत्वा स ययौ गोप्यं वक्तुं निषेध्य च । लक्ष्मणो नैव बुबुधे गोप्यमन्यस्य का कथा ।
एतस्मिन्नन्तरे रामो ददर्श कनकं मृगम् । सीता तं प्रेरयामास तदर्थे यत्नपूर्वकम् ॥ ३९॥
संन्यस्य लक्ष्मणं रामो जानक्या रक्षणे वने । स्वयं जगाम हन्तुं तं विव्यधे सायकेन च ॥
लक्ष्मणेति च शब्दं वै कृत्वा मायामृगस्तदा । प्राणांस्तत्याज सहसा पुरो दृष्ट्वा हरिं स्मरन् ।
मृगरूपं परित्यज्य दिव्यरूपं विधाय च । रत्ननिर्मितयानेन वैकुण्ठं स जगाम ह । ३९॥
वैकुण्ठस्य महाद्वारे किंकरो द्वारपालयोः । जयविजययोश्चैव बलवांश्च जयाभिधः ॥४०॥
शापेन सनकादीनां संप्राप्य राक्षसीं तनुम् । पुनर्जगाम तद्द्वारमादौ स द्वारपालयोः ॥
अथ शब्दं च सा श्रुत्वा लक्ष्मणेति च विक्लवम् । सीता तं प्रेरयामास लक्ष्मणं रामसंनिधौ
गते च लक्ष्मणे रामं रावणो दुर्निवारणः । सीतां गृहीत्वा प्रययौ लङ्कामेव स्वलीलया ॥
विषसाद च रामश्च वने दृष्ट्वा च लक्ष्मणम् । तूर्णं च स्वाश्रमं गत्वा सीतां नैव ददर्श सः
मूर्छां संप्राप्य सुचिरं विललाप भृशं पुनः । पुनर्बभ्राम गहने तदन्वेषणपूर्वकम् ॥ ४१ ॥
काले संप्राप्य तद्वार्तां गृध्रद्वारा नदीतटे । सहायं वानरं कृत्वा बबन्धे सागरं हरिः ॥
लङ्कां गत्वा रघुश्रेष्ठो जघान सायकेन च । सबान्धवं रावणं च सीतां संप्राप्य दुःखिताम्
तां च वह्निपरीक्षां वै कारयामास सत्वरम् । हुताशनस्तत्र काले वास्तवीं जानकीं ददौ ॥
छाया चोवाच वह्निं च रामं च विनयान्विता । करिष्यामीति किमहं तदुपायं वदस्व मे ॥

वह्निरुवाच—

त्वं गच्छ तपसे देवि पुष्करं च सुपुण्यदम् । कृत्वा तपस्यां तत्रैव स्वर्गलक्ष्मीर्भविष्यसि॥
सा च तद्वचनं श्रुत्वा प्रगम्य पुष्करे तपः । कृत्वा त्रिलक्षवर्षं च स्वर्गे लक्ष्मीर्बभूव ह ॥
सा च कालेन तपसा यज्ञकुण्डसमुद्भवा । कामिनी पाण्डवानां च द्रौपदी द्रुपदात्मजा ॥
कृतयुगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी च सीतेति जनकात्मजा ॥
तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा । त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये ॥

नारद उवाच —

प्रियाः पञ्च कथं तस्या बभूवुर्मुनिपुंगव । इति मे चित्तसंदेहं दूरी कुरु महाप्रभो ॥

नारायण उवाच—

लङ्कायां वास्तवी सीता रामं संप्राप नारद । रूपयौवनसंपन्ना छाया सा बहुविह्वला ॥
रामाग्न्योराज्ञया तप्त्वा ययाचे शंकरं वरम् । कामातुरा पतिव्यग्रा प्रार्थयन्ती पुनः पुनः
पतिं देहि पतिं देहि पतिं देहि त्रिलोचन । पतिं देहि पतिं देहि पञ्चवारं चकार सा ॥

---

१ ख प्रतेपे पुष्करे तपः । दिव्यं त्रि° ।

शिवस्तत्प्रार्थनां श्रुत्वा सस्मितो रसिकेश्वरः । प्रिये तव प्रियाः पञ्च भवन्त्विति वरं ददौ ॥
तेनाऽऽसीत्पाण्डवानां च पञ्चानां कामिनी प्रिया । इत्येवं कथितं सर्वं प्रस्तुतं वस्तुतः शृणु
अथ संप्राप्य लङ्कायां सीतां रामो मनोहराम् । विभीषणाय तां लङ्कां दत्त्वाऽयोध्यां ययौ पुनः
एकादशसहस्राब्दं कृत्वा राज्यं च भारते । जगाम सर्वैर्लोकैश्च सार्धं वैकुण्ठमेव च ॥
कमलांशा वेदवती कमलायां विवेश सा । कथितं पुण्यमाख्यानं पुण्यदं पापनाशनम् ६३॥
सततं मूर्तिमन्तश्च वेदाश्चत्वार एव च । सन्ति यस्याश्च जिह्वाग्रे सा च वेदवती स्मृता॥६४॥
कुशध्वजसुताख्यानमुक्तं संक्षेपतस्तव । धर्मध्वजसुताख्यानं निबोध कथयामि ते ॥ ६५ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु वेदवतीप्रस्तावो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

अथ पञ्चदशोऽध्यायः ।

नारायण उवाच—

धर्मध्वजस्य पत्नी च माधवीति च विश्रुता । नृपेण सार्धं सा रागाद्रमे वै गन्धमादने ॥१ ॥
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिता । चन्दनोक्षितसर्वाङ्गी पुष्पचन्दनवायुना ॥ २ ॥
स्त्रीरत्नमतिचार्वङ्गी रत्नभूषणभूषिता । कामुकी रसिकश्रेष्ठा रसिकेशेन संगता ॥ ३ ॥
सुरताद्विरतिर्नाऽऽसीत्तयोः सुरतविज्ञयोः । गतं वर्षशतं दैवं न जानीतां दिवानिशम् ॥४॥
ततो राजा मतिं प्राप्य सुरताद्विरराम सः । कामुकी सुन्दरी किंचिन्न च तृप्तिं जगाम सा॥५॥
दधार गर्भं सा सद्यो देवाब्दशतकं सती । श्रीगर्भा श्रीयुता सा च संबभूव दिने दिने ॥
शुभक्षणे शुभदिने शुभयोगेन संयुते । शुभलग्ने शुभांशे च शुभस्वामिग्रहान्विते ॥७॥
कार्तिकीपूर्णिमायां च सितवारे च पाद्मजे । सुषाव सा च पद्मांशां पद्मिनीं सुमनोहराम् ॥
पादपद्मयुगे[3] चैव पद्मरागविराजिताम् । राजराजेश्वरीं लक्ष्मीं सर्वावयवसुन्दरीम् । ९ ॥
राजलक्ष्मीलक्ष्मयुक्तां राजलक्ष्म्याधिदेवताम् । शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् ॥
पक्वबिम्बाधरोष्ठीं च पश्यन्तीं सस्मितां गृहम् । हस्तपादतलारक्तां निम्ननाभिं मनोरमाम्
तदधस्त्रिवलीयुक्तां वृत्तवल्गुनितम्बिनीम् । शीते सुखोष्णसर्वाङ्गीं ग्रीष्मे च सुखशीतलाम्
श्यामां सुकेशीं रुचिरां न्यग्रोधपरिमण्डलाम् । श्वेतचम्पकवर्णाभां सुन्दरीष्वेकसुन्दरीम्
नरा नार्यश्च तां दृष्ट्वा तुलनां दातुमक्षमा । तेन नाम्ना च तुलसीं तां वदन्ति पुराविदः
सा च भूमिष्ठमात्रेण योग्या स्त्री प्रकृतिर्यथा । सर्वैर्निषिद्धा तपसे जगाम बदरीवनम् ॥

---

१ क. °ख्यानं श्रुतं शिक्षागमेषु च । २ क. °तो रजस्वलां प्रा० । ३ क. °गे यस्याः पद्मराजी विराजते ।

तत्र दैवाब्दलक्षं च चकार परमं तपः । मम नारायणः स्वामी भवितेति विनिश्चिता ॥
ग्रीष्मे पञ्चतपाः शीते तोयस्था सा च सुन्दरी । प्रकाशस्था वृष्टिधारां सहन्ती च दिवानिशम्
विंशत्सहस्रवर्षं च फलतोयाशना च सा । त्रिंशद्वर्षसहस्राब्दं पत्राहारा तपस्विनी ॥
चत्वारिंशत्सहस्राब्दं वाय्वाहारा कृशोदरी । ततो दशसहस्राब्दं निराहारा बभूव सा ॥
निर्लक्ष्यां चैकपादस्थां दृष्ट्वा तां कमलोद्भवः । समाययौ वरं दातुं परं बदरिकाश्रमम् ॥
चतुर्मुखं च सा दृष्ट्वा प्राणंसीद्धंसवाहनम् । तामुवाच जगत्कर्ता विधाता जगतामपि ॥

ब्रह्मोवाच—

वरं वृणुष्व तुलसि यत्ते मनसि वाञ्छितम् । हरिभक्तिं च मुक्तिं वाऽप्यजरामरतामपि ॥

तुलस्युवाच—

शृणु तात प्रवक्ष्यामि यन्मे मनसि वाञ्छितम् । सर्वज्ञस्यापि पुरतः का लज्जा मम सांप्रतम् ॥
अहं च तुलसी गोपी गोलोकेऽहं स्थिता पुरा । कृष्णप्रिया किंकरी च तदंशा तत्सखी प्रिया
गोविन्देन सहाऽऽसक्तामतृप्तां मां च मूर्च्छिताम् । रासेश्वरी समागत्य चापश्यद्रासमण्डले
गोविन्दं भर्त्सयामास मां शशाप रुषाऽन्विता । याहि त्वं मानवीं योनिमित्येवं च पितामह ॥
मामुवाच स गोविन्दो मदंशं त्वं चतुर्भुजम् । लभिष्यसि तपस्तप्त्वा भारते ब्रह्मणो वरात्
इत्येवमुक्त्वा देवेशोऽप्यन्तर्धानमवाप सः । देव्या भिया तनुं त्यक्त्वा लब्धं जन्म मया भुवि
अहं नारायणं कान्तं शान्तं सुन्दरविग्रहम् । सांप्रतं लब्धुमिच्छामि वरमेवं च देहि मे ॥

ब्रह्मोवाच—

सुदामा नाम गोपश्च श्रीकृष्णाङ्गसमुद्भवः । तदंशश्चातितेजस्वी चालभज्जन्म भारते ॥३०॥
सांप्रतं राधिकाशापाद्दनुवंशसमुद्भवः । शङ्खचूड इतिख्यातस्त्रैलोक्ये न च तत्समः ॥३१॥
गोलोके त्वां पुरा दृष्ट्वा कामोन्मथितमानसः । विलम्बितुं न शशाक राधिकायाः प्रभावतः
स च जातिस्मरस्तप्त्वा त्वां लभाम वरेण च । जातिस्मरा तु त्वमपि सर्वं जानासि सुन्दरि
अधुना तस्य पत्नी च भव मानिनि शोभने । पश्चान्नारायणं कान्तं शान्तमेव लभिष्यसि ॥
शापान्नारायणस्यैव कलया दैवयोगतः । प्राप्नोषि वृक्षरूपं च त्वं पूता विश्वपावनी ॥३५॥
प्रधाना सर्वपुष्पाणां विष्णुप्राणाधिका भवेः । त्वया विना च सर्वेषां पूजा च विफला भवेत् ॥
वृन्दावने वृक्षरूपा नाम्ना वृन्दावनीति च । त्वत्पत्रैर्गोपिका गोपाः पूजयिष्यन्ति माधवम् ॥
वृक्षाधिदेवीरूपेण सार्धं कृष्णेन संततम् । विहरिष्यसि गोपेन स्वच्छन्दं मद्वरेण च ॥३८॥
इत्येवं वचनं श्रुत्वा सस्मिता हृष्टमानसा । प्रणनाम च धातारं तं च किंचिदुवाच ह ॥३९॥

---

१ ख. ॰शच्छतसहस्राब्दं प॰ ।

तुलस्युवाच—

यथा मे द्विभुजे कृष्णे वाञ्छा च श्यामसुन्दरे। सत्यं ब्रवीमि हे तात न तथा च चतुर्भुजे ॥
अतृप्ताऽहं च गोविन्दे देहाच्छृङ्गारभङ्गतः। गोविन्दस्यैव वचनात्प्रार्थयामि चतुर्भुजम् ॥
त्वत्प्रसादेन गोविन्दं पुनरेव सुदुर्लभम्। ध्रुवमेवं लभिष्यामि राधाभीतिं प्रमोचय॥ ४२ ॥

ब्रह्मोवाच—

गृहाण राधिकामन्त्रं ददे वै षोडशाक्षरम्। तस्याश्च प्राणतुल्या त्वं मद्वरेण भविष्यसि ॥
शृङ्गारं युवयोर्गोप्यमाज्ञास्यति च राधिका। राधासमा त्वं सुभगा गोविन्दस्य भविष्यसि ॥
इत्येवमुक्त्वा दत्त्वा च देव्यै तत्षोडशाक्षरम्। मन्त्रं तस्यै जगद्धाता स्तोत्रं च कवचं परम् ॥
सर्वं पूजाविधानं च पुरश्चर्याविधिक्रमम्। परं शुभाशिषं कृत्वा सोऽन्तर्धानमवाप ह॥ ४६॥
सा च ब्रह्मोपदेशेन पुण्ये बदरिकाश्रमे। जजाप परमं मन्त्रं यदिष्टं पूर्वजन्मनः ॥ ४७ ॥
दिव्यं द्वादशवर्षं च पूजां चैव चकार सा। बभूव सिद्धा सा देवी तत्प्रत्यादेशमाप च ॥४८॥
सिद्धे तपसि मन्त्रे च वरं प्राप्य यथेप्सितम्। बुभुजे च महाभोगं यद्विश्वेषु सुदुर्लभम् ॥४९॥
प्रसन्नमानसा देवी तत्याज तपसः क्लमम्। सिद्धे फले नराणां च दुःखं तत् सुखमुत्तमम् ॥
भुक्त्वा पीत्वा च संतुष्टा शयनं च चकार सा। तल्पे मनोरमे तत्र पुष्पचन्दनचर्चिते॥५१॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्युपाख्याने तुलसीवरप्रदानं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

अथ षोडशोऽध्यायः।

नारायण उवाच—

तुलसी परितुष्टा सा चास्वाप्सीद्धृष्टमानसा। नवयौवनसंपन्ना प्रशंसन्ती वराङ्गना॥ १ ॥
चिक्षेप पञ्चबाणश्च पञ्च बाणांश्च तां प्रति। पुष्पायुधेन सा विद्धा पुष्पचन्दनचर्चिता॥२॥
पुलकाञ्चितसर्वाङ्गी कम्पिता रक्तलोचना। क्षणं सा शुष्कतां प्राप क्षणं मूर्छामवाप ह ॥
क्षणमुद्विग्नतां प्राप क्षणं तन्द्रां सुखावहाम्। क्षणं सा दहनं प्राप क्षणं प्राप प्रमत्तताम् ॥४॥
क्षणं सा चेतनां प्राप क्षणं प्राप विषण्णताम्। उत्तिष्ठन्ती क्षणं तल्पाद्गच्छन्ती निकटं क्षणम्
भ्रमन्ती क्षणमुद्वेगाद्विवसन्ती क्षणं पुनः। क्षणमेव समुद्वेगादस्वाप्सीत्पुनरेव सा ॥६॥
पुष्पचन्दनतल्पं च तद्बभूवातिकण्टकम्। विषमाहारकं स्वादु दिव्यरूपं फलं जलम्॥७॥
निलयश्च निराकारः सूक्ष्मवस्त्रं हुताशनः। सिन्दूरपत्रकं चैव व्रणतुल्यं च दुःखदम् ॥ ८ ॥

१ क. °ह्मादेवं य°। २ क. °न्ना वृषस्यन्ती व°। ३ क. °श्च विलोका°।

क्षणं ददर्श तन्द्रायां सुवेषं पुरुषं सती । सुन्दरं च युवानं च सस्मितं रसिकेश्वरम् ।। ९ ।।
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् आगच्छन्तं माल्यवन्तं पश्यन्तं तन्मुखाम्बुजम् ।।
कथयन्तं रतिकथां चुम्बन्तमधरं मुहुः । शयानं पुष्पतल्पे च समाश्लिष्यन्तमङ्ककम् ।।
पुनरेव तु गच्छन्तमागच्छन्तं वसन्तकम् । कान्त क यासि प्राणेश तिष्ठेत्येवमुवाच सा ।।
पुनः स्वचेतनां प्राप्य विललाप पुनः पुनः । एवं तपोवने सा च तस्थौ तत्रैव नारद ।। १३ ।।
शङ्खचूडो महायोगी जैगीषव्यान्मनोरमम् । कृष्णस्य मन्त्रं संप्राप्य प्राप्य सिद्धिं तु पुष्करे ।।
पठन्सदां तु कवचं सर्वमङ्गलमङ्गलम् । ब्रह्मेशाच्च वरं प्राप्य यत्तन्मनसि वाञ्छितम् ।। १५ ।।
आज्ञया ब्रह्मणः सोऽपि बदरीं वै समाययौ । आगच्छन्तं शङ्खचूडमपश्यत्तुलसी मुने ।।
नवयौवनसंपन्नं कामदेवसमप्रभम् । श्वेतचम्पकवर्णाभं रत्नभूषणभूषितम् ।। १७ ।।
शारत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् । महारत्नगणाक्लृप्तविमानस्थं मनोहरम् ।।
रत्नकुण्डलयुग्माढ्यगण्डस्थलविराजितम् । पारिजातप्रसूनाढ्यमाल्यवन्तं च सुस्मितम् ।।
कस्तूरीकुङ्कुमयुतं सुगन्धितिलकोज्ज्वलम् । सा दृष्ट्वा संनिधाने तं मुखमाच्छाद्य वाससा ।।
सस्मिता तं निरीक्षन्ती सकटाक्षं पुनः पुनः । बभूव सा नम्रमुखी नवसंगमलज्जिता ।। २१ ।।
कामुकी कामबाणेन पीडिता पुलकान्विता । पिबन्ती तन्मुखाम्भोजं लोचनाभ्यां च संततम् ।।
ददर्श शङ्खचूडश्च कन्यामेकां तपोवने । पुष्पचन्दनतल्पस्थां वसन्तीं वाससाऽऽवृताम् ।।
पश्यन्तीं तन्मुखं शश्वत्सस्मितां सुमनोहराम् । सुपीनकठिनश्रोणीं पीनोन्नतपयोधराम् ।।
मुक्तापङ्क्तिप्रभाजुष्टदन्तपङ्क्तिं सुबिभ्रतीम् । पक्वबिम्बाधरोष्ठीं च सुनासां सुन्दरीं वराम् ।।
तप्तकाञ्चनवर्णाभां शरच्चन्द्रसमप्रभाम् । स्वतेजसा परिवृतां सुखदृश्यां मनोरमाम् ।। २५ ।।
कस्तूरीबिन्दुभिः सार्धमधश्चन्दनबिन्दुना । सिन्दूरबिन्दुना शश्वत्सीमन्ताधःस्थलोज्ज्वलाम् ।।
निम्ननाभिगभीरां च तदधस्त्रिवलीयुताम् । करपद्मतलारक्तां नखचन्द्रैर्विभूषिताम् ।। २७ ।।
स्थलपद्मप्रभाजुष्टं पादपद्मं च बिभ्रतीम् । आरक्तवर्णं ललितमलक्तकसमप्रभम् ।। २८ ।।
स्थलपद्मैश्च जलजैः पद्मरागविराजिताम् । शरदिन्दुविनिन्द्यैकनखेन्द्वोघविराजिताम् ।।
अमूल्यरत्नैसंमिश्रयावकेन स्वलंकृताम् । मणीन्द्रमुख्यरचितक्वणन्मञ्जीररञ्जिताम् ।।
दधतीं कबरीभारं मालतीमाल्यसंयुतम् । अमूल्यरत्नसंक्लृप्तमकराकृतिरूपिणा ।। ३१ ।।
चित्रकुण्डलयुग्मेन गण्डस्थलविराजिताम् । रत्नेन्द्रमुक्ताहारश्रीस्तनमध्यस्थलोज्ज्वलाम् ।।
रत्नकङ्कणकेयूरशङ्खभूषणभूषिताम् । रत्नाङ्गुलीयकैर्दिव्यैरङ्गुल्यावलिभिर्युताम् ।। ३४ ।।

---

१ क॰ सुप्रियम् । २ क॰ 'न्धिचन्दनान्वितम् । ३ क॰ ऊर्ध्वपद्मस्थलपद्मबीजराजिवि' ।
४ क॰ 'त्ननिर्माणपाशकावलिसंयुताम् । ५ क॰ 'युग्मे श्रीसुषमापरिशोभिताम् ।

दृष्ट्वा तां ललितां कन्यां सुशीलां सुदतीं सतीम् । उवास तत्समीपे च मधुरं तामुवाच सः ॥

शङ्खचूड उवाच—

का त्वं कस्य च कन्याऽसि धन्ये मान्ये सुयोषिताम् । का त्वं कामिनि कल्याणि सर्वकल्याणदायिनि ॥ ३९ ॥

स्वर्गभोगादिसारेऽतिविहारे हाररूपिणि । संसारदारसारे च मायाधारे मनोहरे ॥ ३८ ॥

जगद्विलक्षणे क्षामे मुनीनां मोहकारिणि । मौनं त्यक्त्वा किंकरं मां संभाषां कुरु सुन्दरि ॥

इत्येवं वचनं श्रुत्वा सकामा वामलोचना । सस्मिता नम्रवदना सकामं तमुवाच सा ॥

तुलस्युवाच—

धर्मध्वजसुताऽहं च तपस्यायां तपोवने । तपस्विनीह तिष्ठामि कस्त्वं गच्छ यथासुखम् ॥

कामिनीं कुलजातां च रहस्येकाकिनीं सतीम् । न पृच्छति कुले जात एवमेव श्रुतौ श्रुतम् ॥

लम्पटोऽसत्कुले जातो धर्मशास्त्रार्थवर्जितः । येनाश्रुतः श्रुतेरर्थः स कामीच्छति कामिनीम् ॥

आपातमधुरामन्ते चान्तकां पुरुषस्य ताम् । विषकुम्भाकाररूपाममृतास्यां च संततम् ॥

हृदये क्षुरधाराभां शश्वन्मधुरभाषिणीम् । स्वकार्यपरिनिष्पत्तितत्परां सततं च ताम् ॥

कार्यार्थे स्वामिवशगामन्यथैवावशां सदा । स्वान्तर्मलिनरूपां च प्रसन्नवदनेक्षणाम् ॥

श्रुतौ पुराणे यासां च चरित्रमनिरूपितम् । तासु को विश्वसेत्प्राज्ञो ह्यप्राज्ञ इव सर्वदा ॥

तासां को वा रिपुर्मित्रं प्रार्थयन्तीं नवं नवम् । दृष्ट्वा सुवेशं पुरुषमिच्छन्तीं हृदये सदा ॥

बाह्ये स्वात्मसतीत्वं च ज्ञापयन्तीं प्रयत्नतः । शश्वत्कामां च रामां च कामाधारां मनोहराम् ॥

बाह्ये छलाच्छादयन्तीं स्वान्तर्मैथुनलालसाम् । कान्तं ग्रसन्तीं रहसि बाह्येऽतीव सुलज्जिताम् ॥ ९० ॥

मानिनीं मैथुनाभावे कोपिनीं कलहाङ्कुराम् । सुप्रीतां भूरिसंभोगात्स्वल्पमैथुनदुःखिताम् ॥

सुमिष्टान्नं शीततोयमाकाङ्क्षन्तीं च मानसे । सुन्दरं रसिकं कान्तं युवानं गुणिनं सदा ॥

सुतात्परमतिस्नेहं कुर्वतीं रतिकर्तरि । प्राणाधिकं प्रियतमं संभोगकुशलं प्रियम् ॥ ९२ ॥

पश्यन्तीं रिपुतुल्यं च वृद्धं वा मैथुनाक्षमम् । कलहं कुर्वतीं शश्वत्तेन सार्धं सुकोपनाम् ॥

वचसा भक्षयन्तीं तं कीनाश इव गोरजः । दुःसाहसस्वरूपां च सर्वदोषाश्रयां सदा ॥

शश्वत्कपटरूपां च दुःसाध्यामप्रतिक्रियाम् । ब्रह्मविष्णुशिवादीनां दुस्त्याज्यां मोहरूपिणीम् ॥

तपोमार्गार्गलां शश्वन्मुक्तिद्वारकपाटिकाम् ॥ ९७ ॥

हरेर्भक्तिव्यवहितां सर्वमायाकरण्डिकाम् । संसारकारागारे च शश्वन्निगडरूपिणीम् ॥

---

१ क. त्वं मानिनि । २ क. °नदुःखिताम् । ३ ख. सुभीतां । ४ ख. सर्वदोषाश्रयां सदा ।

इन्द्रजालस्वरूपां च मिथ्यावादिस्वरूपिणीम् । बिभ्रतीं बाह्यसौन्दर्यमध्याङ्गमतिकुत्सितम्
नानाविण्मूत्रपूयानामाधारं मलसंयुतम् । दुर्गन्धिदोषसंयुक्तं रक्ताक्तं चाप्यसंस्कृतम् ॥
मायारूपं मायिनां च विधिना निर्मितं पुरा । विषरूपां मुमुक्षूणामदृश्यां चैव सर्वदा ॥
इत्युक्त्वा तुलसी तं च विरराम च नारद । सस्मितः शङ्खचूडश्च प्रवक्तुमुपचक्रमे ॥

शङ्खचूड उवाच—

त्वया यत्कथितं देवि न च सर्वमलीककम् । किंचित्सत्यमलीकं च किंचिन्मत्तो निशामय
निर्मितं विविधं धात्रा स्त्रीरूपं सर्वमोहनम् । कृत्यारूपं वास्तवं च प्रशस्यं चाप्रशंसितम्
लक्ष्मीसरस्वतीदुर्गासावित्रीराधिकादिकम् । सृष्टिसूत्रस्वरूपं चाप्याद्यं स्रष्ट्रा तु निर्मितम् ॥
एतासामंशरूपं यत्स्त्रीरूपं वास्तवं स्मृतम् । तत्प्रशस्यं यशोरूपं सर्वमङ्गलकारणम् ॥ ६६ ॥
शतरूपा देवहूतिः स्वधा स्वाहा च दक्षिणा । छायावती रोहिणी च वरुणानी शची तथा ॥
कुबेरवायुपत्नी साऽप्यदितिश्च दितिस्तथा । लोपामुद्राऽनसूया च कैटभी तुलसी तथा ॥
अहल्याऽरुन्धती मेना तारा मन्दोदरी परा । दमयन्ती वेदवती गङ्गा च यमुना तथा ॥ ६९ ॥
पुष्टिस्तुष्टिः स्मृतिर्मेधा कालिका च वसुंधरा । षष्ठी मङ्गलचण्डी च मूर्तिर्वै धर्मकामिनी ॥
स्वस्तिः श्रद्धा च कान्तिश्च तुष्टिः[3] शान्तिस्तथाऽपरा । निद्रा तन्द्रा क्षुत्पिपासा संध्या रात्रिर्दिनानि च ॥ ७१ ॥
संपत्तिवृत्तिकीर्त्यश्च[4] क्रिया शोभा प्रभांशकम् । यत्स्त्रीरूपं च संभूतमुत्तमं तद्युगे युगे ॥ ७२ ॥
कृत्यास्वरूपं यद्यत्तु स्वर्वेश्यादिकमेव च । तदप्रशंस्यं विश्वेषु पुंश्चलीरूपमेव च ॥ ७३ ॥
सत्त्वप्रधानं यद्रूपं तच्च शुद्धं स्वभावतः । तदुत्तमं च विश्वेषु साध्वीरूपं प्रशंसितम् ॥ ७४ ॥
तद्वास्तवं च विज्ञेयं प्रवदन्ति मनीषिणः । रजोरूपं तमोरूपं कृत्यासु द्विविधं स्मृतम् ॥ ७५ ॥
स्थानाभावात्क्षणाभावान्मध्यवृत्तेरभावतः । देहक्लेशेन रोगेण सत्संसर्गेण सुन्दरि ॥ ७६ ॥
बहुगोष्ठ्यावृतेनैव रिपुराजभयेन च । रजोरूपस्य साध्वीत्वमेतेनैवोपजायते ॥ ७७ ॥
इदं मध्यमरूपं च प्रवदन्ति मनीषिणः । तमोरूपं दुर्निवार्यमधमं तद्विदुर्बुधाः ॥ ७८ ॥
न पृच्छति कुले जातः पण्डितश्च परस्त्रियम् । निर्जने दुर्जने वाऽपि रहस्ये वचसा स्त्रियम्
आगच्छामि त्वत्समीपमाज्ञया ब्रह्मणोऽधुना । गान्धर्वेण विवाहेन त्वां ग्रहीष्यामि शोभने
अहमेव शङ्खचूडो देवविद्रावकारकः । दनुवंशोद्भवो विश्वे सुदामाऽहं हरेः पुरे ॥ ८१ ॥
अहमष्टसु गोपेषु [6]गोगोपीपार्षदेषु च । अधुना दानवेन्द्रोऽहं राधिकायाश्च शापतः ॥ ८२ ॥

---

१ ख. °तं द्विवि° । २ क. °तीगङ्गासा । ३ क °ष्टिर्लज्जा त° । ४ क. °त्तिधृतिकी° ।
५ क. °ण तदसङ्गेन सु° । ६ क. गोविन्दपा° ।

जातिस्मरोऽहं जानामि कृष्णमन्त्रप्रभावतः। जातिस्मरा त्वं तुलसी संसक्ता हरिणा पुरा
त्वमेव राधिकाकोपाज्जाताऽसि भारते भुवि। त्वां संभोक्तुमिच्छकोऽहं नालं राधाभयात्सदा
इत्येवमुक्त्वा स पुमान्विरराम महामुने। सस्मिता तुलसी हृष्टा प्रवक्तुमुपचक्रमे ॥ ८९ ॥

तुलस्युवाच—

एवंविधो बुधो विश्वे बुधेषु च प्रशंसितः। कान्तमेवंविधं कान्ता शश्वदिच्छति कामतः॥
त्वया त्वमधुना सत्यं विचारेण पराजिता। स निन्दितश्चाप्यशुचिर्यः पुमांश्च स्त्रिया जितः॥
निन्दन्ति पितरो देवा बान्धवाः स्त्रीजितं जनम्। स्त्रीजितं मनसा वाच पिता भ्राता च निन्दति
शुध्येद्विप्रो दशाहेन जातके मृतके तथा। भूमिपो द्वादशाहेन वैश्यः पञ्चदशाहतः॥८९॥
शूद्रो मासेन वेदेषु मातृवद्वर्णसंकरः। अशुचिः स्त्रीजितः शुध्येच्चितादाहेन कालतः॥
न गृह्णन्तीच्छया तस्य पितरः पिण्डतर्पणम्। न गृह्णन्तीच्छया देवास्तस्य पुष्पजलादिकम्
किं तस्य ज्ञानतपसा जपहोमप्रपूजनैः। किं विद्यया वा यशसा स्त्रीभिर्यस्य मनो हृतम्॥
विद्याप्रभावज्ञानार्थं मया त्वं च परीक्षितः। कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम्
वराय गुणहीनाय वृद्धायाज्ञानिने तथा। दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च॥
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च। पङ्गुलायाङ्गहीनाय चान्धाय बधिराय च॥
जडाय चैव मूकाय क्लीबतुल्याय पापिने। ब्रह्महत्यां लभेत्सोऽपि यः स्वकन्यां ददाति च॥
शान्ताय गुणिने चैव यूने च विदुषेऽपि च। वैष्णवाय सुतां दत्त्वा दशवाजिफलं लभेत्॥
यः कन्यापालनं कृत्वा करोति विक्रयं यदि। विपदा धनलोभेन कुम्भीपाकं स गच्छति॥
कन्यामूत्रपुरीषं च तत्र भक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश ॥९९॥
तदन्ते व्याधयोनौ च लभते जन्म निश्चितम्। विक्रीणाति मांसभारं वहत्येव दिवानिशम्॥
इत्येवमुक्त्वा तुलसी विरराम तपोवने। एतस्मिन्नन्तरे ब्रह्मा तयोरन्तिकमाययौ ॥१०१॥
मूर्ध्ना ननाम तुलसी शङ्खचूडश्च नारद। उवास तत्र देवेशश्चोवाच च तयोर्हितम् ॥२॥

ब्रह्मोवाच—

किं करोषि शङ्खचूड संवादमनया सह। गान्धर्वेण विवाहेन त्वमस्या ग्रहणं कुरु ॥३॥
त्वं च पुरुषरत्नं च स्त्रीरत्नं स्त्रीष्वियं सती। विदग्धाया विदग्धेन संगमो गुणवान्भवेत्॥
निर्विरोधसुखं राजन्को वा त्यजति दुर्लभम्। योऽविरोधसुखत्यागी स पशुर्नात्र संशयः॥
किमुपेक्षसि त्वं कान्तमीदृशं गुणिनं सति। देवानामसुराणां च दानवानां विमर्दनम् ॥६॥

---

१ क. संभुक्ता। २ क. माता। ३ क. तद्ध्यामेन स°। ४ क. °वापीक°। ५ क. किं परीक्ष°।

यथा लक्ष्मीश्च लक्ष्मीशे यथा कृष्णे च राधिका। यथा मयि च सावित्री भवानी च
भवे यथा ॥ १०७ ॥
यथा धरा वराहे च यथा मेना हिमालये। यथाऽत्रावनसूया च दमयन्ती नले यथा ॥
रोहिणी च यथा चन्द्रे यथा कामे रतिः सती। यथाऽदितिः कश्यपे च वसिष्ठेऽरुन्धती यथा
यथाऽहल्या गौतमे च देवहूतिश्च कर्दमे। यथा बृहस्पतौ तारा शतरूपा मनौ यथा ॥
यथा च दक्षिणा यज्ञे यथा स्वाहा हुताशने। यथा शची महेन्द्रे च यथा पुष्टिर्गणेश्वरे
देवसेना यथा स्कन्दे धर्मे मूर्तिर्यथा सती। सौभाग्यसुप्रिया त्वं च शङ्खचूडे तथा भव
अनेन सार्धं सुचिरं सुन्दरेण च सुन्दरि। स्थाने स्थाने विहारं च यथेच्छं कुरु संततम् ॥
पश्चात्प्राप्स्यसि गोविन्दं गोलोके पुनरेव च। चतुर्भुजं च वैकुण्ठे शङ्खचूडे मृते सति
इत्येवमाशिषं कृत्वा स्वालयं प्रययौ विधिः। गान्धर्वेण विवाहेन जगृहे तां च दानवः ॥
स्वर्गे दुन्दुभिवाद्यं च पुष्पवृष्टिर्बभूव ह। स रेमे रामया सार्धं वासगेहे मनोहरे ॥ ११६ ॥
मूर्छां संप्राप तुलसी नवसंगमसंगता। निमग्ना निर्जने साध्वी संभोगसुखसागरे ॥ ११७ ॥
चतुःषष्टिकलामानं चतुःषष्टिविधं सुखम्। कामशास्त्रे यन्निरुक्तं रसिकानां यथेप्सितम् ॥
अङ्गप्रत्यङ्गसंश्लेषपूर्वकं स्त्रीमनोहरम्। तत्सर्वं सुखशृङ्गारं चकार रसिकेश्वरः ॥ ११९ ॥
अतीव रम्ये देशे च सर्वजन्तुविवर्जिते। पुष्पचन्दनतल्पे च पुष्पचन्दनवायुना ॥ १२० ॥
पुष्पोद्याने नदीतीरे पुष्पचन्दनचर्चिते। गृहीत्वा रसिकां रामां पुष्पचन्दनचर्चिताम् ॥
भूषितां भूषणैः सर्वै रतीव सुमनोहराम्[1]। सुरतेर्विरतिर्नास्ति तयोः सुरतविज्ञयोः ॥
जहार मानसं भर्तुर्लीलया तुलसी सती। चेतनां रसिकायाश्च जहार रसभाववित् ॥
वक्षसश्चन्दनं[2] बाहोस्तिलकं विजहार सा। स च जग्राह तस्याश्च सिन्दूरबिन्दुपत्रकम् ॥
स तद्वक्षसि तस्याश्च नखरेखां ददौ मुदा। सा ददौ तद्वामपार्श्वे करभूषणलक्षणम् ॥
राजा तदोष्ठपुटके ददौ दशनदंशनम्। तद्गण्डयुगले सा च प्रददौ तच्चतुर्गुणम् ॥ १२६ ॥
सुरतेर्विरतौ तौ च समुत्थाय परस्परम्। सुवेशं चक्रतुस्तत्र यत्तन्मनसि वाञ्छितम् ॥
कुङ्कुमाक्तचन्दनेन सा तस्मै तिलकं ददौ। सर्वाङ्गे सुन्दरे रम्ये चकार चानुलेपनम् ॥
सुवासितं च ताम्बूलं वह्निशुद्धे च वाससी। पारिजातस्य कुसुमं[3] माल्यं चैव सुशोभनम् ॥
अमूल्यरत्ननिर्माणमङ्गुलीयकमुत्तमम्। सुन्दरं च मणिवरं त्रिषु लोकेषु दुर्लभम् ॥
दासी तवाहमित्येवं समुच्चार्य पुनः पुनः। ननाम परया भक्त्या स्वामिनं गुणशालिनम् ॥

---

१ क. रत्नभूषणभूषितः। २ क. °नं राजस्ति°। ३ क. °मं जरारोगहरं परम्।

सस्मिता तन्मुखाम्भोजं लोचनाभ्यां पपौ पुनः । निमेषरहिताभ्यां च सकटाक्षं च सुन्दरम् ॥
स च तां च समाकृष्य चकार वक्षसि प्रियाम् सस्मितं वाससा छन्नं ददर्श मुखपङ्कजम् ॥
चुचुम्ब कठिने गण्डबिम्बोष्ठे पुनरेव च । ददौ तस्यै वस्त्रयुग्मं वरुणादाहृतं च यत् ॥
तदा हृतां रत्नमालां त्रिषु लोकेषु विश्रुताम् ॥ १३४ ॥
ददौ मञ्जीरयुग्मं च स्वाहायाश्च हृतं च यत् । केयूरयुग्मं छायाया रोहिण्याश्चैव कुण्डलम् ॥
अङ्गुलीयकरत्नानि[1] रत्याश्च वरभूषणम् । शङ्खं सुरुचिरं चित्रं यद्दत्तं विश्वकर्मणा ॥ १३६ ॥
विचित्रंपीठकश्रेणीं शय्यां चापि सुदुर्लभाम् । भूषणानि च दत्त्वा च परीहारं चकार ह ॥
निर्ममे कबरीभारं तस्याश्च माल्यसंयुतम् । सुचित्रं पत्रकं गण्डे जयलेखसमं तथा ॥ १३८ ॥
चन्द्रलेखात्रिभिर्युक्तं चन्दनेन सुगन्धिना । परित. परितश्चित्रैः सार्धं कुङ्कुमबिन्दुभिः ॥
ज्वलत्प्रदीपाकारं च सिन्दूरतिलकं ददौ । तत्पादपद्मयुगले स्थलपद्मविनिन्दिते ॥ १४० ॥
चित्रालक्तकरागं च नखरेषु ददौ मुदा । स्ववक्षसि मुहुर्न्यस्तं सरागं चरणाम्बुजम् ॥ १४१ ॥
हे देवि तव दासोऽहमित्युच्चार्य पुनः पुनः । रत्ननिर्माणयानेन तां च कृत्वा स्ववक्षसि ॥
तपोवनं परित्यज्य राजा स्थानान्तरं ययौ । मलये देवनिलये शैले शैले वने वने ॥ १४३ ॥
स्थाने स्थानेऽतिरम्ये च पुष्पोद्यानेऽतिनिर्जने । कन्दरे कन्दरे सिन्धुतीरे तीरेऽतिसुन्दरे ॥
पुष्पभद्रानदीतीरे नीरवातमनोहरे । पुलिने पुलिने दिव्ये नद्यां नद्यां नदे नदे ॥ १४५ ॥
मधौ मधुकराणां च मधुरध्वनिनादिते । विनिस्यन्दे सुपवने नन्दने गन्धमादने ॥ १४६ ॥
देवोद्याने देववने चित्रे चन्दनकानने । चम्पकानां केतकीनां माधवीनां च माधवे ॥ १४६ ॥
कुन्दानां मालतीनां च कुमुदाम्भोजकानने । कल्पवृक्षे कल्पवृक्षे पारिजातवने वने ॥ १४७ ॥
निर्जने काञ्चनीस्थाने धन्ये काञ्चनपर्वते । काञ्चीवने किञ्जल्के कञ्चुके काञ्चनाकरे ॥
पुष्पचन्दनतल्पे च पुंस्कोकिलरुते श्रुते । पुष्पचन्दनसंयुक्तः पुष्पचन्दनवायुना ॥ १५० ॥
कामुकया कामुकः कामात्स रेमे रामया सह । न तृप्तो दानवेन्द्रश्च तृप्तिं नैव जगाम सा ॥
हविषा कृष्णवर्त्मेव ववृधे मदनस्तयोः । तया सह समागत्य स्वाश्रमं दानवस्ततः ॥
रम्यं क्रीडालयं कृत्वा विजहार पुनस्ततः । एवं संबुभुजे राज्यं शङ्खचूडः प्रतापवान् ॥
एकमन्वन्तरं पूर्णं राजराजेश्वरो बली । देवानामसुराणां च दानवानां च संततम् ॥
गन्धर्वाणां किंनराणां राक्षसानां च शास्तिदः । हृताधिकारा देवाश्च चरन्ति भिक्षुका यथा
पूजाहोमादिकं तेषां जहार विषयं बलात् । आश्रयं चाधिकारं च शस्त्रास्त्रभूषणादिकम् ॥
निरुद्यमाः सुराः सर्वे चित्रपुत्तलिका यथा । ते च सर्वे विषण्णाश्च प्रजग्मुर्ब्रह्मणः सभाम् ॥

---

१ क. °नि रेवत्याः करभू° । २ क. °त्रपाशकश्रेणीं शय्याश्चापि ।

वृत्तान्तं कथयामासू रुरुदुश्च भृशं मुहुः । तदा ब्रह्मा सुरैः सार्धं जगाम शंकरालयम् ॥
सर्वं संकथयामास विधाता चन्द्रशेखरम् । ब्रह्मा शिवश्च तैः सार्धं वैकुण्ठं च जगाम ह ॥
सुदुर्लभं परं धाम जरामृत्युहरं परम् । संप्राप च वरं द्वारमाश्रमाणां हरेरहो ॥ १६० ॥
ददर्श द्वारपालांश्च रत्नसिंहासनास्थितान् । शोभितान्पीतवस्त्रैश्च रत्नभूषणभूषितान् ॥
वनमालान्वितान्सर्वाञ्श्यामसुन्दरविग्रहान् । शङ्खचक्रगदापद्मधरांश्चैव चतुर्भुजान् ॥
सस्मितान्पद्मवक्त्रांश्च पद्मनेत्रान्मनोहरान् । ब्रह्मा तान्कथयामास वृत्तान्तं गमनार्थकम् ॥
तेऽनुज्ञां च ददुस्तस्मै प्रविवेश तदाज्ञया । एवं च षोडश द्वाराण्निरीक्ष्य कमलोद्भवः ॥
देवैः सार्धं तानतीत्य प्रविवेश हरेः सभाम् । देवर्षिभिः परिवृतां पार्षदैश्च चतुर्भुजैः ॥
नारायणस्वरूपैश्च सर्वैः कौस्तुभभूषितैः । पूर्णेन्दुमण्डलाकारां चतुरस्त्रां मनोहराम् ॥
मणीन्द्रसारनिर्माणां हीरासारसुशोभिताम् । अमूल्यरत्नखचितां रचितां स्वेच्छया हरेः ॥
माणिक्यमालाजालाढ्यां मुक्तापङ्क्तिविभूषिताम् । मण्डितां मण्डलाकारै रत्नदर्पणको-
टिभिः ॥ १६८ ॥
विचित्रैश्चित्ररेखाभिर्नानाचित्रविचित्रिताम् । पद्मरागेन्द्ररचितै रचितां पद्मकृत्रिमैः[1] ॥
सोपानशतकैर्युक्तां स्यमन्तकविनिर्मितैः । पट्टसूत्रग्रन्थियुतैश्चारुचन्दनपल्लवैः ॥ १७० ॥
इन्द्रनीलमणिस्तम्भैर्वेष्टितां सुमनोरमाम् । सद्रत्नपूर्णकुम्भानां समूहैश्च समन्विताम् ॥
पारिजातप्रसूनानां मालाजालैर्विराजिताम् । कस्तूरीकुङ्कुमाक्तैश्च सुगन्धिचन्दनद्रवैः ॥
सुसंस्कृतां तु सर्वत्र वासितां गन्धवायुना । विद्याधरीसमूहानां संगीतैश्च मनोहराम् ॥
सहस्रयोजनायामां परिपूर्णां च किंकरैः । ददर्श श्रीहरिं ब्रह्मा शंकरश्च सुरैः सह ॥७४॥
वसन्तं तन्मध्यदेशे यथेन्दुं तारकावृतम् । अमूल्यरत्ननिर्माणचित्रसिंहासनस्थितम् ॥
किरीटिनं कुण्डलिनं वनमालाविभूषितम् । शङ्खचक्रगदापद्मधारिणं च चतुर्भुजम् ॥
नवीननीरदश्यामं सुन्दरं सुमनोहरम् । अमूल्यरत्ननिर्माणसर्वाभरणभूषितम् ॥ १७७ ॥
चन्दनोक्षितसर्वाङ्गं बिभ्रतं केलिपङ्कजम् । पुरतो नृत्यगीतं च पश्यन्तं सस्मितं मुदा ॥
शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम् । भक्तप्रदत्तताम्बूलं भुक्तवन्तं सुवासितम् ॥
गङ्गया परया भक्त्या सेवितं श्वेतचामरैः । सर्वैश्च स्तूयमानं च भक्तिनम्रात्मकंधरैः ॥
एवंविशिष्टं तं दृष्ट्वा परिपूर्णतमं विभुम् । ब्रह्मादयः सुराः सर्वे प्रणम्य तुष्टुवुस्तदा ॥
पुलकाङ्कितसर्वाङ्गाः साश्रुनेत्राः सगद्गदाः । भक्त्या परमया भक्ता भीता नम्रात्मकंधराः
पुटाञ्जलियुतो भूत्वा विधाता जगतामपि । वृत्तान्तं कथयामास विनयेन हरेः पुरः ॥

---

१ क. °चितां पद्मरागविचित्रितैः ।

हरेरिदं वचनं श्रुत्वा सर्वज्ञः सर्वभाववित् । प्रहस्योवाच ब्रह्माणं रहस्यं च मनोहरम् ॥

श्रीभगवानुवाच—

शङ्खचूडस्य वृत्तान्तं सर्वं जानामि पद्मज ; मद्भक्तस्य च गोपस्य महातेजस्विनः पुरा ॥
शृणु तत्सर्वमितिहासं पुरातनम् गोलोकस्यैव चरितं पापघ्नं पुण्यकारणम् ॥
सुदामा नाम गोपश्च पार्षदप्रवरो मम । स प्राप दानवीं योनिं राधाशापात्सुदारुणात् ॥
तत्रैकदाऽहमगमं स्वालयाद्रासमण्डलम् , विहाय मानिनीं राधां मम प्राणाधिकां पराम् ॥
सा मां विरजया सार्धं विज्ञाय किंकरीमुखात् । पश्चात्क्रुधा सा जगाम मां ददर्श च तत्र च
विरजां च नदीरूपां मां ज्ञात्वा च तिरोहितम् । पुनर्जगाम सा रुष्टा स्वालयं सखिभिः सह
मां दृष्ट्वा मन्दिरे देवी सुदामसहितं पुरा । भृशं मां भर्त्सयामास मौनीभूतं च सुस्थिरम् ॥
तच्छ्रुत्वा च सुमहांश्च सुदामा तां चुकोप ह । स च तां भर्त्सयामास कोपेन मम संनिधौ
तच्छ्रुत्वा सा कोपयुक्ता रक्तपङ्कजलोचना । बहिष्कर्तुं चकाराऽऽज्ञां संत्रस्ता मम संसदि ॥
सखीलक्षं समुत्तस्थौ दुर्वारं तेजसोज्ज्वलम् , बहिश्चकार तं तूर्णं जल्पन्तं च पुन. पुनः ॥
सा च तद्वचनं श्रुत्वा समारुष्टा शशाप तम् । याहि रे दानवीं योनिमित्येवं दारुणं वचः ॥
तं गच्छन्तं शपन्तं च रुदन्तं मां प्रणम्य च । वारयामास सा दृष्ट्वा रुदती कृपया पुनः ॥
हे वत्स तिष्ठ मा गच्छ क्व यासीति पुनः पुनः । समुच्चार्य च तत्पश्चाज्जगाम सा च
विस्मिता[4] ॥ १९७ ॥
गोप्यश्च रुरुदुः सर्वा गोपाश्चेति सुदुःखिताः । ते सर्वे राधिका चापि तत्पश्चाद्बोधिता मया
आगमिष्यति क्षणार्धेन कृत्वा शापस्य पालनम् । सुदामंस्त्वमिहाऽऽगच्छेत्युवाच सा
निवारिता ॥ १९९ ॥
गोलोकस्य क्षणार्धेन चैकमन्वन्तरं भवेत् । पृथिव्यां जगतां धातुरित्येवं वचनं ध्रुवम् ॥
स एव शङ्खचूडश्च पुनस्तत्रैव यास्यति । महाबलिष्ठो योगीशः सर्वमायाविशारदः ॥
मम शूलं गृहीत्वा च शीघ्रं गच्छत भारतम् । शिवः करोतु संहारं मम शूलेन रक्षसः ॥
ममैव कवचं कण्ठे सर्वमङ्गलमङ्गलम् । बिभर्ति दानवः शश्वत्संसारविजयी ततः ॥ २ ॥
कवचे संस्थिते तत्र न कोऽपि हिंसितुं क्षमः । तद्याच्ञां च करिष्यामि विप्ररूपोऽहमेव च
सतीत्वभङ्गस्तत्पत्न्या यत्र काले भविष्यति । तत्रैव काले तन्मृत्युरिति दत्तो वरस्त्वया ॥
तत्पत्न्याश्चोदरे वीर्यमर्पयिष्यामि निश्चितम् । तत्क्षणेनैव तन्मृत्युर्भविष्यति न संशयः ॥
पश्चात्सा देहमुत्सृज्य भविष्यति प्रिया मम । इत्युक्त्वा जगतां नाथो ददौ शूलं हराय च

१ क. °वनः । २ क 'मनोमितं' । ३ क. संरम्भात्म' । ४ क. विक्लवा ।

मूलं दत्त्वा ययौ शीघ्रं हरिरभ्यन्तरं मुदा । भारतं च ययुर्देवा ब्रह्मरुद्रपुरोगमाः ॥ २०८ ॥
इति श्रीब्रह्म० महा० प्रकृति० तुलस्युपाख्याने षोडशोऽध्यायः ॥ १६ ॥

अथ सप्तदशोऽध्यायः ।

नारायण उवाच—

ब्रह्मा शिवं संनियोज्य संहारे दानवस्य च । जगाम स्वालयं तूर्णं यथास्थानं महामुने ॥
चन्द्रभागानदीतीरे वटमूले मनोहरे । तत्र तस्थौ महादेवो देवनिस्तारहेतवे ॥ २ ॥
दूतं कृत्वा पुष्पदन्तं गन्धर्वेश्वरमीप्सितम् । शीघ्रं प्रस्थापयामास शङ्खचूडान्तिकं मुदा ॥
स चेश्वराज्ञया शीघ्रं ययौ तन्नगरं वरम् । महेन्द्रनगरोत्कृष्टं कुबेरभवनाधिकम् ॥ ४ ॥
पञ्चयोजनविस्तीर्णं दैर्घ्ये तद्द्विगुणं मुने । स्फाटिकाकारमणिभिः समन्तात्परिवेष्टितम् ॥
सप्तभिः परिखाभिश्च दुर्गमाभिः समन्वितम् ॥ ६ ॥
ज्वलदग्निनिभैर्नित्यं शोभितं रत्नकोटिभिः । युक्तं च वीथिशतकैर्मणिवेदिसमन्वितैः ॥
परितो वणिजां संघैर्नानावस्तुविराजितैः । सिन्दूराकारमणिभिर्निर्मितैश्च विचित्रितैः ॥
भूषितं भूषितैर्दिव्यैराश्रमैः शतकोटिभिः । गत्वा ददर्श तन्मध्ये शङ्खचूडालयं वरम् ॥
अतीव वलयाकारं यथा पूर्णेन्दुमण्डलम् । ज्वलदग्निशिखाभिश्च परिखाभिश्चतसृभिः ॥
सुदुर्गमं च शत्रूणामन्येषां सुगमं सुखम् । अत्युच्चैर्गगनस्पर्श्यमणिप्राकारवेष्टितम् ॥ १० ॥
राजितं द्वादशद्वारैर्द्वारपालसमन्वितैः । रत्नकृत्रिमपद्माढ्यै रत्नदर्पणभूषितैः ॥ ११ ॥
मणीन्द्रसाररचितैः शोभितं लक्षमन्दिरैः । शोभितं रत्नसोपानै रत्नस्तम्भविराजितैः ॥
रत्नचित्रकपाटाढ्यैः सद्रत्नकलशान्वितैः । रत्नप्रतिमपद्माढ्यै रत्नदर्पणभूषितम् ॥
रत्नेन्द्रचित्रराजीभिः सुदीप्ताभिर्विराजितम् ॥ १२ ॥
परितो रक्षितं शश्वद्दानवैः शतकोटिभिः । दिव्यास्त्रधारिभिः शूरैर्महाबलपराक्रमैः ॥ १४ ॥
सुन्दरैश्च सुवेषैश्च नानालंकारभूषितैः । तान्दृष्ट्वा पुष्पदन्तोऽपि वरद्वारं ददर्श सः ॥
द्वारे नियुक्तं पुरुषं शूलहस्तं च सस्मितम् । तिष्ठन्तं पिङ्गलाक्षं च ताम्रवर्णं भयंकरम् ॥
कथयामास वृत्तान्तं जगाम तदनुज्ञया । अतिक्रम्य नवद्वारं जगामाभ्यन्तरं पुरम् ॥ १७ ॥
न केश्चिद्वारितो दूतो दूतरूपेण तस्य च । गत्वा सोऽभ्यन्तरं द्वारं द्वारपालमुवाच ह ॥
रणस्य सर्ववृत्तान्तं विज्ञापयितुमीश्वरम् । स च तं कथयित्वा च दूतं गन्तुमुवाच ह ॥

१ क. न कोऽपि रक्षति क्रुद्धो दूतरूपं रणस्य च ।

स गत्वा शङ्खचूडं तं ददर्श सुमनोहरम् । सभामण्डलमध्यस्थं स्वर्णसिंहासनस्थितम् ॥
मणीन्द्रखचितं चित्रं रत्नदण्डसमन्वितम् । रत्नकृत्रिमपुष्पैश्च प्रशस्तं शोभितं सदा ॥
भृत्येन हस्तविधृतं स्वर्णच्छत्रं मनोहरम् । सेवितं पार्षदगणैर्जनैः श्वेतचामरैः ॥२२॥
सुवेषं सुन्दरं रम्यं रत्नभूषणभूषितम् । माल्यानुलेपनं सूक्ष्मवस्त्रं च दधतं मुने ॥२३॥
दानवेन्द्रैः परिवृतं सुवेषैश्च त्रिकोटिभिः । शतकोटिभिरन्यैश्च भ्रमद्भिः शस्त्रधारिभिः ॥
एवंभूतं च तं दृष्ट्वा पुष्पदन्तः सविस्मयः । उवाच रणवृत्तान्तं यदुक्तं शंकरेण च ॥

पुष्पदन्त उवाच—

राजेन्द्र शिवदूतोऽहं पुष्पदन्ताभिधः प्रभो । यदुक्तं शंकरेणैव तद्ब्रवीमि निशामय ॥
राज्यं देहि च देवानामधिकारं च सांप्रतम् । देवाश्च शरणापन्ना देवेशे श्रीहरौ परे ॥
दत्त्वा त्रिशूलं हरिणा तुभ्यं प्रस्थापितः शिवः । चन्द्रभागानदीतीरे वटमूले त्रिलोचनः
विषयं देहि तेषां च युद्धं वा कुरु निश्चितम् । गत्वा वक्ष्यामि किं शंभुं तद्भवान्वक्तुमर्हति ॥
दूतस्य वचनं श्रुत्वा शङ्खचूडः प्रहस्य च । प्रभाते ह्यागमिष्यामि त्वं च गच्छेत्युवाच ह
स गत्वोवाच तूर्णं तं वटमूलस्थमीश्वरम् । शङ्खचूडस्य वचनं तदीयं यत्परिच्छदम् ॥ ३१ ॥
एतस्मिन्नन्तरे स्कन्द आजगाम शिवान्तिकम् । वीरभद्रश्च नन्दी च महाकालः सुभद्रकः ॥
विशालाक्षश्च बाणश्च पिङ्गलाक्षो विकम्पनः । विरूपो विकृतिश्चैव मणिभद्रश्च बाष्कलः
कपिलाक्षो दीर्घदंष्ट्रो विकटस्ताम्रलोचनः । कालकूटो बलीभद्रः कालजिह्वः कुटीचरः ॥
बलोन्मत्तो रणश्लाघी दुर्जयो दुर्गमस्तथा । अष्टौ च भैरवा रौद्रा रुद्राश्चैकादश स्मृताः
वसवो वासवाद्याश्च आदित्या द्वादश स्मृता । हुताशनश्च चन्द्रश्च विश्वकर्माऽश्विनौ च तौ
कुबेरश्च यमश्चैव जयन्तो नलकूबरः । वायुश्च वरुणश्चैव बुधो वै मङ्गलस्तथा ॥ ३७ ॥
धर्मश्च शनिरीशानः कामदेवश्च वीर्यवान् । उग्रदंष्ट्रा चोग्रदंष्ट्रा कोटकी कैटभी तथा ॥
स्वयं शतभुजा देवी भद्रकाली भयंकरी । रत्नेन्द्रसारखचितविमानोपरिसंस्थिता ॥
रक्तवस्त्रपरीधाना रक्तमाल्यानुलेपना । नृत्यन्ती च हसन्ती च गायन्ती सुस्वरं मुदा ॥
अभयं ददती भक्तमभया सा भयं रिपुम् । बिभ्रती विकटां जिह्वां सुलोलां योजनायताम् ॥
खर्परं वर्तुलाकारं गम्भीरं योजनायतम् । त्रिशूलं गगनस्पर्शि शक्तिं वै योजनायताम् ॥
शङ्खं चक्रं गदां पद्मं शरांश्चापं भयंकरम् । मुद्गरं मुसलं वज्रं खड्गं फलकमुज्ज्वलम् ॥
वैष्णवास्त्रं वारुणास्त्रमाग्नेयं नागपाशकम् । नारायणास्त्रं ब्रह्मास्त्रं गान्धर्वं गारुडं तथा ॥

---

१ क. प्रदर्शि शो° । २ क. °णैः सुवेशै रुचिरप्रभैः । ३ क. पुष्पभद्रान° । ४ क. °भुमथवा बद मामपि । ५ क. °तेऽहं करिष्यामि युद्धं ग°।

पार्जन्यं वै पाशुपतं जृम्भणास्त्रं च पार्वतम् । माहेश्वरास्त्रं वायव्यं दण्डं संमोहनं तथा ॥
अव्यर्थमस्त्रशतकं दिव्यास्त्रशतकं परम् ॥ ४९ ॥
आगत्य तत्र तस्थौ सा योगिनीनां त्रिकोटिभिः । सार्धं वै डाकिनीनां च विकटानां त्रिकोटिभिः ॥ ४६ ॥
भूतप्रेतपिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः । वेतालाश्चैव यक्षाश्च राक्षसाश्चैव किंनराः ॥
ताभिश्चैव सह स्कन्दः नत्वा वै चन्द्रशेखरम् । पितुः पार्श्वे सभायां च समुवास भवाज्ञया ॥
अथ दूते गते तत्र शङ्खचूडः प्रतापवान् । उवाच तुलसीं वार्तां गत्वाऽभ्यन्तरमेव च ॥
रणवार्तां च सा श्रुत्वा शुष्ककण्ठोष्ठतालुका । उवाच मधुरं साध्वी हृदयेन विदूयता ॥

तुलस्युवाच —

हे प्राणनाथ हे बन्धो तिष्ठ मे वक्षसि क्षणम् । हे प्राणाधिष्ठातृदेव रक्ष मे जीवनं क्षणम् ॥
भुङ्क्ष्व जन्मसु भोग्यं तद्यद्वै मनसि वाञ्छितम् । पश्यामि त्वां क्षणं किंचिल्लोचनाभ्यां पिपासिता ॥ ५२ ॥
आन्दोलयन्ति प्राणा मे मनोदाहश्च संततम् । दुःस्वप्नं च मया दृष्टं चाद्यैव चरमे निशि ॥
तुलसीवचनं श्रुत्वा भुक्त्वा पीत्वा नृपेश्वरः । उवाच वचनं प्राज्ञो हितं सत्यं यथोचितम् ॥

शङ्खचूड उवाच —

कालेन योजितं सर्वं कर्मभोगनिबन्धनम् । शुभं हर्षं सुखं दुःखं भयं शोकममङ्गलम् ॥
काले भवन्ति वृक्षाश्च शाखावन्तश्च कालतः । क्रमेण पुष्पवन्तश्च फलवन्तश्च कालतः ॥
तेषां फलानि पक्वानि प्रभवन्त्येव कालतः । ते सर्वे फलिनः काले काले कालं प्रयान्ति च ॥
भवन्ति काले भूतानि काले कालं प्रयान्ति च । काले भवन्ति विश्वानि काले नश्यन्ति सुन्दरि
स्रष्टा च काले सृजति पाता पाति च कालतः । संहर्ता संहरेत्काले संचरन्ति क्रमेण ते ॥
ब्रह्मविष्णुशिवादीनामीश्वरः प्रकृतेः परः । स्रष्टा पाता च संहर्ता स कृत्स्नांशेन सर्वदा ॥
काले स एव प्रकृतिं निर्माय स्वेच्छया प्रभुः । निर्माय प्राकृतान्सर्वान्विश्वस्थांश्च चराचरान्
आब्रह्मस्तम्बपर्यन्तं सर्वं कृत्रिममेव च । प्रवदन्ति च कालेन नश्यत्यपि हि नश्वरम् ॥ ६३ ॥
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात्परम् । सर्वेशं सर्वरूपं च सर्वात्मानं तमीश्वरम् ॥ ६४ ॥
जनं[3] जनेन सृजति जनं पाति जनेन यः । हरेज्जनं जनेनैव तं कृष्णं भज संततम् ॥ ६५ ॥
यस्याऽऽज्ञया वाति वातः शीघ्रगामी च संततम् । यस्याऽऽज्ञया च तपनस्तपत्येव यथाक्षणम्

---

१ ख. °था । नानाविधान्यायुधानि दि° । २ क. यमीप्सित° । ३ क. जलं जलेन सृजति जलं पाति जलेन यः हरेज्जलं जलेनै° ।

यथाक्षणं वर्षतीन्द्रो मृत्युश्चरति जन्तुषु। यथाक्षणं दहत्यग्निश्चन्द्रो भ्रमति भीतवत् ॥ ६६ ॥
मृत्योर्मृत्युं कालकालं यमस्य च यमं परम्। विभुं स्रष्टुश्च स्रष्टारं च पातुः पालकमेव च
संहर्तारं च संहर्तुस्तं कृष्णं शरणं व्रज। को बन्धुश्चैव केषां वा सर्वबन्धुं भज प्रिये ॥ ६८ ॥
अहं को वा त्वं च का वा विधिना योजितः पुरा। त्वया सार्धं कर्मणा च पुनस्तेन वियोजितः
अज्ञानी कातरः शोके विपत्तौ च न पण्डितः। सुखं दुःखं भ्रमत्येव चक्रनेमिक्रमेण च ॥
नारायणं तं सर्वेशं कान्तं प्राप्स्यसि निश्चितम्। तपः कृतं यदर्थे च पुरा बदरिकाश्रमे ॥
मया त्वं तपसा लब्धा ब्रह्मणश्च वरेण हि। हरेरर्थे तव तपो हरिं प्राप्स्यसि कामिनि ॥
वृन्दावने च गोविन्दं गोलोके त्वं लभिष्यसि अहं यास्यामि तल्लोकं तनुं त्यक्त्वा च दानवीम् ॥ ७३ ॥
तत्र द्रक्ष्यसि मां त्वं च त्वां द्रक्ष्यामि च संततम्। आगमं राधिकाशापाद्भारतं च सुदुर्लभम्
पुनर्यास्यामि तत्रैव कः शोको मे शृणु प्रिये। त्वं हि देहं परित्यज्य दिव्यरूपं विधाय च
तत्काले प्राप्स्यसि हरिं मा कान्ते कातरा भव। इत्युक्त्वा च दिनान्ते च तया सार्धं मनोहरे
सुतल्पे शोभने तल्पे पुष्पचन्दनचर्चिते। नानाप्रकारविभवे चचार रत्नमन्दिरे ॥ ७७ ॥
रत्नप्रदीपसंयुक्ते स्त्रीरत्नं प्राप्य सुन्दरीम्। निनाय रजनीं राजा क्रीडाकौतुकमङ्गलैः ॥
कृत्वा वक्षसि कान्तां तां रुदतीमतिदुःखिताम्। कृशोदरीं निराहारां निमग्नां शोकसागरे
पुनस्तां बोधयामास दिव्यज्ञानेन बोधवित्। पुरा कृष्णेन यद्दत्तं भाण्डीरे तत्त्वमुत्तमम् ॥
स च तस्यै ददौ तच्च सर्वशोकहरं परम्। ज्ञानं संप्राप्य सा देवी प्रसन्नवदनेक्षणा ॥ ८१ ॥
क्रीडां चकार हर्षेण सर्वं मत्वाऽतिनश्वरम्। तौ दम्पती च क्रीडार्तौ निमग्नौ सुखसागरे ॥
पुलकाङ्कितसर्वाङ्गौ मूर्छितौ निर्जने वने। अङ्गप्रत्यङ्गसंयुक्तौ सुप्रीतौ सुरतोत्सुकौ ॥
एकाङ्गौ च तथा तौ द्वौ चार्धनारीश्वरौ यथा। प्राणेश्वरं च तुलसी मेने प्राणाधिकं परम् ८४
प्राणाधिकां च तां मेने राजा प्राणाधिकेश्वरीम्। तौ स्थितौ सुखसुप्तौ च तन्द्रितौ सुन्दरौ समौ ॥ ८५ ॥
सुवेषौ सुखसंभोगादचेष्टौ सुमनोहरौ। क्षणं सचेतनौ तौ च कथयन्तौ रसाश्रयाम् ॥
कथां मनोहरां दिव्यां हसन्तौ च क्षणं पुनः। भुक्तवन्तौ च ताम्बूलं प्रदत्तं च परस्परम् ॥
परस्परं सेवितौ च सुप्रीत्या श्वेतचामरैः। क्षणं शयानौ सानन्दौ वसन्तौ च क्षणं पुनः ॥
क्षणं केलिनियुक्तौ च रसभावसमन्वितौ। सुरताद्विरतिर्नास्ति तौ तद्विषयपण्डितौ ॥ ८९ ॥
सततं जययुक्तौ द्वौ क्षणं नैव पराजितौ ॥ ९० ॥

१ क. °रं वीजितौ च।

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु० तुलसीशङ्खचूडसंभोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथाष्टादशोऽध्यायः ।

**नारायण उवाच—**

श्रीकृष्णं मनसा ध्यात्वा राजा कृष्णपरायणः । ब्राह्मे मुहूर्ते चोत्थाय पुष्पतल्पान्मनोहरात्
रात्रिवासः परित्यज्य स्नात्वा मङ्गलवारिणा । धौते च वाससी धृत्वा कृत्वा तिलकमुज्ज्वलम्
चकाराऽऽह्निकमावश्यमभीष्टगुरुवन्दनम् । दध्याज्यं मधु लाजांश्च सोऽपश्यद्वस्तु मङ्गलम्
रत्नश्रेष्ठं मणिश्रेष्ठं वस्त्रश्रेष्ठं च काञ्चनम् । ब्राह्मणेभ्यो ददौ भक्त्या यथा नित्यं च नारद ॥
अमूल्यरत्नं यत्किंचिन्मुक्तामाणिक्यहीरकम् । ददौ विप्राय गुरवे यात्रामङ्गलहेतवे ॥ ५ ॥
गजरत्नं चाश्वरत्नं धेनुरत्नं मनोहरम् । ददौ सर्वं दरिद्राय विप्राय मङ्गलाय च ॥ ६ ॥
कोशागारसहस्रं च नगराणां त्रिलक्षकम् । ग्रामाणां शतकोटिं च ब्राह्मणेभ्यो ददौ मुदा
पुत्रं कृत्वा च राजेन्द्रं सुचन्द्रं दानवेषु च । पुत्रे समर्प्य भार्यां च राज्यं वै सर्वसंपदम् ॥
प्रजानुचरसंघं च कोशौघं वाहनादिकम् । स्वयं संनाहयुक्तश्च धनुष्पाणिर्बभूव ह ॥ ९ ॥
भृत्यद्वाराक्रमेणैव स चक्रे सैन्यसंचयम् । अश्वानां च त्रिलक्षेण पञ्चलक्षेण हस्तिनाम् ॥
रथानामयुतेनैव धानुष्काणां त्रिकोटिभिः । त्रिकोटिभिश्चर्मिणां च शूलिनां च त्रिकोटिभिः
कृता सेनाऽपरिमिता दानवेन्द्रेण नारद । तस्यां सेनापतिश्चैको युद्धशास्त्रविशारदः ॥
महारथः स विज्ञेयो रथिनां प्रवरो रणे । त्रिलक्षाक्षौहिणीसेनापतिं कृत्वा नराधिपः ॥
त्रिंशदक्षौहिणीवाद्यभाण्डौघं च चकार सः । बहिर्बभूव शिबिरान्मनसा श्रीहरिं स्मरन् ॥
रत्नेन्द्रसारखचितं विमानं चारुरोह सः । गुरुवर्गान्पुरस्कृत्य प्रययौ शंकरान्तिकम् ॥ १५ ॥
पुष्पभद्रानदीतीरे यत्राक्षयवटः शुभः । सिद्धाश्रमं च सिद्धानां सिद्धिक्षेत्रं च नामतः ॥
कपिलस्य तपःस्थानं पुण्यक्षेत्रं च भारते । पश्चिमोदधिपूर्वे च मलयस्य च पश्चिमे ॥ १७ ॥
श्रीशैलोत्तरभागे च गन्धमादनदक्षिणे । पञ्चयोजनविस्तीर्णा दैर्घ्ये शतगुणा तथा ॥
शाश्वती जलपूर्णा च पुष्पभद्रा नदी शुभा ॥ १८ ॥
लवणोदप्रियाभार्या शश्वत्सौभाग्यसंयुता । शुद्धस्फटिकसंकाशा भारते च सुपुण्यदा ॥
शरावतीमिश्रिता च निर्गता सा हिमालयात् । गोमन्तं वामतः कृत्वा प्रविष्टा पश्चिमोदधौ ॥

१ क. °त्नं यानरत्नं म° ।

तत्र गत्वा शङ्खचूडो ददर्श चन्द्रशेखरम् । वटमूले समासीनं सूर्यकोटिसमप्रभम् ॥
कृत्वा योगासने स्थित्वा मुद्रायुक्तं च सस्मितम् । शुद्धस्फटिकसंकाशं ज्वलन्तं ब्रह्मतेजसा
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम् । तप्तकाञ्चनवर्णाभं जटाजालं च बिभ्रतम् ॥२३॥
त्रिनेत्रं पञ्चवक्त्रं च नागयज्ञोपवीतिनम् । मृत्युंजयं कालमृत्युं विश्वमृत्युकरं परम्॥२४॥
भक्तमृत्युहरं शान्तं गौरीकान्तं मनोरमम् । तपसां फलदातारं दातारं सर्वसंपदाम् ॥
आशुतोषं प्रसन्नास्यं भक्तानुग्रहकारकम् । विश्वनाथं विश्वरूपं विश्वबीजं च विश्वजम् ॥
विश्वंभरं विश्ववरं विश्वसंहारकारणम् । कारणं कारणानां च नरकार्णवतारणम् ॥२७॥
ज्ञानप्रदं ज्ञानबीजं ज्ञानानन्दं सनातनम् । अवरुह्य विमानाच्च तं दृष्ट्वा दानवेश्वरः॥२८॥
सर्वैः सार्धं भक्तियुक्तः शिरसा प्रणनाम सः । वामतो भद्रकालीं च स्कन्दं तत्पुरतः स्थितम्
आशिषं च ददौ तस्मै काली स्कन्दश्च शंकरः। उत्तस्थुर्दानवं दृष्ट्वा सर्वे नन्दीश्वरादयः ॥
परस्परं च संभाषां ते चक्रुस्तत्र सांप्रतम् । राजा कृत्वा च संभाषामुवास शिवसंनिधौ ॥
प्रसन्नात्मा महादेवो भगवांस्तमुवाच ह ॥ ३२ ॥

श्रीमहादेव उवाच—

विधाता जगतां ब्रह्मा पिता धर्मस्य धर्मवित् । मरीचिस्तस्य पुत्रश्च वैष्णवश्चापि धार्मिकः ।
कश्यपश्चापि तत्पुत्रो धर्मिष्ठश्च प्रजापतिः । दक्षः प्रीत्या ददौ तस्मै भक्त्या कन्यास्त्रयोदश
तास्वेका च दनुः साध्वी तत्सौभाग्येन वर्धिता चत्वारिंशद्दनोः पुत्रा दानवास्तेजसोज्ज्वलाः
तेष्वेको विप्रचित्तिश्च महाबलपराक्रमः । तत्पुत्रो धार्मिको दम्भो विष्णुभक्तो जितेन्द्रियः
जजाप परमं मन्त्रं पुष्करे लक्षवत्सरम् । शुक्राचार्यं गुरुं कृत्वा कृष्णस्य परमात्मनः ॥
तदा त्वां तनयं प्राप परं कृष्णपरायणम् । पुरा त्वं पार्षदो गोपो गोपेष्वष्टसु धार्मिकः ॥
अधुना राधिकाशापाद्भारते दानवेश्वरः । आब्रह्मस्तम्बपर्यन्तं भ्रमं मेने च वैष्णवः ॥
सालोक्यसार्ष्टिसारूप्यसामीप्यैक्यं हरेरपि । दीयमानं न गृह्णन्ति वैष्णवाः सेवनं विना ॥
ब्रह्मत्वममरत्वं वा तुच्छं मेने च वैष्णवः । इन्द्रत्वं वा कुबेरत्वं न मेने गणनासु च ॥
कृष्णभक्तस्य ते किंवा देवानां विषये भ्रमे । देहि राज्यं च देवानां मत्प्रीतिं कुरु भूमिप
सुखं स्वराज्ये त्वं तिष्ठ देवाः सन्तु स्वके पदे । अलं भ्रातृविरोधेन सर्वे कश्यपवंशजाः
यानि कानि च पापानि ब्रह्महत्यादिकानि च । ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम्
स्वसंपदां च हानिं च यदि राजेन्द्र मन्यसे । सर्वावस्थासु समता केषां याति च सर्वदा ॥
ब्रह्मणश्च तिरोभावो लये प्राकृतिके सति । आविर्भावः पुनस्तस्य प्रभवेदीश्वरेच्छया ॥
ज्ञानं बुद्धिश्च तपसा स्मृतिर्लोकस्य निश्चितम् । करोति सृष्टिं ज्ञानेन स्रष्टा सोऽपि क्रमेण च

परिपूर्णतमो धर्मः सत्ये सत्याश्रयः सदा । सोऽपि त्रिभागस्त्रेतायां द्विभागो द्वापरे स्मृतः
एकभागः कलेः पूर्वे तद्ध्रासश्च क्रमेण च । कलामात्रं कलेः शेषे कुह्वां चन्द्रकला यथा ॥
यादृक्तेजो रवेर्ग्रीष्मे न तादृक्शिशिरे पुनः । दिने च यादृङ्मध्याह्ने सायं प्रातर्न तत्समम्
उदयं याति कालेन बालतां च क्रमेण च । प्रकाण्डतां च तत्पश्चात्कालेऽस्तं पुनरेव सः
दिने प्रच्छन्नतां याति काले वै दुर्दिने घने । राहुग्रस्ते कम्पितश्च पुनरेव प्रसन्नताम् ॥५२॥
परिपूर्णतमश्चन्द्रः पूर्णिमायां च यादृशः । तादृशो न भवेन्नित्यं क्षयं याति दिने दिने
पुनः स पुष्टतां याति परकुह्वादिने दिने । संपद्युक्तः शुक्लपक्षे कृष्णे म्लानश्च यक्ष्मणा ॥५४॥
राहुग्रस्ते दिने म्लानो दुर्दिने नि.बिडे घने । काले चन्द्रो भवेच्छुद्धो भ्रष्टश्रीः कालभेदके ॥
भविष्यति बलिश्चेन्द्रो भ्रष्टश्रीः सुतलेऽधुना । कालेन पृथ्वी सस्याढ्या सर्वाधारा वसुंधरा ॥
काले जले निमग्ना सा तिरोभूता विपद्द्रुता । काले नश्यन्ति विश्वानि प्रभवन्त्येव कालतः ॥
चराचराश्च कालेन नश्यन्ति प्रभवन्ति च । ईश्वरस्यैव समता कृष्णस्य परमात्मनः ॥५८॥
अहं मृत्युंजयो यस्मादसंख्यं प्राकृतं लयम् । अदृश्यं चापि पश्यामि वारं वारं पुनः पुनः ॥
स च प्रकृतिरूपश्च स एव पुरुषः स्मृतः । स चाऽऽत्मा सर्वजीवश्च नानारूपधरः परः ॥
करोति सततं यो हि तन्नामगुणकीर्तनम् । कालं मृत्युं स जयति जन्म रोगं जरां भयम् ॥
स्रष्टा कृतो विधिस्तेन पाता विष्णुः कृतो भवे । अहं कृतश्च संहर्ता वयं विषयिणो यतः ॥
कालाग्निरुद्रं संहारे नियुज्य विषये नृप । अहं करोमि सततं तन्नामगुणकीर्तनम् ॥ ६३ ॥
तेन मृत्युंजयोऽहं च ज्ञानेनानेन निर्भयः । मृत्युर्मत्तो भयाद्याति वैनतेयादिवोरगः ॥६४॥
इत्युक्त्वा स च सर्वेशः सर्वज्ञः सर्वभावनः । विरराभाथ शर्वश्च सभामध्ये च नारद ॥६५॥
राजा तद्वचनं श्रुत्वा प्रशशंस पुनः पुनः । उवाच सुन्दरं देवं परं विनयपूर्वकम् ॥ ६६ ॥

शङ्खचूड उवाच—

त्वया यत्कथितं नाथ सर्वं सत्यं च नानृतम् । तथाऽपि किंचिद्यत्सत्यं श्रूयतां मन्निवेदनम् ॥
ज्ञातिद्रोहे महत्पापं त्वयोक्तमधुना त्वयम् । गृहीत्वा तस्य सर्वस्वं कुतः प्रस्थापितो बलिः ॥
मया समुद्धृतं सर्वमैश्वर्यं विक्रमेण च । सुतलाच्च समुद्धर्तुं नालं सोऽपि गदाधरः ॥६९॥
सभ्रातृको हिरण्याक्षः कथं देवैश्च हिंसितः । शुम्भादयश्चासुरा वै कथं देवैर्निपातिताः ॥७०॥
पुरा समुद्रमथने पीयूषं भक्षितं सुरैः । क्लेशभाजो वयं तत्र ते सर्वे फलभागिनः ॥ ७१ ॥
क्रीडाभाण्डमिदं विश्वं कृष्णस्य परमात्मनः । यदा ददाति यस्मै स तस्यैश्वर्यं भवेत्तदा ॥

---

१ क. °र्त्यं याति कुह्वामदृश्यताम् । २ क. °यिणः कृताः । ३ क. °त्र ते सर्वे फलभागिनः ।

देवदानवयोर्वादः शश्वन्नैमित्तिकः सदा । पराजयो जयस्तेषां कालेऽस्माकं क्रमेण च ॥
तत्राऽऽवयोर्विरोधे च गमनं निष्फलं तव । समसंबन्धिनोर्बन्ध्वोरीश्वरस्य महात्मनः ॥
जायते महती लज्जा स्पर्धाऽस्माभिः सहाधुना । ततोऽधिका च समरे कीर्तिहानिः पराजये
शङ्खचूडवचः श्रुत्वा प्रहस्याऽऽह त्रिलोचनः । यथोचितं सुमधुरमत्युग्रं दानवेश्वरम् ॥

श्रीमहादेव उवाच—

युष्माभिः सह युद्धं मे ब्रह्मवंशसमुद्भवैः । का लज्जा महती राजन्नकीर्तिर्वा पराजये ॥
युद्धमादौ हरेरेव मधुना कैटभेन च । हिरण्यकशिपोश्चैव सह तेनाऽऽत्मना नृप ॥७८॥
हिरण्याक्षस्य युद्धं च पुनस्तेन गदाभृता । त्रिपुरैः सह युद्धं च मया चापि पुरा कृतम्
सर्वेश्वर्याः सर्वमातुः प्रकृत्याश्च बभूव ह । सह शुम्भादिभिः पूर्वं समरं परमाद्भुतम् ॥
पार्षदप्रवरस्त्वं च कृष्णस्य परमात्मनः ये ये हताश्च ते दैत्या नहि केऽपि त्वया समाः॥
का लज्जा महती राजन्मम युद्धे त्वया सह । सुराणां शरणस्यैव प्रेषितस्य हरेरहो ॥
देहि राज्यं च देवानां वाग्व्यये किं प्रयोजनम् । युद्धं वा कुरु मत्सार्धमिति मे निश्चितं वचः
इत्युक्त्वा शंकरस्तत्र विरराम च नारद । उत्तस्थौ शङ्खचूडश्च स्वामात्यैः सह सत्वरः ॥

इति श्रीब्रह्म० महा० प्रकृ० नारदना० तुलस्यु० शिवशङ्खचूडसंवादो नामा-
ष्टादशोऽध्यायः ॥ १८ ॥

---

अथैको नविंशोऽध्यायः ।

---

नारायण उवाच—

शिवं प्रणम्य शिरसा दानवेन्द्रः प्रतापवान् । समारुरोह यानं च स्वामात्यैः सह सत्वरः॥
बभूवुस्ते च संक्षुब्धाः स्कन्दशक्त्यर्दितास्तदा । नेदुर्दुन्दुभयः स्वर्गे पुष्पवृष्टिर्बभूव ह ॥२॥
स्कन्दस्योपरि तत्रैव समरे च भयंकरे । स्कन्दस्य समरं दृष्ट्वा महदद्भुतमुल्बणम् ॥ ३ ॥
दानवानां क्षयकरं यथा प्राकृतिकं लयम् । राजा विमानमारुह्य शरवर्षं चकार ह ॥ ४ ॥
नृपस्य शरवृष्टिश्च घनवृष्टिर्यथा तथा । महान्घोरान्धकारश्च वह्न्युत्थानं बभूव ह ॥५॥
देवाः प्रदुद्रुवुश्चान्ये सर्वे नन्दीश्वरादयः । एकाकी कार्तिकेयस्तु तस्थौ समरमूर्धनि ॥६॥
पर्वतानां च सर्पाणां शिलानां शाखिनां तथा । शश्वच्चकार वृष्टिं च दुर्वार्यां च भयंकरीम् ॥
नृपस्य शरवृष्ट्या च प्रच्छन्नः शिवनन्दनः । नीरदेन च सान्द्रेण संछन्नो भास्करो यथा ॥
धनुः स्कन्दस्य चिच्छेद दुर्वहं च भयंकरम् । बभञ्ज च रथं दिव्यं चिच्छेद रथघोटकान् ॥
मयूरं जर्जरीभूतं दिव्यास्त्रेण चकार सः । शक्तिं चिक्षेप सूर्याभां तस्य वक्षोविभेदिनीम् ॥

क्षणं मूर्छां च संप्राप्य चेतनामुपलभ्य सः । गृहीत्वाऽन्यद्धनुर्दिव्यं यद्दत्तं विष्णुना पुरा ॥
रत्नेन्द्रसारखचितं यानमारुह्य चाग्निभूः । शस्त्रमस्त्रं गृहीत्वा च चकार रणमुल्बणम् ॥
सर्पांश्च पर्वतांश्चैव वृक्षांश्च प्रस्तरांस्तथा सर्वांश्चिच्छेद कोपेन दिव्यास्त्रेण शिवात्मजः ॥
आग्नेयं वारुणास्त्रेण वारयामास वै गुहः रथं धनुश्च चिच्छेद शङ्खचूडस्य लीलया ॥ १४ ॥
सवाहं सारथिं चैव किरीटं मुकुटोज्ज्वलम् । चिक्षेप शक्तिमुल्कामां दानवेन्द्रस्य वक्षसि ॥
मूर्छां संप्राप्य राजोपलभ्य वै चेतनां पुनः आरुह्य वै यानमन्यं धनुर्जग्राह सत्वरः ॥
चकार शरजालं च मायया मायिनां वरः । गुहं चाऽऽच्छाद्य समरे शरजालेन नारद ॥
जग्राह शक्तिमव्यर्थां शतसूर्यसमप्रभाम् । प्रलयाग्निशिखारूपां विष्णोर्वै तेजसाऽऽवृताम् ॥
चिक्षेप तां च कोपेन महावेगेन कार्तिके । पपात शक्तिस्तद्गात्रे वह्निराशिरिवोज्ज्वला ॥
मूर्छां संप्राप शक्त्या च कार्तिकेयो महाबलः । काली गृहीत्वा तं क्रोडे निनाय शिव-
संनिधौ ॥ २० ॥
शिवस्तं दर्शनादेव जीवयामास लीलया । ददौ बलमनन्तं च स चोत्तस्थौ प्रतापवान् ॥
शिवः स्वसैन्यं देवांश्च प्रेरयामास सत्वरः । दानवेन्द्रैः ससैन्यैश्च युद्धारम्भो बभूव ह ॥
स्वयं महेन्द्रो युयुधे सार्धं च वृषपर्वणा । भास्करो युयुधे विप्रचित्तिना सह सत्वरः ॥
दम्भेन सह चन्द्रश्च चकार समरं परम् । कालेश्वरेण कालश्च गोकर्णेन हुताशनः ॥
कुबेरः कालकेयेन विश्वकर्मा मयेन च । भयंकरेण मृत्युश्च संहारेण यमस्तथा ॥२५॥
कलविङ्केन[1] वरुणश्चञ्चलेन समीरणः । बुधश्च घृतपृष्ठेन रक्ताक्षेण शनैश्चरः ॥ २६ ॥
जयन्तो रत्नसारेण वसवो वर्चसां गणैः । अश्विनौ वै दीप्तिमता धूम्रेण नलकूबरः ॥२७॥
धनुर्धरेण धर्मश्च मण्डूकाक्षेण मङ्गलः । शोभाकरेणैवेशानः पिठरेण च मन्मथः ॥२८॥
उल्कामुखेन धूम्रेण खड्गेनापि ध्वजेन च । काञ्चीमुखेन पिण्डेन धूम्रेण सह नन्दिना ॥
विश्वे देवाः पलाशेन च ऽऽदित्या युयुधुः परम् । एकादश महारुद्राश्चैकादश भयंकरैः
महामारी च युयुधे चोग्रदण्डादिभिः सह । नन्दीश्वरादयः सर्वे दानवानां गणैः सह ॥
युयुधुश्च महायुद्धे प्रलये च भयंकरे । वटमूले च शंभुश्च तस्थौ काल्या सुतेन च ॥
सर्वे च युयुधुः सैन्यसमूहाः सततं मुने । रत्नसिंहासने रम्ये कोटिभिर्दानवैः सह ॥
उवास शङ्खचूडश्च रत्नभूषणभूषितः । शंकरस्य च योधाश्च युद्धे सर्वे पराजिताः ॥
देवाश्च दुद्रुवुः सर्वे भीताश्च क्षतविक्षताः । चकार कोपं स्कन्दश्च देवेभ्यश्चाभयं ददौ

१ क. °स्तं चापि ह्यनेन । २ क कुम्भे° । ३ क. °विङ्कः कारणेन चञ्च° । ४ क. °तपृष्ठेन ।
५ क. धुरंधरे° । ६ क. कोकामु° ।

बलं सुरगणानां वै वर्धयामास तेजसा । स्वयमेकश्च युयुधे दानवानां गणैः सह ॥
अक्षौहिणीनां शतकं समरे स जघान ह । खर्परं पातयामास काली कमललोचना ॥
पपौ रक्तं दानवानां क्रुद्धा सा शतखर्परम् । दशलक्षं गजेन्द्राणां शतलक्षं च वाजिनाम् ॥
समादायैकहस्तेन मुखे चिक्षेप लीलया । कबन्धानां सहस्रं च ननर्त समरे मुने ॥३९॥
स्कन्दस्य शरजालेन दानवाः क्षतविक्षताः । भीताश्च दुद्रुवुः सर्वे महाबलपराक्रमाः ॥
वृषपर्वा विप्रचित्तिर्दम्भश्चापि विकङ्कनः । स्कन्देन सार्धं युयुधुस्ते च सर्वे क्रमेण च ॥
काली जगाम समरमरक्षत्कार्तिकं शिवः । वीरास्तामनुजग्मुश्च ते च नन्दीश्वरादयः ॥
सर्वे देवाश्च गन्धर्वा यक्षराक्षसकिन्नराः । राज्यभाण्डाश्च बहुशः शतकोटिश्च वाहकाः ॥
सा च गत्वा च संग्रामं सिंहनादं चकार ह । देव्या वै सिंहनादेन प्रापुर्मूर्छां च दानवाः ॥
अट्टाट्टहासमशिवं चकार च पुनः पुनः । हृष्टा पपौ च माध्वीकं ननर्त रणमूर्धनि ॥
उग्रदंष्ट्रा चोग्रदण्डा कोट्टरी च पपौ मधु । योगिनीनां डाकिनीनां गणाः सुरगणादयः ॥
दृष्ट्वा कालीं शङ्खचूडः शीघ्रमाजिं समाययौ । दानवाश्च भयं प्रापू राजा तेभ्योऽभयं ददौ
काली चिक्षेप चाऽऽग्नेयं प्रलयाग्निशिखोपमम् । राज निर्वापयामास वारुणेन स लीलया ॥
चिक्षेप वारुणं सा च तत्तीव्रं महदद्भुतम् । गान्धर्वेण च चिच्छेद दानवेन्द्रश्च लीलया ॥
माहेश्वरं प्रचिक्षेप काली वह्निशिखोपमम् । राजा जघान तच्छीघ्रं वैष्णवेन च लीलया ॥
नारायणास्त्रं सा देवी चिक्षिपे मन्त्रपूर्वकम् । राजा ननाम तं दृष्ट्वा चावरुह्य रथाद्द्रुतम् ॥
ऊर्ध्वं जगाम तच्छस्त्रं प्रलयाग्निशिखोपमम् । पपात शङ्खचूडश्च भक्त्या वै दण्डवद्भुवि
ब्रह्मास्त्रं सा च चिक्षेप यत्नतो मन्त्रपूर्वकम् ॥ ५२ ॥
ब्रह्मास्त्रेण महाराजा निर्वाणं च चकार ह । चिक्षेपातीव दिव्यास्त्रं सा देवी मन्त्रपूर्वकम्
राजा दिव्यास्त्रजालेन निर्वाणं च चकार ह । देवी चिक्षेप शक्तिं च यत्नतो योजनायताम्
राजा तीक्ष्णास्त्रजालेन शतखण्डं चकार ह । जग्राह मन्त्रपूर्वं च देवी पाशुपतं रुषा ॥
निक्षेप्तुं सा निषिद्धा च वाग्बभूवाशरीरिणी । मृत्युः पाशुपते नास्ति नृपस्य च महात्मनः
यावदस्त्येव कण्ठेऽस्य कवचं हि हरेरिति । यावत्सतीत्वमस्तीह सत्याश्च नृपयोषितः ॥
तावदस्य जरा मृत्युर्नास्तीति ब्रह्मणो वरः । इत्याकर्ण्य महाकाली न तच्चिक्षेप सा सती
शतलक्षं दानवानामग्रहीत्लीलया क्षुधा । अत्तुं जगाम वेगेन शङ्खचूडं भयंकरी ॥६९॥
दिव्यास्त्रेण सुतीक्ष्णेन वारयामास दानवः । खड्गं चिक्षेप सा देवी ग्रीष्मसूर्योपमं परम् ॥

---

१ क. °स्तिर्निकुम्भश्च वि० । २ क. वाद्यभाण्डश्च बहुशः शतशो मधुवाहृ° । ३ क. °ण्डा कोटरी । ४ क. °न्द्रः प्रतापवान् । ५ क. °त्युः शस्त्रशतैर्नास्ति नृ०

दिव्यास्त्रैर्दानवेन्द्रोऽयं शतखण्डं चकार सः । पुनरस्तुं महादेवी वेगेन च जगाम तम् ॥
सर्वसिद्धेश्वरः श्रीमान्ववृषे दानवेश्वरः । निवारयामास च तां सर्वसिद्धेश्वरो वरः ॥
वेगेन मुष्टिना काली कोपयुक्ता भयंकरी । बभञ्जाथ रथं तस्य वाहनत्सारथिं सती ॥
सा च शूलं च चिक्षेप प्रलयाग्निशिखोपमम् । वामहस्तेन जग्राह शङ्खचूडं च लीलया ॥
मुष्ट्या जघान तं देवी महाकोपेन वेगतः । बभ्राम व्यथया दैत्यः क्षणं मूर्छामवाप ह ॥
क्षणेन चेतनां प्राप्य समुत्तस्थौ प्रतापवान् । न चक्रे बाहुयुद्धं स देव्या सह ननाम ताम्
देव्याश्चास्त्रं च चिच्छेद चाग्रहीत्स्वेन तेजसा । नास्त्रं चिक्षेप तां भक्त्या मातृबुद्ध्या च वैष्णवः ॥ १७ ॥
गृहीत्वा दानवं देवी भ्रामयित्वा पुनः पुनः । ऊर्ध्वं च प्रेरयामास महावेगेन कोपतः ॥
ऊर्ध्वात्पपात वेगेन शङ्खचूडः प्रतापवान् । निपत्य च समुत्तस्थौ स नत्वा भद्रकालिकाम्
रत्नेन्द्रसारखचितं विमानाग्र्यं मनोहरम् । आरुरोह रथं हृष्टो न विश्रान्तो महारणे ॥
क्षतजं दानवानां च मांसं च विपुलं क्षुधा । पीत्वा भुक्त्वा भद्रकाली ययौ सा शंकरान्तिकम्
उवाच रणवृत्तान्तं पौर्वापर्यं यथाक्रमम् । श्रुत्वा जहास शंभुश्च दानवानां विनाशनम् ॥
लक्षं च दानवेन्द्राणामवशिष्टं रणेऽधुना । उद्वृत्तं भूभृता सार्धं तदन्यं भुक्तमीश्वरम् ॥
संग्रामे दानवेन्द्रं च हन्तुं पाशुपतेन वै । अवध्यस्तव राजेति वागभूवाशरीरिणी ॥
राजेन्द्रश्च महाज्ञानी महाबलपराक्रमः । न च चिक्षेप मय्यस्त्रं चिच्छेद मम सायकम् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु० कालीशङ्खचूडयुद्ध एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

---

नारायण उवाच—

शिवस्तत्त्वं समाकर्ण्य तत्त्वज्ञानविशारदः । ययौ स्वयं च समरं स्वगणैः सह नारद ॥
शङ्खचूडः शिवं दृष्ट्वा विमानादवरुह्य च । ननाम परया भक्त्या दण्डवत्पतितो भुवि
तं प्रणम्य च वेगेन विमानं ह्यारुरोह सः । तूर्णं चकार संनाहं धनुर्जग्राह दुर्वहम् ॥
शिवदानवयोर्युद्धं पूर्णमब्दं बभूव ह । न वै बभूवतुर्ब्रह्मंस्तयोर्जयपराजयौ ॥ ४ ॥
न्यस्तशस्त्रश्च भगवान्न्यस्तशस्त्रश्च दानवः । रथस्थः शङ्खचूडश्च वृषस्थो वृषभध्वजः ॥
दानवानां च शतकमुद्वृत्तं च बभूव ह । रणे ये ये मृताः शंभोर्जीवयामास तान्विभुः ॥

ततो विष्णुर्महामायो वृद्धब्राह्मणरूपधृक्। आगत्य च रणस्थानमवोचद्दानवेश्वरम्॥

वृद्धब्राह्मण उवाच—

देहि भिक्षां च राजेन्द्र मह्यं विप्राय सांप्रतम्। त्वं सर्वसंपदां दाता यन्मे मनसि वाञ्छितम्॥
निराहाराय वृद्धाय तृषितायाऽऽतुराय च। पश्चात्त्वां कथयिष्यामि पुरः सत्यं च कुर्विति॥
ओमित्युवाच राजेन्द्रः प्रसन्नवदनेक्षणः। कवचार्थी जनश्चाहमित्युवाच स मायया॥
तच्छ्रुत्वा दानवश्रेष्ठो ददौ कवचमुत्तमम्। गृहीत्वा कवचं दिव्यं जगाम हरिरेव च॥
शङ्खचूडस्य रूपेण जगाम तुलसीं प्रति। गत्वा तस्यां मायया च वीर्याधानं चकार ह॥
अथ शंभुर्हरेः शूलं दानवार्थं समग्रहीत्। ग्रीष्ममध्याह्नमार्तण्डशतकप्रभमुज्ज्वलम्॥
नारायणाधिष्ठिताग्रं ब्रह्माधिष्ठितमध्यमम्। शिवाधिष्ठितमूलं च कालाधिष्ठितधारकम्॥
किरणावलिसंयुक्तं प्रलयाग्निशिखोपमम्। दुर्निवार्यं च दुर्धर्षमव्यर्थं वैरिघातकम्॥१५॥
तेजसा चक्रतुल्यं च सर्वशस्त्रविघातकम्। शिवकेशवयोरन्यदुर्वहं च भयंकरम्॥
धनुःसहस्रं दैर्घ्येण विस्तृत्या शतहस्तकम्। सजीवं ब्रह्मरूपं च नित्यरूपमनिर्मितम्॥
संहर्तुं सर्वब्रह्माण्डमेकदा देवलीलया। चिक्षेप घूर्णनं कृत्वा शङ्खचूडे च नारद॥१८॥
राजा चापं परित्यज्य श्रीकृष्णचरणाम्बुजम्। ध्यानं चकार भक्त्या च कृत्वा योगासनं धिया॥
शूलं च भ्रमणं कृत्वा न्यपतद्दानवोपरि। चकार भस्मसात्तं च सरथं चैव लीलया॥
राजा धृत्वा दिव्यरूपं बालकं गोपवेषकम्। द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम्॥२१॥
नानारत्नसुभूषाढ्यं गोपकोटिभिरावृतम्। गोलोकादागतं यानमारुह्य तत्पुरं ययौ॥२२॥
गत्वा ननाम शिरसा राधामाधवयोर्मुने। भक्त्या तच्चरणाम्भोजं रासे वृन्दावने मुने॥
सुदामानं तौ च दृष्ट्वा प्रसन्नवदनेक्षणौ। तदा च चक्रतुः क्रोडे स्नेहेन परिसंप्लुतौ॥
अथ शूलश्च वेगेन प्रययौ शूलिनः करम्। शंकरस्तेन शूलेन शूलपाणिर्बभूव सः॥
स शिवस्तेन शूलेन दानवस्यास्थिजालकम्। प्रेम्णा च प्रेरयामास लवणोदे च सागरे॥
अस्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह। नानाप्रकाररूपा च श्रेष्ठा पूता सुरार्चने॥
प्रशस्तं शङ्खतोयं च देवानां प्रीतिदं परम्। तीर्थतोयस्वरूपं च पवित्रं शंकरं विना॥
शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीश्च सुस्थिरा। सुस्नातः सर्वतीर्थेषु यः स्नातः शङ्खवारिणा॥
शङ्खो हरेरधिष्ठानं यत्र शङ्खस्ततो हरिः। तत्रैव सततं लक्ष्मीर्दूरीभूतममङ्गलम्॥२९॥
स्त्रीणां च शङ्खध्वनिभिः शूद्राणां च विशेषतः। भीता रुष्टा याति लक्ष्मीः स्थलमन्य-
स्थलात्ततः॥ ३०॥

१ क. °ण्डमलं च स्वाव°। २ क. सादरम्।

शिवश्च दानवं हत्वा शिवलोकं जगाम सः । प्रहृष्टो वृषमारुह्य स्वगणैश्च समावृतः ॥
सुराः स्वविषयं प्रापुः परमानन्दसंयुताः । नेदुर्दुन्दुभयः स्वर्गे जगुर्गन्धर्वकिन्नराः ॥ ३२ ॥
बभूव पुष्पवृष्टिश्च शिवस्योपरि संततम् । प्रशशंसुः सुरास्तं च मुनीन्द्रप्रवरादयः ॥ ३३ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु० शङ्खचूडवधे शङ्खप्रस्तावो नाम विंशोऽध्यायः ॥ २० ॥

===

अथैकविंशोऽध्यायः ।

---

नारद उवाच—

नारायणश्च भगवान्वीर्याधानं चकार ह । तुलस्यां केन रूपेण तन्मे व्याख्यातुमर्हसि ॥ १ ॥

नारायण उवाच—

नारायणश्च भगवान्देवानां साधनेन च । शङ्खचूडस्य रूपेण रेमे तद्रामया सह ॥ २ ॥
शङ्खचूडस्य कवचं गृहीत्वा मायया हरिः । पुनर्विधाय तद्रूपं जगाम तुलसीगृहम् ॥ ३ ॥
दुन्दुभिं वादयामास तुलसीद्वारसंनिधौ । जयशब्दरवद्वारा बोधयामास सुन्दरीम् ॥ ४ ॥
तच्छ्रुत्वा सा च साध्वी च परमानन्दसंयुता । राजमार्गगवाक्षेण ददर्श परमादरात् ॥ ५ ॥
ब्राह्मणेभ्यो धनं दत्त्वा कारयामास मङ्गलम् । बन्दिभ्यो भिक्षुकेभ्यश्च वाचिकेभ्यो धनं ददौ
अवरुह्य रथाद्देवो देव्याश्च भवनं ययौ । अमूल्यरत्नसंक्लृप्तं सुन्दरं सुमनोहरम् ॥ ७ ॥
दृष्ट्वा च पुरतः कान्तं शान्तं कान्ता मुदाऽन्विता । तत्पादं क्षालयामास ननाम च रुरोद च
रत्नसिंहासने रम्ये वासयामास कामुकी । ताम्बूलं च ददौ तस्मै कर्पूरादिसुवासितम् ॥
अद्य मे सफलं जन्म ह्यद्य मे सफलाः क्रियाः । रणागतं च प्राणेशं पश्यन्त्याश्च पुनर्गृहे ॥
सस्मिता सकटाक्षं च सकामा पुलकाञ्चिता । प्रपच्छ रणवृत्तान्तं कान्तं मधुरया गिरा ॥

तुलस्युवाच—

असंख्यविश्वसंहर्त्रा सार्धमाजौ तव प्रभो । कथं बभूव विजयस्तन्मे ब्रूहि कृपानिधे ॥
तुलसीवचनं श्रुत्वा प्रहस्य कमलापतिः । शङ्खचूडस्य रूपेण तामुवाचानृतं वचः ॥ १३ ॥

श्रीहरिरुवाच—

आवयोः समरं कान्ते पूर्णमब्दं बभूव ह । नाशो बभूव सर्वेषां दानवानां च कामिनि ॥
प्रीतिं च कारयामास ब्रह्मा च स्वयमावयोः । देवानामधिकारश्च प्रदत्तो धातुराज्ञया ॥

---

१ ख. °त्तो ब्रह्मणा पुरा ।

मयाऽऽगतं स्वभवनं शिवलोकं शिवो गतः इत्युक्त्वा जगतां नाथः शयनं च चकार ह
रेमे रमापतिस्तत्र रामया सह नारद । सा साध्वी सुखसंभोगाद्‌गाकर्षणव्यतिक्रमात् ॥
सर्वं वितर्कयामास कस्त्वमेवेत्युवाच ह ॥ १७ ॥

तुलस्युवाच --

को वा त्वं वद मायेश भुक्ताऽहं मायया त्वया । दूरी कृतं मत्सतीत्वमथवा त्वां शपामहे ॥
तुलसीवचनं श्रुत्वा हरिः शापभयेन च । दधार लीलया ब्रह्मन्स्वां मूर्ति सुमनोहराम् ॥
ददर्श पुरतो देवी देवदेवं सनातनम् । नवीननीरदश्यामं शरत्पङ्कजलोचनम् ॥ २० ॥
कोटिकन्दर्पलीलाभं रत्नभूषणभूषितम् । ईषद्धास्यं प्रसन्नास्यं शोभितं पीतवाससा॥२१॥
तं दृष्ट्वा कामिनी कामान्मूर्च्छां संप्राप लीलया । पुनश्च चेतनां प्राप्य पुनः सा तमुवाच ह

तुलस्युवाच--

हे नाथ ते दया नास्ति पाषाणसदृशस्य च । छलेन धर्मभङ्गेन मम स्वामी त्वया हतः ॥
पाषाणसदृशस्त्वं च दयाहीनो यतः प्रभो । तस्मात्पाषाणरूपस्त्वं भुवि देव भवाधुना ॥
ये वदन्ति दयासिन्धुं त्वां ते भ्रान्ता न संशयः । भक्तो विनाऽपराधेन परार्थे च कथं हतः
सर्वात्मा त्वं च सर्वज्ञो न जानासि परव्यथाम् । अतस्त्वमेकजनुषि स्वमेव विस्मरिष्यसि॥
इत्युक्त्वा च महासाध्वी निपत्य चरणे हरेः । भृशं रुरोद शोकार्ता विललाप मुहुर्मुहुः ॥
तस्याश्च करुणां दृष्ट्वा करुणामयसागरः । नयेन तां बोधयितुमुवाच कमलापतिः॥२८॥

श्रीभगवानुवाच—

तपस्त्वया कृतं साध्वि मदर्थे भारते चिरम् । त्वदर्थे शङ्खचूडश्च चकार सुचिरं तपः ॥
कृत्वा त्वां कामिनीं कामी विजहार च तत्फलात् । अधुना दातुमुचितं तवैव तपसः फलम्
इदं शरीरं त्यक्त्वा च दिव्यं देहं विधाय च । रासे मे रमया सार्धं त्वं रमासदृशी भव ॥
इयं तनुर्नदीरूपा गण्डकीति च विश्रुता । पूता सुपुण्यदा नृणां पुण्या भवतु भारते ॥३२॥
तव केशसमूहाश्च पुण्यवृक्षा भवन्त्विति । तुलसीकेशसंभूता तुलसीति च विश्रुता ॥३३॥
त्रिलोकेषु च पुष्पाणां पत्राणां देवपूजने । प्रधानरूपा तुलसी भविष्यति वरानने ॥३४॥
स्वर्गे मर्त्ये च पाताले वैकुण्ठे मम संनिधौ । भवन्तु तुलसीवृक्षा वराः पुष्पेषु सुन्दरि ॥
गोलोके विरजातीरे रासे वृन्दावने भुवि । भाण्डीरे चम्पकवने रम्ये चन्दनकानने ३६॥
माधवीकेतकीकुन्दमल्लिकामालतीवने । भवन्तु तरवस्तत्र पुण्यस्थानेषु पुण्यदाः ॥ ३७ ॥
तुलसीतरुमूले च पुण्यदेशे सुपुण्यदे । अधिष्ठानं तु तीर्थानां सर्वेषां च भविष्यति॥३८॥
तत्रैव सर्वदेवानां समधिष्ठानमेव च । तुलसीपत्रपतनप्रायो यस्य वरानने ॥ ३९ ॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । तुलसीपत्रतोयेन योऽभिषेकं समाचरेत् ॥ ४० ॥
सुधाघटसहस्रेण या तुष्टिर्न भवेत्सभा । सा च तुष्टिर्भवेन्नॄणां तुलसीपत्रदानतः ॥ ४१ ॥
गवामयुतदानेन यत्फलं लभते नरः । तुलसीपत्रदानेन तत्फलं कार्तिके सति ॥ ४२ ॥
तुलसीपत्रतोयं च मृत्युकाले च यो लभेत् । स मुच्यते सर्वपापाद्विष्णुलोकं स गच्छति ॥
नित्यं यस्तुलसीतोयं भुङ्क्ते भक्त्या च यो नरः । स एव जीवन्मुक्तश्च गङ्गास्नानफलं लभेत्
नित्यं यस्तुलसीं दत्त्वा पूजयेन्मां च मानवः । लक्षाश्वमेधजं पुण्यं लभते नात्र संशयः ॥
तुलसीं स्वकरे धृत्वा देहे धृत्वा च मानवः । प्राणांस्त्यजति तीर्थेषु विष्णुलोकं स गच्छति ॥
तुलसीकाष्ठनिर्माणमालां गृह्णाति यो नरः । पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥
तुलसीं स्वकरे धृत्वा स्वीकारं यो न रक्षति । स याति कालसूत्रं च यावच्चन्द्रदिवाकरौ ॥
करोति मिथ्या शपथं तुलस्या यो हि मानवः । स याति कुम्भीपाकं च यावदिन्द्राश्चतुर्दश
तुलसीतोयकणिकां मृत्युकाले च यो लभेत् । रत्नयानं समारुह्य वैकुण्ठं स प्रयाति च ॥
पूर्णिमायाममायां च द्वादश्यां रविसंक्रमे । तैलाभ्यङ्गे चास्नाते च मध्याह्ने निशि संध्ययोः
आशौचेऽशुचिकाले वा रात्रिवासोऽन्विते नराः । तुलसीं ये च छिन्दन्ति ते छिन्दन्ति हरेः शिरः ॥ ५२ ॥
त्रिरात्रं तुलसीपत्रं शुद्धं पर्युषितं सति । श्राद्धे व्रते वा दाने वा प्रतिष्ठायां सुरार्चने ॥ ५३ ॥
भूगतं तोयपतितं यद्दत्तं विष्णवे सति । शुद्धं तु तुलसीपत्रं क्षालनादन्यकर्मणि ॥ ५४ ॥
वृक्षाधिष्ठात्री देवी या गोलोके च निरामये । कृष्णेन सार्धं रहसि नित्यं क्रीडां करिष्यति ॥
नद्यधिष्ठातृदेवी या भारते च सुपुण्यदा । लवणोदस्य पत्नी च मदंशस्य भविष्यति ॥ ५६ ॥
त्वं च स्वयं महासाध्वि वैकुण्ठे मम संनिधौ । रमासमा च रासे च भविष्यसि न संशयः ॥
अहं च शैलरूपेण गण्डकीतीरसंनिधौ । अधिष्ठानं करिष्यामि भारते तव शापतः ॥ ५८ ॥
वज्रकीटाश्च कृमयो वज्रदंष्ट्राश्च तत्र वै । तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम् ॥
एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदश्यामं लक्ष्मीनारायणाभिधम् ॥ ६० ॥
एकद्वारे चतुश्चक्रं नवीननीरदोपमम् । लक्ष्मीजनार्दनं ज्ञेयं रहितं वनमालया ॥ ६१ ॥
द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम् । रघुनाथाभिधं ज्ञेयं रहितं वनमालया ॥ ६२ ॥
अतिक्षुद्रं द्विचक्रं च नवीनजलदप्रभम् । दधिवामनाभिधं ज्ञेयं गृहिणां च सुखप्रदम् ॥
अतिक्षुद्रं द्विचक्रं च वनमालाविभूषितम् । विज्ञेयं श्रीधरं देवं श्रीप्रदं गृहिणां सदा ॥ ६४ ॥
स्थूलं च वर्तुलाकारं रहितं वनमालया । द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम् ॥

---

१ ख. °ण सा तुष्टिर्न भवेद्धरेः । या च । २ क. च नवीननीरदोपमम् ।

मध्यमं वर्तुलाकारं द्विचक्रं बाणविक्षतम् । रणरामाभिधं ज्ञेयं शरतूणसमन्वितम् ॥६६॥
मध्यमं सप्तचक्रं च च्छत्रतूणसमन्वितम् । राजराजेश्वरं ज्ञेयं राजसंपत्प्रदं नृणाम् ॥६७॥
द्विसप्तचक्रं स्थूलं च नवीनजलदप्रभम् । अनन्ताख्यं च विज्ञेयं चतुर्वर्गफलप्रदम् ॥६८॥
चक्राकारं द्विचक्रं च सश्रीकं जलदप्रभम् । सगोष्पदं मध्यमं च विज्ञेयं मधुसूदनम् ॥
सुदर्शनं चैकचक्रं गुप्तचक्रं गदाधरम् । द्विचक्रं हयवक्त्राभं हयग्रीवं प्रकीर्तितम् ॥७०॥
अतीव विस्तृतास्यं च द्विचक्रं विकटं सति । नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदं नृणाम् ॥
द्विचक्रं विस्तृतास्यं च वनमालासमन्वितम् । लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा ॥
द्वारदेशे द्विचक्रं च सश्रीकं च समं स्फुटम् । वासुदेवं च विज्ञेयं सर्वकामफलप्रदम् ॥
प्रद्युम्नं सूक्ष्मचक्रं च नवीननीरदप्रभम् । सुषिरे छिद्रबहुलं गृहिणां च सुखप्रदम् ॥७४॥
द्वे चक्रे चैकलग्ने च पृष्ठे यत्र तु पुष्कलम् । संकर्षणं तु विज्ञेयं सुखदं गृहिणां सदा ॥
अनिरुद्धं तु पीताभं वर्तुलं चातिशोभनम् । सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः ॥७६॥
शालग्रामशिला यत्र तत्र संनिहितो हरिः । तत्रैव लक्ष्मीर्वसति सर्वतीर्थसमन्विता ॥७७॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च । तानि सर्वाणि नश्यन्ति शालग्रामशिलार्चनात् ॥ ७८ ॥
छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः । दुःखं च शकटाकारे शूलाग्रे मरणं ध्रुवम् ॥
विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च । लग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम् ॥
व्रतं दानं प्रतिष्ठा च श्राद्धं च देवपूजनम् । शालग्रामशिलायाश्चैवाधिष्ठानात्प्रशस्तकम् ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् ॥८२॥
सर्वदानेषु यत्पुण्यं प्रादक्षिण्ये भुवो यथा । सर्वयज्ञेषु तीर्थेषु व्रतेष्वनशनेषु च ॥ ८३ ॥
तस्य स्पर्शं च वाञ्छन्ति तीर्थानि निखिलानि च । जीवन्मुक्तो महापूतो भवेदेव न संशयः ॥
पाठे चतुर्णां वेदानां तपसां करणे सति । तत्पुण्यं लभते नूनं शालग्रामशिलार्चनात् ॥
शालग्रामशिलातोयं नित्यं भुङ्क्ते च यो नरः । सुरेप्सितं प्रसादं च जन्ममृत्युजराहरम् ॥
तस्य स्पर्शं च वाञ्छन्ति तीर्थानि निखिलानि च । जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम् ॥ ८७ ॥
तत्रैव हरिणा सार्धमसंख्यं प्राकृतं लयम् । पश्यत्येव हि दास्ये च निर्मुक्तो दास्यकर्मणि
यानि कानि च पापानि ब्रह्महत्यादिकानि च । तं च दृष्ट्वा भिया यान्ति वैनतेयमिवोरगाः ॥
तत्पादपद्मरजसा सद्यः पूता वसुंधरा । पुंसां लक्षं तत्पितॄणां निस्तारस्तस्य जन्मनः ॥
शालग्रामशिलातोयं मृत्युकाले च यो लभेत् । सर्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति

निर्वाणमुक्तिं लभते कर्मभोगाद्विमुच्यते । विष्णुपादे प्रलीनश्च भविष्यति न संशयः ॥
शालग्रामशिलां धृत्वा मिथ्यावादं वदेत्तु यः । स याति कूर्मदंष्ट्रं च यावद्वै ब्रह्मणो वयः
शालग्रामशिलां स्पृष्ट्वा स्वीकारं यो न पालयेत् । स प्रयात्यसिपत्रं च लक्षमन्वन्तरावधि[1]
तुलसीपत्रविच्छेदं शालग्रामे करोति यः । तस्य जन्मान्तरे काले स्त्रीविच्छेदो भविष्यति
तुलसीपत्रविच्छेदं शङ्खे यो हि करोति च । भार्याहीनो भवेत्सोऽपि रोगी च सप्तजन्मसु
शालग्रामं च तुलसीं शङ्खमेकत्र एव च यो रक्षति महाज्ञानी स भवेच्छ्रीहरिप्रियः ॥
सकृदेव हि यो यस्यां वीर्याधानं करोति यः । तद्विच्छेदे तस्य दुःखं भवेदेव परस्परम् ॥
त्वं प्रिया शङ्खचूडस्य चैकमन्वन्तरावधि । शङ्खेन सार्धं त्वद्भेदः केवलं दुःखदस्तव ॥
इत्युक्त्वा श्रीहरिस्तां च विरराम च नारद । सा च देहं परित्यज्य दिव्यरूपं दधार ह
यथा श्रीश्च तथा सा चाप्युवास हरिवक्षसि । प्रजगाम तया सार्धं वैकुण्ठं कमलापतिः ॥
लक्ष्मी सरस्वती गङ्गा तुलसी चापि नारद । हरेः प्रियाश्चतस्रश्च बभूवुरीश्वरस्य च ॥
सद्यस्तद्देहजाता च बभूव गण्डकी नदी । हरेरंशेन शैलश्च तत्तीरे पुण्यदो नृणाम् ॥ १०३॥
कुर्वन्ति तत्र कीटाश्च शिलां बहुविधां मुने । जले पतन्ति या याश्च जलदाभाश्च निश्चितम्
स्थलस्थाः पिङ्गला ज्ञेयाश्चोपतापाद्धरेरिति । इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु० एकविंशोऽध्यायः ॥ २१ ॥

---

अथ द्वाविंशोऽध्यायः ।

---

**नारद उवाच—**

तुलसी च जगत्पूज्या पूता नारायणप्रिया । तस्याः पूजाविधानं च स्तोत्रं किं न श्रुतं मया ॥
केन पूज्या स्तुता केन पुरा प्रथमतो मुने । तव पूज्या सा बभूव केन वा वद मामहो[2] ॥

**सूत उवाच—**

नारदस्य वचः श्रुत्वा प्रहस्य गरुडध्वजः । कथां कथितुमारेभे पुण्यरूपां पुरातनीम् ॥

**नारायण उवाच—**

हरिः संप्राप्य तुलसीं रेमे च रमया सह । रमासमां तां सौभाग्यां चकार गौरवेण च ॥
सेहे लक्ष्मीश्च गङ्गा च तस्याश्च नवसंगमम् । सौभाग्यं गौरवं कोपान्न सेहे च सरस्वती
सा तां जघान कलहे मानिनी हरिसंनिधौ । व्रीडया स्वापमानाच्च साऽन्तर्धानं चकार ह ॥

---

१ क. °रावधि । २ क. पूज्या नारायणस्य च । ३ क. °स्य मुनिपुंगव ।

सर्वसिद्धेश्वरी देवी ज्ञानिनी सिद्धयोगिनी। बभूवादर्शनं कोपात्सर्वत्र च हरेरहो॥ ७॥
हरिर्न दृष्ट्वा तुलसीं बोधयित्वा सरस्वतीम्। तदनुज्ञां गृहीत्वा च जगाम तुलसीवनम्॥
तत्र गत्वा च स्नात्वा च तुलस्या तुलसीं सतीम्। पूजयामास ध्यात्वा तां स्तोत्रं भक्त्या
चकार ह॥ ९॥
लक्ष्मीं मायाकामवाणीबीजपूर्वं दशाक्षरम्। वृन्दावनीति ङेन्तं च वह्निजायान्तमेव च॥
श्रीं ह्रीं क्लीं ऐं वृन्दावन्यै स्वाहा॥
अनेन कल्पतरुणा मन्त्रराजेन नारद। पूजयेच्च विधानेन सर्वसिद्धिं लभेन्नरः॥ ११॥
घृतदीपेन धूपेन सिन्दूरचन्दनेन च। नैवेद्येन च पुष्पेण चोपहारेण नारद॥ १२॥
हरिस्तोत्रेण तुष्टा सा चाऽऽविर्भूय महीरुहात्। प्रपन्ना चरणाम्भोजे जगाम शरणं शुचिः
वरं तस्यै ददौ विष्णुर्जगत्पूज्या भवेति च। अहं त्वां च धरिष्यामि स्वमूर्ध्नि वक्षसीति च
सर्वे त्वां धारयिष्यन्ति स्वयं मूर्ध्नि सुरादयः। इत्युक्त्वा तां गृहीत्वा च प्रययौ स्वालयं विभुः

नारद उवाच—

किं ध्यानं स्तवनं किंवा किंवा पूजाविधिक्रमः। तुलस्याश्च महाभाग तन्मे व्याख्यातुमर्हसि

नारायण उवाच—

अन्तर्हितायां तस्यां च गत्वा च तुलसीवनम्। हरिः संपूज्य तुष्टाव तुलसीं विरहातुरः॥

श्रीभगवानुवाच—

वृन्दारूपाश्च वृक्षाश्च यदैकत्र भवन्ति च। विदुर्बुधास्तेन वृन्दां मत्प्रियां तां भजाम्यहम्॥
पुरा बभूव या देवी ह्यादौ वृन्दावने वने। तेन वृन्दावनी ख्याता सुभगां तां०॥ १९॥
असंख्येषु च विश्वेषु पूजिता या निरन्तरम्। तेन विश्वपूजिताख्यां जगत्पूज्यां भ०। २०॥
असंख्यानि च विश्वानि पवित्राणि यया सदा। तां विश्वपावनीं देवीं विरहेण स्मराम्यहम्
देवा न तुष्टाः पुष्पाणां समूहेन यया विना। तां पुष्पसारां शुद्धां च द्रष्टुमिच्छामि शोकतः
विश्वे यत्प्राप्तिमात्रेण भक्त्यानन्दो भवेद्ध्रुवम्। नन्दिनी तेन विख्याता सा प्रीता भवि-
ता हि मे॥ २३॥
यस्या देव्यास्तुला नास्ति विश्वेषु निखिलेषु च। तुलसी तेन विख्याता तां यामि शरणं
प्रियाम्॥ २४॥
कृष्णजीवनरूपा या शश्वत्प्रियतमा सती। तेन कृष्णजीवनीति मम रक्षतु जीवनम्॥
इत्येवं स्तवनं कृत्वा तत्र तस्थौ रमापतिः। ददर्श तुलसीं साक्षात्पादपद्मे नतां सतीम्॥
रुदतीमभिमानेन मानिनीं मानपूजिताम्। प्रियां दृष्ट्वा प्रियः शीघ्रं वासयामास वक्षसि॥

भारत्याज्ञां गृहीत्वा च स्वालयं च ययौ हरिः । भारत्या सह तत्प्रीतिं कारयामास सत्वरम्
वरं विष्णुर्ददौ तस्यै विश्वपूज्या भवेति च । शिरोधार्या च सर्वेषां वन्द्या मान्या ममेति च
विष्णोर्वरेण सा देवी परितुष्टा बभूव ह । सरस्वती तामाश्लिष्य वासयामास संनिधौ ॥
लक्ष्मीर्गङ्गा सस्मिता तां समाश्लिष्य च नारद । गृहं प्रवेशयामास विनयेन सतीं मुदा॥
वृन्दां वृन्दावनीं विश्वपावनीं विश्वपूजिताम् । पुष्पसारां नन्दिनीं च तुलसीं कृष्णजीवनीम्॥
एतन्नामाष्टकं चैतत्स्तोत्रं नामार्थसंयुतम् । यः पठेत्तां च संपूज्य सोऽश्वमेधफलं लभेत् ॥
कार्तिकीपूर्णिमायां च तुलस्या जन्म मङ्गलम् । तत्र तस्याश्च पूजा च विहिता हरिणा पुरा
तस्यां यः पूजयेत्तां च भक्त्या च विश्वपावनीम् । सर्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति
कार्तिके तुलसीपत्रं विष्णवे यो ददाति च । गवामयुतदानस्य फलमाप्नोति निश्चितम् ॥
अपुत्रो लभते पुत्रं प्रियाहीनो लभेत्प्रियाम् । बन्धुहीनो लभेद्बन्धुं स्तोत्रस्मरणमात्रतः ॥
रोगी प्रमुच्यते रोगाद्बद्धो मुच्येत बन्धनात् । भयान्मुच्येत भीतस्तु पापान्मुच्येत पातकी ॥
इत्येवं कथितं स्तोत्रं ध्यानं पूजाविधिं शृणु । त्वमेव देव जानासि काण्वशाखोक्तमेव च ॥
यद्वृक्षे पूजयेत्तां च भक्त्या चाऽऽवाहनं विना । उपचारैः षोडशभिर्ध्यानं पातकनाशनम्
तुलसीं पुष्पसारां च सतीं पूज्यां मनोहराम् । कृत्स्नपापेध्मदाहाय ज्वलदग्निशिखोपमाम् ॥
पुष्पेषु तुलनाऽप्यस्या नासीद्देवीषु वा मुने । पवित्ररूपा सर्वासु तुलसी सा च कीर्तिता॥
शिरोधार्यां च सर्वेषामीप्सितां विश्वपावनीम् । जीवन्मुक्तां मुक्तिदां च भजे तां हरिभक्तिदाम्
इति ध्यात्वा च संपूज्य स्तुत्वा च प्रणमेद्बुधः । उक्तं तुलस्युपाख्यानं किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्युपाख्यानं नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

अथ त्रयोविंशोऽध्यायः ।

नारद उवाच—
तुलस्युपाख्यानमिदं श्रुतमिष्टं सुधोपमम् । यत्तु सावित्र्युपाख्यानं तन्मे व्याख्यातुमर्हसि ॥
पुरा येन समुद्भूता सा श्रुता च श्रुतिप्रसूः । केन वा पूजिता देवी प्रथमे कैश्च वाऽपरे ॥
नारायण उवाच—
ब्रह्मणा वेदजननी पूजिता प्रथमे मुने । द्वितीये च देवगणैस्तत्पश्चाद्विदुषां गणैः ॥ ३ ॥
तथा चाश्वपतिः पूर्वं पूजयामास भारते । तत्पश्चात्पूजयामासुर्वर्णाश्चत्वार एव च ॥४॥

१ क °स्तु मुच्येताऽऽपन्न आपदः । २ क. नास्ति वेदेषु वा ।

नारद उवाच—

को वा सोऽश्वपतिर्ब्रह्मन्केन वा तेन पूजिता । सर्वपूज्या च सावित्री तन्मे व्याख्यातुमर्हसि

नारायण उवाच—

मद्रदेशे महाराजो बभूवाश्वपतिर्मुने । वैरिणां बलहर्ता च मित्राणां दुःखनाशनः ॥१०॥

आसीत्तस्य महाराज्ञी महिषी धर्मचारिणी । मालतीति च साऽऽख्याता यथा लक्ष्मीर्गदाभृतः

सा च राज्ञी महासाध्वी वसिष्ठस्योपदेशतः । चकाराऽऽराधनं भक्त्या सावित्र्याश्चैव नारद

प्रत्यादेशं न सा प्राप महिषी न ददर्श ताम् । गृहं जगाम सा दुःखाद्धृदयेन विदूयता

राजा तां दुःखितां दृष्ट्वा बोधयित्वा नयेन वै । सावित्र्यास्तपसे भक्त्या जगाम पुष्करं तदा

तपश्चचार तत्रैव संयतः शतवत्सरम् । न ददर्श च सावित्रीं प्रत्यादेशो बभूव ह ॥११॥

शुश्रावाऽऽकाशवाणीं च नृपेन्द्रश्चाशरीरिणीम् । गायत्रीदशलक्षं च जपं कुर्विति नारद ।

एतस्मिन्नन्तरे तत्र प्राजगाम पराशरः । प्रणनाम नृपस्तं च मुनिर्नृपमुवाच ह ॥ १३ ॥

पराशर उवाच—

सकृज्जपश्च गायत्र्याः पापं दिनकृतं हरेत् । दशधा प्रजपो नृणां दिवारात्र्यघमेव च ॥१४॥

शतधा च जपाच्चैवं पापं मासार्जितं परम् । सहस्रधा जपाच्चैवं कल्मषं वत्सरार्जितम् ॥

लक्षं जन्मकृतं पापं दशलक्षं त्रिजन्मनः । सर्वजन्मकृतं पापं शतलक्षे विनश्यति ॥१६॥

करोति मुक्तिं विप्राणां जपो दशगुणस्ततः । करं सर्पफणाकारं कृत्वा तद्रन्ध्रमुद्रितम् ।

आनम्रमूर्ध्वमचलं प्रजपेत्प्राङ्मुखो द्विजः । अनामिकामध्यदेशादधो वामक्रमेण च॥१८॥

तर्जनीमूलपर्यन्तं जपस्यैष क्रमः करे । श्वेतपङ्कजबीजानां स्फाटिकानां च संस्कृताम् ॥

कृत्वा वा मालिकां राजञ्जपेत्तीर्थे सुरालये । संस्थाप्य मालामश्वत्थपत्रसप्तसु संयतः ।१९॥

कृत्वा गोरोचनाक्तां च गायत्र्या स्नापयेत्सुधीः । गायत्रीशतकं तस्यां जपेच्च विधिपूर्वकम् ॥

अथवा पञ्चगव्येन स्नाता माला च संस्कृता । अथ गङ्गोदकेनैव स्नाता वाऽतिसुसंस्कृता ॥

एवंक्रमेण राजर्षे दशलक्षं जपं कुरु । साक्षाद्द्रक्ष्यसि सावित्रीं त्रिजन्मपातकक्षयात् ॥२१॥

नित्यं नित्यं त्रिसंध्यं च करिष्यसि दिने दिने । मध्याह्ने चापि सायाह्ने प्रातरेव शुचिः
सदा ॥ २४ ॥

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् २५॥

नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः

यावज्जीवनपर्यन्तं यस्त्रिसंध्यं करोति च । स च सूर्यसमो विप्रस्तेजसा तपसा सदा ॥२७॥

---

१ ख. महाराज्ञी । २ ख. °त्वा तु ऊर्ध्वमु° । ३ क. °तचम्पकवर्णाभां स्फा° ।

तत्पादपद्मरजसा सद्यः पूता वसुंधरा। जीवन्मुक्तः स तेजस्वी संध्यापूतो हि यो द्विजः ॥
तीर्थानि च पवित्राणि तस्य स्पर्शनमात्रतः। ततः पापानि यान्त्येव वैनतेयादिवोरगाः ॥
न गृह्णन्ति सुराः पूजां पितरः पिण्डतर्पणम्। स्वेच्छया चरतश्चैव त्रिसंध्यरहितस्य च ॥
विष्णुमन्त्रविहीनश्च त्रिसंध्यरहितो द्विजः। एकादशीविहीनश्च विषहीनो यथोरगः ॥ ११ ॥
हरेरनैवेद्यभोजी धावको वृषवाहकः। शूद्रान्नभोजी विप्रश्च विष० ॥ १२ ॥
शवदाही च शूद्राणां यो विप्रो वृषलीपतिः। शूद्राणां सूपकारश्च विष० ॥ १३ ॥
शूद्राणां च प्रतिग्राही शूद्रयाजी च यो द्विजः। असिजीवी मषीजीवी विष० ॥ १४ ॥
यो विप्रोऽवीरान्नभोजी ऋतुस्नातान्नभोजकः। भगजीवी वार्धुषिको विष० ॥ १५ ॥
यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी। यो विद्याविक्रयी भूप विष० ॥ १६ ॥
सूर्योदये योऽन्नभोजी मत्स्यभोजी च यो द्विजः। शिलापूजादिरहितो विष० ॥ १७ ॥
इत्युक्त्वा च मुनिश्रेष्ठः सर्वं पूजाविधिक्रमम्। तमुवाच च सावित्र्या ध्यानादिकमभीप्सितम् ॥
दत्त्वा सर्वं नृपेन्द्राय प्रययौ स्वालयं मुनिः। राजा संपूज्य सावित्रीं ददर्श वरमाप च ॥ १९ ॥

नारद उवाच—

किंवा ध्यानं च सावित्र्याः किंवा पूजाविधानकम्। स्तोत्रं मन्त्रं च किं दत्त्वा प्रययौ स पराशरः ॥ ४० ॥
नृपः केन विधानेन संपूज्य श्रुतिमातरम्। वरं च किंवा संप्राप वद सोऽश्वपतिर्नृपः ॥

नारायण उवाच—

ज्येष्ठे शुक्लत्रयोदश्यां शुद्धे काले च संयतः। व्रतमेतच्चतुर्दश्यां व्रती भक्त्या समाचरेत् ॥
व्रतं चतुर्दशाब्दं च द्विसप्तफलसंयुतम्। दत्त्वा द्विसप्तनैवेद्यं पुष्पधूपादिकं तथा ॥ ४३ ॥
वस्त्रं यज्ञोपवीतं च भोज्यं च विधिपूर्वकम्। संस्थाप्य मङ्गलघटं फलशाखासमन्वितम् ॥
गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम्। संपूज्य पूजयेदिष्टं घटे आवाहिते मुने ॥
शृणु ध्यानं च सावित्र्याश्चोक्तं माध्यंदिने च यत्। स्तोत्रं पूजाविधानं च मन्त्रं च सर्वकामदम् ॥ ४६ ॥
तप्तकाञ्चनवर्णाभां ज्वलन्तीं ब्रह्मतेजसा। ग्रीष्ममध्याह्नमार्तण्डसहस्रसमसुप्रभाम् ॥ ४७ ॥
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्। वह्निशुद्धांशुकाधानां भक्तानुग्रहकारिकाम् ॥
सुखदां मुक्तिदां शान्तां कान्तां च जगतां विधेः। सर्वसंपत्स्वरूपां च प्रदात्रीं सर्वसंपदाम्

---

१ ख. कृष्ण°।

वेदाधिष्ठातृदेवीं च वेदशास्त्रस्वरूपिणीम् । वेदे बीजस्वरूपां च भजे त्वां वेदमातरम् ॥
ध्यात्वा ध्यानेन चानेन दत्त्वा पुष्पं स्वमूर्धनि । पुनर्ध्यात्वा घटे भक्त्या देवीमावाहयेद्व्रती
दत्त्वा षोडशोपचारं वेदोक्तमन्त्रपूर्वकम् । संपूज्य स्तुत्वा प्रणमेदेवं देवीं विधानतः॥५२॥
आसनं पाद्यमर्घ्यं च स्नानीयं चानुलेपनम् । धूपं दीपं च नैवेद्यं ताम्बूलं शीतलं जलम् ।
वसनं भूषणं माल्यं गन्धमाचमनीकम् । मनोहरं सुतल्पं च देयान्येतानि षोडश॥ ५४ ॥
दारुसारविकारं च हेमादिनिर्मितं च वा । देवाधारं पुण्यदं च मया तुभ्यं निवेदितम्॥५५॥
तीर्थोदकं च पाद्यं च पुण्यदं प्रीतिदं महत् । पूजाङ्गभूतं शुद्धं च मया भक्त्या नि० ५६
पवित्ररूपमर्घ्यं च दूर्वापुष्पाक्षतान्वितम् । पुण्यदं शङ्खतोयाक्तं मया तुभ्यं नि०॥५७॥
सुगन्धि धात्रीतैलं च देहसौन्दर्यकारणम् । मया निवेदितं भक्त्या स्नानीयं प्रतिगृह्यताम् ।
मलयाचलसंभूतं देहशोभाविवर्धनम् । सुगन्धयुक्तं सुखदं मया तुभ्यं नि० ॥ ५९ ॥
गन्धद्रव्योद्भवः पुण्यः प्रीतिदो दिव्यगन्धदः । मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम्
जगतां दर्शनीयं च दर्शनं दीप्तिकारणम् । अन्धकारध्वंसबीजं मया तुभ्यं नि० ।६१॥
तुष्टिदं पुष्टिदं चैव प्रीतिदं क्षुद्विनाशनम् । पुण्यदं स्वादुरूपं च नैवेद्यं प्रतिगृह्यताम् ॥
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् । तुष्टिदं पुष्टिदं चैव मया भक्त्या नि० ॥६३॥
सुशीतलं वासितं च पिपासानाशकारणम् । जगतां जीवरूपं च जीवनं प्रतिगृह्यताम्॥६४॥
देहशोभास्वरूपं च सभाशोभाविवर्धनम् । कार्पासजं च कृमिजं वसनं प्रतिगृह्यताम् ।६५॥
काञ्चनादिभिराबद्धं श्रीयुक्तं श्रीकरं सदा । सुखदं पुण्यदं चैव भूषणं प्रतिगृह्यताम् ॥ ६६ ॥
नानापुष्पलताकीर्णं बहुभासा समन्वितम् । प्रीतिदं पुण्यदं चैव माल्यं वै प्रतिगृह्यताम्६७॥
सर्वमङ्गलरूपश्च सर्वमङ्गलदो वरः । पुण्यप्रदश्च गन्धाढ्यो गन्धश्च प्रतिगृह्यताम्॥ ६८ ॥
शुद्धं शुद्धिप्रदं चैव पुण्यदं प्रीतिदं महत् । रम्यमाचनीयं च मया दत्तं प्रगृह्यताम् ॥ ६९ ॥
रत्नसारादिनिर्माणं पुष्पचन्दनसंयुतम् । सुखदं पुण्यदं चैव सुतल्पं प्रतिगृह्यताम् ॥७०॥
नानावृक्षसमुद्भूतं नानारूपसमन्वितम् । फलस्वरूपं फलदं फलं च प्रतिगृह्यताम्॥७१॥
सिन्दूरं च वरं रम्यं भालशोभाविवर्धनम् । भूषणं भूषणानां च सिन्दूरं प्रतिगृह्यताम् ॥७२॥
विशुद्धग्रन्थिसंयुक्तं पुण्यसूत्रविनिर्मितम् । पवित्रं वेदमन्त्रेण यज्ञसूत्रं च गृह्यताम् ॥ ७३ ॥
द्रव्याण्येतानि मूलेन दत्त्वा स्तोत्रं पठेत्सुधीः । ततः प्रणम्य विप्राय व्रती दद्याच्च दक्षिणाम् ॥
सावित्रीति चतुर्थ्यन्तं वह्निजायान्तमेव च । लक्ष्मीमायाकामपूर्वं मन्त्रमष्टाक्षरं विदुः॥७५॥

---

१ ख. नित्यं ।

श्रीं ह्रीं क्लीं सावित्र्यै स्वाहा ।

माध्यंदिनोक्तं स्तोत्रं च सर्ववाञ्छाफलप्रदम् । विप्रजीवनरूपं च निबोध कथयामि ते ॥
कृष्णेन दत्ता सावित्री गोलोके ब्रह्मणे पुरा । न याति सा तेन सार्धं ब्रह्मलोकं तु नारद॥७७॥
ब्रह्मा कृष्णाज्ञया भक्त्या पर्यष्टौद्वेदमातरम् । तदा सा परितुष्टा च ब्रह्माणं चकमे सती ॥

ब्रह्मोवाच—

नारायणस्वरूपे च नारायणि सनातनि । नारायणात्समुद्भूते प्रसन्ना भव सुन्दरि ॥ ७९ ॥
तेजःस्वरूपे परमे परमानन्दरूपिणि द्विजातीनां जातिरूपे प्रसन्ना० ॥ ८० ॥
नित्ये नित्यप्रिये देवि नित्यानदस्वरूपिणि । सर्वमङ्गलरूपेण प्रसन्ना० ॥ ८१ ॥
सर्वस्वरूपे विप्राणां मन्त्रसारे परात्परे । सुखदे मोक्षदे देवि प्रसन्ना० ॥ ८२ ॥
विप्रपापेध्मदाहाय ज्वलदग्निशिखोपमे । ब्रह्मतेजःप्रदे देवि प्रसन्ना० ॥ ८३ ॥
कायेन मनसा वाचा यत्पापं कुरुते द्विजः । तत्ते स्मरणमात्रेण भस्मीभूतं भविष्यति । ८४ ।
इत्युक्त्वा जगतां धाता तत्र तस्थौ च संसदि । सावित्री ब्रह्मणा सार्धं ब्रह्मलोकं जगाम सा ॥
अनेन स्तवराजेन संस्तूयाश्वपतिर्नृपः । ददर्श तां च सावित्रीं वरं प्राप मनोगतम् । ८६ ॥
स्तवराजमिदं पुण्यं त्रिः संध्यायां च यः पठेत् । पाठे चतुर्णां वेदानां यत्फलं तल्लभेद्ध्रुवम् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सावित्र्युपाख्याने तुलसीवरप्रदानं नाम त्रियोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः ।

---

नारायण उवाच—

स्तुत्वा सोऽश्वपतिस्तेन संपूज्य विधिपूर्वकम् । ददर्श तत्र तां देवीं सहस्रार्कसमप्रभाम् ॥
उवाच सा तं राजानं प्रसन्ना सस्मिता सती । यथा माता स्वपुत्रं च द्योतयन्ती दिशस्त्विषा ।।

सावित्र्युवाच—

जानामि ते महाराज यत्ते मनसि वर्तते । वाञ्छितं तव पत्न्याश्च सर्वं दास्यामि निश्चितम् ॥
साध्वी कन्याभिलाषं च करोति तव कामिनी । त्वं प्रार्थयसि पुत्रं च भविष्यति च ते क्रमात्॥
इत्युक्त्वा सा महादेवी ब्रह्मलोकं जगाम ह । राजा जगाम स्वगृहं तत्कन्याऽऽदौ बभूव ह ॥
आराधनाच्च सावित्र्या बभूव कमलाकला । सावित्रीति च तन्नाम चकाराश्वपतिर्नृपः ॥१॥

---

१ क. °णां सर्वसा°। २ क. °र्ध्यं संध्यां कृत्वा च । ३ क. त्रया ।

कालेन सा वर्धमाना बभूव च दिने दिने । रूपयौवनसंपन्ना शुक्ले चन्द्रकला यथा ॥ ७ ॥
सा वरं वरयामास द्युमत्सेनात्मजं तदा । सावित्री सत्यवन्तं च नानागुणसमन्वितम् ॥ ८ ॥
राजा तस्मै ददौ तां च रत्नभूषणभूषिताम् । स च सार्धं कौतुकेन तां गृहीत्वा गृहं ययौ ॥९॥
स च संवत्सरेऽतीते सत्यवान्सत्यविक्रमः । जगाम फलकाष्ठार्थं प्रहर्षं पितुराज्ञया । १० ॥
जगाम तत्र सावित्री तत्पश्चाद्दैवयोगतः । निपत्य वृक्षाद्दैवेन प्राणांस्तत्याज सत्यवान् ॥
यमस्तज्जीवपुरुषं बद्ध्वाऽङ्गुष्ठसमं मुने । गृहीत्वा गमनं चक्रे तत्पश्चात्प्रययौ सती ।१२।
पश्चात्तां सुन्दरीं दृष्ट्वा यमः संयमिनीपतिः । उवाच मधुरं साध्वीं साधूनां प्रवरो महान् ॥

यम उवाच—

अहो क्व यासि सावित्रि गृहीत्वा मानुषीं तनुम् यदि यास्यसि कान्तेन सार्धं देहं तदा त्यज
गन्तुं मर्त्यो न शक्नोति गृहीत्वा पाञ्चभौतिकम् देहं च यमलोकं च नश्वरं नश्वरः सदा ॥
पूर्णश्च भर्तुस्ते काले ह्यस्य भारते सति । स्वकर्मफलभोगार्थं सत्यवान्याति मद्गृहम् । १६ ॥
कर्मणा जायते जन्तुः कर्मणैव प्रलीयते । सुखं दुःखं भयं शोकं कर्मणैव प्रपद्यते । १७ ॥
कर्मणेन्द्रो भवेज्जीवो ब्रह्मपुत्र स्वकर्मणा । स्वकर्मणा हरेर्दासो जन्मादिरहितो भवेत् १८॥
स्वकर्मणा सर्वसिद्धिममरत्वं लभेद्ध्रुवम् । लभेत्स्वकर्मणा विष्णोः सालोक्यादिचतुष्टयम् ॥
कर्मणा ब्राह्मणत्वं च मुक्तत्वं च स्वकर्मणा । सुरत्वं मनुजत्वं च राजेन्द्रत्वं लभेन्नरः ॥
कर्मणा च मुनीन्द्रत्वं तपस्वित्वं च कर्मणा । कर्मणा क्षत्रियत्वं च वैश्यत्वं च स्वकर्मणा
कर्मणा चैव शूद्रत्वमन्त्यजत्वं स्वकर्मणा । स्वकर्मणा च म्लेच्छत्वं लभते नात्र संशयः ॥
स्वकर्मणा जङ्गमत्वं स्थावरत्वं स्वकर्मणा । स्वकर्मणा च शैलत्वं वृक्षत्वं च स्वकर्मणा ॥
स्वकर्मणा पशुत्वं च पक्षित्वं च स्वकर्मणा । स्वकर्मणा क्षुद्रजन्तुः कृमित्वं च स्वकर्मणा ॥
स्वकर्मणा च सर्पत्वं गन्धर्वत्वं स्वकर्मणा । स्वकर्मणा राक्षसत्वं किंनरत्वं स्वकर्मणा ॥
स्वकर्मणा च यक्षत्वं कूष्माण्डत्वं स्वकर्मणा । स्वकर्मणा च प्रेतत्वं वेतालत्वं स्वकर्मणा ॥
भूतत्वं च पिशाचत्वं डाकिनीत्वं स्वकर्मणा । दैत्यत्वं दानवत्वं चाप्यसुरत्वं स्वकर्मणा ॥
कर्मणा पुण्यवाञ्जीवो महापापी स्वकर्मणा । कर्मणा सुन्दरोऽरोगी महारोगी च कर्मणा ॥
कर्मणा चाङ्गहीनत्वं बधिरश्च स्वकर्मणा । कर्मणा चान्धः काणश्च कुत्सितश्च स्वकर्मणा ॥
कर्मणा नरकं यान्ति जीवाः स्वर्गं स्वकर्मणा । कर्मणा शक्रलोकं च सूर्यलोकं स्वकर्मणा ॥
कर्मणा चन्द्रलोकं च वह्निलोकं स्वकर्मणा । कर्मणा वायुलोकं च कर्मणा वरुणालयम् ॥

१ क. सत्यवर्षे सत्यशीलं ना° ।

तथा कुबेरलोकं च नरो याति स्वकर्मणा । कर्मणा ध्रुवलोकं च शिवलोकं स्वकर्मणा ॥
याति नक्षत्रलोकं च सत्यलोकं स्वकर्मणा । जनोलोकं तपोलोकं महर्लोकं स्वकर्मणा ॥
स्वकर्मणा च पातालं ब्रह्मलोकं स्वकर्मणा । कर्मणा भारतं पुण्यं सर्वेप्सितं परम् ॥
कर्मणा याति वैकुण्ठं गोलोकं च निरामयम् । कर्मणा चिरजीवी चैं क्षणायुश्च स्वकर्मणा ॥
कर्मणा कोटिकल्पायु. क्षीणायुश्च स्वकर्मणा । जीवसंसारमात्रायुर्गर्भे मृत्युः स्वकर्मणा ॥
इत्येवं कथितं सर्वं मया तत्त्वं च सुन्दरि । कर्मणा ते मृतो भर्ता गच्छ वत्से यथासुखम् ॥

इति श्रीब्रह्म० मह० प्रकृति० नारदना० साविच्यु० सावित्रीयमसंवादे कर्मणः सर्वहेतुत्वप्रदर्शनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

अथ पञ्चविंशोऽध्यायः ।

श्रीनारायण उवाच—

यमस्य वचनं श्रुत्वा सावित्री च पतिव्रता । तुष्टाव परया भक्त्या तमुवाच मनस्विनी ॥

साविच्युवाच—

किं कर्म वा शुभं धर्मराज किंवाऽशुभं नृणाम् । कर्म निर्मूलयन्त्येव केन वा साधवो जनाः ॥
कर्मणां बीजरूपः कः को वा कर्मफलप्रदः । किं कर्म तद्भवेत्केन को वा तद्धेतुरेव च ॥
को वा कर्मफलं भुङ्क्ते को वा निर्लिप्त एव च । को वा देही कश्च देहः को वाऽत्र कर्मकारकः
किं वा ज्ञानं मनो बुद्धिः के वा प्राणाः शरीरिणाम् । कानीन्द्रियाणि किं तेषां लक्षणं देवताश्च काः ॥ ५ ॥
भोक्ता भोजयिता को वा को भोगः का च निष्कृतिः । को जीवः परमात्मा कस्तन्मे व्याख्यातुमर्हसि ॥ ६ ॥

यम उवाच—

वेदेन विहितं कर्म तन्मन्ये मङ्गलं परम् । अवैदिकं तु यत्कर्म तदेवाशुभमेव च ॥ ७ ॥
अहैतुकी विष्णुसेवा संकल्परहिता सताम् । कर्मनिर्मूलनात्मा वै सा चैव हरिभक्तिदा ॥
हरिभक्तो नरो यश्च स च मुक्तः श्रुतौ श्रुतम् जन्ममृत्युजराव्याधिशोकभीतिविवर्जितः ॥
मुक्तिश्च द्विविधा साध्वि श्रुत्युक्ता सर्वसंमता । निर्वाणपददात्री च हरिभक्तिप्रदा नृणाम् ॥
हरिभक्तिस्वरूपां च मुक्तिं वाञ्छन्ति वैष्णवाः । अन्ये निर्वाणरूपां च मुक्तिमिच्छन्ति साधवः
कर्मणो बीजरूपश्च संततं तत्फलप्रदः । कर्मरूपश्च भगवाञ्छ्रीकृष्णः प्रकृतेः परः ॥ १२ ॥

---

१ क. ब्रह्मकु° । २ क. रसातलं । ३ ख. °र्वेप्सितवरप्रदम् । ४ क. च लक्षायु० । ५ क. महत्त° । ६ क. वेदप्रणिहितो धर्मः कर्म तन्मङ्ग° । ७ क. °निर्मलरूपा च सा चै० ।

सोऽपि तद्धेतुरूपश्च कर्म तेन भवेत्सति । जीवः कर्मफलं भुङ्क्त आत्मा निर्लिप्त एव च
आत्मनः प्रतिबिम्बं च देही जीवः स एव च । पाञ्चभौतिकरूपश्च देहो नश्वर एव च
पृथिवी वायुराकाशो जलं तेजस्तथैव च । एतानि सूत्ररूपाणि सृष्टि. सृष्टिविधौ हरेः ॥
कर्ता भोक्ता च देही च स्वात्मा भोजयिता सदा । भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च
सदसद्भेदबीजं च ज्ञानं नानाविधं भवेत् । विषयाणां विभागानां भेदबीजं च कीर्तितम् ॥
बुद्धिर्विवेचनारूपा ज्ञानसंदीपनी श्रुतौ । वायुभेदाश्च वै प्राणा बलरूपाश्च देहिनाम् ॥
इन्द्रियाणां वै प्रवरमीश्वराणां समूहकम् । प्रेरकं कर्मणां चैव दुर्निवार्यं च देहिनाम् ॥
अनिरूप्यमदृश्यं च ज्ञानभेदं मन. स्मृतम् । लोचनं श्रवणं घ्राणं त्वग्जिह्वादिकमिन्द्रियम्
अङ्गिनामङ्गरूपं च प्रेरकं सर्वकर्मणाम् । रिपुरूपं मित्ररूपं सुखदं दु.खदं स । ॥ २१ ॥
सूर्यो वायुश्च पृथिवी वाण्याद्या देवताः स्मृताः । प्राणदेहादिभृद्यो हि स जीवः परिकीर्तितः
परमात्मा परं ब्रह्म निर्गुणः प्रकृतेः परः । कारणं कारणानां च श्रीकृष्णो भगवान्स्व म् ॥
इत्येवं कथितं सर्वं मया पृष्टं यथागमम् । ज्ञानिनां ज्ञानरूपं च गच्छ वत्से यथासुखम् ॥

सावित्र्युवाच—

त्यक्त्वा क्व यामि कान्तं वा त्वां वा ज्ञानार्णवं शुभम् । प्रश्नं यद्यत्करोमि त्वां तद्भवान्व-
क्तुमर्हति ॥ २९ ॥
कां कां योनिं याति जीवः कर्मणा केन वा यम । केन वा कर्मणा स्वर्गं केन वा नरकं पितः
केन वा कर्मणा मुक्तिः केन भक्तिर्भवेद्धरेः । केन वा कर्मणा रोगी चारोगी केन कर्मणा
केन वा दीर्घजीवी च केनाल्पायुश्च कर्मणा । केन वा कर्मणा दुःखी केन वा कर्मणा सुखी
अङ्गहीनश्च काणश्च बधिरः केन कर्मणा । अन्धो वा कृपणो वाऽपि प्रमत्तः केन कर्मणा ॥
क्षिप्तोऽतिलुब्धकश्चौरः केन वा नरघातकः । केन सिद्धिमवाप्नोति सालोक्यादिचतुष्टयम्
केन वा ब्राह्मणत्वं च तपस्वित्वं च केन वा । स्वर्गभोगादिकं केन वैकुण्ठं केन कर्मणा ॥
गोलोकं केन वा ब्रह्मन्सर्वोत्कृष्टं निरामयम् । नरकं वा कतिविधं किंसंख्यं नाम किं तथा
को वा कं नरकं याति कियन्तं तेषु तिष्ठति । पापिनां कर्मणा केन को वा व्याधिः प्रजायते
यद्यदिति मया पृष्टं तन्मे व्याख्यातुमर्हसि ॥ ३४ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० कर्मविपाके यमोक्त्यनन्तरं सावि-
त्रीप्रश्नो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

१ क. त्वया । २ क. पिङ्गलो वा । ३ ख. 'कश्चैव के' । ४ 'न स्वर्गम' ।

अथ षड्विंशोऽध्यायः ।

नारायण उवाच—

सावित्रीवचनं श्रुत्वा जगाम विस्मयं यमः । प्रहस्य वक्तुमारेभे कर्मपाकं च जीविनाम् ॥

यम उवाच—

कन्या द्वादशवर्षीया वत्से त्वं वयसाऽधुना । ज्ञानं ते सर्वविदुषां योगिनां ज्ञानिनां परम् ॥
सावित्रीवरदानेन त्वं सावित्रीकला सति । प्राप्ता पुरा भूभृता च तपसा तत्समा शुभे ॥
यथा श्रीः श्रीपतेः क्रोडे भवानी च भवोरसि । यथा राधा च श्रीकृष्णे सावित्री ब्रह्मवक्षसि
धर्मोरसि यथा मूर्तिः शतरूपा मनौ यथा । कर्दमे देवहूतिश्च वसिष्ठेऽरुन्धती यथा ॥
अदितिः कश्यपे चापि यथाऽहल्या च गौतमे । यथा शची महेन्द्रे च यथा चन्द्रे च रोहिणी
यथा रतिः कामदेवे यथा स्वाहा हुताशने । यथा स्वधा च पितृषु यथा संज्ञा दिवाकरे
वरुणानी च वरुणे यज्ञे च दक्षिणा यथा । यथा धरा वराहे च देवसेना च कार्तिके ॥
सौभाग्या सुप्रिया त्वं च भव सत्यवति प्रिये । इति तुभ्यं वरं दत्तमपरं च यदीप्सितम् ॥
वृणु देवि महाभागे सर्वं दास्यामि निश्चितम् ॥ ९ ॥

सावित्र्युवाच—

सत्यवदौरसेनैव पुत्राणां शतकं मम । भविष्यति महाभाग वरमेतन्मदीप्सितम् ॥ १० ॥
मत्पितुः पुत्रशतकं श्वशुरस्य च चक्षुषी । राज्यलाभो भवत्वेवं वरमेवं मदीप्सितम् ॥ ११ ॥
अन्ते सत्यवता सार्धं यास्यामि हरिमन्दिरम् । समतीते लक्षवर्षे देहीमं मे जगत्प्रभो ॥
जीवकर्मविपाकं च श्रोतुं कौतूहलं च मे । विश्वविस्तारबीजं च तन्मे व्याख्यातुमर्हसि ॥

यम उवाच—

भविष्यति महासाध्वि सर्वं मानसिकं तव । जीवकर्मविपाकं च कथयामि निशामय ॥ १४ ॥
शुभानामशुभानां च कर्मणां जन्म भारते । पुण्यक्षेत्रेऽत्र सर्वत्र नान्यत्र भुञ्जते जनाः ॥
सुरा दैत्या दानवाश्च गन्धर्वा राक्षसादयः । नराश्च कर्मजनका न सर्वे समजीविनः ॥
विशिष्टजीविनः कर्म भुञ्जते सर्वयोनिषु । शुभाशुभं च सर्वत्र स्वर्गेषु नरकेषु च ॥
विशेषतो मानवाश्च भ्रमन्ति सर्वयोनिषु । शुभाशुभं भुञ्जते च कर्म पूर्वार्जितं परम् ॥
शुभेन कर्मणा यान्ति ते स्वर्गादिकमेव च । कर्मणा चाशुभेनैव भ्रमन्ति नरकेषु च ॥
कर्मनिर्मूलने मुक्तिः सा चोक्ता द्विविधा मया । निर्वाणरूपा सेवा च कृष्णस्य परमात्मनः ॥
रोगी कुकर्मणा जीवश्चारोगी शुभकर्मणा । दीर्घजीवी च क्षीणायुः सुखी दुःखी च निश्चितम्

अन्धादयश्चाङ्गहीनाः कुत्सितेन च कर्मणा । सिद्ध्यादिकमवाप्नोति सर्वोत्कृष्टेन कर्मणा ॥
सामान्यं कथितं सर्वं विशेषं शृणु सुन्दरि । सुदुर्लभं सुभोग्यं च पुराणेषु श्रुतिष्वपि २३॥
दुर्लभा मानवी जातिः सर्वजातिषु भारते । सर्वेभ्यो ब्राह्मणः श्रेष्ठः प्रश त. सर्वकर्मसु ॥
विष्णुभक्तो द्विजश्चैव गरीयान्भारते तत. । निष्कामश्च सकामश्च वैष्णवो द्विविध सति
सकामश्च प्रधानश्च निष्कामो भक्त एव च कर्मभोगी सकामश्च निष्कामो निरुपद्रवः ॥
स याति देहं त्यक्त्वा च पदं विष्णोर्निरामयम् । पुनरागमनं नास्ति तेषां निष्कामिणां सति
ये सेवन्ते च द्विभुजं कृष्णमात्मानमीश्वरम् । गोलोकं यान्ति ते भक्ता दिव्यरूपविधारिणः
ये च नारायणं भक्ताः सेवन्ते च चतुर्भुजम् । वैकुण्ठं यान्ति ते सर्वे दिव्य० ॥ २९ ।
सकामिनो वैष्णवाश्च गत्वा वैकुण्ठमेव च । भारतं पुनरायान्ति तेषां जन्म द्विजातिषु ॥
कालेन ते च निष्कामा भविष्यन्ति क्रमेण च । भक्तिं च निर्मलां बुद्धिं तेभ्यो दास्यति
निश्चितम् ॥ ३१ ॥
ब्राह्मणाद्वैष्णवान्ये सकामाः सर्वजन्मसु । न तेषां निर्मला बुद्धिर्विष्णुभक्तिविवर्जिताः ॥
तीर्थाश्रिता द्विजा ये च तपस्यानिरताः सति । ते यान्ति ब्रह्मलोकं च पुनरायान्ति भारतम्
स्वधर्मनिरता विप्राः सूर्यभक्ताश्च भारते । व्रजन्ति सूर्यलोकं ते पुन० ॥ ३४ ॥
स्वधर्मनिरता विप्राः शैवाः शाक्ताश्च गाणपा. । ते यान्ति शिवलोकं च पुन० ॥३५॥
ये विप्रा अन्यदेवेष्टाः स्वधर्मनिरताः सति । ते गत्वा शक्रलोकं च पुन० ॥ ३६ ॥
हरिभक्ताश्च निष्कामाः स्वधर्मरहिता द्विजाः । तेऽपि यान्ति हरेर्लोकं क्रमाद्भक्तिबलाद्दहो
स्वधर्मरहिता विप्रा देवान्यसेविन. सदा भ्रष्टाचाराश्च कामाश्च ते यान्ति नरकं ध्रुवम् ॥
स्वधर्मनिरताश्चैवं वर्णाश्चत्वार एव च । भवन्त्येव शुभस्यैव कर्मणः फलभागिन. ॥३९॥
स्वधर्मरहिता ते च नरकं यान्ति हि ध्रुवम् । भारते च भवन्त्येव कर्मणः फ०॥ ४० ॥
स्वधर्मनिरता विप्राः स्वधर्मनिरताय च । कन्यां ददाति विप्राय चन्द्रलोकं व्रजन्ति ते ॥
वसन्ति तत्र ते साध्वि यावदिन्द्राश्चतुर्दश । सालंकृताया दानेन द्विगुणं फलमुच्यते ॥
सकामा यान्ति तल्लोकं न निष्कामाश्च वैष्णवा । ते प्रयान्ति विष्णुलोकं फलसंधानवर्जिताः
गव्यं च रजतं भार्यां वस्त्रं सस्यं फलं जलम् । ये ददत्येव विप्रेभ्यस्तल्लोकं हि व्रजन्ति च
वसन्ति ते च तल्लोकं यावन्मन्वन्तरं सति । कालं च सुचिरं वासं कुर्वन्ति तत्र ते जनाः॥
ये ददति सुवर्णं च गां च ताम्रादिकं सति । ते यान्ति सूर्यलोकं च शुचये ब्राह्मणाय च॥
वसन्ति तत्र ते लोके वर्षाणामयुतं सति । विपुलं सुचिरं वासं कुर्वन्ति च निरामयाः ॥

१ ख. °बालाश्च . २ क. ते विष्णुलोकं ।

ददाति भूमिं विप्रेभ्यो धान्यानि विपुलानि च । स याति विष्णुलोकं च श्वेतद्वीपं मनोहरम्
तत्रैव निवसत्येव यावच्चन्द्रदिवाकरौ । विपुलं विपुले वासं करोति पुण्यवान्सति ॥४९॥
गृहं ददाति विप्राय ये जना भक्तिपूर्वकम् । ते यान्ति सुरलोकं च चिरं तत्र भवन्ति ते ॥
गृहरेणुप्रमाणाब्दं दानं पुण्यदिने यदि विपुलं विपुले वासं कुर्वन्ति मानवाः सति ॥५१॥
यस्मै यस्मै च देवाय यो ददाति गृहं नरः । स याति तस्य लोकं च रेणुमानाब्दमेव च ॥
सौधे चतुर्गुणं पुण्यं पूर्ते शतगुणं फलम् । प्रकृष्टेऽष्टगुणं तस्मादित्याह कमलोद्भवः ५३॥
यो ददाति तडागं च सर्वभूताय भारते । स याति जनलोकं च वर्षाणामयुतं सति ॥५४॥
वाप्यां फलं शतगुणं प्राप्नोति मानवस्ततः । तथा सेतुप्रदानेन तडागस्य फलं लभेत् ५५॥
धनुश्चतुःसहस्रेण दैर्घ्यमानेन निश्चितम् । न्यूना वा तावती प्रस्थे सा वापी परिकीर्तिता ॥
दशवापीसमा कन्या यदि पात्रे प्रदीयते । फलं ददाति द्विगुणं यदि सालंकृता भवेत् ५७॥
य फलं च तडागे च पङ्कोद्धारेण तत्फलम् । वाप्याश्च पङ्कोद्धारेण वापीतुल्यफलं लभेत् ॥
अश्वत्थवृक्षमारोप्य प्रतिष्ठां च करोति यः । स याति तपसो लोकं वर्षाणामयुतं परम् ॥
पुष्पोद्यानं यो ददाति सावित्रि सर्वभूतये । स वसेद्ध्रुवलोके च वर्षाणामयुतं ध्रुवम् ॥६०॥
यो ददाति विमानं च विष्णवे भारते सति । विष्णुलोके वसेत्सोऽपि यावन्मन्वन्तरं परम् ॥
चित्रयुक्ते च विपुले फलं तस्य चतुर्गुणम् । रथार्धे शिबिकादाने फलमेव लभेद्ध्रुवम् ॥
यो ददाति भक्तियुक्तो हरये दोलमन्दिरम् । विष्णुलोके वसेत्सोऽपि यावन्मन्वन्तरं परम् ।
राजमार्गे सौधयुक्तं यः करोति पतिव्रते । वर्षाणामयुतं सोऽपि शक्रलोके महीयते ६४॥
ब्राह्मणेभ्योऽपि देवेभ्यो दाने समफलं लभेत् । यद्य दत्तं हि तद्भोक्तुर्न दत्तं नोपतिष्ठते ॥
भुक्त्वा स्वर्गादिकं सौख्यं पुनरायान्ति भारते । लभेद्विप्रकुलेष्वेव क्रमेणैवोत्तमादिषु ॥
भारते पुण्यवान्विप्रो भुक्त्वा स्वर्गादिकं परम् । पुनः सोऽपि भवेद्विप्रो न पुनः क्षत्रियादयः
क्षत्रियो वापि वैश्यो वा कल्पकोटिशतेन च । तपसा ब्राह्मणत्वं च न प्राप्नोति श्रुतौ श्रुतम्
स्वधर्मरहिता विप्रा नानायोनिं व्रजन्ति च । भुक्त्वा च कर्मभोगं च विप्रयोनिं लभेत्पुनः ॥
माऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
देवतीर्थे सहायेन कायव्यूहेन शुध्यति । एतत्ते कथितं[1] सर्वं किं भूयः श्रोतुमिच्छसि ॥७१॥

इति श्रीब्रह्म० महा० नारदना० प्रकृति० साविश्यु० कर्मवि-
पाके कर्मानुरूपस्थानगमनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

==========

१ क. °तं किंचित्कि ।

अथ सप्तविंशो ऽध्यायः ।

---

सावित्र्युवाच—
प्रयान्ति स्वर्गमन्यं च येन येनैव कर्मणा । मानवाः पुण्यवन्तश्च तन्मे व्याख्यातुमर्हसि ॥ १ ।
धर्म उवाच—
अन्नदानं च विप्राय यः करोति च भारते । अन्नप्रमाणवर्षं च शक्रलोके महीयते ॥ २ ॥
अन्नदानात्परं दानं न भूतं न भविष्यति । नात्र पात्रपरीक्षा स्यान्न कालनियमः क्वचित् ॥
देवेभ्यो ब्राह्मणेभ्यो वा ददाति चाऽऽसनं यदि । महीयते वह्निलोके वर्षाणामयुतं ध्रुवम् ॥
यो ददाति च विप्राय दिव्यां धेनुं पयस्विनीम् । तल्लोममानवर्षं च वैकुण्ठे च महीयते ॥
चतुर्गुणं पुण्यदिने तीर्थे शतगुणं फलम् । दानं नारायणक्षेत्रे फलं कोटिगुणं भवेत् ॥
गां यो ददाति विप्राय भारते भक्तिपूर्वकम् । वर्षाणामयुतं चैव चन्द्रलोके महीयते ॥ ७ ॥
यश्चोभयमुखीदानं करोति ब्राह्मणाय च । तल्लोममानवर्षं च वैकुण्ठे च महीयते ॥ ८ ॥
यो ददाति ब्राह्मणाय शालग्रामं सवस्त्रकम् । महीयते स वैकुण्ठे यावच्चन्द्रदिवाकरौ ॥ ९ ॥
यो ददाति ब्राह्मणाय च्छत्रं च सुमनोहरम् । वर्षाणामयुतं सोऽपि मोदते वरुणालये ॥
विप्राय पादुकायुग्मं यो ददाति च भारते । महीयते वायुलोके वर्षाणामयुतं सति ॥ ११ ॥
यो ददाति ब्राह्मणाय शय्यां दिव्यां मनोहराम् । महीयते चन्द्रलोके यावच्चन्द्रदिवाकरौ
यो ददाति प्रदीपं च देवाय ब्राह्मणाय च । यावन्मन्वन्तरं सोऽपि ब्रह्मलोके महीयते ॥
संप्राप्य मानवीं योनिं चक्षुष्मांश्च भवेद्ध्रुवम् । न याति यमलोकं च तेन पुण्येन सुन्दरि ॥
करोति गजदानं च यो हि विप्राय भारते । यावदिन्द्रादिदेवस्य लोके चार्धासने वसेत् ॥
भारते योऽश्वदानं च करोति ब्राह्मणाय च । मोदते वारुणे लोके यावदिन्द्राश्चतुर्दश ॥
प्रकृष्टां शिबिकां यो हि ददाति ब्राह्मणाय च । महीयते विष्णुलोके यावन्मन्वन्तरं सति ॥
यो ददाति च विप्राय व्यजनं श्वेतचामरम् । महीयते वायुलोके वर्षाणामयुतं ध्रुवम् ॥
धान्याचलं यो ददाति ब्राह्मणाय च भारते । स च धान्यप्रमाणाब्दं विष्णुलोके महीयते
ततः स्वयोनिं संप्राप्य चिरजीवी भवेत्सुखी । दाता ग्रहीता तौ द्वौ च ध्रुवं वैकुण्ठगामिनौ
सततं श्रीहरेर्नाम भारते यो जपेन्नरः । स एव चिरजीवी च ततो मृत्युः पलायते ॥ २१ ॥
यो नरो भारते वर्षे दोलनं कारयेद्धरेः । पूर्णिमारजनीशेषे जीवन्मुक्तो भवेन्नरः ॥ २२ ॥
इह लोके सुखं भुक्त्वा यात्यन्ते विष्णुमन्दिरम् । निश्चितं निवसेत्तत्र शतमन्वन्तरावधि ॥
फलमुत्तरफाल्गुन्यां ततोऽपि द्विगुणं भवेत् । कल्पान्तजीवी स भवेदित्याह कमलोद्भवः ॥

---

१ क. वह्निलो० ।

तिलदानं ब्राह्मणाय यः करोति च भारते । तिलप्रमाणवर्षं च मोदते विष्णुमन्दिरे ॥
ततः स्वयोनिं संप्राप्य चिरजीवी भवेत्सुखी ताम्रपात्रस्थदानेन द्विगुणं च फलं लभेत् ॥
सालङ्कृतां च भोग्यां च सवस्त्रां सुन्दरीं प्रियाम् । यो ददाति ब्राह्मणाय भारते च पति-
व्रताम् ॥ १७ ॥
महीयते चन्द्रलोके यावदिन्द्राश्चतुर्दश । तत्र स्वर्वेश्यया सार्धं मोदते च दिवानिशम् ॥
ततो गन्धर्वलोके च वर्षाणामयुतं सति । दिवानिशं कौतुकेन चोर्वश्या सह मोदते ॥
ततो जन्मसहस्रं च प्राप्नोति सुन्दरीं प्रियाम् । सतीं सौभाग्ययुक्तां च कोमलां प्रियवादिनीम् ॥
ददाति सफलं वृक्षं ब्राह्मणाय च यो नरः । फलप्रमाणवर्षं च शक्रलोके महीयते ॥
पुनः स्वयोनिं संप्राप्य लभते सुतमुत्तमम् । सफलानां च वृक्षाणां सहस्रं च प्रशंसितम् ॥
केवलं फलदानं च ब्राह्मणाय ददाति यः । सुचिरं स्वर्गवासं च कृत्वा याति च भारतम् ॥
नानाद्रव्यसमायुक्तं नानासस्यसमन्वितम् । ददाति यश्च विप्राय भारते विपुलं गृहम् ॥
कुबेरलोके वसति स च मन्वन्तरावधि ततः स्वयोनिं संप्राप्य महांश्च धनवान्भवेत् ॥
यो जनः सस्यसंयुक्तां भूमिं च रुचिरां सति । ददाति भक्तया विप्राय पुण्यक्षेत्रे च वा सति
महीयते स वैकुण्ठे मन्वन्तरशतं ध्रुवम् । पुनः स्वयोनिं संप्राप्य महांश्च भूमिवान्भवेत् ॥ २७ ॥
तं न त्यजति भूमिश्च जन्मनां शतकं परम् । श्रीमांश्च धनवांश्चैव पुत्रवांश्च प्रजेश्वरः ॥ २८ ॥
सप्रजं च प्रकृष्टं च ग्रामं दद्याद्द्विजातये । लक्षमन्वन्तरं चैव वैकुण्ठे स महीयते ॥ २९ ॥
पुनः स्वयोनिं संप्राप्य ग्रामलक्षं लभेद्ध्रुवम् । न जहाति च तं पृथ्वी जन्मनां लक्षमेव च ॥
सप्रजं सुप्रकृष्टं च पक्कसस्यसमन्वितम् । नानापुष्करिणीवृक्षं फलभोगसमन्वितम् ॥ ४१ ॥
नगरं यश्च विप्राय ददाति भारते भुवि । महीयते स वैकुण्ठे दशलक्षेन्द्रकालकम् ॥ ४२ ॥
पुनः स्वयोनिं संप्राप्य राजेन्द्रो भारते भवेत् । नगराणां च नियुतं लभते नात्र संशयः ॥
धरा तं न जहात्येव जन्मनां नियुतं ध्रुवम् । परमैश्वर्यसंयुक्तो भवेदेव महीतले ॥ ४४ ॥
नगराणां च शतकं देशं यो हि द्विजातये । सुप्रकृष्टप्रजायुक्तं ददाति भक्तिपूर्वकम् ॥ ४५ ॥
वापीतडागसंयुक्तं नानावृक्षसमन्वितम् । महीयते स वैकुण्ठे कोटिमन्वन्तरावधि ॥ ४६ ॥
पुनः स्वयोनिं संप्राप्य जम्बूद्वीपपतिर्भवेत् परमैश्वर्यसंयुक्तो यथा शक्रस्तथा भुवि ॥ ४७ ॥
मही तं न जहात्येव जन्मनां कोटिमेव च । कल्पान्तजीवी स भवेद्राजराजेश्वरो महान् ॥
स्वाधिकारं समग्रं च यो ददाति द्विजातये । चतुर्गुणं फलं चातो भवेत्तस्य न संशयः ॥ ४९ ॥

---

१ क च नियुतं दे° । २ क. °प्रसन्नप्र° ।

जम्बूद्वीपं यो ददाति ब्राह्मणाय पतिव्रते फलं शतगुणं चान्ते भवेत्तस्य न संशयः ॥ ९० ॥
सप्तद्वीपमहीदातुः सर्वतीर्थानुसेविन । सर्वेषां तपसां कर्तुः सर्वोपवासकारिणः ॥ ९१ ॥
सर्वदानप्रदातुश्च सर्वसिद्धेश्वरस्य च । अस्त्येव पुनरावृत्तिर्न भक्तस्य हरेरहो ॥ ९२ ॥
असंख्यब्रह्मणां पातं पश्यन्ति वैष्णवाः सति निवसन्ति हि गोलोके वैकुण्ठे वा हरेः पदे ॥
विष्णुमन्त्रोपासकश्च विहाय मानवीं तनुम् बिभर्ति दिव्यरूपं च जन्ममृत्युजरापहम् ॥
लब्ध्वा विष्णोश्च सारूप्यं विष्णुसेवां करोति च । स च पश्यति गोलोके ह्यसंख्यं प्राकृतं-
लयम् ॥ ९९ ॥
नश्यन्ति देवाः सिद्धाश्च विश्वानि निखिलानि च । कृष्णभक्ता न नश्यन्ति जन्ममृत्युजरा-
हराः ॥ ९६ ॥
कार्तिके तुलसीदानं करोति हरये च यः । युगं पत्रप्रमाणं च मोदते हरिमन्दिरे ॥९७॥
पुनः स्वयोनिं संप्राप्य हरिभक्तिं लभेद्ध्रुवम् । सुखी च चिरजीवी च स भवेद्भारते भुवि
घृतप्रदीपं हरये कार्तिके यो ददाति च । पलप्रमाणं वर्षं च मोदते हरिमन्दिरे ॥ ९९ ॥
पुनः स्वयोनिं संप्राप्य विष्णुभक्तिं लभेद्ध्रुवम् । महाधनाढयः स भवेच्चक्षुष्मांश्चैव दीप्तिमान्
माघे यः स्नाति गङ्गायामरुणोदयकालतः । युगषष्टिसहस्राणि मोदते हरिमन्दिरे ॥६१॥
पुनः स्वयोनिं संप्राप्य विष्णुभक्तिं लभेद्ध्रुवम् । जितेन्द्रियाणां प्रवरः स भवेद्भारते भुवि
माघे यः स्नाति गङ्गायां प्रयागे चारुणोदये । वैकुण्ठे मोदते सोऽपि लक्षमन्वन्तरावधि ॥
पुनः स्वयोनिं संप्राप्य विष्णुमन्त्रं लभेद्ध्रुवम् त्यक्त्वा च मानुषं देहं पुनर्याति हरेः पदम्
नास्ति तत्पुनरावृत्तिर्वैकुण्ठाच्च महीतले । करोति हरिदास्यं च लब्ध्वा सारूप्यमेव च ।
नित्यस्नायी च गङ्गायां स पूतः सूर्यवद्भुवि । पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥
तस्यैव पादरजसा सद्यः पूता वसुंधरा । मोदते स च वैकुण्ठे यावच्चन्द्रदिवाकरौ ॥
पुनः स्वयोनिं संप्राप्य तपस्विप्रवरो भवेत् । स्वधर्मनिरतः शुद्धो विद्वांश्च सुजितेन्द्रियः ॥
मीनकर्कटयोर्मध्ये गाढं तपति भास्करे । भारते यो ददात्येव जलमेव सुवासितम् ॥६९॥
मोदते स च वैकुण्ठे यावदिन्द्राश्चतुर्दश । पुनः स्वयोनिं संप्राप्य सुखी निष्कपटो भवेत्[1] ॥
वैशाखे हरये भक्त्या यो ददाति च चन्दनम् । युगषष्टिसहस्राणि मोदते विष्णुमन्दिरे ॥
पुनः स्वयोनिं संप्राप्य रूपवांश्च सुखी भवेत् ॥ ७१ ॥
(यज्ञसूत्रेण तत्पुण्यं लभते नात्र संशयः । वैकुण्ठे मोदते सोऽपि कृष्णभक्तिर्लभेद्ध्रुवम्) ॥

---

१ क निष्कण्टको भ° ।

वैशाखे सक्तुदानं च यः करोति द्विजायते । सक्तुरेणुप्रमाणाब्दं मोदते विष्णुमन्दिरे ॥
करोति भारते यो हि कृष्णजन्माष्टमीव्रतम् । शतजन्मकृतात्पापान्मुच्यते नात्र संशयः॥
वैकुण्ठे मोदते सोऽपि यावदिन्द्राश्चतुर्दश । पुनः स्वयोनिं संप्राप्य कृष्णभक्तिं लभेद्ध्रुवम् ॥
इहैव भारते वर्षे शिवरात्रिं करोति यः । मोदते शिवलोके च सप्तमन्वन्तरावधि॥ ७६ ॥
शिवाय शिवरात्रौ च बिल्वपत्रं ददाति यः । पत्रप्रमाणं च युगं मोदते शिवमन्दिरे ॥७७॥
पुनः स्वयोनिं संप्राप्य शिवभक्तिं लभेद्ध्रुवम् । विद्यावान्पुत्रवाञ्छ्रीमान्प्रजावान्भूमिमान्भवेत् ॥ ७८ ॥
चैत्रमासेऽथवा माघे शंकरं योऽर्चयेद्व्रती । करोति नर्तनं भक्त्या वेत्रपाणिर्दिवानिशम्॥
मासं वाऽप्यर्धमासं वा दश सप्त दिनानि वा । दिनमानं युगं सोऽपि शिवलोके महीयते ॥
श्रीरामनवमीं यो हि करोति भारते नरः । सप्तमन्वन्तरं यावन्मोदते विष्णुमन्दिरे ॥८१॥
पुनः स्वयोनिं संप्राप्य रामभक्तिं लभेद्ध्रुवम् । जितेन्द्रियाणां प्रवरो महांश्च धार्मिको भवेत्
शारदीयां महापूजां प्रकृतेर्यः करोति च । महिषैश्छागलैर्मेषैरिक्षुकूष्माण्डकैस्तथा ८३॥
नैवेद्यैरुपहारैश्च धूपदीपादिभिस्तथा । नृत्यगीतादिभिर्वाद्यैर्नानाकौतुकमङ्गलैः ॥ ८४ ॥
शिवलोके वसेत्सोऽपि सप्तमन्वन्तरावधि । पुनः स्वयोनिं संप्राप्य बुद्धिं च निर्मलां लभेत्
अचलां श्रियमाप्नोति पुत्रपौत्रादिवर्धिनीम् । महाप्रभावयुक्तश्च गजवाजिसमन्वितः ॥
राजराजेश्वरः सोऽपि भवेदेव न संशयः । भाद्रशुक्लाष्टमीं प्राप्य महालक्ष्मीं च योऽर्चयेत्
नित्यं भक्त्या पक्षमेकं पुण्यक्षेत्रे च भारते । दत्त्वा तस्यै प्रकृष्टानि चोपचाराणि षोडश
वैकुण्ठे मोदते सोऽपि यावच्चन्द्रदिवाकरौ । पुनः स्वयोनिं संप्राप्य राजराजेश्वरो भवेत् ॥
कार्तिकेपूर्णिमायां च कृत्वा तु रासमण्डलम् । गोपानां शतकं कृत्वा गोपीनां शतकं तथा
शिलायां प्रतिमायां वा श्रीकृष्णं राधया सह । भारते पूजयेद्दत्त्वा चोपचाराणि षोडश ॥
गोलोके च वसेत्सोऽपि यावद्वै ब्रह्मणो वयः । भारतं पुनरागत्य कृष्णभक्तिं लभेद्ध्रुवम्
क्रमेण सुदृढां भक्तिं लब्ध्वा मन्त्रं हरेरपि । देहं त्यक्त्वा च गोलोकं पुनरेव प्रयाति सः
तत्र कृष्णस्य सारूप्यं संप्राप्य पार्षदो भवेत् । पुनस्तत्पतनं नास्ति जरामृत्युहरो महान्
शुक्लां वाऽप्यथवा कृष्णां करोत्येकादशीं च यः । वैकुण्ठे मोदते सोऽपि यावद्वै ब्रह्मणो वयः
भारतं पुनरागत्य हरिभक्तिं लभेद्ध्रुवम् । पुनर्याति च वैकुण्ठं न तस्य पतनं भवेत् ॥
भाद्रे शुक्ले च द्वादश्यां यः शक्रं पूजयेन्नरः । षष्टिवर्षसहस्राणि शक्रलोके महीयते॥९७॥

---

१ क. राजराजेश्वरो भवेत् ।

रविवारेऽर्कसंक्रान्त्यां सप्तम्यां शुक्लपक्षतः । संपूज्यार्कं हविष्यान्नं यः करोति च भारते ॥
महीयते सोऽर्कलोके यावच्चन्द्रदिवाकरौ । भारतं पुनरागत्य चारोगी श्रीयुतो भवेत् ।
ज्येष्ठशुक्लचतुर्दश्यां सावित्रीं यो हि पूजयेत् । महीयते ब्रह्मलोके सप्तमन्वन्तरावधि ॥ १०० ॥
पुनर्महीं समागत्य श्रीमानतुलविक्रमः । चिरजीवी भवेत्सोऽपि ज्ञानवान्संपदा युतः ॥ १०१ ॥
माघस्य शुक्लपञ्चम्यां पूजयेद्यः सरस्वतीम् । संयतो भक्तितो दत्त्वा चोपचाराणि षोडश ॥
महीयते स वैकुण्ठे यावद्ब्रह्मदिवानिशम् । संप्राप्य च पुनर्जन्म स भवेत्कविपण्डितः ॥
गां सुवर्णादिकं यो हि ब्राह्मणाय ददाति च नित्यं जीवनपर्यन्तं भक्तियुक्तश्च भारते ॥
गवां लोमप्रमाणाब्दं द्विगुणं विष्णुमन्दिरे । मोदते हरिणा सार्धं क्रीडाकौतुकमङ्गलैः ॥
ततः पुनरिहाऽऽगत्य विष्णुभक्तिं लभेद्ध्रुवम् ततः पुनरिहाऽऽगत्य राजराजेश्वरो भवेत्
गोमांश्च पुत्रवान्विद्वाञ्ज्ञानवान्सर्वतः सुखी ॥ १०५ ॥
भोजयेद्यो हि मिष्टान्नं ब्राह्मणेभ्यश्च भारते । विप्रलोमप्रमाणाब्दं मोदते विष्णुमन्दिरे ॥
ततः पुनरिहाऽऽगत्य स सुखी धनवान्भवेत् । विद्वान्सुचिरजीवी च श्रीमानतुलविक्रम. ॥
यो वक्ति वा ददात्येव हरेर्नामानि भारते । युगं नामप्रमाणं च विष्णुलोके महीयते ॥
ततः पुनरिहाऽऽगत्य विष्णुभक्तिं लभेद्ध्रुवम् । यदि नारायणक्षेत्रे फलं कोटिगुणं लभे[त्] ॥
नाम्नां कोटिं हरेर्यो हि क्षेत्रे नारायणे जपेत् । सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद्ध्रुवम् ॥
लभते न पुनर्जन्म वैकुण्ठे स महीयते । लभेद्विष्णोश्च सारूप्यं न तस्य पतनं भवेत् ॥
यः शिवं पूजयेन्नित्यं कृत्वा लिङ्गं च पार्थिवम् । यावज्जीवनपर्यन्तं स याति शिवमन्दिरम्
मृदां रेणुप्रमाणाब्दं शिवलोके महीयते । ततः पुनरिहाऽऽगत्य राजेन्द्रो भारते भवेत् ॥
शिलां च योऽर्चयेन्नित्यं शिलातोयं च भक्षति । महीयते स वैकुण्ठे यावद्वै ब्रह्मणः शतम्
ततो लब्ध्वा पुनर्जन्म हरिभक्तिं सुदुर्लभाम् । महीयते विष्णुलोके न तस्य पतनं भवेत् ॥
तपांसि चैव सर्वाणि व्रतानि निखिलानि च । कृत्वा तिष्ठति वैकुण्ठे यावदिन्द्राश्चतुर्दश
ततो लब्ध्वा पुनर्जन्म राजेन्द्रो भारते भवेत् । ततो मुक्तो भवेत्पश्चात्पुनर्जन्म न विद्यते
यः स्नाति सर्वतीर्थेषु भुवः कृत्वा प्रदक्षिणाम् । स च निर्वाणतां याति न तज्जन्म भवेद्भुवि ॥
पुण्यक्षेत्रे भारते च योऽश्वमेधं करोति च । अश्वलोमप्रमाणाब्दं शक्रस्यार्धासने वसेत् ॥
चतुर्गुणं राजसूये फलमाप्नोति मानवः । नरमेधेऽश्वमेधार्धं गोमेधे च तदेव च ॥ ११० ॥
द्विगुणं च तदर्धं च सुपुत्रं च लभेद्ध्रुवम् । लभते लाङ्गलेष्टौ च गोमेधसदृशं फलम् ॥

---

१ क. कृष्णभक्तिं लभेद्ध्रुवम् । २ क. °वद्वै ब्रह्मणां शतम् ।

तत्समानं च विप्रेष्टौ वृद्धियागे च तत्फलम् । पद्मयज्ञे तदर्धं च फलमाप्नोति मानवः ॥
विशोके च विशोकं च पद्मार्धं स्वर्गमश्नुते । विजये विजयी राजा स्वर्गे पद्मसमं लभेत् ॥
प्राजापत्ये प्रजालाभो भूवृद्धिर्भूभृतां भवेत् । इह राजश्रियं लब्ध्वा पद्मार्धं स्वर्गमश्नुते ॥
ऋद्धियागे महैश्वर्यं स्वर्गं पद्मसमं भवेत् ॥ १२४ ॥
विष्णुयज्ञः प्रधानं च सर्वयज्ञेषु सुन्दरि ब्रह्मणा च कृतः पूर्वं महासंभारसंयुतः ॥ १२५ ॥
बभूव कलहो यत्र दक्षशंकरयोः सति । शेपुश्च नन्दिनं विप्रा नन्दी विप्रांश्च कोपतः ॥
यतो हेतोर्दक्षयज्ञं बभञ्ज चन्द्रशेखरः । चकार विष्णुयज्ञं च पुरा दक्षप्रजापतिः ॥ १२७ ॥
धर्मश्च कश्यपश्चैव शेषश्चापि च कर्दमः । स्वायंभुवो मनुश्चैव तत्पुत्रश्च प्रियव्रतः ॥
शिवः सनत्कुमारश्च कपिलश्च ध्रुवस्तथा । राजसूयसहस्राणां समृद्ध्या च क्रतुर्भवेत् ॥
राजसूयसहस्राणां फलमाप्नोति निश्चितम् । विष्णुयज्ञात्परो यज्ञो नास्ति वेदे फलप्रदः
बहुकल्पान्तजीवी च जीवन्मुक्तो भवेद्ध्रुवम् । ज्ञानेन तेजसा चैव विष्णुतुल्यो भवेदिह ॥
देवानां च यथा विष्णुर्वैष्णवानां यथा शिवः । शास्त्राणां च यथा वेदा आश्रमाणां च ब्राह्मणाः ॥ १३२ ॥
तीर्थानां च यथा गङ्गा पवित्राणां च वैष्णवाः । एकादशी व्रतानां च पुष्पाणां तुलसी यथा
नक्षत्राणां यथा चन्द्रः पक्षिणां गरुडो यथा । यथा स्त्रीणां च प्रकृतिराधाराणां वसुंधरा ॥
शीघ्रगानां चेन्द्रियाणां चञ्चलानां यथा मनः । प्रजापतीनां ब्रह्मा च प्रजेशानां प्रजापतिः
वृन्दावनं वनानां च वर्षाणां भारतं यथा । श्रीमतां च यथा श्रीश्च विदुषां च सरस्वती ॥
पतिव्रतानां दुर्गा च सौभाग्यानां च राधिका । विष्णुयज्ञस्तथा वत्से यज्ञेषु च महानिति
अश्वमेधशतेनैव शक्रत्वं लभते ध्रुवम् । सहस्रेण विष्णुपदं संप्राप पृथुरेव च ॥ १३८ ॥
स्नानं च सर्वतीर्थेषु सर्वयज्ञेषु दक्षिणम् । सर्वेषां च व्रतानां च तपसां फलमेव च ॥ १३९ ॥
पाठश्चतुर्णां वेदानां प्रादक्षिण्यं भुवस्तथा । फलं बीजमिदं सर्वं मुक्तिदं कृष्णसेवनम् ॥
पुराणेषु च वेदेषु चेतिहासेषु सर्वतः । निरूपितं सारभूतं कृष्णपादाम्बुजार्चनम् ॥
तद्वर्णनं च तद्ध्यानं तन्नामगुणकीर्तनम् । तत्स्तोत्रं स्मरणं चैव वन्दनं जप एव च ॥
तत्पादोदकनैवेद्यभक्षणं नित्यमेव च । सर्वसंमतमित्येवं सर्वेप्सितमिदं सति ॥ १४३ ॥
भज कृष्णं परं ब्रह्म निर्गुणं प्रकृतेः परम् । गृहाण स्वामिनं वत्से सुखं गच्छ स्वमन्दिरम्
एतत्ते कथितं सर्वं विपाकं[1] कर्मणां नृणाम् । सर्वेप्सितं सर्वमतं परं तत्त्वप्रदं नृणाम् । १४४ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु० यमसावित्रीसं० शुभकर्मविपाककथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥



---

1 क. °कं सर्वमङ्गलम् ।

अथाष्टाविंशोऽध्यायः।

नारायण उवाच—

हरेरुत्कीर्तनं श्रुत्वा सावित्री यमवक्त्रतः। साश्रुनेत्रा सपुलका यमं पुनरुवाच सा ॥ १ ॥

सावित्र्युवाच—

हरेरुत्कीर्तनं धर्म स्वकुलोद्धारकारणम्। श्रोतॄणां चैव वक्तॄणां जन्ममृत्युजराहरम् ॥ २ ॥
दानानां च व्रतानां च सिद्धीनां तपसां परम्। योगानां चैव वेदानां सेवनं कीर्तनं हरेः ॥ ३ ॥
मुक्तत्वममरत्वं वा सर्वसिद्धित्वमेव वा। श्रीकृष्णसेवनस्यैव कलां नार्हन्ति षोडशीम् ॥ ४ ॥
भजामि केन विधिना श्रीकृष्णं प्रकृतेः परम्। मूढां मामबलां तात वद वेदविदां वर ॥ ५ ॥
शुभकर्मविपाकं च श्रुतं नृणां मनोहरम्। कर्माशुभविपाकं च तन्मे व्याख्यातुमर्हसि ॥ ६ ॥
इत्युक्त्वा सा सती ब्रह्मन्भक्तिनम्रात्मकंधरा। तुष्टाव धर्मराजं च वेदोक्तेन स्तवेन च ॥ ७ ॥

सावित्र्युवाच—

तपसा धर्ममाराध्य पुष्करे भास्करः पुरा। धर्मांशं यं सुतं प्राप धर्मराजं नमाम्यहम् ॥ ८ ॥
समता सर्वभूतेषु यस्य सर्वस्य साक्षिणः। अतो यन्नाम शमनमिति तं प्रण० ॥ ९ ॥
येनान्तश्च कृतो विश्वे सर्वेषां जीविनां परम्। कर्मानुरूपकालेन तं कृतान्तं न० ॥ १० ॥
बिभर्ति दण्डं दण्डचाय पापिनां शुद्धिहेतवे। नमामि तं दण्डधरं यः शास्ता सर्वकर्मणाम् ॥
विश्वे यः कलयत्येव सर्वायुश्चापि संततम्। अतीव दुर्निवार्यं च तं कालं प्रण० ॥ ११ ॥
तपस्वी वैष्णवो धर्मी संयमी विजितेन्द्रियः। जीविनां कर्मफलदं तं यमं प्रण० ॥
स्वात्मारामश्च सर्वज्ञो मित्रं पुण्यकृतां भवेत्। पापिनां क्लेशदो यस्य पुत्रो मित्रो नम० ॥
यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा। यो ध्यायति परं ब्रह्म ब्रह्मवंशं न० ॥ १५ ॥
इत्युक्त्वा सा च सावित्री प्रणनाम यमं मुने। यमस्तां विष्णुभजनं कर्मपाकमुवाच ह ॥ १६ ॥
इदं यमाष्टकं नित्यं प्रातरुत्थाय यः पठेत्। यमात्तस्य भयं नास्ति सर्वपापात्प्रमुच्यते ॥
महापापी यदि पठेन्नित्यं भक्त्या च नारद। यमः करोति तं शुद्धं कायव्यूहेन निश्चितम् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० तुलस्यु० सावित्रीकृतयमस्तोत्रं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

१ क. यश्च पुण्यं मित्रं न०।

अथैकोनत्रिंशोऽध्यायः ।

---

नारायण उवाच—

यमस्तस्यै विष्णुमन्त्रं दत्त्वा च विधिपूर्वकम् । कर्माशुभविपाकं च तामुवाच रवेः सुत ॥ १ ॥

यम उवाच—

शुभकर्मविपाकं च श्रुतं नानाविधं सति । कर्माशुभविपाकं च कथयामि निशामय ॥ २ ॥
नानाप्रकारं स्वर्गं च याति जीवः सत्कर्मणा । कुकर्मणा च नरकं याति नानाविधं नरः ॥३॥
नरकाणां च कुण्डानि सन्ति नानाविधानि च । नानापुराणभेदेन नामभेदानि तानि च ॥४॥
विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् । भयंकराणि घोराणि हे वत्से कुत्सितानि ॥
षडशीतिश्च कुण्डानि संयमन्यां च सन्ति च । निबोध तेषां नामानि प्रसिद्धानि श्रुतौ सति ॥
वह्निकुण्डं तप्तकुण्डं क्षारकुण्डं भयानकम् । विट्कुण्डं मूत्रकुण्डं च श्लेष्मकुण्डं च दुःसहम् ॥
गरकुण्डं दूषिकाकुण्डं वसाकुण्डं तथैव च । शुक्रकुण्डमसृक्कुण्डमश्रुकुण्डं च कुत्सितम् ॥
कुण्डं गात्रमलानां च कर्णविट्कुण्डमेव च । मज्जाकुण्डं मांसकुण्डं नखकुण्डं च दुस्तरम् ॥
लोम्नां कुण्डं केशकुण्डमस्थिकुण्डं च दुःखदम् । ताम्रकुण्डं लोहकुण्डं प्रतप्तं क्लेशदं महत् ॥
तीक्ष्णकण्टककुण्डं च विषकुण्डं च विघ्नदम् । घर्मकुण्डं तप्तकुण्डं सुराकुण्डं प्रकीर्तितम् ॥
प्रतप्ततैलकुण्डं च दन्तकुण्डं च दुर्वहम् । कृमिकुण्डं पूयकुण्डं सर्पकुण्डं दुरन्तकम् ॥ ११ ॥
मशकुण्डं दंशकुण्डं भीमं गरलकुण्डकम् । कुण्डं च वज्रदंष्ट्राणां वृश्चिकानां च सुव्रते ॥ १२ ॥
शरकुण्डं शूलकुण्डं खड्गकुण्डं च भीषणम् । गोलकुण्डं नक्रकुण्डं काककुण्डं शुचस्पदम् ॥
संचालकुण्डं वाजकुण्डं बन्धकुण्डं सुदुस्तरम् । तप्तपाषाणकुण्डं च तीक्ष्णपाषाणकुण्डकम् ॥
लालाकुण्डं मसीकुण्डं चूर्णकुण्डं सुदारुणम् । चक्रकुण्डं वज्रकुण्डं कूर्मकुण्डं महोल्बणम् ॥
ज्वालाकुण्डं भस्मकुण्डं पूतिकुण्डं च सुन्दरि तप्तसूर्यमसीपत्रं क्षुरधारं सुचीमुखम् ॥ १७ ॥
गोधामुखं नक्रमुखं गजदंशं च गोमुखम् । कुम्भीपाकं कालसूत्रमवटोदमरुंतुदम् ॥ १८ ॥
पांशुभोजं पाशवेष्टं शूलप्रोतं प्रकम्पनम् । उल्कामुखमन्धकूपं वेधनं दण्डताडनम् ॥ १९ ॥
जालबन्धं देहचूर्णं दलनं शोषणंकरम् । शूर्पं ज्वालामुखं जिह्मं धूमान्धं नागवेष्टनम् ॥ २० ॥
कुण्डान्येतानि सावित्रि पापिनां क्लेशदानि च । नियुक्तैः किंकरगणै रक्षितानि च संततम् ॥
दण्डहस्तैः शूलहस्तैः पाशहस्तैर्भयंकरैः । शक्तिहस्तैर्गदाहस्तैर्मदमत्तैश्च दारुणैः ॥ २२ ॥
तमोयुक्तैर्दयाहीनैर्दुर्निवार्यैश्च सर्वतः । तेजस्विभिश्च निःशङ्कैस्ताम्रपिङ्गललोचनैः ॥ २३ ॥

---

१ क. 'दन्धकु' ।

योगयुक्तैः सिद्धयोगैर्नानारूपधरैर्वरैः । आसन्नमृत्युभिर्दृष्टैः पापिभिः सर्वजीविभिः ॥
स्वकर्मनिरतैः शैवैः शाक्तैः सौरैश्च गाणपैः । अदृष्टः पुण्यकृद्भिश्च सिद्धयोगिभिरेव च ॥
स्वधर्मनिरतैर्वाऽपि विरतैर्वा स्वतन्त्रकैः । बलवद्भिश्च निःशङ्कैः स्वप्नदृष्टैश्च वैष्णवैः ॥
एतत्ते कथितं साध्वि कुण्डसंख्यानिरूपणम् येषां निवासो यत्कुण्डे निबोध कथयामि ते॥

इति श्रीब्रह्म० मह० नारदना० प्रकृति० साविन्युपाख्याने यमसावित्रिसं० नरककुण्डसंख्यानं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## अथ त्रिंशोऽध्यायः ।

---

यम उवाच—

हरिसेवारतः शुद्धो योगी सिद्धो व्रती सति । तपस्वी ब्रह्मचारी च न याति नरकं यतिः ॥
कटुवाचा बान्धवांश्च खलत्वेन च यो नरः । दग्धान्करोति बलवान्वह्निकुण्डं प्रयाति स. ॥
गात्रलोमप्रमाणाब्दं तत्र स्थित्वा हुताशने । पशुयोनिमवाप्नोति रौद्रे दग्धस्त्रिजन्मनि ॥
ब्राह्मणं तृषितं तप्तं क्षुधितं गृहमागतम् । न भोजयति यो मूढस्तप्तकुण्डं प्रयाति सः ॥
तत्र लोमप्रमाणाब्दं स्थित्वा तत्र च दुःखितः । तप्तस्थले वह्निकुण्डे पक्षी च सप्तजन्मसु
रविवारार्कसंक्रान्त्याममायां श्राद्धवासरे । वस्त्राणां क्षारसंयोगं करोति यो हि मानवः ॥
स याति क्षारकुण्डं च सूत्रमानाब्दमेव च । स व्रजेद्रजकीं योनिं सप्तजन्मसु भारते ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । यो हरेद्भारते वर्षे विट्कुण्डं च प्रयाति स. ॥
षष्टिवर्षसहस्राणि विड्भोजी तत्र तिष्ठति । षष्टिवर्षसहस्राणि विट्कृमिश्च पुनर्भुवि॥९ ॥
परकीयतडागे च तडागं यः करोति च । उत्सृजेद्दैवदोषेण मूत्रकुण्डं प्रयाति सः ॥१०॥
तद्रेणुमानवर्षं च तद्भोजी तत्र तिष्ठति । भारते गोधिका चैव स भवेत्सप्तजन्मसु ॥११॥
एकाकी मिष्टमश्नाति श्लेष्मकुण्डं प्रयाति सः । पूर्णमब्दशतं चैव तद्भोजी तत्र तिष्ठति ॥
पूर्णमब्दशतं चैव स प्रेतो भारते भवेत् । श्लेष्ममूत्रगरं चैव तद्भोजी तत्र तिष्ठति ॥१३॥
पितरं मातरं चैव गुरुं भार्यां सुतं सुताम् । यो न पुष्णात्यनाथं च गरकुण्डं प्रयाति सः ॥
पूर्णमब्दसहस्रं च तद्भोजी तत्र तिष्ठति । ततो व्रजेद्भूतयोनिं शतवर्षं ततः शुचिः १५
दृष्ट्वाऽतिथिं वक्रचक्षुः करोति यो हि मानवः । पितृदेवास्तस्य जलं न गृह्णन्ति च पापिनः
यानि कानि च पापानि ब्रह्महत्यादिकानि च । इहैव लभते चान्ते दूषिकाकुण्डमाव्रजेत्
पूर्णमब्दशतं चैव तद्भोजी तत्र तिष्ठति । ततो नरो भवेद्भूमौ दरिद्रः सप्तजन्मसु ॥१८॥

---

१ क. स्वात्माद । २ ख. सुरविप्रयोः । ३ ख. पूर्वं भुक्ते ततः शुचिः ।

दत्त्वा द्रव्यं च विप्राय चान्यस्मै दीयते यदि । स तिष्ठति वपाकुण्डे तद्भोजी शतवत्सरम्
ततो भवेत्स चण्डालस्त्रिजन्मनि ततः शुचिः । कृकलासो भवेत्सोऽपि भारते सप्तजन्मसु
ततो भवेन्मानवश्च दरिद्रोऽल्पायुरेव च ॥ २० ॥
पुमांसं कामिनी वाऽपि कामिनीं वा पुमानथ । यः शुक्रं पाययत्येव शुक्रकुण्डं प्रयाति सः
पूर्णमब्दशतं चैव तद्भोजी तत्र तिष्ठति । योनिकृमिः शताब्दं च भवेद्भुवि ततः शुचिः ॥
संताड्य च गुरुं विप्रं रक्तपातं च कारयेत् । स च तिष्ठत्यसृक्कुण्डे तद्भोजी शतवत्सरम् ॥
ततो भवेद्व्याधजन्म सप्तजन्मसु भारते । ततः शुद्धिमवाप्नोति मानवश्च क्रमेण च ॥
अश्रु स्रवन्तं गायन्तं भक्तं दृष्ट्वा च गद्गदम् । श्रीकृष्णगुणसंगीते हसत्येव हि यो नरः ॥
स वसेदश्रुकुण्डे च तद्भोजी शतवत्सरम् । ततो भवेत्स चण्डालो त्रिजन्मनि ततः शुचिः
करोति खलतां शश्वदशुद्धहृदयो नरः । कुण्डं गात्रमलानां च स च याति दशाब्दकम् ॥
ततः स गार्दभीं योनिमवाप्नोति त्रिजन्मनि । त्रिजन्मनि च शार्गालीं ततः शुद्धो भवे-
द्ध्रुवम् ॥ २८ ॥
बधिरं यो सहत्येव निन्दत्येव हि मानवः । स वसेत्कर्णविट्कुण्डे तद्भोजी शतवत्सरम् ॥
ततो भवेत्स बधिरो दरिद्रः सप्तजन्मसु । सप्तजन्मस्वङ्गहीनस्ततः शुद्धिं लभेद्ध्रुवम् ॥
लोभात्स्वपालनार्थाय जीविनं हन्ति यो नरः । मज्जाकुण्डे वसेत्सोऽपि तद्भोजी लक्षवर्षकम्
ततो भवेत्स शशको मीनश्च सप्तजन्मसु । एणादयश्च कर्मभ्यस्ततः शुद्धिं लभेद्ध्रुवम् ॥
स्वकन्यापालनं कृत्वा विक्रीणाति हि यो नरः । अर्थलोभान्महामूढो मांसकुण्डं प्रयाति सः
कन्यालोमप्रमाणाब्दं तद्भोजी तत्र तिष्ठति । तं च कुण्डे प्रहारं च करोति यमकिंकरः ॥
मांसभारं मूर्ध्नि कृत्वा रक्तधारां लिहेत्क्षुधा । ततो हि भारते पापी कन्याविट्सु कृमिर्भवेत्
षष्टिवर्षसहस्राणि व्याधश्च सप्तजन्मसु । त्रिजन्मनि वराहश्च कुक्कुरः सप्तजन्मसु ॥ ३६ ॥
सप्तजन्मसु मण्डूको जलौकाः सप्तजन्मसु । सप्तजन्मसु काकश्च ततः शुद्धिं लभेद्ध्रुवम् ॥
व्रतानामुपवासानां श्राद्धादीनां च संयमे । न करोति क्षौरकर्म सोऽशुचिः सर्वकर्मसु ॥
स च तिष्ठति कुण्डेषु नखादीनां च सुन्दरि । तदेव दिनमानाब्दं तद्भोजी दण्डताडित ॥
सकेशं पार्थिवं लिङ्गं यो वाऽर्चयति भारते । स तिष्ठति केशकुण्डे मृत्रेणुमानवर्षकम् ॥
तदन्ते यावनीं योनिं प्रयाति हरकोपतः । शताब्दाच्छुद्धिमाप्नोति स्वकुलं लभते ध्रुवम् ॥
पितॄणां यो विष्णुपदे पिण्डं नैव ददाति च । स तिष्ठत्यस्थिकुण्डे च स्वलोमाब्दं महोल्बणे
ततः स्वयोनिं संप्राप्य खञ्जः सप्तसु जन्मसु । भवेन्महादरिद्रश्च ततः शुद्धो हि दण्डतः ॥

---

१ क. शताब्दं । २ क 'सेत्तीर्थवि' । ३ क. दानवीं । ४ क. राजत्वं लभते कली ।

य सेवते महामूढो गुर्विणीं च स्वकामिनीम् । प्रतप्तताम्रकुण्डे च शतवर्षं स तिष्ठति ॥
अवीरान्नं च यो भुङ्क्ते ऋतुस्नातान्नमेव च । लौहकुण्डे शताब्दं च स च तिष्ठति तप्तके ॥
स व्रजेद्राजकीं योनिं कर्मकारीं च सप्तसु । महाव्रणी दरिद्रश्च ततः शुद्धो भवेन्नरः ॥
यो हि घर्माक्तहस्तेन देवद्रव्यमुपस्पृशेत् । शतवर्षप्रमाणं च घर्मकुण्डे स तिष्ठति॥ ४७ ॥
य. शूद्रेणाभ्यनुज्ञातो भुङ्क्ते शूद्रान्नमेव च । स च तप्तसुराकुण्डे शताब्दं तिष्ठति द्विजः
ततो भवेच्छूद्रयाजी ब्राह्मणः सप्तजन्मसु । शूद्रश्राद्धान्नभोजी च ततः शुद्धो भवेद्ध्रुवम् ॥
वाग्दुष्टा कटुवाचा या ताडयेत्स्वामिनं सदा । तीक्ष्णकण्टककुण्डे सा तद्भोजी तत्र तिष्ठति
ताडित यमदूतेन दण्डेन च चतुर्युगम् । तत उच्चैःश्रवाः सप्तजन्मस्वेव ततः शुचिः ॥
विषेण जीविनं हन्ति निर्दयो यो हि पामरः । विषकुण्डे च तद्भोजी सहस्राब्दं च तिष्ठति॥
ततो भवेन्नृघाती च व्रणी स्यात्सप्तजन्मसु । सप्तजन्मसु कुष्ठी च ततः शुद्धो भवेद्ध्रुवम्॥
दण्डेन ताडयेद्यो हि वृषं च वृषवाहकः । भृत्यद्वारा स्वतन्त्रो वा पुण्यक्षेत्रे च भारते ॥
प्रतप्तनैलकुण्डे च स तिष्ठति चतुर्युगम् । गवां लोमप्रमाणाब्दं वृषो भवति तत्परम् ॥
दंष्ट्रेन हन्ति जीवं यो लौहेन बाडिशेन वा । दंष्ट्रकुण्डे वसेत्सोऽपि वर्षाणामयुतं सति ॥
ततः स्वयोनिं संप्राप्य चोदरव्याधिसंयुतः । क्लिष्टेन जन्मनैकेन ततः शुद्धो भवेन्नरः ॥
यो भुङ्क्ते च वृथा मांसं मत्स्यभोजी च ब्राह्मणः । हरेरनैवेद्यभोजी कृमिकुण्डं प्रयाति सः
स्वलोममानवर्षं च तद्भोजी तत्र तिष्ठति । ततो भवेन्म्लेच्छजातिस्त्रिजन्मनि ततः शुचिः ॥
ब्राह्मणः शूद्रयाजी यः शूद्रश्राद्धान्नभोजकः । शूद्राणां शवदाही च पूयकुण्डं व्रजेद्ध्रुवम्
यावल्लोमप्रमाणाब्दं यजमानस्य सुव्रते । ताडितो यमदूतेन तद्भोजी तत्र तिष्ठति ॥६१॥
ततो भारतमागत्य स शूद्रः सप्तजन्मसु । महाशूली दरिद्रश्च ततः शुद्धः पुनर्द्विजः ॥
लघुं क्रूरं महान्तं वा सर्पं हन्ति च यो नरः । स्वात्मलोमप्रमाणाब्दं सर्पकुण्डं प्रयाति सः ॥
सर्पेण भक्षितः सोऽपि यमदूतेन ताडितः । वसेच्च सर्पविड्भोजी ततः सर्पो भवेद्ध्रुवम् ॥
ततो भवेन्मानवश्चाप्यल्पायुर्दद्रुसंयुतः । महाक्लेशेन तन्मृत्युः सर्पेण भक्षणं ध्रुवम् ॥
विधिं प्रकल्प्य जीवांश्च क्षुद्रजन्तूंश्च हन्ति यः । स दंशमशके कुण्डे जन्ममानदिनाब्दकम् ॥
दिवानिशं भक्षितस्तैरनाहारश्च शब्दकृत् । बद्धहस्तपदादिश्च यमदूतेन ताडितः ॥६७॥
ततो भवेत्क्षुद्रजन्तुर्जातिर्वै यावती स्मृता । ततो भवेन्मानवश्च सोऽङ्गहीनस्ततः शुचिः ॥
यो मूढो मधु गृह्णाति हत्वा च मधुमक्षिकाः । स एव गरले कुण्डे जीवमानदिनाब्दकम्

---

१ क. मानव. । २ ख. कुन्ते' । ३ ख. कुन्त' । ४ क. कृष्णपादमस्तकस्थं स' । ५ क. सर्पलो० । ६ क. विधिप्रदत्तजी० ।

भक्षितो गरलैर्दग्धो यमदूतेन ताडितः । ततो हि मक्षिकाजातिस्ततः शुद्धो भवेन्नरः ॥
दण्डं करोत्यदण्डचे च विप्रे दण्डं करोति च । स कुण्डं वज्रदंष्ट्राणां कीटानां वै प्रयाति च
तल्लोममानवर्षं च तत्र तिष्ठत्यहर्निशम् । शब्दकृद्भक्षितस्तैश्च ततः शुद्धो भवेन्नरः ॥
अर्थलोभेन यो भूपः प्रजादण्डं करोति च । वृश्चिकानां च कुण्डेषु तल्लोमाब्दं वसेद्ध्रुवम्
ततो वृश्चिकजातिश्च सप्तजन्मसु जायते । ततो नरश्चाङ्गहीनो व्याधियुक्तो भवेद्ध्रुवम् ॥
यः खादति गुरुं स्वं च धूर्तो धूर्ततया खलः । स कुण्डे वज्रदंष्ट्राणां वसेन्मन्वन्तरावधि
ब्राह्मणशस्त्रधारी यो ह्यन्येषां धावको भवेत् । संध्याहीनश्च मूढश्च हरिभक्तिविहीनक ॥
स तिष्ठति स्वलोमाब्दं कुण्डादिषु शरादिषु । विद्धः शरादिभिः शश्वत्ततः शुद्धो भवेन्नरः
कारागारे सान्धकारे निबध्नाति प्रजाश्च यः । प्रमत्तः स्वल्पदोषेण गोलकुण्डं प्रयाति सः
तत्कुण्डं तप्ततोयाक्तं सान्धकारं भयंकरम् । तीक्ष्णदंष्ट्रैश्च कीटैश्च संयुक्तं गोलकुण्डकम् ॥
कीटैर्विद्धो वसेत्तत्र प्रजालोमाब्दमेव च । ततो भवेन्नीचभृत्यस्ततः शुद्धो नरो भुवि ॥
सरोवरादुत्थितांश्च नक्रादीन्हन्ति यः सति । नक्रकण्टकमानाब्दं नक्रकुण्डं प्रयाति सः ॥
ततो नक्रादिजातिश्च भवेन्नद्यादिषु ध्रुवम् । ततः सद्यो विशुद्धो हि दण्डेनैव नरः पुनः ॥
वक्षःश्रोणीस्तनास्यं च यः पश्यति परस्त्रियाः । कामेन कामुको यो हि पुण्यक्षेत्रे च भारते ॥
स वसेत्काककुण्डे च काकैश्च क्षुण्णलोचनः । ततः स्वलोममानाब्दं ततश्चान्धस्त्रिजन्मनि
स्वर्णस्तेयी च यो मूढो भारते सुरविप्रयोः । स च संचानकुण्डं च स्वलोमाब्दं वसेद्ध्रुवम्
ताडितो यमदूतेन संचानैः क्षुण्णलोचनः । ततो भोजी च तत्रैव ततश्चान्धस्त्रिजन्मनि ॥
सप्तजन्मदरिद्रश्च महाक्रूरश्च पातकी । भारते स्वर्णकारश्च स च स्वर्णवणिक्ततः ॥८४॥
यो भारते ताम्रचौरो लौहचौरश्च सुन्दरि । स स्वलोमप्रमाणाब्दं वज्रकुण्डं प्रयाति वै ॥
तत्रैव वज्रविड्भोजी वज्रैश्च क्षुण्णलोचनः । ताडितो यमदूतेन ततः शुद्धो भवेन्नरः ॥
भारते देवचौरश्च देवद्रव्यादिहारकः । सुदुष्करे वज्रकुण्डे स्वलोमाब्दं वसेद्ध्रुवम् ॥
देहदग्धो हि तद्वज्रैरनाहारश्च शब्दकृत् । ताडितो यमदूतेन ततः शुद्धो भवेन्नरः ॥
रौप्यगव्यांशुकानां च यश्चौरः सुरविप्रयोः । तप्तपाषाणकुण्डे च स्वलोमाब्दं वसेद्ध्रुवम्
त्रिजन्मनि बकः सोऽपि श्वेतहंसस्त्रिजन्मनि । जन्मैकं शङ्खचिल्लश्च ततोऽन्ये श्वेतपक्षिणः
ततो रक्तविकारी च शूली वै मानवो भवेत् । सप्तजन्मसु चाल्पायुस्ततः शुद्धो भवेन्नरः
रीत्यश्मकांस्यादिपात्रं च यो हरेत्सुरविप्रयोः । तीक्ष्णपाषाणकुण्डे च स्वलोमाब्दं वसेद्ध्रुवम्
स भवेदश्वजातिश्च भारते सप्तजन्मसु । ततोऽधिकाङ्गयुक्तश्च पादरोगी ततः शुचिः ॥

१ क. 'वेत्रजाजातिस्त'।

पुंश्चल्यन्नं च यो भुङ्क्ते पुंश्चलीजारजीवन. । स्वलोममानवर्षं च लालाकुण्डे वसेद्ध्रुवम्
ताडितो यमदूतेन तद्भोजी तत्र तिष्ठति । ततश्चक्षुःशूलरोगी ततः शुद्धः क्रमेण सः ॥
म्लेच्छसेवी मषीजीवी यो विप्रो भारते भुवि । स च तप्तमषीकुण्डे स्वलोमाब्दं वसेद्ध्रुवम्
ताडितो यमदूतेन तद्भोजी तत्र तिष्ठति । ततस्त्रिजन्मनि भवेत्कृष्णवर्णः पशुः सति ॥
त्रिजन्मनि भवेच्छागः कृष्णसर्पस्त्रिजन्मनि । ततश्च तालवृक्षश्च ततः शुद्धो भवेन्नरः ॥
धन्यादिपरस्थं ताम्बूलं यो हरेत्सुरविप्रयोः । आसनं च तथा तल्पं चूर्णकुण्डं प्रयाति सः
शताब्दं तत्र निवसेद्यमदूतेन ताडितः । ततो भवेन्मेषजातिः कुक्कुटश्च त्रिजन्मनि ॥
ततो भवेन्मानवश्च कासश्वासयुतो भुवि । वंशहीनो दरिद्रश्चाप्यल्पायुश्च ततः शुचिः
चक्रं करोति विप्राणां हृत्वा द्रव्यं च यो नरः । स वसेच्चक्रकुण्डे च शताब्दं दण्डताडितः
ततो भवेन्मानवश्च तैलकारस्त्रिजन्मनि । व्याधियुक्तो भवेद्रोगी वंशहीनस्ततः शुचिः ॥
बान्धवेषु च विप्रेषु कुरुते वक्रतां नरः । प्रयाति वक्रकुण्डं च वसेत्तत्र युगं सति ॥
ततो भवेत्स वक्राङ्गो हीनाङ्गः सप्तजन्मसु । दरिद्रो वंशहीनश्च भार्याहीनस्ततः शुचिः
शयने कूर्ममांसं च ब्राह्मणो यो हि भक्षति । कूर्मकुण्डे वसेत्सोऽपि शताब्दं कूर्मभक्षितः
ततो भवेत्कूर्मजन्म त्रिजन्मनि च सूकरः । त्रिजन्मनि बिडालश्च मयूरश्च त्रिजन्मनि ॥
घृततैलादिकं चैव यो हरेत्सुरविप्रयोः । ज्वालाकुण्डं स वै याति भस्मकुण्डं च पातकी
तत्र स्थित्वा शताब्दं च स भवेत्तैलपायिकः । सप्तजन्मसु मत्स्यः स्यान्मूषकश्च ततः शुचिः
सुगन्धि तैलं धात्रीं च गन्धद्रव्यं तथैव वा । भारते पुण्यवर्षे च यो हरेत्सुरविप्रयोः ॥
वसेद्दुर्गन्धकुण्डे च दुर्गन्धं च लभेत्सदा । स्वलोममानवर्षं च ततो दुर्गन्धिको भवेत् ॥
दुर्गन्धिकः सप्तजन्मा मृगनाभिस्त्रिजन्मनि । सप्तजन्म सुगन्धिश्च ततो वै मानवो भवेत् ॥
बलेनैव खलत्वेन हिंसारूपेण वा सति । बली च यो हरेद्भूमिं भारते परपैतृकीम् ॥
स वसेत्तप्तशूले[1] च भवेत्तप्तो दिवानिशम्[2] । तप्ततैले यथा जीवो दग्धो भ्रमति संततम्
भस्मसान्न भवत्येव भोगदेहो न नश्यति । सप्तमन्वन्तरं पापी संतप्तस्तत्र तिष्ठति ॥ ११७ ॥
शब्दं करोत्यनाहारो यमदूतेन ताडितः । षष्टिवर्षसहस्राणि विट्कृमिर्भारते ततः ॥
ततो भवेद्भूमिहीनो दरिद्रश्च ततः शुचिः । ततः स्वयोनिं संप्राप्य शुभकर्मा[3] भवेत्पुनः
छिनत्ति जीविनः खड्गैर्दयाहीनः सुदारुणः । नरघाती हन्ति नरमर्थलोभेन भारते ॥ ११८ ॥
असिपत्रे च स वसेद्यावदिन्द्राश्चतुर्दश । तेषु चेद्ब्राह्मणान्हन्ति शतमन्वन्तरं तदा ॥
छिन्नाङ्गश्च भवेत्पापी खड्गधारेण संततम् । अनाहारः शब्दकृच्च यमदूतेन ताडितः ॥

---

१ ख. वज्रकु° । २ क. स वसेद्दग्धकुण्डे च भवेद्दग्धो दिवानिशम् । ३ क. °कर्म चरेत्पु° ।

चण्डालः शतजन्मानि भारते सूकरो भवेत् । कुक्कुरः शतजन्मानि सृगालः सप्तजन्मसु
व्याघ्रश्च सप्तजन्मानि वृकश्चैव त्रिजन्मनि । सप्तजन्मसु गण्डी स्यान्महिषश्च त्रिजन्मनि
ग्रामं वा नगरं वाऽपि दाहनं यः करोति च । क्षुरधारे वसेत्सोऽपि छिन्नाङ्गस्त्रियुगं सति
ततः प्रेतो भवेत्सद्यो वह्निवक्त्रो भ्रमेन्महीम् । सप्तजन्मामेध्यभोजी खद्योतः सप्तजन्मसु
ततो भवेन्महाशूली मानवः सप्तजन्मसु । सप्तजन्म गलत्कुष्ठी ततः शुद्धो भवेन्नरः ॥
परकर्णोपजापेन परनिन्दां करोति यः । परदोषे महातोषी देवब्राह्मणनिन्दकः॥१२१॥
सूचीमुखे स च वसेत्सूचीविद्धो युगत्रयम् । ततो भवेद्वृश्चिकश्च सर्पः स्यात्सप्तजन्मसु
वज्रकीटः सप्तजन्म भस्मकीटस्ततः परम् । ततो भवेन्मानवश्च महाव्याधिस्ततः शुचिः
गृहिणां च गृहं भित्त्वा वस्तुस्तेयं करोति यः । गाश्च च्छागांश्च मेषांश्च याति गोभा-
मुखं च सः । ताडितो यमदूतेन वसेत्तत्र युगत्रयम् । ततो भवेत्सप्तजन्म गोजातिर्व्याधिसंयुतः
त्रिजन्मनि मेषजातिश्छागजातिस्त्रिजन्मनि । ततो भवेन्मानवश्च नित्यरोगी दरिद्रकः ॥
भार्याहीनो बन्धुहीनः संतापी च ततः शुचिः । सामान्यद्रव्यचौरश्च याति नक्रमुखं युगम्॥
ततो भवेन्मानवश्च महारोगी ततः शुचिः । हन्ति गाश्च गजांश्चैव तुरगांश्च नरांस्तथा ॥
स याति गजदंशं च महापापी युगत्रयम् । ताडितो यमदूतेन गजदन्तेन संततम् ॥
स भवेद्गजजातिश्च तुरगश्च त्रिजन्मनि । गोजातिर्म्लेच्छजातिश्च ततः शुद्धो भवेन्नरः॥
जलं पिबन्तीं तृषितां गां वारयति यो नरः । तच्छुश्रूषाविहीनश्च गोमुखं याति मानवः ॥
नरकं गोमुखाकारं कृमितप्तोदकान्वितम् । तत्र तिष्ठति संतप्तो यावन्मन्वन्तरावधि ॥
ततो नरोऽपि गोहीनो महारोगी दरिद्रकः । सप्तजन्मान्यन्त्यजातिस्ततः शुद्धो भवेन्नरः ॥
गोहत्यां ब्रह्महत्यां च यः करोत्यतिदेशिकीम् । यो हि गच्छेदगम्यां च संध्याहीनोऽप्यदी-
क्षितः ॥ ११८ ॥
प्रतिग्राही च तीर्थेषु ग्रामयाजी च देवलः । शूद्राणां सूपकारश्च प्रमत्तो वृषलीपतिः ॥११९॥
गोहत्यां ब्रह्महत्यां च स्त्रीहत्यां च करोति यः । मित्रहत्यां भ्रूणहत्यां महापापी च भारते॥
कुम्भीपाके स च वसेद्यावदिन्द्राश्चतुर्दश । ताडितो यमदूतेन घूर्णमानश्च संततम् ॥
क्षणं पतति वह्नौ च क्षणं पतति कण्टके । क्षणं च तप्ततैलेषु तप्ततोयेषु च क्षणम् ॥
क्षणं च तप्तपाषाणे तप्तलोहे क्षणं ततः । गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः॥
काकश्च सप्तजन्मानि सर्पः स्यात्सप्तजन्मसु । षष्टिवर्षसहस्राणि ततो वै विट्कृमिर्भवेत् ॥

---

१ क. संचानः शतवर्षाणि शतजन्मानि सूकरः कुक्कुरः सप्तजन्मानि सृ° । २ क. 'रो-
ग्यंङ्गहीं' । ३ ख. 'चूर्णमा' ।

ततो भवेत्स वृषलो गलत्कुष्ठी दरिद्रकः। यक्ष्मग्रस्तो 'वंशहीनो भार्याहीनस्ततः शुचिः ॥

सावित्र्युवाच—

ब्रह्महत्या च गोहत्या किंविधा वाऽऽतिदेशिकी। का वा नृणामगम्या वा को वा संध्याविहीनकः ॥ १४६ ॥

अदीक्षितः पुमान्को वा को वा तीर्थे प्रतिग्रही। द्विजः को वा ग्रामयाजी को वा विप्रश्च देवलः

शूद्राणां सूपकारः कः प्रमत्तो वृषलीपतिः। एतेषां लक्षणं सर्वं वद वेदविदां वर ॥१४९॥

यम उवाच—

श्रीकृष्णे च तदर्चायां मृन्मय्यां प्रकृतौ तथा। शिवे च शिवलिङ्गे वा सूर्ये सूर्यमणौ तथा ॥

गणेशे वा तदर्चायामेवं सर्वत्र सुन्दरि। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः ॥ १९० ॥

स्वगुरौ स्वेष्टदेवे वा जन्मदातरि मातरि। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः ॥ १९१ ॥

वैष्णवेष्वन्यभक्तेषु ब्राह्मणेष्वितरेषु च। करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ॥

यो मूढो विष्णुनैवेद्ये चान्यनैवद्यके तथा। हरेः पादोदकेष्वन्यदेवपादोदके तथा ॥

करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ॥ १९३ ॥

सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे। सर्वाद्ये सर्वदेवानां सेव्ये सर्वान्तरात्मनि ॥ १९४ ॥

मायथाऽनेकरूपे वाऽप्येक एव हि निर्गुणे। करोत्यन्येन समतां ब्रह्महत्यां लभेत्तु सः ॥

पितृदेवार्चनं पौर्वापरं वेदविनिर्मितम्। यः करोति निषेधं च ब्रह्महत्यां लभेत्तु सः ॥

ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकं तथा। पवित्राणां पवित्रं च ब्रह्महत्यां लभन्ति ते ॥

शिवं शिवस्वरूपं च कृष्णप्राणाधिकं प्रियम्। पवित्राणां पवित्रं च ज्ञानानन्दं सनातनम् ॥

प्रधानं वैष्णवानां च देवानां सेव्यमीश्वरम्। ये नार्चयन्ति निन्दन्ति ब्रह्महत्यां लभन्ति ते ॥

ये विष्णुमायां निन्दन्ति विष्णुभक्तिप्रदां सतीम्। सर्वशक्तिस्वरूपां च प्रकृतिं सर्वमातरम् ॥

सर्वदेवीस्वरूपां च सर्वाद्यां सर्ववन्दिताम्। सर्वकारणरूपां च ब्रह्महत्यां लभन्ति ते ॥

कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम्। शिवरात्रिं तथा चैकादशीं वारं रवेस्तथा ॥

पञ्च पर्वाणि पुण्यानि ये न कुर्वन्ति मानवाः। लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः ॥

अम्बुवीच्यांबुखनने जले शौचादिकं च ये। कुर्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते ॥

गुरुं च मातरं तातं साध्वीं भार्यां सुतं सुताम्। अनाथान्यो न पुष्णाति ब्रह्महत्यां लभेत्तु सः

विवाहो यस्य न भवेन्न पश्यति सुतं च यः। हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत्तु सः

---

१ क. बन्धुही°।

हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत् । पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत्तु सः ॥
आहारं कुर्वतीं गां च पिबन्तीं यो निवारयेत् । याति गोविप्रयोर्मध्ये गोहत्यां च लभेत्तु सः
दण्डैर्गास्ताडयेन्मूढो यो विप्रो वृषवाहकः । दिने दिने गवां हत्यां लभते नात्र संशयः ॥
ददाति गोभ्य उच्छिष्टं याजयेद्वृषवाहकम् । भोजयेद्वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम्
वृषलीपतिं याजयेद्यो भुङ्क्तेऽन्नं तस्य यो नरः । गोहत्याशतकं सोऽपि लभते नात्र संशयः
पादं ददाति वह्नौ च गाश्च पादेन ताडयेत् । गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमाप्नुयात्
यो भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च । सूर्योदये च द्विर्भोजी स गोहत्यां लभेद्ध्रुवम्
अवीरान्नं च यो भुङ्क्ते योनिजीवी च वै द्विजः । यस्त्रिसंध्याविहीनश्च स गोहत्यां लभे-
द्ध्रुवम् ॥ १७४ ॥
पितॄंश्च पर्वकाले च तिथिकाले च देवताम् । न सेवतेऽतिथिं यो हि गोहत्यां स लभेद्ध्रुवम् ॥
स्वभर्तरि च कृष्णे च भेदबुद्धिं करोति या । कटूक्त्या ताडयेत्कान्तं सा गोहत्यां लभेद्ध्रुवम्
गोमार्गखननं कृत्वा वपते सस्यमेव च । तडागे वा तदूर्ध्वे वा स गोहत्यां लभेद्ध्रुवम् ॥
प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमम् । अर्थलोभादथाज्ञानात्स गोहत्यां लभेद्ध्रुवम् ॥
राजके दैवके यत्नाद्गोस्वामी गां न पालयेत् । दुःखं ददाति यो मूढो गोहत्यां स लभेद्ध्रुवम्
प्राणिनं लङ्घयेद्यो हि देवार्चायां रतं जलम् । नैवेद्यं पुष्पमन्नं च स गोहत्यां लभेद्ध्रुवम् ॥
शश्वन्नास्तीति वादी यो मिथ्यावादी प्रतारकः । देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम् ॥
देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति । संभ्रमान्न नमेद्यो हि स गोहत्यां लभेद्ध्रुवम् ॥
न ददात्याशिषं कोपात्प्रणताय च यो द्विजः । विद्यार्थिने च विद्यां वै स गोहत्यां लभेद्ध्रुवम्
गोहत्या ब्रह्महत्या च कथिता चाऽऽतिदेशिकी । यथा श्रुतं सूर्यवक्त्रात्किं भूयः श्रोतुमिच्छसि

सावित्र्युवाच—

वास्तवे चाऽऽतिदेशे च संबन्धे पापपुण्ययोः । न्यूनाधिके च को भेदस्तन्मां व्याख्यातुमर्हसि

यम उवाच—

कुत्रापि वास्तवः श्रेष्ठो न्यूनोऽतिदेशिकः सदा । कुत्राऽऽतिदेशिकः श्रेष्ठो वास्तवो न्यून एव च
कुत्र वा समता साध्वि तयोर्वेदप्रमाणतः । करोति तत्र नाऽऽस्थां यो गुरुहत्यां लभेत्तु सः ॥
पुग परिचिते विप्रे विद्यामन्त्रप्रदातरि । गुरौ पितृत्वमारोपाद्वस्तुतः श्रेष्ठ उच्यते ॥ १८८ ॥
पितुः शतगुणा माता मातुः शतगुणस्तथा । विद्यामन्त्रप्रदाता च गुरुः पूज्यः श्रुतेर्मतः ॥
गुरुतो गुरुपत्नी च गौरवे च गरीयसी । यथेष्टदेवपत्नी च पूज्या चाभीष्टदेवता ॥ १९० ॥
विप्रः शिवसमो यश्च विष्णुतुल्यपराक्रमः । राजाऽऽतिदेशिकाच्छ्रेष्ठो वास्तवो गुणलक्षतः

सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः ग्रहणे सूर्यशशिनोश्चात्रैव समता तयोः ॥
आतिदेशिकहत्याया वास्तवश्च चतुर्गुणः । संमतः सर्ववेदानामित्याह कमलोद्भवः ॥
आतिदेशिकहत्याया भेदश्च कथितः सति । या याऽगम्या नृणामेव निबोध कथयामि ते ॥
स्वस्त्री गम्या च सर्वेषामिति वेदे निरूपिता । अगम्या च तदन्या या चेति वेदविदो विदुः॥
सामान्यं कथितं सर्वं विशेषं शृणु सुन्दरि । अत्यगम्याश्च या या वै निबोध कथयामि ते ॥
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी । अत्यगम्याऽतिनिन्द्या च लोके वेदे पतिव्रते
शूद्रश्चेद्ब्राह्मणीं गच्छेद्ब्रह्महत्याशतं लभेत् । तत्समं ब्राह्मणी चापि कुम्भीपाकं व्रजेद्ध्रुवम्
यदि शूद्रां व्रजेद्विप्रो वृषलीपतिरेव सः । स भ्रष्टो विप्रजातेश्च चण्डालात्सोऽधमः स्मृतः
विष्ठासमश्च तत्पिण्डो मूत्रतुल्यं च तर्पणम् । तत्पितॄणां सुराणां च पूजने तत्समं सति ॥
कोटिजन्मार्जितं पुण्यं संध्यार्चातपसाऽर्जितम् द्विजस्य वृषलीभोगान्नश्यत्येव न संशयः ॥
ब्राह्मणश्च सुरापी च विड्भोजी वृषलीपतिः । हरिवासरभोजी च कुम्भीपाकं व्रजेद्ध्रुवम् ॥
गुरुपत्नीं राजपत्नीं सपत्नीं मातरं प्रसूम् । सुतां पुत्रवधूं श्वश्रूं सगर्भां भगिनीं सति ॥
सोदरभ्रातृभार्यां च मातुलानीं पितृप्रसूम् । मातुः प्रसूं तत्स्वसारं गर्भिणीं भ्रातृकन्यकाम् ॥
शिष्यां च शिष्यपत्नीं च भागिनेयस्य कामिनीम् । भ्रातुः पुत्रप्रियां चैवाप्यगम्यामाह पद्मजः
एतास्वेकामनेकां वा यो व्रजेन्मानवोऽधमः । स मातृगामी वेदेषु ब्रह्महत्याशतं लभेत् ॥
अकर्मार्होऽपि सोऽस्पृश्यो लोके वेदेऽतिनिन्दितः । स याति कुम्भीपाकं च महापापी सुदु-
स्तरम् ॥ २०७ ॥
करोत्यशुद्धां संध्यां च संध्यां वा न करोति यः । त्रिःसंध्यां वर्जयेद्यो वा संध्याहीनश्च स द्विजः
वैष्णवं च तथा शैवं शाक्तं सौरं च गाणपम् । योऽहंकाराञ्च गृह्णाति मन्त्रं सोऽदीक्षितः स्मृतः
प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । तत्र नारायणः स्वामी गङ्गागर्भान्तरे वरे॥ २१०॥
तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । वाराणस्यां बदर्यां च गङ्गासागरसंगमे ॥ २११ ॥
पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले । हरिद्वारे च केदारे सोमे बदरिकाश्रमे ॥२१२॥
सरस्वतीनदीतीरे पुण्ये वृन्दावने वने । गोदावर्यां च कौशिक्यां त्रिवेण्यां च हिमालये ॥
एष्वन्यत्र च यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च ॥
शूद्रातिरिक्तयाजी यो ग्रामयाजी च कीर्तितः । तथा देवोपजीवी यो देवलः परिकीर्तितः॥
शूद्रपाकोपजीवी यः सूपकार इति स्मृतः । संध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ॥
उक्तं पूर्वप्रकरणे लक्षणं वृषलीपतेः । एते महापातकिनः कुम्भीपाकं प्रयान्ति ते॥२१७॥
कुण्डान्यन्यानि ते यानि निबोध कथयामि ते ॥ २१८ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सावित्र्युपाख्यानयमसावित्रीसं० कर्मविपाके पापि-
नरकनिरूपणं शिवशास्त्रीयं ब्रह्महत्यादिपदार्थपरिभाषानिरूपणं नाम त्रिंशोऽध्यायः ॥

अथैकत्रिंशोऽध्यायः ।

यम उवाच—

हरिसेवां विना साध्वि न लभेत्कर्मखण्डनम् । शुभकर्म स्वर्गबीजं नरकं च कुकर्मतः ॥ १ ॥
पुंश्चल्यन्नं च यो भुङ्क्ते वेश्यान्नं च पतिव्रते । तां व्रजेत्तु द्विजो यो हि कालसूत्रं प्रयाति सः
शतवर्षं कालसूत्रे स्थित्वा शूद्रो भवेद्ध्रुवम् । तत्र जन्मनि रोगी च ततः शुद्धो भवेद्द्विजः
पतिव्रता चैकपत्नी द्वितीये कुलटा स्मृता । तृतीये धर्षिणी ज्ञेया चतुर्थे पुंश्चली स्मृता ॥
वेश्या च पञ्चमे षष्ठे युग्मी च सप्तमेऽष्टमे । तत ऊर्ध्वं महावेश्या साऽस्पृश्या सर्वजातिषु ॥
यो द्विजः कुलटां गच्छेद्धर्षिणीं पुंश्चलीमपि । वेश्यां युग्मीं महावेश्यामवटोदं प्रयाति सः
शताब्दं कुलटागामी धृष्टागामी चतुर्गुणम् । षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम्
युग्मीगामी दशगुणं वसेत्तत्र न संशयः । महावेश्याकामुकश्च ततः शतगुणं वसेत् । ८ ॥
तदा हि सर्वगामी चेत्येवमाह पितामहः । तत्रैव यातनां भुङ्क्ते यमदूतेन ताडितः ॥ ९ ॥
तित्तिरिः कुलटागामी धृष्टागामी च वायसः । कोकिलः पुंश्चलीगामी वेश्यागामी वृकस्तथा
युग्मीगामी सूकरश्च सप्तजन्मसु भारते । महावेश्याकामुकश्च श्मशाने शाल्मलिस्तरुः ॥
यो भुङ्क्ते ज्ञानहीनश्च ग्रहणे चन्द्रसूर्ययोः । अरुंतुदं स यात्येव चन्द्रमानाब्दमेव च ॥
ततो भवेन्मानवश्चाप्युदरव्याधिसंयुतः । गुल्मयुक्तश्च काणश्च दन्तहीनस्ततः शुचिः ॥
वाक्प्रदत्तां हि कन्यां च यश्चान्यस्मै ददाति च । स वसेत्पांशुभोगे च तद्भोजी च शताब्दकम्
दत्तापहारी यः साध्वि पाशवेष्टे शताब्दकम् । निवसेच्छरशय्यायां यमदूतेन ताडितः ॥
न पूजयेद्यो हि भक्त्या शिवलिङ्गं च पार्थिवम् । स याति शूलिनः कोपाच्छूलप्रोतं सुदारुणम्
स्थित्वा शताब्दं तत्रैव श्वापदः सप्तजन्मसु । ततो भवेद्देवलश्च सप्तजन्मस्वतः शुचिः ॥
करोति दण्डं यो विप्रे यद्भयात्कम्पते द्विजः । प्रकम्पने वसेत्सोऽपि विप्रलोमाब्दमेव च
प्रकोपवदना कोपात्स्वामिनं या च पश्यति । कटूक्तिं तं च वदति याति चोल्कामुखं च सा
उल्कां ददाति वक्त्रे च सततं यमकिंकरः । दण्डेन ताडयेन्मूर्ध्नि तल्लोमाब्दप्रमाणकम् ॥
ततो भवेन्मानवी च विधवा सप्तजन्मसु । भुक्त्वा दुःखं च वैधव्यं व्याधियुक्ता ततः शुचिः

---

१ एकः पतिर्यस्याः सेत्यर्थः । २ द्वितीये पत्यौ सतीत्यर्थः । ३ क. युग्मी क. शुकुण्डे च ।

या ब्राह्मणी शूद्रभोग्या साऽन्धकूपं प्रयाति च । तप्तशौचोदके ध्वान्ते तदाहारा दिवानिशम्
निवसेदतिसंतप्ता यमदूतेन ताडिता । शौचोदके निमग्ना च यावदिन्द्राश्चतुर्दश । २६ ।
काकी जन्मसहस्राणि शतजन्मानि सूकरी । कुक्कुटी शतजन्मानि शृगाली सप्तजन्मसु ॥
पारावती सप्तजनौ वानरी सप्तजन्मसु । ततो भवेत्सा चण्डाली सर्वभोग्या च भारते ॥
ततो भवेच्च रजकी यक्ष्मग्रस्ता च पुंश्चली । ततः कुष्ठयुता तैलकारी शुद्धा भवेत्ततः ॥
वेश्या वसेद्वेधने च युग्मी वै दण्डताडने । जालबन्धे महावेश्या कुलटा देहचूर्णके ॥ २७ ॥
स्वैरिणी दलने चैव धृष्टा वै शोषणे तथा । निवसेद्यातनायुक्ता यमदूतेन ताडिता ॥ २८ ॥
विण्मूत्रभक्षणं तत्र यावन्मन्वन्तरं सति । ततो भवेद्विट्कृमिश्च वर्षलक्षं ततः शुचिः ॥
ब्राह्मणो ब्राह्मणीं गच्छेत्क्षत्रियामपि क्षत्रियः । वैश्यो वैश्यां च शूद्रां च शूद्रो वाऽपि व्रजेद्यदि ॥ ३० ॥
स्ववर्णपरदारी च कषं याति तया सह । भुक्त्वा कषायतप्तोदं निवसेद्द्वादशाब्दकम् ॥
ततो विप्रो भवेच्छुद्धश्चैवं च क्षत्रियादयः । योषितश्चापि शुध्यन्तीत्येवमाह पितामहः ॥
क्षत्रियो ब्राह्मणीं गच्छेद्वैश्यो वाऽपि पतिव्रते । मातृगामी भवेत्सोऽपि शूर्पं च नरकं व्रजेत्
शूर्पाकारैश्च कृमिभिर्ब्राह्मण्या सह भक्षितः । प्रतप्तमूत्रभोजी च यमदूतेन ताडितः ॥
तत्रैव यातनां भुङ्क्ते यावदिन्द्राश्चतुर्दश । सप्तजन्मसु वाराहश्छागलश्च ततः शुचिः ॥
करे धृत्वा च तुलसीं प्रतिज्ञां यो न पालयेत् । मिथ्या वा शपथं कुर्यात्स च ज्वालामुखं व्रजेत् ॥ ३१ ॥
गङ्गातोयं करे धृत्वा प्रतिज्ञां यो न पालयेत् । शिलां च देवप्रतिमां स० ॥ ३७ ॥
दत्त्वा च दक्षिणं हस्तं प्रतिज्ञां यो न पालयेत् । स्थित्वा देवगृहे वाऽपि स० ॥ ३८ ॥
स्पृष्ट्वा च ब्राह्मणं गां च वह्निं विष्णुसमं सति । न पालयेत्प्रतिज्ञां च स च० ॥ ३९ ॥
मित्रद्रोही कृतघ्नश्च यो हि विश्वासघातकः । मिथ्यासाक्ष्यप्रदश्चैव स० ॥ ४० ॥
एते तत्र वसन्त्येव यावदिन्द्राश्चतुर्दश । यथाऽङ्गारप्रदग्धाश्च यमदूतैश्च ताडिताः ॥
चण्डालस्तुलसीस्पर्शी सप्तजन्मभवेत्ततः शुचिः । म्लेच्छो गङ्गाजलस्पर्शी पञ्चजन्मस्वतः शुचिः
शिलास्पर्शी विट्कृमिश्च सप्तजन्मसु सुन्दरि । अर्चास्पर्शी व्रणकृमिः सप्तजन्मस्वतः शुचिः
दक्षहस्तप्रदाता च सर्पः स्यात्सप्तजन्मसु । ततो भवेद्धस्तहीनो मानवश्च ततः शुचिः ॥
मिथ्यावादी देवगृहे देवलः सप्तजन्मसु । विप्रादिस्पर्शकारी च सोऽग्रदानी भवेद्ध्रुवम् ॥
ततो भवन्ति मूकास्ते बधिराश्च त्रिजन्मसु । भार्याहीना वंशहीना बुद्धिहीनास्ततः शुचिः

१ क. युग्मी । २ क दण्डने । ३ क बन्धुद्री० ।

मित्रद्रोही च नकुलः कृतघ्नश्चापि गण्डकः । विश्वासघाती व्याघ्रश्च सप्तजन्मसु भारते ॥
मिथ्यासाक्ष्यप्रदश्चैव भल्लूकः सप्तजन्मसु पूर्वान्सप्त परान्सप्त पुरुषान्हन्ति चाऽऽत्मनः ॥
नित्यक्रियाविहीनश्च जडत्वेन युतो द्विजः । यस्यानास्था वेदवाक्ये मन्दं हसति संततम्
व्रतोपवासहीनश्च सद्वाक्यपरिनिन्दकः । जिह्मे जिह्मो वसेत्सोऽपि शताब्दं च हिमोदके
जलजन्तुर्भवेत्सोऽपि शतजन्मक्रमेण च । ततो नानाप्रकारा च मत्स्यजातिस्ततः शुचिः
यो वा धनस्यापहारं देवब्राह्मणयोश्चरेत् । पातयित्वा स्वपुरुषान्दश पूर्वान्दशापरान् ॥
स्वयं याति च धूमान्धं धूमध्वान्तसमन्वितम् । धूमक्लिष्टो धूमभोजी वसेत्तत्र चतुर्युगम् ॥
ततो मूषकजातिश्च शतजन्मानि भारते । ततो नानाविधाः पक्षिजातयः कृमिजातयः
ततो नानाविधा वृक्षजातयश्च ततो नरः । भार्याहीनो वंशहीनः शबरो व्याधिसंयुतः
ततो भवेत्स्वर्णकारः सुवर्णस्य वणिक्तथा । ततो यवनसेवी च ब्राह्मणो गणकस्ततः ॥
विप्रो दैवज्ञोपजीवी वैद्यजीवी चिकित्सकः । व्यापारी लोहलाक्षादे रसादेर्विक्रयी च यः ॥
स याति नागवेष्टं च नागैर्वेष्टित एव च । वसेत्स्वलोममानाब्दं तत्र वै नागदंशितः ॥
ततो भवेत्स गणको वैद्यो वै सप्तजन्मसु । गोपश्च कर्मकारश्च शङ्खकारस्ततः शुचिः ॥
प्रसिद्धानि च कुण्डानि कथितानि पतिव्रते । अन्यानि चाप्रसिद्धानि तत्र क्षुद्राणि सन्ति वै
सन्ति पातकिनस्तेषु स्वकर्मफलभोगिनः । भ्रमन्ति तावत्संसारे किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सावित्र्यु० कर्मविपाके पापिनां कुण्डनिर्णयो नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

अथ द्वात्रिंशोऽध्यायः ।

---

**सावित्र्युवाच—**

धर्मराज महाभाग वेदवेदाङ्गपारग । नानापुराणेतिहासपाञ्चरात्रप्रदर्शक ॥ १ ॥
सर्वेषु सारभूतं यत्सर्वेष्टं सर्वसंमतम् । कर्मच्छेदे बीजरूपं प्रशंस्यं सुखदं नृणाम् ॥ २ ॥
यशःप्रदं धर्मदं च सर्वमङ्गलमङ्गलम् । येन यामी न ते यान्ति यातनां भवदुःखदाम् ॥ ३ ॥
कुण्डानि च न पश्यन्ति तत्र नैव पतन्ति च । न भवेद्येन जन्मादि तत्कर्म वद सुव्रत ॥
किमाकाराणि कुण्डानि कानि तेषां मतानि च । केन रूपेण तत्रैव सदा तिष्ठन्ति पापिनः
स्वदेहे भस्मसाद्भूते यान्ति लोकान्तरं नराः । केन देहेन वा भोगं भुञ्जते वा शुभाशुभम्
सुचिरं क्लेशभोगेन कथं देहो न नश्यति । देहो वा किंविधो ब्रह्मन्तन्मे व्याख्यातुमर्हसि

---

१ क. 'नः स भवेद्व्या' २ क रूपका'।

नारायण उवाच—

सावित्रीवचनं श्रुत्वा धर्मराजो हरिं स्मरन्। कथां कथितुमारेभे गुरुं नत्वा च नारद ॥

यम उवाच—

वत्से चतुर्षु वेदेषु धर्मो वै संहितासु च। पुराणेष्वितिहासेषु पाञ्चरात्रादिकेषु च ॥
अन्येषु सर्वशास्त्रेषु वेदाङ्गेषु च सुव्रते। सर्वेष्टं सारभूतं च मङ्गलं कृष्णसेवनम् ॥१०॥
जन्ममृत्युजरारोगशोकसंतापतारणम्। सर्वमङ्गलरूपं च परमानन्दकारणम् ॥ ११ ॥
कारणं सर्वसिद्धीनां नरकार्णवतारणम्। भक्तिवृक्षाङ्कुरकरं कर्मवृक्षनिकृन्तनम् ॥ १२ ॥
गोलोकमार्गसोपानमविनाशिपदप्रदम्। सालोक्यसार्ष्टिसारूप्यसामीप्यादिप्रदं शुभे ॥१३॥
कुण्डानि यमदूतं च यमं च यमकिंकरान्। स्वप्नेऽपि नहि पश्यन्ति सति श्रीकृष्णकिंकराः ॥
हरिव्रतं ये कुर्वन्ति गृहिणः कर्मभोगिणः। ये स्नान्ति हारितीर्थे च नाश्नन्ति हारिवासरे॥१५॥
प्रणमन्ति हरिं नित्यं हर्यर्चां पूजयन्ति च। न यान्ति ते च घोरां च मम संयमनीं पुरीम् ॥
त्रिसंध्यपूता विप्राश्च शुद्धाचारसमन्विताः। स्वधर्मनिरताः शान्ता न यान्ति यममन्दिरम् ॥
ते स्वर्गभोगिणोऽन्ये च शुद्धा देवान्यकिंकराः। यान्त्यायान्ति च मर्त्यं च स्वर्गं च नहि
निर्वृताः। निवृत्तिं न हि लिप्सन्ति कृष्णसेवां विना नराः ॥ १८ ॥
स्वकर्मनिरताश्चापि स्वधर्मनिरतास्तथा। गच्छन्तो मर्त्यलोकं च दुर्धर्षा यमकिंकराः१९
भीताः कृष्णोपासकाच्च वैनतेयादिवोरगाः। स्वदूतं पाशहस्तं च गच्छन्तं तं वदाम्यहम्
यास्यसीति च सर्वत्र हरिभक्ताश्रमं विना। कृष्णमन्त्रोपासकानां नामानि च निकृन्तनम्
करोति नखराजरया चित्रगुप्तश्च भीतवत्। मधुपर्कादिकं ब्रह्मा तेषां च कुरुते पुनः ॥
विलङ्घ्य ब्रह्मलोकं च गोलोके गच्छतां सताम्। दुरितानि च नश्यन्ति तेषां संस्पर्शमात्रतः
यथा सुप्रज्वलद्वह्नौ काष्ठानि च तृणानि च। प्राप्नोति मोहः संमोहं तांश्च दृष्ट्वाऽतिभीतवत्
कामश्च कामिनं याति लोभक्रोधौ ततः सति। मृत्युः पलायते रोगो जरा शोको भयं तथा
कालः शुभाशुभं कर्म हर्षो भोगस्तथैव च। ये ये न यान्ति यामीं च कथितास्ते मया सति
शृणु देहस्य विवृतिं कथयामि यथागमन्। पृथिवी वायुराकाशं तेजस्तोयमिति स्फुटम् ॥
देहिनां देहबीजं च स्रष्टु सृष्टिविधौ परम्। पृथ्व्यादिपञ्चभूतैश्च यो देहो निर्मितो भवेत् ॥
स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह। वृद्धाङ्गुष्ठप्रमाणेन यो जीवः पुरुषाकृतिः २९॥
बिभर्ति सूक्ष्मदेहं च तद्रूपं भोगहेतवे। स देहो न भवेद्भस्म ज्वलदग्नौ ममाऽऽलये॥३०॥
जले न नष्टो देहो वा प्रहारे सुचिरं कृते। न शस्त्रे च न चास्त्रे च सुतीक्ष्णे कण्टके तथा

---

१ क. 'शिशुसप्त'।

तप्तद्रवे तप्तलौहे तप्तपाषाण एव च । प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्ध्वपतनेऽपि च ॥ ३२ ॥
न च दग्धो न भग्नश्च भुङ्क्ते संतापमेव च । कथितं देवि वृत्तान्तं कारणं च यथागमम् ॥
कुण्डानां लक्षणं सर्वं निबोध कथयामि ते ॥ ३३ ॥
इति श्रीब्रह्म० महा० प्रकृति० नारदना० सावित्र्यु० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अथ त्रयस्त्रिंशोऽध्यायः ।

यम उवाच—
पूर्णेन्दुमण्डलाकारं सर्वकुण्डं च वर्तुलम् । अतीव निम्नं पाषाणभेदैश्च खचितं सति ॥ १ ॥
न नश्वरं चाऽऽप्रलयं निर्मितं चेश्वरेच्छया । क्लेशदं वै पातकिनां नानारूपं तदालयम् ॥ २ ॥
ज्वलदङ्गाररूपं च शतहस्तशिखान्वितम् । परितः क्रोशमानं च वह्निकुण्डं प्रकीर्तितम् ॥
महच्छब्दं प्रकुर्वद्भिः पापिभिः परिपूरितम् । रक्षितं मम दूतैश्च ताडितैश्चापि संततम् ॥ ४ ॥
प्रतप्तोदकपूर्णं च हिंस्रजन्तुसमन्वितम् । महाघोरान्धकारं च पापिसंघेन संकुलम् ॥ ५ ॥
प्रकुर्वता चाकुशब्दं प्रहारैर्घूर्णितेन च । क्रोशार्धमानं मद्दूतैस्ताडितेन च रक्षितम् ॥
तप्तक्षारोदकैः पूर्णं नक्रैश्च परिवेष्टितम् । संकुलं पापिभिश्चैव क्रोशमानं भयानकम् ॥ ७ ॥
त्राहीति शब्दं कुर्वद्भिर्मम दूतैश्च ताडितैः । प्रचलद्भिरनाहारैः शुष्ककण्ठौष्ठतालुकैः ॥ ८ ॥
विण्मूत्रैरेव पूर्णं च क्रोशमानं च कुत्सितम् । अतिदुर्गन्धिसंयुक्तं व्याप्तं पापिभिरेव च ॥
ताडितैर्मम दूतैश्चाप्यनाहारैरुपद्रवैः । रक्षेति शब्दं कुर्वद्भिस्तत्कीटैरेव भक्षितम् ॥ १० ॥
तप्तमूत्रद्रवैः पूर्णं मूत्रकीटैश्च संकुलम् । युक्तं महापापिभिश्च तत्कीटैर्दंशितं सदा ॥ ११ ॥
गव्यूतिमानं ध्वान्ताक्तं शब्दकृद्भिश्च संततम् । मद्दूतैस्ताडितैर्घोरैः शुष्ककण्ठौष्ठतालुकैः ॥
श्लेष्मपूर्णं क्रोशमितं वेष्टितं चेष्टितैः सदा । तद्भोजिभिः पापिभिश्च तत्कीटैर्भक्षितैः सदा ॥
क्रोशार्धं गरपूर्णं च गरभोजिभिरन्वितम् । गरकीटैर्मिलितैश्च पापिभिः पूर्णमेव च ॥ १४ ॥
ताडितैर्मम दूतैश्च शब्दकृद्भिश्च कम्पितैः । सर्पाकारैर्वज्रदंष्ट्रैः शुष्ककण्ठैः सुदारुणैः ॥
नेत्रयोर्मलपूर्णं च क्रोशार्धं कीटसंयुतम् । पापिभिः संकुलं शश्वद्द्रवद्भिः कीटभक्षितैः ॥
वसारसेन पूर्णं च क्रोशतुर्यं सुदुःसहम् । तद्भोजिभिः पातकिभिर्व्याप्तं दूतैश्च ताडितैः ॥
शुक्रपूर्णं क्रोशतुर्यं शुक्रकीटैश्च भक्षितैः । क्रन्दद्भिः पापिभिः शश्वत्संकुलं व्याकुलैर्भिया
दुर्गन्धिरक्तपूर्णं च वापीमानं गभीरकम् । तद्भोजिभिः पापिभिश्च संकुलं कीटभक्षितैः ॥

१ क. तदाकारं ।

पूर्णं नेत्राश्रुभिर्नॄणां वाप्यर्धं पापिभिर्युतम् । ताडितैर्मम दूतैश्च तद्भक्ष्यैः कीटभक्षितैः ॥
नॄणां गात्रमलैः पूर्णं तद्भक्ष्यैः पापिभिर्युतम् । ताडितैर्मम दूतैश्च व्यग्रैश्च कीटभक्षितैः ॥
कर्णविट्परिपूर्णं च तद्भक्ष्यैः पापिभिर्युतम् । वापीतुर्यप्रमाणं च रुदद्भिः कीटभक्षितैः ॥
मज्जापूर्णं नराणां च महादुर्गन्धिसंयुतम् । महापातकिभिर्युक्तं वापीतुर्यप्रमाणकम् ॥
परिपूर्णं स्निग्धमांसैर्मम दूतैश्च ताडितैः पापिभिः संकुलं चैव वापीमानं भयानकम् ॥
कन्याविक्रयिभिश्चैव तद्भक्ष्यैः कीटभक्षितैः । त्राहीति शब्दं कुर्वद्भिस्त्रासितैश्च भयानकम्
वापीतुर्यप्रमाणं च नखादिकचतुष्टयम् । पापिभिः संकुलं शश्वन्मम दूतैश्च ताडितैः ॥
प्रतप्तताम्रकुण्डं ताम्रपर्युन्मुखान्वितम् । ताम्राणां प्रतिमालक्षैः प्रतप्तैरावृतं सदा ॥
प्रत्येकं प्रतिमाश्लिष्टैरुदद्भिः पापिभिर्युतम् । गव्यूतिमानं विस्तीर्णं मम दूतैश्च ताडितैः ॥
प्रतप्तलोहधारं च ज्वलदङ्गारसंयुतम् । लौहानां प्रतिमालक्षैः प्रतप्तैरावृतं सदा ॥ २९ ॥
प्रत्येकं सर्वसंश्लिष्टैः शश्वद्विचलितैर्भिया । रक्ष रक्षेति शब्दं च कुर्वद्भिर्दूतताडितैः ॥ ३० ॥
महापातकिभिर्युक्तं द्विगव्यूतिप्रमाणकम् । भयानकं ध्वान्तयुक्तं लौहकुण्डं प्रकीर्तितम् ॥
चर्मकुण्डं तप्तसुराकुण्डं वाप्यर्धमेव च । तद्भोजिभिः पापिभिश्च व्याप्तं मद्दूतताडितैः ॥
अधः शाल्मलिवृक्षस्य तीक्ष्णकण्टककुण्डकम् । लक्षपौरुषमानं च क्रोशमानं च दुःखदम् ॥
धनुर्मानैः कण्टकैश्च सुतीक्ष्णैः परिवेष्टितम् । प्रत्येकं कण्टकैर्विद्धं महापातकिभिर्युतम् ॥
वृक्षाग्रान्निपतद्भिश्च मम दूतैश्च ताडितैः । जलं देहीति शब्दं च कुर्वद्भिः शुष्कतालुकैः ॥
महाभयातिव्यग्रैश्च दण्डसंभिन्नमस्तकैः । प्रचलद्भिर्भिया तप्ततले नीरभिरेव च ॥ ३६ ॥
विषौघैस्तक्षकादीनां पूर्णं च क्रोशमानकम् । तद्भक्ष्यैः पापिभिर्युक्तं मम दूतैश्च ताडितैः ॥
प्रतप्ततैलपूर्णं च कीटादिपरिवर्जितम् । तद्भक्ष्यैः पापिभिर्युक्तं दग्धगात्रैश्च वेष्टितैः ॥
वाक्शब्दं प्रकुर्वद्भिश्चलद्भिर्दूतताडितैः । महापातकिभिर्युक्तं द्विगव्यूतिप्रमाणकम् ॥
शस्त्रकुण्डं ध्वान्तयुक्तं क्रोशमानं भयानकम् । शूलकारैः सुतीक्ष्णाग्रैर्लौहशस्त्रैश्च वेष्टितम् ।
शस्त्रतल्पस्वरूपं च क्रोशतुर्यप्रमाणकम् । पातकिभिर्वेष्टितं च कुन्तविद्धैश्च वेष्टितम् ।
ताडितैर्मम दूतैश्च शुष्ककण्ठोष्ठतालुकैः । कीटैः संपीड्यमानैश्च सर्पयानैर्भयंकरैः ॥ ४२ ॥
तीक्ष्णदन्तैश्च विकृतैर्व्याप्तं ध्वान्तयुतं सति । महापातकिभिर्युक्तं भीतैश्च कीटभक्षितैः ॥
रुदद्भिः क्रोशमानं च मम दूतैश्च ताडितैः ॥ ४३ ॥
अतिदुर्गन्धिसंयुक्तं क्रोशार्धं पूयसंयुतम् । तद्भक्ष्यैः पापिभिर्युक्तं मम दूतैश्च ताडितैः ॥ ४४ ॥
द्विगव्यूतिप्रमाणं च हिमतोयप्रपूरितम् । तालवृक्षप्रमाणैश्च सर्पकैस्तिमिरावृतम् ॥ ४५ ॥

१ क स्निग्ध° । २ क. त्रिग° ।

सर्पवेष्टितगात्रैश्च पापिभिः सर्पभक्षितैः । संकुलं शब्दकृद्भिश्च मम दूतैश्च ताडितैः ॥ ४९ ॥
कुण्डत्रयं मशादीनां पूर्णं च मशकादिभिः । सर्वं क्रोशार्धमानं च महापातकिभिर्युतम् ॥
हस्तपादादिभिर्बद्धैः क्षत्रैः क्षतजलोहितैः हाहेति शब्दं कुर्वद्भिः प्रचलद्भिश्च संततम् ॥
वज्रवृश्चिकयोः कुण्डं ताभ्यां च परिपूरितम् । वाप्यर्धं पापिभिर्युक्तं वज्रवृश्चिकदंशितैः ।
कुण्डत्रयं शरादीनां तैरेव परिपूरितम् । तैर्विद्धैः पापिभिर्युक्तं वाप्यर्धं रक्तलोहितैः ॥५०॥
तप्तपङ्कोदकैः पूर्णं सध्वान्तं गोलकुण्डकम् । कीटैः संपीड्यमानैश्च भक्षितैः पापिभिर्युतम् ॥
वाप्यर्धं परिपूर्णं च जलस्थैर्नक्रकोटिभिः । दारुणैर्विकृताकारैर्भक्षितैः पापिभिर्युतम् ।५२।
विण्मूत्रश्लेष्मभक्षैश्च संयुक्तं शतकोटिभिः । काकैश्च विकृताकारैर्धनुर्लक्षं च पापिभिः ॥
संचालवाजयोः कुण्डं ताभ्यां च परिपूरितम् । भक्षितैः पापिभिर्युक्तं शब्दकृद्भिश्च संततम् ।
धनुःशतं वज्रयुक्तं पापिभिः संकुलं सदा । शब्दकृद्भिर्वज्रदग्धैरन्धध्वान्तमयं सदा ।५३।
वापीद्विगुणमानं च तप्तप्रस्तरनिर्मितम् । ज्वलदङ्गारसदृशं चलद्भिः पापिभिर्युतम् ।५४॥
क्षुरधारोपमैस्तीक्ष्णैः पाषाणैर्निर्मितं परम् । महापातकिभिर्युक्तं क्षतं क्षतजलोहितैः । ५७ ।
दुर्गन्धिलालापूर्णं च तद्भक्ष्यैः पापिभिर्युतम् । क्रोशमानं गभीरं च मम दूतैश्च ताडितैः ॥
तप्तताम्रेऽङ्गनाकारैः परिपूर्णं धनुःशतम् । चलद्भिः पापिभिर्युक्तं मम दूतैश्च ताडितैः ।५९ ।
पूर्णं चूर्णद्रवैः क्रोशमानं पापिभिरन्वितम् । तद्भोजिभिः प्रदग्धैश्च मम दूतैश्च ताडितैः ॥
कुण्डं कुलालचक्राभं घूर्णमानं च संततम् । सुतीक्ष्णषोडशारं च घूर्णितैः पापिभिर्युतम् ॥
अतीव वक्रं निम्नं च द्विगव्यूतिप्रमाणकम् । कन्दराकारनिर्माणं तप्तोदकसमन्वितम् । ६२॥
महापातकिभिर्युक्तं भक्षितैर्जलजन्तुभिः । प्रचलद्भिः शब्दकृद्भिर्ध्वान्तयुक्तं भयानकम् ॥
कोटिभिर्विकृताकारैः कच्छपैश्च सुदारुणैः । जलस्थैः संयुतं तैश्च भक्षितैः पापिभिर्युतम् ॥
ज्वालाकलापैस्तेजोभिर्निर्मितं क्रोशमानकम् । शब्दकृद्भिः पापिभिश्च चलद्भिः संयुतं सदा
क्रोशमानं गभीरं च तप्तभस्माभिरन्वितम् । शश्वच्चलद्भिः संयुक्तं पापिभिर्भस्मभक्षितैः ॥
तप्तपाषाणलोष्टानां समूहैः परिपूरितम् । पापिभिर्दग्धगात्रैश्च युक्तं वै शुष्कतालुकैः ॥
क्रोशमानं ध्वान्तमयं गभीरमतिदारुणैः । ताडितैर्मम दूतैश्च दग्धकुण्डं प्रकीर्तितम् ॥
अत्यूर्मियुक्ततोयं च प्रतप्तक्षारसंयुतम् । नानाप्रकारविकृतं जलजन्तुसमन्वितम् ।६९॥
द्विगव्यूतिप्रमाणं च गभीरं ध्वान्तसंयुतम । तद्भक्ष्यैः पापिभिर्युक्तं दंशितैर्जलजन्तुभिः ॥
चलद्भिः क्रन्दमानैश्च न पश्यद्भिः परस्परम् । उत्तप्तसूर्मिकुण्डं च कीर्तितं च भयानकम्
असिपत्रवनस्यैवाप्युच्चैस्तालतरोरधः । क्रोशार्धमानकुण्डं च पतत्पत्रसमन्वितम् ॥ ७२ ॥

१ क. °रसंभूतं च° । २ क. °तोयाङ्ग° । ३ ख. घूर्णमा° ।

पापिनां रक्तपूर्णं च वृक्षाग्रात्पततां परम् । परित्राहीति शब्दं च कुर्वतामसतामपि ॥
गभीरं ध्वान्तसंयुक्तं रक्तकीटसमन्वितम् । तदसीपत्रकुण्डं च कीर्तितं च भयानकम् ॥
धनुःशतप्रमाणं च क्षुराकाराख्रसंकुलम् पापिनां रक्तपूर्णं च क्षुरधारं भयानकम् ॥
सूचीनाश्याख्रसंयुक्तं पापिरक्तौघपूरितम् । पञ्चाशद्धनुरायामं क्लेशदं सूचिकामुखम् ॥
गोधाह्वजन्तुभेदस्य मुखाकृति भयानकम् । कूपरूपं गभीरं च धनुर्विंशतिमानकम् ॥७७॥
महापातकिनां चैव महाक्लेशकरं परम् तत्कीटभक्षितानां च नम्रास्यानां च संततम् ॥
कुण्डं नक्रमुखाकारं धनुःषोडशमानकम् । गभीरं कूपरूपं च पापिष्ठैः संकुलं सदा । ७९॥
गजेन्द्राणां समूहेन व्याप्तं कुण्डाकृति स्थलम् । गजदन्तहतानां च पापिनां रक्तपूरितम् ॥
तत्कीटभक्षितानां च दीनशब्दकृतं सदा धनु शतप्रमाणं च कीर्तितं गजदंशनम् ॥
धनुस्त्रिंशत्प्रमाणं च कुण्डं वै गोमुखाकृति । पापिनां दुःखदं चैव गोमुखं परिकीर्तितम् ॥
भ्रमितं कालचक्रेण संततं च भयानकम् । कुम्भाकारं ध्वान्तयुक्तं द्विगव्यूतिप्रमाणकम् ॥
लक्षमानप्रमानं च गभीरमतिविस्तृतम् । कुत्रचित्तप्ततैलं च कुण्डाभ्यन्तरमन्तिके ॥८४॥
कुत्रचित्तप्तलौहादिकुण्डं ताम्रादिकं तथा । कुत्रचित्तप्तपाषाणकुण्डाभ्यन्तरमन्तिके ॥८९ ।
पापिनां च प्रधानैश्च महापातकिभिर्युतम् । परस्परं न पश्यद्भिः शब्दकृद्भिश्च संततम् ॥
ताडितैर्मम दूतैश्च दण्डैश्च मुषलैस्तथा ॥ ८७ ॥
घूर्णमानैः पतद्भिश्च मूर्छितैश्च मुहुर्मुहुः । पातितैर्मम दूतैश्चाप्यत्यूर्ध्वात्पतितैः क्षणम् ॥
यावन्तः पापिनः सन्ति सर्वकुण्डेषु सुन्दरि । ततश्चतुर्गुणाः सन्ति कुम्भीपाके च दुस्तरे
सुचिरं पतिताश्चैव भोगदेहविवर्जिता. । सर्वकुण्डप्रधानं च कुम्भीपाकं प्रकीर्तितम् ॥
कालनिर्मितसूत्रेण निबद्धा यत्र पापिनः । उत्थापिताश्च मद्दूतैः क्षणमेव निमज्जिताः ॥
निःश्वासबन्धाः सुचिरं कुण्डाभ्यन्तरे तथा । अतीव क्लेशयुक्ताश्च भोगदेहा अनश्वराः ॥
दण्डेन मुसलेनैव मम दूतैश्च ताडिताः । प्रतप्ततोययुक्तं च कालसूत्रं प्रकीर्तितम् ॥९३॥
अवटः कूपभेदश्च यत्रोदं च तदाकृति । प्रतप्ततोयपूर्णं च धनुर्विंशत्प्रमाणकम् ॥९४॥
व्याप्तं महापापिभिश्च दग्धगात्रैश्च संततम् । मद्दूतैस्ताडितैः शश्वदवटोदं प्रकीर्तितम् ॥
यत्तोयस्पर्शमात्रेण सर्वव्याधिश्च पापिनाम् । भवेदकस्मात्पततां यत्र कुण्डे धनुःशते ॥
सर्वे रुद्धाः पापिनश्च व्यथन्ते यत्र संततम् । हाहेति शब्दं कुर्वन्तस्तदेवारुंतुदं विदुः ॥
तप्तपांसुभिराकीर्णं ज्वलद्भिस्तु सुदग्धकैः । तद्भक्ष्यैः पापिभिर्युक्तं पांसुभोजं धनुःशतम्
पततां पापिनां यत्र भवेदेव प्रकम्पनम् । पातमात्रेण पापी वै भवेत्पाशेन वेष्टितः ॥९९॥

---

१ ख. नरमु॰ । २ ख. ॰मानं प॰ । ३ क. ॰रं पात्यमानाश्च भो॰ ।

क्रोशमाने च कुण्डे वै विदुस्तत्पाशवेष्टनम् । धनुर्विंशतिमानं च शूलप्रोतं प्रकीर्तितम् ॥
पातमात्रेण पापी च शूलेन ग्रथितो भवेत् । पततां पापिनां यत्र भवेदेव प्रकम्पनम् ॥
अतीव हिमतोये च क्रोशार्धे च प्रकम्पनम् । ददत्येव हिमाद्दूता यत्रोल्काः पापिनां मुखे
धनुर्विंशतिमानं च तदुल्काभिश्च संकुलम् । लक्षमानवमानं च गभीरं च धनुःशतम् ॥
नानाप्रकारक्रिमिभिः संयुक्तं च भयानकैः । अत्यन्धकारगर्तं यत्कूपाकारं च वर्तुलम् ॥
तद्भक्ष्यैः पापिभिर्युक्तं न पश्यद्भिः परस्परम् । तप्ततोयप्रदग्धैश्च चलद्भिः कीटभक्षितैः ॥
ध्वान्तेन चक्षुषा चान्धैरन्धकूपं प्रकीर्तितम् ॥ १०९ ॥
नानाप्रकारशस्त्रौघैर्यत्र विद्धाश्च पापिनः । धनुर्विंशतिमानं च वेधनं तत्प्रकीर्तितम् ॥ ११० ॥
दण्डेन ताडिता यत्र मम दूतैश्च पापिनः । धनुः षोडशमानं च तत्कुण्डं दण्डताडनम् ॥
निबद्धाश्च महाजालैर्यथा मीनाश्च पापिनः । धनुस्त्रिंशत्प्रमाणं च जालबद्धं प्रकीर्तितम् ॥
पततां पापिनां कुण्डे देहाश्चूर्णा भवन्ति च । लौहवेदिनिबद्धान्तःकोटिमानवमानकम् ॥
गभीरं ध्वान्तयुक्तं च धनुर्विंशतिमानकम् । मूर्छितानां जडानां तद्देहचूर्णं प्रकीर्तितम् ॥
दलिताः पापिनो यत्र मद्दूतैर्मुसलैः सदा । धनुः षोडशमानं च तत्कुण्डं दलनं स्मृतम् ॥
पातमात्रे यत्र पापी शुष्ककण्ठौष्ठतालुकः । वालुकासु च तप्तासु धनुस्त्रिंशत्प्रमाणकम् ॥
शतमानवमानं च गभीरं ध्वान्तसंयुतम् । जलाहारैर्विरहितं शोषणं तत्प्रकीर्तितम् ॥
नानाचर्मकषायोदैः परिपूर्णं धनुःशतम् शतमानवमानं च गभीरं ध्वान्तसंयुतम् ॥
दुर्गन्धियुक्तं तद्भक्ष्यैः पापिभिः संकुलं महत् ॥ ११४ ॥
शूर्पकारमुखं कुण्डं धनुर्द्वादशमानकम् । तप्तलोहवालुकाभिः पूर्णं पातकिभिर्युतम् ॥
अन्तराग्निशिखानां च ज्वालाव्याप्तमुखं सदा । धनुर्विंशतिमानं च यस्य कुण्डस्य सुन्दरि ॥
ज्वालाभिर्दग्धगात्रैश्च पापिभिर्व्याप्तमेव यत् । तन्महत्क्लेशदं शश्वत्कुण्डं ज्वालामुखं स्मृतम्
पातमात्राद्यत्र पापी मूर्च्छितो जिह्मितो भवेत् । तप्तेष्टकाभ्यन्तरितं वाप्यर्धं जिह्मकुण्डकम् ॥
धूमान्धकारयुक्तं च धूमान्धैः पापिभिर्युतम् । धनुःशतं श्वासबद्धैर्धूमान्धं परिकीर्तितम् ॥
पातमात्राद्यत्र पापी नागैः संवेष्टितो भवेत् । धनुःशतं नागपूर्णं नागवेष्टनकुण्डकम् ॥
षडशीतिश्च कुण्डानि मयोक्तानि निशामय । लक्षणं चापि तेषां च किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सावित्र्युपा० यमलोकस्थनरककुण्डलक्षणप्रकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

१ क ॰नां दण्डैर्दे॰ । २ ख. ॰व्यथितो ।

## अथ चतुस्त्रिंशोऽध्यायः ।

सावित्र्युवाच—

हरिभक्तिं देहि मह्यं सारभूतां सुदुर्लभाम् । त्वत्तः सर्वं श्रुतं देव नावशिष्टोऽवरो मम ॥ १ ॥
किंचित्कथय मे धर्मं श्रीकृष्णगुणकीर्तनम् । पुंसां लक्षोद्धारबीजं नरकार्णवतारकम् ॥ २ ॥
कारणं मुक्तिकार्याणां सर्वाशुभनिवारणम् । दारणं कर्मवृक्षाणां कृतपापौघहारकम् ॥ ३ ॥
मुक्तयः कतिधा सन्ति किं वा तासां च लक्षणम् । हरिभक्तेर्मूर्तिभेदं निषेकस्यापि लक्षणम् ॥
तत्त्वज्ञानविहीना च स्त्रीजातिर्विधिनिर्मिता । किं तज्ज्ञानं सारभूतं वद वेदविदां वर ॥ ५ ॥
सर्वदानं ह्यनशनं तीर्थस्नानं व्रतं तपः । अज्ञाने ज्ञानदानस्य कलां नार्हन्ति षोडशीम् ॥
पितुः शतगुणा माता गौरवेणातिरिच्यते । मातुः शतगुणैः पूज्यो ज्ञानदाता गुरुः प्रभो ॥

यम उवाच—

पूर्वं सर्वो वरो दत्तो यस्ते मनसि वाञ्छितः । अधुना हरिभक्तिस्ते वत्से भवतु मद्वरात् ॥
श्रोतुमिच्छसि कल्याणि श्रीकृष्णगुणकीर्तनम् । वक्तॄणां प्रश्नकर्तॄणां श्रोतॄणां कुलतारकम् ॥
शेषो वक्त्रसहस्रेण नहि यद्वक्तुमीश्वरः । मृत्युंजयो न क्षमश्च वक्तुं पञ्चमुखेन च ॥ १० ॥
धाता चतुर्णां वेदानां विधाता जगतामपि । ब्रह्मा चतुर्मुखेनैव नालं विष्णुश्च सर्ववित् ॥
कार्तिकेयः षण्मुखेन नापि वक्तुमलं ध्रुवम् । न गणेशः समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥
सारभूताश्च शास्त्राणां वेदाश्चत्वार एव च । कलामात्रं यद्गुणानां न विदन्ति बुधाश्च ये ॥
सरस्वती जडीभूता नालं यद्गुणवर्णने । सनत्कुमारो धर्मश्च सनकश्च सनातनः ॥ १४ ॥
सनन्दः कपिलः सूर्यो ये चान्ये ब्रह्मणः सुताः । विचक्षणा न यद्वक्तुं के वाऽन्ये जडबुद्धयः ॥
न यद्वक्तुं क्षमाः सिद्धा मुनीन्द्रा योगिनस्तथा । के वाऽन्ये च वयं के वा भगवद्गुणवर्णने ॥
ध्यायन्ति यत्पादम्भोजं ब्रह्मविष्णुशिवादयः । अतिसाध्यं स्वभक्तानां तदन्येषां सुदुर्लभम् ॥
कश्चित्किंचिद्विजानाति तद्गुणोत्कीर्तनं महत् । अतिरिक्तं विजानाति ब्रह्मा ब्रह्मविशारदः ॥
ततोऽतिरिक्तं जानाति गणेशो ज्ञानिनां गुरुः । सर्वातिरिक्तं जानाति सर्वज्ञः शंभुरेव च ॥
तस्मै दत्तं पुरा ज्ञानं कृष्णेन परमात्मना । अतीव निर्जने रम्ये गोलोके रासमण्डले ॥
तत्रैव कथितं किंचिद्यद्गुणोत्कीर्तनं पुनः । धर्माय कथयामास शिवलोके शिवः स्वयम् ॥
धर्मस्तत्कथयामास पुष्करे भास्कराय च । पिता मम यमाराध्य मां प्राप तपसा सति ॥
पूर्वं स्वविषयं चाहं न गृह्णामि प्रयत्नतः । वैराग्ययुक्तस्तपसे गन्तुमिच्छामि सुव्रते ॥ २३ ॥

---

१ क. अथ पूर्वं व°। २ ख. °ती च यत्नेन ना° ३ ख. °ह्मसुतादयः । ४ क. पूर्वं च विषयांश्चाहं ।

तदा मां कथयामास पिता तद्गुणकीर्तनम् । यथागमं तद्वदामि निबोधातीव दुर्गमम् ॥
तद्गुणं स न जानाति तदन्यस्य च का कथा । यथाऽऽकाशो न जानाति स्वान्तमेव वरानने
सर्वान्तरात्मा भगवान्सर्वकारणकारणम् । सर्वेश्वरश्च सर्वाद्य सर्ववित्सर्वरूपधृक् ॥२१॥
नित्यरूपी नित्यदेही नित्यानन्दो निराकृतिः । निरङ्कुशश्च निःशङ्को निर्गुणश्च निराश्रयः
निर्लिप्तः सर्वसाक्षी च सर्वाधारः परात्परः । प्रकृतिस्तद्विकारा च प्राकृतास्तद्विकारजाः॥
स्वयं पुमांश्च प्रकृतिः स्वयं च प्रकृतेः परः रूपं विधत्तेऽरूपश्च भक्तानुग्रहहेतवे॥२९॥
अतीव कमनीयं च सुन्दरं सुमनोहरम् । नवीननीरदश्यामं किशोरं गोपवेषकम् ॥
कन्दर्पकोटिलावण्यलीलाधाममनोहरम् । शरन्मध्याह्नपद्मानां शोभामोषकलोचनम् ॥
शरत्पार्वणकोटीन्दुशोभासंशोभिताननम् । अमूल्यरत्नखचितं रत्नाभरणभूषितम्॥३२॥
सस्मितं शोभितं शश्वदमूल्यपीतवाससा । परब्रह्मस्वरूपं च ज्वलन्तं ब्रह्मतेजसा ॥३३॥
सुखदृश्यं च शान्तं च राधाकान्तमनन्तकम् । गोपीभिर्वीक्ष्यमाणं च सस्मिताभिः समन्ततः
रासमण्डलमध्यस्थं रत्नसिंहासनस्थितम् । वंशीं क्वणन्तं द्विजभुजं वनमालाविभूषितम्॥
कौस्तुभेन मणीन्द्रेण सुन्दरं वक्षसोज्ज्वलम् । कुङ्कुमागरुकस्तूरीचन्दनार्चितविग्रहम् ॥
चारुचम्पकमालाब्जमालतीमाल्यमण्डितम् । चारुचम्पकशोभाढ्यचूडावक्रिमराजितम् ॥
ध्यायन्ति चैवंभूतं वै भक्ता भक्तिपरिप्लुताः । यद्भयाज्जगतां धाता विधत्ते सृष्टिमेव च
करोति लेखनं कर्मानुरूपं सर्वकर्मणाम् । तपसां फलदाता च कर्मणां च यदाज्ञया ॥
विष्णुः पाता च सर्वेषां यद्भयात्पाति संततम् । कालाग्निरुद्रः संहर्ता सर्वविश्वेषु यद्भयात्
शिवो मृत्युंजयश्चैव ज्ञानिनां च गुरोर्गुरुः । यज्ज्ञानदानात्सिद्धेशो योगीशः सर्ववित्स्वयम्
परमानन्दयुक्तश्च भक्तिवैराग्यसंयुतः । यत्प्रसादाद्वाति वातः प्रवरः शीघ्रगामिनाम् ॥
तपनश्च प्रतपति यद्भयात्संततं सति । यदाज्ञया वर्षतीन्द्रो मृत्युश्चरति जन्तुषु ॥४४॥
यदाज्ञया दहेद्वह्निर्जलमेव सुशीतलम् । दिशो रक्षन्ति दिक्पाला महाभीता यदाज्ञया ॥
भ्रमन्ति राशिचक्राणि ग्रहा वै यद्भयेन च । भयात्फलन्ति वृक्षाश्च पुष्पन्त्यपि च यद्भयात्
भयात्फलानि पक्वानि निष्फलास्तरवो भयात् । यदाज्ञया स्थलस्थाश्च न जीवन्ति जलेषु च
तथा स्थले जलस्थाश्च न जीवन्ति यदाज्ञया । अहं नियमकर्ता च धर्माधर्मे च यद्भयात्
कालश्च कलयेत्सर्वं भ्रमत्येव यदाज्ञया । अकाले न हरेत्कालो मृत्युर्वै यद्भयेन च ॥४८॥
ज्वलदग्नौ पतन्तं च गभीरे च जलार्णवे । वृक्षाग्रात्तीक्ष्णखड्गे च सर्पाद्दीनां मुखेषु च ॥
नानाशस्त्रास्त्रविद्धं च रणेषु विषमेषु च । पुष्पचन्दनतल्पे च बन्धुवर्गैश्च रक्षितम् ।५०॥

१ क. °मार्तण्डशो° । २ क. °भिश्च शाश्वतम् । ३ ख. °र्वदेहिनाम् । ४ क. मही पाति य° ।

शमनं तन्त्रमन्त्रैश्च काले कालो हरेर्भयात् । धत्ते वायुस्तोयराशिं तोयं कूर्मं यदाज्ञया ॥
कूर्मोऽनन्तं स च क्षोणीं समुद्रान्सव पर्वतान् । सर्वांश्चैव क्षमारूपो नानारूपं बिभर्ति सः ॥
यतः सर्वाणि भूतानि लीयन्तेऽन्ते च तत्र वै । इन्द्रायुश्चैव दिव्यानां युगानामेकसप्ततिः ॥
अष्टाविंशच्छक्रपाते ब्रह्मणः स्यादहर्निशम् । षष्ट्याऽधिके पञ्चशते सहस्रे पञ्चविंशतौ ॥
युगे नराणां शक्रायुरेवं संख्याविदो विदुः । एवं त्रिंशद्दिनैर्मासो द्वाभ्यां ताभ्यामृतुः स्मृतः
ऋतुभिः षड्भिरेवाब्दः शताब्दं ब्रह्मणो वयः । ब्रह्मणश्च निपाते वै चक्षुरुन्मीलनं हरेः ॥
चक्षुर्निमीलने तस्य लयं प्राकृतिकं विदुः । प्रलये प्राकृताः सर्वे देवाद्याश्च चराचराः ॥
लीना धातरि धाता च श्रीकृष्णे नाभिपङ्कजे । विष्णुः क्षीरोदशायी च वैकुण्ठे यश्चतुर्भुजः
विलीना वामपार्श्वे च कृष्णस्य परमात्मनः । इन्द्राद्या भैरवाद्याश्च यावन्तश्च शिवानुगाः ॥
शिवाधारे शिवे लीना ज्ञानानन्दे सनातने । ज्ञानाधिदेवः कृष्णस्य महादेवस्य चाऽऽत्मनः
तस्य ज्ञाने विलीनश्च बभूवाथ क्षणं हरेः दुर्गायां विष्णुमायायां विलीनाः सर्वशक्तयः ॥
सा च कृष्णस्य बुद्धौ च बुद्ध्यधिष्ठातृदेवता । नारायणांशः स्कन्दश्च लीनो वक्षसि पि
तस्य च ॥ ६२ ॥
श्रीकृष्णांशश्च तद्बाहौ देवाधीशो गणेश्वरः । पद्मांशभूता पद्मायां सा राधायां च सुव्रते
गोप्यश्चापि च तस्यां च सर्वा वै देवयोषितः । कृष्णप्राणाधिदेवी सा तस्य प्राणेषु सा स्थिता
सावित्री च सरस्वत्यां वेदशास्त्राणि यानि च । स्थिता वाणी च जिह्वायां तस्यैव परमात्मनः
गोलोकस्थस्य गोपाश्च विलीनास्तस्य लोमसु । तत्प्राणेषु च सर्वेषां प्राणा वाता हुताशनः
जठराग्नौ विलीनश्च जलं तद्रसनाग्रतः । वैष्णवाश्चरणाम्भोजे परमानन्दसंयुताः ॥६७॥
सारात्सारतरा भक्तिरसपीयूषपायिनः । विराट्क्षुद्रश्च महति लीनः कृष्णे महाविराट्
यस्यैव लोमकूपेषु विश्वानि निखिलानि च । यस्य चक्षुर्निमेषेण महांश्च प्रलयो भवेत् ॥
चक्षुरुन्मीलने सृष्टिर्यस्यैव परमात्मनः । यावन्निमेषे सृष्टिः स्यात्तावदुन्मीलने लयः ॥
ब्रह्मणश्च शताब्देन सृष्टिस्तत्र लयः पुनः । ब्रह्मसृष्टिलयानां च संख्या नास्त्येव सुव्रते
यथा भूरजसां चैव संख्यानं च निशामय । चक्षुर्निमेषे प्रलयो यस्य सर्वान्तरात्मनः ॥
उन्मीलने पुनः सृष्टिर्भवेदेवेश्वरेच्छया । तद्गुणोत्कीर्तनं वक्तुं ब्रह्माण्डेषु च कः क्षमः ॥
यथा श्रुतं तातवक्त्रात्तथोक्तं च यथागमम् । मुक्तयश्च चतुर्वेदैर्निरुक्ताश्च चतुर्विधाः ॥
तत्प्रधाना हरेर्भक्तिर्मुक्तेरपि गरीयसी सालोक्यदा हरेरेका चान्या सारूप्यदाऽपरा
सामीप्यदा च निर्वाणदात्री चैवमिति स्मृतिः । भक्तास्ता नहि वाञ्छन्ति विना तत्से-
वनादिकम् ॥ ७६ ॥

---

१ क. °र्वांश्च रक्षमाणो यो ना० । २ ख. रुद्रा° ।

सिद्धत्वममरत्वं च ब्रह्मत्वं चावहेलया । जन्ममृत्युजराव्याधिभयशोकादिखण्डनम् ७७
धारणं दिव्यरूपस्य विदुर्निर्वाणमोक्षदम् । मुक्तिश्च सेवारहिता भक्तिः सेवाविवर्द्धिनी ॥
भक्तिमुक्त्योरयं भेदो निषेकलक्षणं शृणु । विदुर्बुधा निषेकं च भोगं च कृतकर्मणाम् ॥
तत्खण्डनं च शुभदं परं श्रीकृष्णसेवनम् । तत्त्वज्ञानमिदं साध्वि सारं वै लोकवेदयोः ॥
विघ्नघ्नं शुभदं चोक्तं गच्छ वत्से यथासुखम् । इत्युक्त्वा सूर्यपुत्रश्च जीवयित्वा च तत्पतिम्
तस्यै शुभाशिषं दत्त्वा गमनं कर्तुमुद्यत. । दृष्ट्वा यमं च गच्छन्तं सावित्री तं प्रणम्य च ॥
रुरोद चरणे धृत्वा सद्विच्छेदोऽतिदुःखदः । सावित्रीरोदनं श्रुत्वा यमः सोऽयं कृपानिधिः
तामित्युवाच संतुष्टस्त्वरोदीच्चापि नारद ॥ ८४ ॥

यम उवाच—

लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते । अन्ते यास्यसि गोलोके श्रीकृष्णभवनं शुभे ॥
गत्वा च स्वगृहं भद्रे सावित्र्याश्च व्रतं कुरु । द्विसप्तवर्षपर्यन्तं नारीणां मोक्षकारणम् ॥
ज्येष्ठे शुक्लचतुर्दश्यां सावित्र्याश्च व्रतं कुरु । शुक्लाष्टम्यां भाद्रपदे महालक्ष्म्या व्रतं तथा ॥
द्व्यष्टवर्षव्रतं चेदं प्रत्यब्दं पक्षमेव च । करोति परया भक्त्या सा याति च हरेः पदम् ॥
प्रतिमङ्गलवारे च देवीं मङ्गलचण्डिकाम् । प्रतिमासं शुक्लषष्ठ्यां षष्ठीं मङ्गलदायिकाम् ॥
तथा चाऽऽषाढसंक्रान्त्यां मनसा सर्वसिद्धिदाम् । राधां रासे च कार्तिक्यां कृष्णप्राणाधिकां प्रियाम् ॥ ९० ॥
उपोष्य शुक्लाष्टम्यां च प्रतिमासे वरप्रदाम् । विष्णुमायां भगवतीं दुर्गां दुर्गतिनाशिनीम्
प्रकृतिं जगदम्बां च पतिपुत्रवतीषु च । पतिव्रतासु शुद्धासु यन्त्रेषु प्रतिमासु च ॥
या नारी पूजयेद्भक्त्या धनसंतानहेतवे । इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम्
इत्युक्त्वा तां धर्मराजो जगाम निजमन्दिरम् । गृहीत्वा स्वामिनं [illegible]
सावित्री सत्यवन्तं च वृत्तान्तं च [illegible] क्रमम् । [illegible]
सावित्रीजनकः पुत्रान्प्राप्तवान्क्रमशश्च [illegible]
लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते । जगाम [illegible] ना सार्धं [illegible]
सवितुश्चाधिदेवी या मन्त्राधिष्ठातृदेवता । सावित्री [illegible] ना सा [illegible]
इत्येवं कथितं वत्स सावित्र्याख्यानमुत्तमम् जी [illegible] पुन [illegible]

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सावि० सावि [illegible] मो [illegible] -
समाप्तिर्नाम चतुस्त्रिंशोऽध्यायः ॥ ३४

═════

अथ पञ्चत्रिंशोऽध्यायः ।

नारद उवाच—

श्रीकृष्णस्याऽऽत्मनश्चैव निर्गुणस्य निराकृतेः । सावित्रीयमसंवादे श्रुतं सुविमलं यशः
तद्गुणोत्कीर्तनं सत्यं मङ्गलानां च मङ्गलम् । अधुना श्रोतुमिच्छामि लक्ष्म्युपाख्यानमीश्वर॥
केनाऽऽदौ पूजिता साऽपि किंभूता केन वा पुरा । तद्गुणोत्कीर्तनं सत्यं वद वेदविदां वर

नारायण उवाच—

सृष्टेरादौ पुरा ब्रह्मन्कृष्णस्य परमात्मनः । देवी वामांशसंभूता चाऽऽसीत्सा रासमण्डले॥
अतीव सुन्दरी श्यामा न्यग्रोधपरिमण्डला । यथा द्वादशवर्षीया रम्या सुस्थिरयौवना ॥
श्वेतचम्पकवर्णाभा सुखदृश्या मनोहरा । शरत्पार्वणकोटीन्दुप्रभासंशोभितानना ॥ ६ ॥
शरन्मध्याह्नपद्मानां शोभाशोभितलोचना । सा च देवी द्विधाभूता सहसैवेश्वरेच्छया ॥
समा रूपेण वर्णेन तेजसा वयसा त्विषा । यशसा वाससा मूर्त्या भूषणेन गुणेन च ॥
स्मितेन वीक्षणेनैव वचसा गमनेन च । मधुरेण स्वरेणैव नयेनानुनयेन च ॥ ९ ॥
तद्वामांशा महालक्ष्मीर्दक्षिणांशा च राधिका । राधाऽऽदौ वरयामास द्विभुजं च परात्परम्॥
महालक्ष्मीश्च तत्पश्चाच्चकमे कमनीयकम् । कृष्णस्तद्गौरवेणैव द्विधारूपो बभूव ह ॥ ११॥
दक्षिणांशो वै द्विभुजो वामांशश्च चतुर्भुजः । चतुर्भुजाय द्विभुजो महालक्ष्मीं ददौ पुरा ॥
लक्ष्यते दृश्यते विश्वं स्निग्धदृष्ट्या यथाऽनिशम् । देवीषु या च महती महालक्ष्मीश्च सा स्मृता
द्विभुजो राधिकाकान्तो लक्ष्मीकान्तश्चतुर्भुजः । गोलोके द्विभुजस्तस्थौ गोपैर्गोपीभिरावृतः ॥
चतुर्भुजश्च वैकुण्ठं प्रययौ पद्मया सह । सर्वांशेन समौ तौ द्वौ कृष्णनारायणौ परौ ॥ १५॥
महालक्ष्मीश्च योगेन नानारूपा बभूव सा । वैकुण्ठे च महालक्ष्मीः परिपूर्णतमाऽपरा ॥
शुद्धसत्त्वस्वरूपा च सर्वसौभाग्यसंयुता । प्रेम्णा सा वै प्रधाना च सर्वासु रमणीषु च ॥
स्वर्गे च स्वर्गलक्ष्मीश्च शक्रसंपत्स्वरूपिणी । पातालेषु च मर्त्येषु राजलक्ष्मीश्च राजसु ॥
गृहलक्ष्मीर्गृहेष्वेव गृहिणी च कलांशया । संपत्स्वरूपा गृहिणां सर्वमङ्गलमङ्गला॥ १९॥
गवां प्रसूः सा सुरभिर्दक्षिणा यज्ञकामिनी । क्षीरोदसिन्धुकन्या सा श्रीरूपा पद्मिनीषु च॥
शोभारूपा च चन्द्रे सा सूर्यमण्डलमण्डिता । विभूषणेषु रत्नेषु फलेषु जलजेषु च॥ २१॥
नृपेषु नृपपत्नीषु दिव्यस्त्रीषु गृहेषु च । सर्वसस्येषु वस्त्रेषु स्थाने सा संस्कृते तथा ॥ २२॥
प्रतिमासु च देवानां मङ्गलेषु घटेषु च । माणिक्येषु च मुक्तासु माल्येषु च मनोहरा ॥

१ क. °नमुत्तमम् । २ क संस्तुता । ३ क. प्रेम्णा चानु° । ४ क. °दौ मुदा ५ क. °षु च जलेषु च ।

मणीन्द्रेषु च हारेषु क्षीरे वै चन्दनेषु च । वृक्षशाखासु रम्यासु नवमेघेषु वस्तुषु ॥२४॥
वैकुण्ठे पूजिता साऽऽदौ देवी नारायणेन च । द्वितीये ब्रह्मणा भक्त्या तृतीये शंकरेण च
विष्णुना पूजिता सा च क्षीरोदे भारते मुने । स्वायंभुवेन मनुना मानवेन्द्रैश्च सर्वतः ॥२६॥
ऋषीन्द्रैश्च मुनीन्द्रैश्च सद्भिश्च गृहिभिर्भवे । गन्धर्वाद्यैश्च नागाद्यैः पातालेषु च पूजिता ॥
शुक्लाष्टम्यां भाद्रपदे पूजा वै ब्रह्मणा कृता । भक्त्या च पक्षपर्यन्तं त्रिषु लोकेषु नारद ॥
चैत्रे पौषे च भाद्रे च पुण्ये मङ्गलवासरे । विष्णुना निर्मिता पूजा त्रिषु लोकेषु भक्तितः ॥
वर्षान्ते पौषसंक्रान्त्यां मेध्य मावाह्य चाङ्गणे । मनुस्तां पूजयामास सा भूता भुवनत्रये ॥
राज्ञा संपूजिता सा वै मङ्गलेनैव मङ्गला । केदारेणैव नीलेन नलेन सुबलेन च ॥ ३१ ॥
ध्रुवेणोत्तानपादेन शक्रेण बलिना तथा । कश्यपेन च दक्षेण मनुना च विवस्वता ॥३२॥
प्रियव्रतेन चन्द्रेण कुबेरेणैव वायुना । यमेन वह्निना चैव वरुणेनैव पूजिता ॥ ३३ ॥
एवं सर्वत्र सर्वैश्च वन्दिता पूजिता सदा । सर्वैश्वर्याधिदेवी सा सर्वसंपत्स्वरूपिणी ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० लक्ष्म्युपा० लक्ष्मी-
स्वरूपपूजादिवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ।

=====

अथ षट्त्रिंशोऽध्यायः ।

---

**नारद उवाच—**

नारायणप्रिया सा च वरा वैकुण्ठवासिनी । वैकुण्ठाधिष्ठातृदेवी महालक्ष्मीः सनातनी ॥
कथं बभूव सा देवी पृथिव्यां सिन्धुकन्यका । किं तद्ध्यानं च कवचं सर्वं पूजाविधिक्रमम्
पुरा केन स्तुताऽऽदौ सा तन्मे व्याख्यातुमर्हसि ॥ ३ ॥

**नारायण उवाच—**

पुरा दुर्वाससः शापाद्भ्रष्टश्रीकः पुरंदरः । बभूव देवसंघश्च मर्त्यलोकश्च नारद ॥ ४ ॥
लक्ष्मीः स्वर्गादिकं त्यक्त्वा रुष्टा परमदुःखिता । गत्वा लीना च वैकुण्ठे महालक्ष्म्यां च नारद
तदा शोकाद्ययुर्देवा दुःखिता ब्रह्मणः सभाम् । ब्रह्माणं च पुरस्कृत्य ययुर्वैकुण्ठमेव च । ६ ।
वैकुण्ठे शरणापन्ना देवा नारायणे परे । अतीव दैन्ययुक्ताश्च शुष्ककण्ठोष्ठतालुकाः ॥७॥
तदा लक्ष्मीश्च कलया पुरा नारायणाज्ञया बभूव सिन्धुकन्या सा शक्रसंपत्स्वरूपिणी ॥८॥
तदा मथित्वा क्षीरोदं देवा दैत्यगणैः सह संप्रापुश्च वरं लक्ष्या ददृशुस्तां च तत्र हि ॥९॥

---

१ क. °ण कर्दमेन वि° । २ क. च स्तवनं स° ।

सुरादिभ्यो वरं दत्त्वा वनमालां च विष्णवे । ददौ प्रसन्नवदना तुष्टा क्षीरोदशायिने ॥ १० ॥
देवाश्चाप्य पुराक्रान्तं राज्यं प्रापुश्च तद्वरात् । तां संपूज्य च संस्तूय सर्वत्र च निरापदः ॥

नारद उवाच—

कथं शशाप दुर्वासा मुनिश्रेष्ठः पुरंदरम् । केन दोषेण वा ब्रह्मन्ब्रह्मिष्ठ ब्रह्मवित्पुरा ॥ १२ ॥
ममन्थे केन रूपेण जलधिस्तैः सुरादिभिः । केन स्तोत्रेण सा देवी शक्रे साक्षाद्बभूव ह ॥
को वा तयोश्च संवादो ह्यभवत्तद्वद प्रभो ॥ १४ ॥

नारायण उवाच—

मधुपानप्रमत्तश्च त्रैलोक्याधिपतिः पुरा । क्रीडां चकार रहसि रम्भया सह कामुकः ॥ १५ ॥
कृत्वा क्रीडां तया सार्धं कामुकया हृतचेतनः । तस्थौ तत्र महारण्ये कामोन्मथितमानसः ॥
कैलासशिखरं यान्तं वैकुण्ठादृषिपुंगवम् । दुर्वाससं ददर्शेन्द्रो ज्वलन्तं ब्रह्मतेजसा ॥ १७ ॥
ग्रीष्ममध्याह्नमार्तण्डसहस्रप्रभमीश्वरम् । प्रतप्तकाञ्चनाभासं जटाभारमहोज्ज्वलम् ॥
शुक्लयज्ञोपवीतं च चीरं दण्डं कमण्डलुम् । महोज्ज्वलं च तिलकं बिभ्रतं चन्द्रसंनिभम् ॥
समन्वितं शिष्यवर्गैर्वेदवेदाङ्गपारगैः । दृष्ट्वा ननाम शिरसा संभ्रमात्स पुरंदरः ॥ २० ॥
शिष्यवर्गं स भक्त्या वै तुष्टाव च मुदाऽन्वितः मुनिना च सशिष्येण तस्मै दत्ताः शुभाशिषः
विष्णुदत्तं पारिजातपुष्पं च सुमनोहरम् । मृत्युरोगजराशोकहरं मोक्षकरं ददौ ॥ २२ ॥
शक्रः पुष्पं गृहीत्वा च प्रमत्तो राजसंपदा । भ्रमेण स्थापयामास तत्र वै हस्तिमस्तके ॥
हस्ती तत्स्पर्शमात्रेण रूपेण च गुणेन च । तेजसा वयसा कान्त्या विष्णुतुल्यो बभूव सः ॥
त्यक्त्वा शक्रं गजेन्द्रश्चाप्यगच्छद्दघोरकाननम् न शशाक महेन्द्रस्तं रक्षितुं तेजसा मुने ॥
तत्पुष्पं त्यक्तवन्तं च दृष्ट्वा शक्रं मुनीश्वरः । तं शशाप महातेजाः क्रोधसंरक्तलोचनः ॥

दुर्वासा उवाच—

अरे श्रिया प्रमत्तस्त्वं कथं मामवमन्यसे मद्दत्तपुष्पं गर्वेण त्यक्तवान्हस्तिमस्तके ॥ २७ ॥
विष्णोर्निवेदितं पुष्पं नैवेद्यं वा फलं जलम् । प्राप्तिमात्रेण भोक्तव्यं त्यागेन ब्रह्महा जनः ॥
भ्रष्टश्रीर्भ्रष्टबुद्धिश्च भ्रष्टज्ञानो भवेन्नरः । यस्त्यजेद्विष्णुनैवेद्यं भाग्येनोपस्थितं शुभम् ॥
प्राप्तिमात्रेण यो भुङ्क्ते भक्त्या विष्णुनिवेदितम् । पुंसां शतं समुद्धृत्य जीवन्मुक्तः स्वयं भवेत् ॥ ३० ॥
विष्णुनैवेद्यभोजी यो नित्यं तु प्रणमेद्धरिम् पूजयेत्स्तौति वा भक्त्या स विष्णुसदृशो भवेत्
तत्स्पर्शवायुना सद्यस्तीर्थौघश्च विशुध्यति । तत्पादरजसा मूढ सद्यः पूता वसुंधरा ॥

---

१ क °ष्टराज्यो भ° ।

पुंश्चल्यन्नमभोग्यान्नं शूद्रश्राद्धान्नमेव च । यद्धरेरनिवेद्यं च वृथामांसमभक्षकम् ॥ ३३ ॥
शिवलिङ्गप्रदत्तान्नं यदन्नं शूद्रयाजिनाम् । चिकित्सकद्विजानां च देवलान्नं तथैव च ॥
कन्याविक्रयिणामन्नं यदन्नं योनिजीविनाम् । अनुष्णान्नं पर्युषितं सर्वभक्ष्यावशेषितम् ॥
शूद्रापतिद्विजान्नं च वृषवाहद्विजान्नकम् । अदीक्षितद्विजान्नं च यदन्नं शवदाहिनाम् ॥
अगम्यगामिनां चैव द्विजानामन्नमेव च मित्रद्रुहां कृतघ्नानामन्नं विश्वासघातिनाम् ॥
मिथ्यासाक्ष्यप्रदानां च ब्राह्मणानां तथैव च । एतत्सर्वं विशुध्येत विष्णुनैवेद्यभक्षणात् ॥
श्वपचो विष्णुसेवी च वंशानां कोटिमुद्धरेत् । हरेरभक्तो विप्रश्च स्वं च रक्षितुमक्षम ॥
अज्ञानाद्यदि गृह्णाति विष्णोर्निर्माल्यमेव च । सप्तजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥
ज्ञात्वा भक्त्या च गृह्णाति विष्णोर्नैवेद्यमेव च । कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः
यस्मात्संस्थापितं पुष्पं गर्वाद्धै हस्तिमस्तके । तस्मात्त्वमाशु परित्यज्य यातु लक्ष्मीर्हरेः पदम्
नारायणस्य भक्तोऽहं न बिभेमीश्वरं विधिम् । कालं मृत्युं जरां चैव कानन्यान्गणयामि च
किं करिष्यति ते तातः कश्यपश्च प्रजापतिः । बृहस्पतिर्गुरुश्चैव नि शङ्कस्य च मे हरेः
इदं पुष्पं यस्य मूर्ध्नि तस्य वै पूजनं पुरः । मूर्ध्नि च्छिन्ने शिवशिरोऽच्छिन्नवेदं योजयिष्यति
इति श्रुत्वा महेन्द्रश्च धृत्वा तच्चरणद्वयम् । उच्चै रुरोद शोकार्तस्तमुवाच भयाकुलः ॥

इन्द्र उवाच—

दत्तः समुचितः शापो मह्यं मत्ताय हे प्रभो । हृता त्वया चेत्संपत्तिः किंयज्ज्ञानं च देहि मे
ऐश्वर्यं विपदां बीजं प्रच्छन्नज्ञानकारणम् । मुक्तिमार्गार्गलं दार्ढ्याद्धरिभक्तिव्यपायकम् ॥
जन्ममृत्युजरारोगशोकदुःखकरं परम् । संपत्तितिमिरान्धश्च मुक्तिमार्गं न पश्यति ॥
संपन्मत्तः सुमूढश्च सुरामत्तः सचेतनः । बान्धवैर्वेष्टितः सोऽपि बन्धुद्वेषकरो मुने॥१०॥
संपन्मदप्रमत्तश्च विषयान्धश्च विह्वलः । महाकामी साहसिकः सत्त्वमार्गं न पश्यति ॥
द्विविधो विषयान्धश्च राजसस्तामसः स्मृतः । अशास्त्रज्ञस्तामसश्च शास्त्रज्ञो राजसः स्मृतः
शास्त्रे च द्विविधं मार्गं निर्दिष्टं मुनिपुंगव । प्रवृत्तिबीजमेकं च निवृत्तेः कारणं परम् ॥
चरन्ति जीविनश्चाऽऽदौ प्रवृत्तौ दुःखवर्त्मनि । स्वच्छन्दे चाप्रसन्ने च निर्विरोधे च संततम्
आपातमधुरे लोभात्क्लेशे च सुखमानिनः । परिणामोत्पत्तिबीजे जन्ममृत्युजराकरे ।[1]॥
अनेकजन्मपर्यन्तं कृत्वा च भ्रमणं मुदा । स्वकर्मविहितानां च नानायोनीनां क्रमेण च ॥
ततः कृष्णानुग्रहाच्च सत्सङ्गं लभते जनः । सहस्रेषु शतेष्वेको भवाब्धेः पारकारणम् ॥
साधुः सत्त्वप्रदीपेन मुक्तिमार्गं प्रदर्शयेत । तदा करोति यत्नं च जीवी बन्धनखण्डने ॥

---

१ क. °कर्मीतिकरं प° ।

अनेकजन्मयोगेन तपसाऽनशनेन च। तदा लभेन्मुक्तिमार्गं निर्विघ्नं सुखदं परम् ॥९९॥
इदं श्रुतं गुरोर्वक्त्रात्प्रसंगात्प्रसरेण च। नहि पृष्टस्ततो न्यच्च भवदुःखौघवेष्टितः ॥ १० ॥
अधुना विधिना दत्तो विप्रत्वं ज्ञानसागरः। संपद्रूपा विपदियं मम निस्तारकारिणी ॥
ज्ञानसिन्धो दीनबन्धो मह्यं दीनाय सांप्रतम्। देहि किंचिज्ज्ञानसारं भवपारं दयानिधे ॥
इन्द्रस्य वचनं श्रुत्वा प्रहस्य ज्ञानिनां गुरुः ज्ञानं कथितुमारेभे ह्यनिष्टं सनातनः ॥

दुर्वासा उवाच—

अहो महेन्द्र माङ्गल्यमात्मानं द्रष्टुमिच्छसि। आपाततो दुःखबीजं परिणामसुखावहम् ॥
स्वर्गभोगाननानाशपिण्डाखण्डनकारणम्। दुष्पारासारदुर्घोरसंसारार्णवतारकम् ॥ ६९ ॥
कर्मवृक्षाङ्कुरच्छेदकारणं सर्वतारकम्। संतोषसंतनिकरं प्रवरं सर्ववर्त्मनाम् ॥ ११ ॥
दानेन तपसा वाऽपि व्रतेनानशनादिना। कर्मणा स्वर्गभोगादिसुखं भवति जीविनाम् ॥
काम्यानां कर्मणां चैव मूलं संछिद्य यत्नतः। अधुनेदं मोक्षबीजं संकल्पाभाव एव च ॥
यत्कर्म सात्त्विकं कुर्यादसंकल्पितमेव च। सर्वं कृष्णार्पणं कृत्वा परे ब्रह्मणि लीयते ॥
सांसारिकाणामेतत्तु निर्वाणं मोचकं विदुः। नेच्छन्ति वैष्णवास्तत्तु सेवाविरहकातराः ॥
सेवां कुर्वन्ति ते नित्यं विधायोत्तमदेहकम्। गोलोके वाऽपि वैकुण्ठे तस्यैव परमात्मनः ॥
हरिसेवादिरूपां च मुक्तिमिच्छन्ति वैष्णवाः। जीवन्मुक्ताश्च ते शक्र स्वकुलोद्धारकारिणः
स्मरणं कीर्तनं विष्णोरर्चनं पादसेवनम्। वन्दनं स्तवनं नित्यं भक्त्या नैवेद्यभक्षणम् ॥
चरणोदकपानं च तन्मन्त्रजपनं परम्। इदं निस्तारबीजं च सर्वेषामीप्सितं भवेत् ॥
इदं मृत्युंजयज्ञानं दत्तं मृत्युंजयेन मे। तच्छिष्योऽहं च निःशङ्कस्तत्प्रसादाच्च सर्वतः ॥
स जन्मदाता स गुरुः स च बन्धुः सतां परः। यो ददाति हरेर्भक्तिं त्रैलोक्ये च सुदुर्लभाम्
दर्शयेदन्यमार्गं च विना श्रीकृष्णसेवनम्। स च तं नाशयत्येव ध्रुवं तद्वधभाग्भवेत् ॥७७
संततं जगतां कृष्णनाम मङ्गलकारणम्। मङ्गलं वर्धते नित्यं न भवेदायुषो व्ययः ॥
तेभ्योऽप्यपैति कालश्च मृत्युश्च रोग एव च। संतापश्चैव शोकश्च वैनतेयादिवोरगाः ॥
कृष्णमन्त्रोपासकश्च ब्राह्मणः श्वपचोऽपि वा। ब्रह्मलोकं समुल्लङ्घ्य याति गोलोकमुत्तमम्
ब्रह्मणा पूजितः सोऽपि मधुपर्कादिना च यः। स्तुतः सुरैश्च सिद्धैश्च परमानन्दभावनः ॥
ज्ञानसारं तपःसारं ब्रह्मसारं परं शिवम्। शिवेनोक्तं योगसारं श्रीकृष्णपदसेवनम् ॥
ब्रह्मादितृणपर्यन्तं सर्वं मिथ्यैव स्वप्नवत्। भज सत्यं परं ब्रह्म राधेशं प्रकृतेः परम् ॥
अतीव सुखदं सारं भक्तिदं मुक्तिदं परम्। सिद्धियोगप्रदं चैव दातारं सर्वसंपदाम् ॥
योगिनामपि सिद्धानां यतीनां च तपस्विनाम्। सर्वेषां कर्मभोगोऽस्ति न नारायणसेविसेविनाम्

१ क. ज्ञाने॰। २ क. व्रती॰।

भस्मसाच्च भवेत्पापं यदुपस्पर्शमात्रतः । ज्वलदग्नौ पातितं च यथा शुष्केन्धनं तथा ॥
ततो रोगा हि वेपन्ते पापानि च भयानि च । दूरतश्च पलायन्ते यमदूतास्ततो भयात् ॥
तावन्निबद्धः संसारे कारागारे विशेषेण नः । न यावत्कृष्णमन्त्रं च प्राप्नोति गुरुवक्त्रतः ॥
कृतकर्मौघभोगाख्यनिगडच्छेदकारणम् । मायाजालच्छेदकरं मायापाशनिकृन्तनम् ॥
गोलोकमार्गसोपानं निस्तारे बीजकारणम् । भक्त्यङ्कुरस्वरूपं च नित्यं वृद्धमनश्वरम् ॥
सारं च सर्वतपसां योगानां साधनं तथा । सिद्धीनां वेदपाठानां व्रतानां च निश्चितम्
दानानां तीर्थस्नानानां यज्ञादीनां पुरंदर । पूजानामुपवासानामित्याह कमलोद्भवः ॥
पुंसां लक्षं पितॄणां च शतं मातामहस्य च । पूर्वं परं च तत्संख्यं पितरं मातरं गुरुम् ॥
सहोदरं कलत्रं च बन्धुं शिष्यं च किंकरम् । समुद्धरेच्च श्वशुरं श्वश्रूकन्यां च तत्सुतम्
स्वात्मानं च सतीर्थ्यं च गुरुपत्नीं गुरोः सुतम् । उद्धरेद्धेलयाभक्तो मन्त्रग्रहणमात्रतः ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः । तत्स्पर्शपूतस्तीर्थौघः सद्यः पूता वसुंधरा ॥
अनेकजन्मपर्यन्तं दीक्षाहीनो भवेन्नरः । तदन्यदेवमन्त्रं च लभते पुण्यलेशतः ॥ ९७ ॥
सप्तजन्मसु देवानां कृत्वा सेवां स्वकर्मतः । लभते च रवेर्मन्त्रं साक्षिणः सर्वकर्मणाम् ॥
जन्मत्रयं भास्करं च सेवित्वा मानवः शुचिः । लभेद्गणेशमन्त्रं च सर्वविघ्नहरं परम् ॥
जन्मत्रयं तं निषेव्य निर्विघ्नश्च भवेन्नरः । विघ्नेशस्य प्रसादेन दिव्यज्ञानं लभेन्नरः १००
तदा ज्ञानप्रदीपेन समालोच्य महामतिः । अज्ञानान्धमपिच्छित्त्वा महामायां भजेन्नरः ॥
प्रकृतिं विष्णुमायां च दुर्गां दुर्गतिनाशिनीम् । सिद्धिदां सिद्धिरूपां च परमां सिद्धि-
योगिनीम् ॥ १०२ ॥
वाणीरूपां च पद्मां च भद्रां कृष्णप्रियात्मिकाम् । नानारूपां तां निषेव्य जन्मानां शतकं नरः
तत्प्रसादाद्भवेज्ज्ञानी ज्ञानानन्दं तदा भजेत् । कृष्णं ज्ञानाधिदेवं च महादेवं सनातनम्
शिवं शिवस्वरूपं च शिवदं शिवकारणम् । परमानन्दरूपं च परमानन्ददायिनम् ॥
सुखदं मोक्षदं चैव दातारं सर्वसंपदाम् । अमरत्वादं चैव दीर्घमायुःप्रदं परम् ॥ १०६ ॥
इन्द्रत्वं च मनुत्वं च दातुं शक्तं च लीलया । राजेन्द्रत्वप्रदं चैव ज्ञानदं हरिभक्तिदम् ॥
जन्मत्रयं तमाराध्य चाऽऽशुतोषप्रसादतः । सर्वदस्य प्रसादेन शंकरस्य महात्मनः ॥
वरदस्य वरेणैव हरिभक्तिं लभेद्ध्रुवम् । तदा तद्भक्तसंसर्गात्कृष्णमन्त्रं लभेद्ध्रुवम् ॥
निर्मलज्ञानदीपेन प्रदीप्तेन च तत्त्ववित् । ब्रह्मादितृणपर्यन्तं सर्वं मिथ्यैव पश्यति ॥
दयानिधेः प्रसादेन निर्मलज्ञानमाप्नुयात् । वरदस्य वरेणैव हरिभक्तिं लभेद्ध्रुवम् ॥
तदा निर्वृतिमाप्नोति सारात्सारां परात्पराम् । यत्र देहे लभेन्मन्त्रं तद्देहावधि भारते ॥

---

१ क. जपाना° । २ क. °रूपिणाम् । ३ क. च प्रथमा भ°।

तत्पाञ्चभौतिकं त्यक्त्वा बिभर्ति दिव्यरूपकम् । करोति दास्यं गोलोके वैकुण्ठे वा हरेः पदे
परमानन्दसंयुक्तो मोहादिषु विवर्जितः । न विद्यते पुनर्जन्म पुनरागमनं हरे । ११४ ॥
पुनश्च न पिबेत्क्षीरं भृत्वा मातृस्तनं परम् । विष्णुमन्त्रोपासकानां गङ्गादितीर्थसेविनाम् ॥
स्वधर्मिणां च भिक्षूणां पुनर्जन्म न विद्यते । तीर्थे परित्यजेत्पापं क्लेशं कृत्वा हरिं भजेत्
अयं निरूपितो धात्रा स्वधर्मस्तीर्थसेविनाम् तन्नाममन्त्रं प्रजपेत्तत्सेवादिषु तत्परः ॥
तदन्ननोपवासरत इत्युक्तो विष्णुसेविनाम् । सदन्ने वा कदन्ने वा लोष्टे वा काञ्चने तथा ॥
समबुद्धिर्यस्य शश्वत्स संन्यासीति कीर्तितः । दण्डं कमण्डलुं रक्तवस्त्रमात्रं च धारयेत्
नित्यं प्रवासी नैकत्र स्थः संन्यासीति० । शुद्धाचारद्विजान्नं च भुङ्क्ते लोभादि वर्जितः
किंतु किंचिन्न याचेत स संन्यासीति० । न व्यापारी नाऽऽश्रमी च सर्वकर्मविवर्जितः
ध्यायेन्नारायणं शश्वत्स संन्यासीति० । शश्वन्मौनी ब्रह्मचारी संभाषापरिवर्जितः ॥
सर्वं ब्रह्ममयं पश्येत्स संन्यासीति० । सर्वत्र समबुद्धिश्च हिंसामायाविवर्जितः ॥
क्रोधाहंकाररहितः स संन्यासीति० । अयाचितोपस्थितं च मिष्टामिष्टं च भुक्तवान् ॥
न याचते भक्षणार्थी स संन्यासीति० । न च पश्येन्मुखं स्त्रीणां न तिष्ठेत्तत्समीपतः ॥
दारवीमपि योषां च न स्पृशेद्यः स भिक्षुकः । अयं संन्यासिनां धर्म इत्याह कमलोद्भवः ॥
विपर्यये तिनाशश्च जन्म याम्यं भयं भवेत् । जन्मदुःखं याम्यदुःखं जीविनामतिदारुणम् ॥
सुरसूकरयोनौ वा गर्भे दुःखं समं सुर । योनौ वा क्षुद्रजन्तूनां पक्षिणां तथैव च ॥१२८॥
गर्भे स्मरन्ति सर्वं ते कर्म जन्मशतोद्भवम् । विस्मरेन्निर्गतो जीवो गर्भाद्वै विष्णुमायया ॥
स्वदेहं पाति यत्नेन सुरो वा कीट एव वा ॥ १२९ ॥
योनेरभ्यन्तरे शुक्रे पतिते पुरुषस्य च । शुक्रं शोणितयुक्तं च सहसा तत्क्षणं भवेत् ॥
रक्ताधिक्ये मातृसमश्चान्तरे पितृसाकृतिः । युग्माहे च भवेत्पुत्रः कन्यका तद्विपर्यये १३ ॥
रविभौमगुरूणां च वारे चेत्तद्भवेत्सुतः । अयुग्माहे तदितरे वारे वै कन्यका भवेत् १३२॥
प्रथमप्रहरे जन्म यस्य सोऽल्पायुरेव च । द्वितीये मध्यमश्चैव तृतीये तत्परो भवेत् ॥१३३॥
चतुर्थे चिरजीवी स्याल्लक्षणानामनुरूपकः । दुःखी वाऽथ सुखी वाऽपि पूर्वकर्मानुरूपतः ॥
यादृशे च क्षणे जन्म प्रसवस्तादृशो भवेत् । प्रसूतिलक्षणचर्चां च कुर्वन्त्येवं विचक्षणाः १३५॥
कललं त्वेकरात्रेण प्रवृद्धः स्याद्दिने दिने । सप्तमे बदराकारो मासे गण्डुसमो भवेत् ॥
मासत्रये मांसपिण्डो हस्तपादादिवर्जितः । सर्वावयवसंपन्नो देही मासे च पञ्चमे ॥ १३७॥
भवेत्तु जीवसंचारः षण्मासे सर्वतत्त्ववित् । दुःखी स्वल्पस्थलस्थायी शकुन्त इव पञ्जरे ॥

---

१ क. धर्म'।

मातृजग्धान्नपानं च भुङ्क्तेऽमेध्यस्थले स्थितः। हाहेति शब्दं कृत्वा च चिन्तयेदीश्वरं परम्॥ १३९॥
एवं च चतुरो मासानुक्त्वा परमयातनाम्। प्रेरितो वायुना काले गर्भाद्वै निर्गतो भवेत्॥
दिग्देशकालाव्युत्पन्नो विस्मृतो विष्णुमायया। शश्वद्विण्मूत्रसंयुक्तः शिशुः स्याच्छैशवावधि
परायत्तोऽप्यक्षमश्च मशकादिनिवारणे। कीटादिभुक्तो दुःखी च रौति तत्र पुनः पुनः॥
स्तनान्धोऽप्यसमर्थश्च याच्ञां कर्तुमभीप्सिताम्। न वाणी निःसरेत्तस्य पौगण्डावधि सुस्फुटा॥ १४३॥
पौगण्डे यातनां भुक्त्वा प्राप्नुते यौवनं पुनः। न स्मरेन्मायया देही गर्भादियातनां पुनः॥
आहारमैथुनार्तश्च नानामोहादिवेष्टितः। पुत्रं कलत्रमनुगं यत्नेन परिपालयेत्॥ १४५॥
एवं यावत्समर्थश्च तावदेव हि पूजितः। असमर्थं च मन्यन्ते बान्धवा गोजरं यथा॥
यदाऽतीव जरायुक्तो जडोऽतिबधिरो भवेत्। कफश्वासादियुक्तश्च परायत्तोऽतिमूढवत्॥
तदन्तरेऽनुतापं च कुरुते संततं पुनः। न सेवितं हरेस्तीर्थं सत्सङ्गश्चेति तापनः॥
पुनश्च मानवीं योनिं लभामि भारते यदि। तदा तीर्थं गमिष्यामि भजे वै कृष्णमित्यहो॥
इत्येवमादि मनसि कुर्वन्तं तं जडं सुर। गृह्णाति यमदूतश्च काले प्राप्तेऽतिदारुणः॥
स पश्येद्यमदूतं च पाशहस्तं च दण्डिनम्। अतीव कोपरक्तास्यं विकृताकारमुल्बणम्॥
दुर्निवार्यमुपायैश्च बलिष्ठं च भयंकरम्। दुर्दृश्यं सर्वसिद्धानां सर्वादृश्यं पुरःस्थितम्॥
दृष्ट्वा त्रासमहाभीतो विण्मूत्रं च समुत्सृजेत्। तदा प्राणांस्त्यजेत्सद्यो देहं वै पाञ्चभौतिकम्
अङ्गुष्ठमात्रं पुरुषं गृहीत्वा यमकिंकरः। विन्यस्य भोगदेहे च स्वस्थानं प्रापयेद्द्रुतम्॥
जीवो गत्वा यमं पश्येत्सर्वधर्मज्ञमेव च। रत्नसिंहासनस्थं च सस्मितं सुस्थिरं परम्॥
धर्माधर्मविचारज्ञं सर्वज्ञं सर्वतोमुखम्। विश्वेष्वेकाधिकारं च विधात्रा निर्मितं पुरा॥
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम्। वेष्टितं पार्षदगणैर्दूतैश्चापि त्रिकोटिभिः॥
जपन्तं श्रीकृष्णनाम शुद्धस्फटिकमालया। ध्यायमानं तत्पदाब्जं पुलकाङ्कितविग्रहम्॥
सगद्गदं साश्रुनेत्रं सर्वत्र समदर्शिनम्। अतीव कमनीयं च शश्वत्सुस्थिरयौवनम्॥ १५९॥
स्वतेजसा प्रज्वलन्तं सुदृश्यं विचक्षणम्। शरत्पार्वणचन्द्राभं चित्रगुप्तपुरःस्थितम्॥
पुण्यात्मनां शान्तरूपं पापिनां च भयंकरम्। तं दृष्ट्वा प्रणमेद्देही महाभीतश्च तिष्ठति॥
चित्रगुप्तविचारेण येषां यदुचितं फलम्। शुभाशुभं च कुरुते तदेव रविनन्दनः॥ १६२॥
एवं तेषां गतायाते निवृत्तिर्नास्ति जीविनाम्। निवृत्तिहेतुरूपं च श्रीकृष्णपदसेवनम्॥

१ गोजरं वृद्धवृषभमित्यर्थः। २ क ॰न्द्रास्यं।

इत्येवं कथितं सर्वं वरं प्रार्थय वाञ्छितम् । सर्वं दास्यामि ते वत्स न मेऽसाध्यं च किंचन

महेन्द्र उवाच—

इन्द्रत्वं च गतं मद्यं किमैश्वर्ये प्रयोजनम् । कल्पवृक्ष मुनिश्रेष्ठ देहि मे परमं पदम् ॥

महेन्द्रस्य वचः श्रुत्वा प्रहस्य मुनिपुंगवः । तमुवाच वचः सत्यं वेदोक्तं सारमेव च ॥

दुर्वासा उवाच—

परं पदं विषयिणां महेन्द्रातिसुदुर्लभम् । मुक्तिर्युष्मद्विधानां च न लये प्राकृतेऽपि च ॥

आविर्भावः सृष्टिविधौ तिरोभावो लयेऽपि च । यथा जागरणं सुप्तिर्भवत्येव क्रमेण च ॥

यथा भ्रमति कालश्च तथा विषयिणो ध्रुवम् । चक्रनेमिक्रमेणैव नित्यमेवेश्वरेच्छया ॥

पलमेकं भवेदेव यथा विपलषष्टिभिः । षष्टिभिश्च पलैर्दण्डो मुहूर्तो द्विगुणात्ततः ॥

त्रिंशद्भिश्च मुहूर्तैश्च भवेदेव दिवानिशम् । दश पञ्च दिवारात्रिः पक्षमेकं विदुर्बुधाः ॥

पक्षाभ्यां शुक्लकृष्णाभ्यां मास एव विधीयते । ऋतुर्द्वाभ्यां च मासाभ्यां संख्याविद्भिः प्रकीर्तितः ॥१७२॥

ऋतुत्रयेणायनं च ताभ्यां द्वाभ्यां च वत्सरः । त्रिंशत्सहस्रविकैश्च त्रिचत्वारिंशलक्षकैः ॥

वत्सरैर्नरमानैश्च युगानां च चतुष्टयम् । षष्ट्यधिके पञ्चशते सहस्रे पञ्चविंशतौ ॥१७४॥

युगे नराणां शक्रायुर्मनोरायुः प्रकीर्तितम् । दिग्लक्षेन्द्रनिपातेऽष्टसहस्राधिक एव च ॥

निपातो ब्रह्मणस्तत्र भवेत्प्राकृतिको लयः । लये प्राकृतिके वत्स कृष्णस्य परमात्मनः ॥

चक्षुर्निमेषः सृष्टिश्च पुनरुन्मीलने तथा । ब्रह्मसृष्टिलयानां च संख्या नास्ति श्रुतौ श्रुतम् ॥

यथा पृथिव्या रेणूनामित्यूचे चन्द्रशेखरः । एतेषां मोक्षणं नास्ति कथितानि च यानि तु ॥

सृष्टिसूत्रस्वरूपं हि चान्यद्वृणु वरं सुर । मुनीन्द्रस्य वचः श्रुत्वा देवेन्द्रो विस्मितो मुने ॥

आत्मनः पूर्वमैश्वर्यं वरयामास तत्र वै । तत्प्राप्स्यस्यचिरेणैवेत्युक्त्वा स प्रययौ गृहम् ॥

इन्द्रो ललाभ ज्ञानं च न संपदापदं विना ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्वासःसुरेन्द्रसं० लक्ष्म्युपा० इन्द्रं प्रति दुर्वासःशापादिकथनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

अथ सप्तत्रिंशोऽध्यायः ।

---

२ क. °रूपोऽसि चा° ।

नारद उवाच —

हरेर्गुणं समाकर्ण्य ज्ञानं प्राप्य पुरंदरः । किं चकार गृहं गत्वा तन्मे व्याख्यातुमर्हसि ॥

नारायण उवाच—

श्रीकृष्णस्य गुणं श्रुत्वा वीतरागो बभूव सः । वैराग्यं वर्धयामास तस्य ब्रह्मन्दिने दिने ॥

मुनिस्थानाद्गृहं गत्वा स ददर्शामरावतीम् । दैत्यैरसुरसंघैश्च समाकीर्णां भयाकुलाम् ॥

विषण्णबान्धवां चैव बन्धुहीनां च कुत्रचित । पितृमातृकलत्रादिविहीनामतिचञ्चलाम् ॥

शत्रुग्रस्तां च दृष्ट्वा तामगच्छद्वाक्पतिं प्रति । शक्रो मन्दाकिनीतीरे ददर्श गुरुमीश्वरम् ।

ध्यायमानं परं ब्रह्म गङ्गातोये स्थितं परम् । सूर्याभिमुखं पूर्वमुखं वै विश्वतोमुखम् ॥

साश्रुनेत्रं पुलकितं परमानन्दसंयुतम् । वरिष्ठं च गरिष्ठं च धर्मिष्ठं चेष्टसेविनम् ॥ ७ ॥

श्रेष्ठं च बन्धुवर्गाणामतिश्रेष्ठं च मानिनाम् । ज्येष्ठं च भ्रातृवर्गाणां नेष्टं च सुरवैरिणाम् ॥

दृष्ट्वा गुरुं जपन्तं च तत्र तस्थौ सुरेश्वरः । प्रहरान्ते गुरुं दृष्ट्वा चोत्थितं प्रणनाम सः

प्रणम्य चरणाम्भोजे रुरोदोच्चैर्मुहुर्मुहुः । वृत्तान्तं कथयामास ब्रह्मशापादिकं तथा ॥

पुनर्वरो मया लब्धो ज्ञानप्राप्तिं सुदुर्लभाम् । वैरिग्रस्तां स्वीयपुरीं क्रमेणैव सुरेश्वरः ॥११॥

शिष्यस्य वचनं श्रुत्वा सतां बुद्धिमतां वरः । बृहस्पतिरुवाचेदं कोपरक्तान्तलोचनः ॥१२॥

बृहस्पतिरुवाच—

श्रुतं सर्वं सुरश्रेष्ठ मा रोदीर्वचनं शृणु । न कातरो हि नीतिज्ञो विपत्तौ स्यात्कदाचन ॥

संपत्तिर्वा विपत्तिर्वा नश्वरा स्वप्नरूपिणी । पूर्वस्वकर्मायत्ता च स्वयं कर्ता तयोरपि ॥

सर्वेषां च भवत्येव शश्वज्जन्मनि जन्मनि । चक्रनेमिक्रमेणैव तत्र का परिदेवना ॥१५॥

भुङ्क्ते हि स्वकृतं कर्म सर्वत्रापि च भारते । शुभाशुभं च यत्किंचित्स्वकर्मफलभुक्पुमान् ॥

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥

इत्येवमुक्तं वेदे च कृष्णेन परमात्मना । साम्नि कौथुमशाखायां संबोध्य स्वकुलोद्भवम् ॥

जन्म भोगावशेषे च सर्वेषां कृतकर्मणाम् । अनुरूपं च तेषां वै भारतेऽन्यत्र चैव हि ॥

कर्मणा ब्रह्मशापं च कर्मणा च शुभाशिषम् । कर्मणा च महालक्ष्मीं लभेद्दैन्यं च कर्मणा ॥

कोटिजन्मार्जितं कर्म जीविनामनुगच्छति । न हि त्यजेद्विना भोगात्तं छायेव पुरंदर ॥

कालभेदे देशभेदे पात्रभेदे च कर्मणाम् । न्यूनताऽधिकता वाऽपि भवेदेव हि कर्मणाम् ॥

वस्तुदाने च वस्तूनां समं पुण्यं समे दिने । दिनभेदे कोटिगुणमसंख्यं वाऽधिकं ततः ॥

समदेशे च वस्तूनां दाने पुण्यं समं वृषन् । देशभेदे कोटिगुणमसंख्यं वा धिकं ततः ॥

समे पात्रे समं पुण्यं वस्तूनां कर्तुरेव च । पात्रभेदे शतगुणमसंख्यं वा ततोऽधिकम् ॥

यथा फलन्ति सस्यानि न्यूनान्यप्यधिकानि च। कर्षकाणां क्षेत्रभेदे पात्रभेदे फलं तथा॥
सामान्यदिवसे विप्रे दानं समफलं भवेत्। अमायां रविसंक्रान्त्यां फलं शतगुणं भवेत्॥
चातुर्मास्यां पौर्णमास्यामनन्तफलमेव च ॥ २७ ॥
ग्रहणे शशिनः कोटिगुणं च फलमेव च। सूर्यस्य ग्रहणे चापि ततो दशगुणं फलम्॥
अक्षयायामक्षयं चाप्यसंख्यफलमुच्यते। एवमन्यत्र पुण्याहे फलाधिक्यं भवेदिह॥ २९॥
यथा दाने तथा स्नाने जपे वै पुण्यकर्मसु। एवं सर्वत्र बोद्धव्यं नराणां कर्मणां फलम्॥३०॥
सामान्यदेशे दानं च विप्रे समफलं भवेत्। तीर्थे देवगृहे चैव फलं शतगुणं स्मृतम्॥ ३१॥
गङ्गायां वै कोटिगुणं क्षेत्रे नारायणेऽव्ययम्। कुरुक्षेत्रे बदर्यां च काश्यां कोटिगुणं तथा॥
यथा च वै कोटिगुणं तथा वै विष्णुमन्दिरे। केदारे वै लक्षगुणं हरिद्वारे तथा फलम्॥३३॥
पुष्करे भास्करक्षेत्रे दशलक्षगुणं फलम्। एवं सर्वत्र बोद्धव्यं फलाधिक्यं क्रमेण च॥
सामान्यब्राह्मणे दानं सममेव फलं लभेत्। लक्षं त्रिसंध्यं पूते च पण्डिते च जितेन्द्रिये॥
विष्णुमन्त्रोपासके च बुधे कोटिगुणं फलम्। एवं सर्वत्र बोद्धव्यं फलाधिक्यं गुणाधिके॥
यथा दण्डेन सूत्रेण शरावेण जलेन च। कुम्भं निर्माति चक्रेण कुम्भकारो मृदा भुवि॥
तथैव कर्मसूत्रेण फलं धाता ददाति च। यस्याऽऽज्ञया सृष्टिविधौ तं च नारायणं भज॥
स विधाता विधातुश्च पातुः पाता जगत्त्रये। स्रष्टुः स्रष्टा च संहर्तुः संहर्ता कालकालकः॥
महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम्। विपत्तौ तस्य संपत्तिर्भवेदित्याह शंकरः। ४०॥
इत्येवमुक्त्वा जीवश्च समालिङ्ग्य सुरेश्वरम्। दत्त्वा शुभाशिषं चेष्टं बोधयामास नारद॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० लक्ष्म्यु० बृहस्पतिमहेन्द्रसंवादे कर्मफलनिरूपणं नाम सप्तत्रिंशोऽध्यायः॥ ३७॥

---

अथाष्टत्रिंशोऽध्यायः।

---

**नारायण उवाच—**

हरिं ध्यात्वा हरिर्ब्रह्मन्जगाम ब्रह्मणः सभाम्। बृहस्पतिं पुरस्कृत्य सर्वैः सुरगणैः सह॥
शीघ्रं गत्वा ब्रह्मलोकं दृष्ट्वा च कमलोद्भवम्। प्रणेमुर्देवताः सर्वा गुरुणा सह नारद॥२॥
वृत्तान्तं कथयामास सुराचार्यो विधिं विभुम्। प्रहस्योवाच तच्छ्रुत्वा महेन्द्रं कमलोद्भवः॥

**ब्रह्मोवाच—**

वत्स मद्वंशजातोऽसि प्रपौत्रो मे विचक्षण। बृहस्पतेश्च शिष्यस्त्वं सुराणामधिपः स्वयम्॥

मातामहस्ते दक्षश्च विष्णुभक्तः प्रतापवान् कुलत्रयं यस्य शुद्धं कथं सोऽहंकृतो भवेत् ॥
माता पतिव्रता यस्य पिता शुद्धो जितेन्द्रियः मातामहो मातुलश्च कथं सोऽहंकृतो भवेत् ॥
जनः पैतृकदोषेण दोषान्मातामहस्य च गुरोर्दोषात्त्रीतिदोषैर्हरिद्वेषी भवेद्ध्रुवम् । ७ ॥
सर्वान्तरात्मा भगवान्सर्वदेहेष्ववस्थितः । यस्य देहात्स प्रयाति स शवस्तत्क्षणं भवेत् ।
मनोऽहमिन्द्रियेशश्च ज्ञानरूपो हि शंकरः अहं वः प्रकृतिर्विष्णुर्बुद्धिर्भगवती सती ॥
निद्रादयः शक्तयश्च ताः सर्वाः प्रकृतेः कलाः आत्मनः प्रतिबिम्बं च जीवो भोगी शरीर-
भृत् । १० ॥
आत्मनीशे गते देहात्सर्वे यान्ति ससंभ्रमात् यथा वर्त्मनि गच्छन्तं नरदेवमिवानुगाः ॥
अहं शिवश्च शेषश्च विष्णुर्धर्मो महान्विराट् । वयं यदंशा भक्ताश्च तत्पुष्पं न्यक्कृतं त्वया ॥
शिवेन पूजितं पादपद्मं पुष्पेण येन च । तच्च दुर्वाससा दत्तं दैवेनान्यकृतं सुर ॥ १३ ॥
तत्पुष्पं मस्तके यस्य कृष्णपादाब्ज-च्युतम् सर्वेषां वै सुराणां च तत्पूजा पुरतो भवेत् ॥
दैवेन वञ्चितस्त्वं च दैवं च बलवत्तरम् भाग्यहीनं जनं मूढं को वा रक्षितुमीश्वरः ॥१९॥
कृष्णं न मन्यते यो हि श्रीनाथं सर्ववन्दितम् । प्रयाति रुष्टा तद्दासी महालक्ष्मीर्विहाय तम् ।
शतयज्ञेन या लब्धा दीक्षितेन त्वया पुरा । सा श्रीर्गताऽधुना कोपात्कृष्णनिर्माल्यवर्जनात्
अधुना गच्छ वैकुण्ठं मया च गुरुणा सह । निषेव्य तत्र श्रीनाथं श्रियं प्राप्स्यसि तद्वरात् ॥
इत्येवमुक्त्वा स ब्रह्मा सर्वैः सुरगणैः सह शीघ्रं जगाम वैकुण्ठं यत्र श्रीशस्तया सह ॥
तत्र गत्वा परं ब्रह्म भगवन्तं सनातनम् । दृष्ट्वा तेजःस्वरूपं च प्रज्वलन्तं स्वतेजसा
ग्रीष्ममध्याह्नमार्तण्डशतकोटिसमप्रभम् । शान्तं चानादिमध्यान्तं लक्ष्मीकान्तमनन्तकम्
चतुर्भुजैः पार्षदैश्च सरस्वत्या स्तुतं नतम् । भक्त्या चतुर्भिर्वेदैश्च गङ्गया परिषेवितम् ॥
तं प्रणेमुः सुराः सर्वे मूर्ध्ना ब्रह्मपुरोगमाः । भक्तिनम्राः साश्रुनेत्रास्तुष्टुवुः पुरुषोत्तमम् ॥
वृत्तान्तं कथयामास स्वयं ब्रह्मा कृताञ्जलिः । रुरुदुर्देवताः सर्वाः स्वाधिकारच्युताश्च ताः ॥
स चापश्यत्सुरगणं विपद्ग्रस्तं भयाकुलम् । वस्त्रभूषणशून्यं च वाहनादिविवर्जितम् ॥
शोभाशून्यं हतश्रीकं परिवारैरनावृतम् । उवाच कातरं दृष्ट्वा विपन्नभयभञ्जनः ॥

नारायण उवाच—

मा भैर्ब्रह्मन्हे सुराश्च भयं किं वो मयि स्थिते दास्यामि लक्ष्मीमचलां परमैश्वर्यवर्धिनीम् ॥
किंच मद्वचनं किंचिच्छ्रूयतां समयोचितम् । हितं सत्यं सारभूतं परिणामसुखावहम् ॥
जनाश्चासंख्यविश्वस्था मदधीनाश्च संततम् । यथा तथाऽहं मद्भक्तैः पराधीनः स्वतन्त्रकः ॥
यो यो रुष्टो हि मद्भक्ते मत्परे हि निरङ्कुशः । तद्गृहेऽहं न तिष्ठामि पद्मया सह निश्चितम् ॥

दुर्वासाः शंकरांशश्च वैष्णवो मत्परायणः। तच्छापादागतोऽहं च मश्रीको नो गृहादपि ॥
यत्र शङ्खध्वनिर्नास्ति तुलसी च शिलार्चनम्। न भोजनं च विप्राणां न पद्मा तत्र तिष्ठति ॥
मद्भक्तानां च मे निन्दा यत्र यत्र भवेत्सुराः। महारुष्टा महालक्ष्मीस्ततो याति पराभवात् ॥
मद्भक्तिहीनो यो मूढो यो भुङ्क्ते हरिवासरे। मम जन्मदिने चापि याति श्रीस्तद्गृहादपि
मन्त्र मद्विक्रयी यश्च विक्रीणाति स्वकन्यकाम्। यत्रातिथिर्न भुङ्क्ते च मत्प्रिया याति तद्गृहात्
पापिनां यो गृहं याति शूद्रश्राद्धादिभोजिनाम्। महारुष्टा ततो याति मन्दिरात्कमलालया ॥
शूद्राणां शवदाही च भाग्यहीनश्च वाडवः। याति रुष्टा तद्गृहाच्च देवी कमलवासिनी ॥
शूद्राणां सूपकारो यो ब्राह्मणो वृषवाहकः। तत्तोयपानभीता च कमला याति तद्गृहात् ॥
विप्रो यवनसेवी च देवलः शूद्रयाजकः। ततोऽपमानभीता च वैष्णवी याति तद्गृहात् ॥
विश्वासघाती मित्रघ्नो नरघाती कृतघ्नकः। अगम्यां याति यो विप्रो मद्भार्या याति तद्गृहात्
अशुद्धहृदयः क्रूरो हिंसको निन्दको द्विजः। ब्राह्मण्यां शूद्रजातश्च याति देवी च तद्गृहात्
यो विप्रः पुंश्चलीपुत्रो महापापी च तत्पतिः। अवीरान्नं च यो भुङ्क्ते तस्माद्याति जगत्प्रसूः
तृणं छिनत्ति नखरैस्तैर्वा यो हि लिखेन्महीम्। जिह्मो वा मलवासाश्च सा प्रयाति च तद्गृहात्
सूर्योदये च द्विर्भोजी दिवाशायी च वाडवः। दिवा मैथुनकारी च तस्माद्याति हरिप्रिया ॥
आचारहीनो यो विप्रो यश्च शूद्रप्रतिग्रही। अदीक्षितो हि यो मूढस्तस्माल्लोला प्रयाति च ॥
स्निग्धपादश्च नग्नो वा यः शेते ज्ञानदुर्बलः। शश्वद्धर्मोऽतिवाचालो याति वै तद्गृहात्सती ॥
शिरःस्नातश्च तैलेन योऽन्यदङ्गमुपस्पृशेत्। स्वाङ्के च वादयेद्वाद्यं रमा याति च तद्गृहात् ॥
व्रतोपवासहीनो यः संध्याहीनोऽशुचिर्द्विजः। विष्णुभक्तिविहीनो यस्तस्माद्याति हरिप्रिया
ब्राह्मणान्निन्दयेद्यो हि तान्वै द्वेष्टि च संततम्। हिंसाकारी दयाहीनो याति सर्वप्रसूस्ततः ॥
यत्र यत्र हरेरर्चा हरेरुत्कीर्तनं शुभम्। तत्र तिष्ठति सा देवी कमला सर्वमङ्गला ॥ ९० ॥
यत्र प्रशंसा कृष्णस्य तद्भक्तस्य पितामह। सा च कृष्णप्रिया देवी तत्र तिष्ठति संततम् ॥
यत्र शङ्खध्वनिः शङ्खः शिला च तुलसीदलम्। तत्सेवा वन्दनं ध्यानं तत्र सा तिष्ठति स्वयम् ॥ ९२ ॥
शिवलिङ्गार्चनं यत्र तस्य चोत्कीर्तनं शुभम्। दुर्गार्चनं तद्गुणाश्च तत्र पद्मनिवासिनी ॥
विप्राणां सेवनं यत्र तेषां वै भोजनं शुभम्। अर्चनं सर्वदेवानां तत्र पद्ममुखी सती ॥
इत्युक्त्वा च सुरान्सर्वान्रमामाह रमापतिः। क्षीरोदसागरे जन्म लभस्व कलया रमे ॥
इत्युक्त्वा तां जगन्नाथो ब्रह्माणं पुनराह च। मथित्वा सागरं लक्ष्मीं देवेभ्यो देहि पद्मज
इत्युक्त्वा कमलाकान्तो देवश्चान्तरधान्मुने। देवाश्चिरेण कालेन ययुः क्षीरोदमागरम् ॥

मन्थानं मन्दरं कृत्वा कूर्मं कृत्वा च भाजनम् । रज्जुं कृत्वा वासुकिं च मम थुश्चैव सागरम्
धन्वन्तरिं च पीयूषमुच्चैःश्रवसमीप्सितम् । नानारत्नं हस्तिरत्नं प्रापुर्लक्ष्मीं पुरातनीम् ॥
वनमालां ददौ सा च क्षीरोदशायिने मुने । सर्वेश्वराय रम्याय विष्णवे वैष्णवी सती ॥
देवैः स्तुता पूजिता च ब्रह्मणा शंकरेण च । ददौ दृष्टिं सुरगृहे ब्रह्मशापविमोचिताम् ॥
प्रापुर्देवाः स्वविषयं दैत्यग्रस्तं भयंकरैः । महालक्ष्मीप्रसादेन वरदानेन नारद ॥ ६२ ॥
इत्येवं कथितं सर्वं लक्ष्म्युपाख्यानमुत्तमम् । सुखदं सारभूतं च किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० लक्ष्म्युपा० समुद्रमथनं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

====

## अथैकोनचत्वारिंशोऽध्यायः ।

नारद उवाच—

हरेरुत्कीर्तनं भद्रं श्रुतं तज्ज्ञानमुत्तमम् । ईप्सितं लक्ष्म्युपाख्यानं ध्यानं स्तोत्रादिकं वद
हरिणा पूजिता पूर्वं ततो ब्रह्मादिभिस्तथा । शक्रेण भ्रष्टराज्येन सार्धं सुरगणेन च ॥ २ ॥
ध्यानेन पूजिता केन विधिना केन वा पुरा । केन स्तुता वा स्तोत्रेण तन्मे व्याख्यातुमर्हसि

नारायण उवाच—

स्नात्वा तीर्थे पुरा शक्रो धृत्वा धौते च वाससी । घटं संस्थाप्य क्षीरोदे देवषट्कं च पूजयेत्
गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम् । एतान्भक्त्या समभ्यर्च्य पुष्पगन्धादिभिस्तथा
तत्राऽऽवाह्य महालक्ष्मीं परमैश्वर्यरूपिणीम् । पूजां चकार देवेशो ब्रह्मणा च पुरोधसा ॥
पुरःस्थितेषु मुनिषु ब्राह्मणेषु गुरौ तथा । देवादिषु च देवेशे ज्ञानानन्दे शिवे मुने ॥ ७ ॥
पारिजातस्य पुष्पं च गृहीत्वा चन्दनोक्षितम् । ध्यात्वा देवीं महालक्ष्मीं पूजयामास नारद
ध्यानं च सामवेदोक्तं यदुक्तं ब्रह्मणे पुरा । ध्यानेन हरिणा तेन तन्निबोध वदामि ते ॥
सहस्रदलपद्मस्य कर्णिकावासिनीं पराम् । शरत्पार्वणकोटीन्दुप्रभाजुष्टकरां वराम् ॥ १० ॥
सहस्रदलपद्मस्य कर्णिकावासिनीं पराम् । शरत्पार्वणकोटीन्दुप्रभाजुष्टकरां वराम् ॥
स्वतेजसा प्रज्वलन्तीं सुखदृश्यां मनोहराम् । प्रतप्तकाञ्चननिभां शोभां मूर्तिमतीं सतीम्
रत्नभूषणभूषाढ्यां शोभितां पीतवाससा । ईषद्धास्यप्रसन्नास्यां रम्यां सुस्थिरयौवनाम् ॥
सर्वसंपत्प्रदात्रीं च महालक्ष्मीं भजे शुभाम् । ध्यानेनानेन तां ध्यात्वा चोपहारैः सुसंयुतः ॥
संपूज्य ब्रह्मवाक्येन चोपहाराणि षोडश । ददौ भक्त्या विधानेन प्रत्येकं मन्त्रपूर्वकम्

---

१ क. °कं भक्तिपू० ।

प्रशंस्यानि प्रहृष्टानि दुर्लभानि वराणि च । अमूल्यरत्नखचितं निर्मितं विश्वकर्मणा ॥
आसनं च विचित्रं च महालक्ष्मि प्रगृह्यताम् ॥ १९ ॥
शुद्धं गङ्गोदकमिदं सर्ववन्दितमीप्सितम् । पापेध्मवह्निरूपं च गृह्यतां कमलालये ॥
पुष्पचन्दनदूर्वादिसंयुतं जाह्नवीजलम् । शङ्खगर्भस्थितं शुद्धं गृह्यतां पद्मवासिनि ॥
सुगन्धियुक्तं तैलं च सुगन्ध्यामलकीजलम् । देहसौन्दर्यबीजं च गृह्यतां श्रीहरिप्रिये ॥
वृक्षनिर्यासरूपं च गन्धद्रव्यादिसंयुतम् । कृष्णकान्ते पवित्रो वै धूपोऽयं प्रतिगृह्यताम् ॥
मलयाचलसंभूतं वृक्षसारं मनोहरम् । सुगन्धियुक्तं सुखदं चन्दनं देवि गृह्यताम् ॥
जगच्चक्षुःस्वरूपं च ध्वान्तप्रध्वंसकारणम् । प्रदीपं शुद्धरूपं च गृह्यतां परमेश्वरि ॥
नानोपहाररूपं च नानारससमन्वितम् । नानास्वादुकरं चैव नैवेद्यं प्रतिगृह्यताम् ॥
अन्नं ब्रह्मस्वरूपं च प्राणरक्षणकारणम् । तुष्टिदं पुष्टिदं चान्नं मधुरं प्रतिगृह्यताम् ॥
शाल्यक्षतसुपक्वं च शर्करागव्यसंयुतम् । सुस्वादु रम्यं पद्मे च परमान्नं प्रगृह्यताम् ॥
शर्करागव्यपक्वं च सुस्वादु सुमनोहरम् । मया निवेदितं लक्ष्मि स्वस्तिकं प्रतिगृह्यताम् ॥
नानाविधानि रम्याणि पक्वानि च फलानि तु । स्वादुरस्यानि कमले गृह्यतां फलदानि च
सुरभिस्तनसंभूतं सुस्वादु सुमनोहरम् । मर्त्यामृतं च गव्यं वै गृह्यतामच्युतप्रिये ॥
सुस्वादुरससंयुक्तमिक्षुवृक्षरसोद्भवम् । अग्निपक्वप्रपक्वं वा गुडं वै देवि गृह्यताम् ॥
यवगोधूमसस्यानां चूर्णरेणुसमुद्भवम् । सुपक्वगुडगव्याक्तं मिष्टान्नं देवि गृह्यताम् ॥
सस्यचूर्णोद्भवं पक्वं स्वस्तिकादिसमन्वितम् । मया निवेदितं देवि पिष्टकं प्रतिगृह्यताम् ॥
पार्थिवं वृक्षभेदं च विविधैर्द्रव्यकारणम् । सुस्वादुरससंयुक्तमैक्षवं प्रतिगृह्यताम् ॥
शीतवायुप्रदं चैव दाहे च सुखदं परम् । कमले गृह्यतां चेदं व्यजनं श्वेतचामरम् ॥
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् । जिह्वाजाड्यच्छेदकरं ताम्बूलं देवि गृह्यताम् ॥
सुवासितं शीतलं च पिपासानाशकारणम् । जगज्जीवनरूपं च जीवनं देवि गृह्यताम् ॥
देहसौन्दर्यबीजं च सदा शोभाविवर्धनम् । कार्पासजं च क्रिमिजं वसनं देवि गृह्यताम् ॥
रत्नस्वर्णविकारं च देहसौख्यविवर्धनम् । शोभाधारं श्रीकरं च भूषणं प्रतिगृह्यताम् ॥
नानाकुसुमनिर्माणं बहुशोभाप्रदं परम् । सुरलोकप्रियं शुद्धं माल्यं देवि प्रगृह्यताम् ॥ ३७ ॥
शुद्धिदं शुद्धिरूपं च सर्वमङ्गलमङ्गलम् । गन्धवस्तूद्भवं रम्यं गन्धं देवि प्रगृह्यताम् ॥
पुण्यतीर्थोदकं चैव विशुद्धं शुद्धिदं सदा । गृह्यतां कृष्णकान्ते त्वं रम्यमाचमनीयकम् ॥
रत्नसारैः संग्रथितं पुष्पचन्दनसंयुतम् । रत्नभूषणभूषाढ्यं सुतल्पं प्रतिगृह्यताम् ॥ ४० ॥

---

१ ख. °धानं ।

यद्यद्द्रव्यमपूर्वं च पृथिव्यामतिदुर्लभम् । देवभूषाढ्यमोग्यं च तद्द्रव्यं देवि गृह्यताम् ॥
द्रव्याण्येतानि दत्त्वा वै मूलेन च पुरंदरः । मूलं जजाप भक्त्या च दशलक्षं विधानतः ॥
जपेन दशलक्षेण मन्त्रसिद्धिर्बभूव ह । मन्त्रश्च ब्रह्मणा दत्तः कल्पवृक्षश्च सर्वदः ॥४३॥
लक्ष्मीर्मायाा कामवाणी ततः कमलवासिनी । स्वाहान्तो वैदिको मन्त्रराजोऽयं द्वादशाक्षरः
श्रीं ह्रीं क्लीं ऐं कमलवासिन्यै स्वाहा । कुबेरोऽनेन मन्त्रेण सर्वैश्वर्यमवाप्तवान् ॥
राजराजेश्वरो दक्षः सावर्णिर्मनुरेव च । मङ्गलोऽनेन मन्त्रेण सप्तद्वीपवतीपतिः ॥ ४९ ॥
प्रियव्रतोत्तानपादौ केदारो नृप एव च । एते च सिद्धा राजेन्द्रा मन्त्रेणानेन नारद ॥४६॥
सिद्धे मन्त्रे महालक्ष्मीर्ददौ शक्राय दर्शनम् । रत्नेन्द्रसारनिर्माणविमानस्था वरप्रदा ॥
सप्तद्वीपवतीं पृथ्वीं छादयन्ती त्विषा च सा । श्वेतचम्पकवर्णाभा रत्नभूषणभूषिता ॥
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकारिका । बिभ्रती रत्नमालां च कोटिचन्द्रसमप्रभा ॥
दृष्ट्वा जगत्प्रसूं शान्तां तां तुष्टाव पुरंदरः । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रः कृताञ्जलिः ॥
ब्रह्मणा च प्रदत्तेन स्तोत्रराजेन संयतः । सर्वाभीष्टप्रदेनैव वैदिकेनैव तत्र च ॥ ५१ ॥

इन्द्र उवाच—

ॐ नमः कमलवासिन्यै नारायण्यै नमो नमः । कृष्णप्रियायै सारायै पद्मायै च न० ॥
पद्मपत्रेक्षणायै च पद्मास्यायै न० । पद्मासनायै पद्मिन्यै वैष्णव्यै च न० ॥ ५३ ॥
सर्वसंपत्स्वरूपायै सर्वदात्र्यै न० । सुखदायै मोक्षदायै सिद्धिदायै न० ॥ ५४ ॥
हरिभक्तिप्रदात्र्यै च हर्षदात्र्यै न० । कृष्णवक्षःस्थितायै च कृष्णेशायै न० ॥ ५५ ॥
कृष्णशोभास्वरूपायै रत्नाढ्यायै न० । संपत्त्यधिष्ठातृदेव्यै महादेव्यै न० ॥ ५६ ॥
सस्याधिष्ठातृदेव्यै च सस्यलक्ष्म्यै न० । नमो बुद्धिस्वरूपायै बुद्धिदायै न० ॥ ५७ ॥
वैकुण्ठे च महालक्ष्मीर्लक्ष्मीः क्षीरोदसागरे । स्वर्गलक्ष्मीरिन्द्रगेहे राजलक्ष्मीर्नृपालये ॥
गृहलक्ष्मीश्च गृहिणां गेहे च गृहदेवता । सुरभिः सा गवां माता दक्षिणा यज्ञकामिनी ॥
अदितिर्देवमाता त्वं कमला कमलालये । स्वाहा त्वं च हविर्दाने कव्यदाने स्वधा स्मृता
त्वं हि विष्णुस्वरूपा च सर्वाधारा वसुंधरा । शुद्धसत्त्वस्वरूपा त्वं नारायणपरायणा ॥
क्रोधहिंसावर्जिता च वरदा च शुभानना । परमार्थप्रदा त्वं च हरिदास्यप्रदा परा ॥
यया विना जगत्सर्वं भस्मीभूतमसारकम् । जीवन्मृतं च विश्वं च शवतुल्यं यया विना ॥
सर्वेषां च परा त्वं हि सर्वबान्धवरूपिणी । यया विना न संभाष्यो बान्धवैर्बान्धवः सदा
त्वया हीनो बन्धुहीनस्त्वया युक्तः सबान्धवः । धर्मार्थकाममोक्षाणां त्वं च कारणरूपिणी

१ क. वृद्धि' । २ वृद्धि' । ३ क. 'दा शारदा शुभा ।

स्तनंधयानां त्वं माता शिशूनां शैशवे यथा । तथा त्वं सर्वदा माता सर्वेषां सर्वविश्वतः
त्यक्तस्तनो मातृहीनः स चेज्जीवति दैवतः । त्वया हीनो जनः कोऽपि न जीवत्येव निश्चितम् ॥ ६७ ॥
सुप्रसन्नस्वरूपा त्वं मे प्रसन्ना भवाम्बिके । वैरिग्रस्तं च विषयं देहि मह्यं सनातनि ॥
वयं यावत्त्वया हीना बन्धुहीनाश्च भिक्षुकाः । सर्वसंपद्विहीनाश्च तावदेव हरिप्रिये ॥
राज्यं देहि श्रियं देहि बलं देहि सुरेश्वरि । कीर्तिं देहि धनं देहि पुत्रान्मह्यं च देहि वै ॥
कामं देहि मतिं देहि भोगान्देहि हरिप्रिये । ज्ञानं देहि च धर्मं च सर्वसौभाग्यमीप्सितम् ॥
सर्वाधिकारमेवं वै प्रभावं च प्रतापकम् । जयं पराक्रमं युद्धे परमैश्वर्यमेव च ॥ ७२ ॥
इत्युक्त्वा तु महेन्द्रश्च सर्वैः सुरगणैः सह । ननाम साश्रुनेत्रोऽयं मूर्ध्ना चैव पुनः पुनः ॥
ब्रह्मा च शंकरश्चैव शेषो धर्मश्च केशवः । सर्वे चक्रुः परीहारं सुरार्थे च पुनः पुनः ॥
देवेभ्यश्च वरं दत्त्वा पुष्पमालां मनोहराम् । केशवाय ददौ लक्ष्मीः संतुष्टा सुरसंसदि ॥
ययुर्देवाश्च संतुष्टाः स्वं स्वं स्थानं च नारद । देवी ययौ हरेः क्रोडं हृष्टा क्षीरोदशायिनः ॥
ययतुस्तौ स्वस्वगृहं ब्रह्मेशानौ च नारद । दत्त्वा शुभाशिषं तौ च देवेभ्यः प्रीतिपूर्वकम् ॥
इदं स्तोत्रं महापुण्यं त्रिसंध्यं यः पठेन्नरः । कुबेरतुल्यः स भवेद्राजराजेश्वरो महान् ॥
सिद्धस्तोत्रं यदि पठेत्सोऽपि कल्पतरुर्नरः । पञ्चलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ॥
सिद्धस्तोत्रं यदि पठेन्मासमेकं च संयतः । महासुखी च राजेन्द्रो भविष्यति न संशयः ॥

नारद उवाच—

पुष्पं दुर्वाससा दत्तमस्ति वै यस्य मस्तके । तस्य सर्वा पुरः पूजेत्युक्तं पूर्वं त्वया प्रभो ॥
तदेव स्थापितं पुष्पं गजेन्द्रस्यैव मस्तके । यतो जन्म गणेशस्य स च मत्तो वनं गतः ॥
मूर्ध्नि च्छिन्ने गणपतेः शनेर्दृष्ट्या पुरा मुने । तत्स्कन्धे योजयामास हस्तिमस्तं हरिः स्वयम्
अधुनोक्तं देवषट्कं संपूज्य च पुरंदरः । पूजयामास लक्ष्मीं च क्षीरोदे च सुरैः सह ॥
अहो पुराणवक्तॄणां दुर्बोधं वचनं नृणाम् । सुव्यक्तमस्य सिद्धान्तं वद वेदविदां वर ॥

नारायण उवाच—

यदा शशाप शक्रं च दुर्वासा मुनिपुंगवः । तदा नास्त्येव तज्जन्म पूजाकाले बभूव सः ॥
सुचिरं दुःखिता देवा बभ्रमुर्ब्रह्मशापतः । पश्चात्प्रापुश्च तां लक्ष्मीं वरेण च हरेर्मुने ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० लक्ष्म्युपा० लक्ष्मीपूजाविधानं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

१ क. वुद्धि प° । २ क. °स्तोत्रं यदि भवेत्सो° ।

अथ चत्वारिंशोऽध्यायः ।

---

**नारद उवाच—**

नारायण महाभाग समश्चैव त्वया प्रभो । रूपेण च गुणैश्चैव यशसा तेजसा त्विषा ॥
त्वमेव ज्ञानिनां श्रेष्ठः सिद्धानां योगिनां तथा। तपस्विनां मुनीनां च परो वेदविदां तथा
महालक्ष्म्या उपाख्यानं विज्ञातं महदद्भुतम् । अन्यत्किंचिदुपाख्यानं निगूढं वद सांप्रतम् ॥
अतीव गोपनीयं यदुपयुक्तं च सर्वतः। अप्रकाश्यं पुराणेषु वेदोक्तं धर्मसंयुतम् ॥ ४ ॥

**नारायण उवाच—**

नानाप्रकारमाख्यानमप्रकाश्यं पुराणतः । श्रुतौ कतिविधं गूढमास्ते ब्रह्मन्सुदुर्लभम् ॥
तेषु यत्सारभूतं च श्रोतुं किं वा त्वमिच्छसि । तन्मे ब्रूहि महाभाग पश्चाद्वक्ष्यामि तत्पुनः

**नारद उवाच—**

स्वाहा देवहविर्दाने प्रशस्ता सर्वकर्मसु । पितृदाने स्वधा शस्ता दक्षिणा सर्वतो वरा ॥
एतासां चरितं जन्म फलं प्राधान्यमेव च । श्रोतुमिच्छामि ते वक्त्राद्वद वेदविदां वर ॥

**सौतिरुवाच—**

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुंगवः । कथां कथितुमारेभे पुराणोक्तां पुरातनीम् ॥

**नारायण उवाच—**

सृष्टेः प्रथमतो देवाश्चाऽऽहारार्थं ययुः पुरा । ब्रह्मलोके ब्रह्मसभामगम्यां सुमनोहराम् ॥
गत्वा निवेदनं चक्रुर्मुने स्वाहारहेतुकम् । ब्रह्मा श्रुत्वा प्रतिज्ञाय सिषेवे श्रीहरेः पदम् ॥
यज्ञरूपो हि भगवान्कलया च बभूव सः । यज्ञे यद्यद्धविर्दानं दत्तं तेभ्यश्च वेधसा ॥
हविर्ददति विप्राश्च भक्त्या च क्षत्रियादयः । सुरा नैव प्राप्नुवन्ति तद्दानं मुनिपुंगव ॥
देवा विषण्णास्ते सर्वे तत्सभां च पुनर्ययुः । गत्वा निवेदनं चक्रुराहाराभावहेतुकम् ॥
ब्रह्मा श्रुत्वा तु मनसा श्रीकृष्णं शरणं ययौ। प्रकृतिं पूजयामास ध्यायन्नेव तदाज्ञया
प्रकृतिः कलया चैव सर्वशक्तिस्वरूपिणी । बभूव दाहिका शक्तिरग्नेः स्वाहास्वरूपिणी ॥
ग्रीष्ममध्याह्नमार्तण्डप्रभान्यक्कारकारिणी । अतीव सुन्दरी रामा रमणीया मनोहरा॥१६॥
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकारिणी । उवाचेति विधेरग्रे पद्मयोने वरं वृणु ॥१७॥
विधिस्तद्वचनं श्रुत्वा संभ्रमात्समुवाच ताम्॥ १८ ॥

**ब्रह्मोवाच—**

त्वमग्नेर्दाहिकाशक्तिर्भवपत्नी च सुन्दरी । दग्धुं न शक्तः स्वहुतं हुताशश्च त्वया विना ॥

---

१ ख. भक्त्या ।

त्वन्नामोच्चार्य मन्त्रान्ते यद्दास्यति हविर्नरः। सुरेभ्यस्तत्प्राप्नुवन्ति सुराः सानन्दपूर्वकम् ॥
अग्नेः संपत्स्वरूपा च श्रीरूपा च गृहेश्वरी। देवानां पूजिता शश्वन्नरादीनां भवाम्बिके॥
ब्रह्मणश्च वचः श्रुत्वा सा विषण्णा बभूव ह। तमुवाच स्वयं देवी स्वाभिप्रायं स्वयंभुवम्॥

स्वाहोवाच—

अहं कृष्णं भजिष्यामि तपसा सुचिरेण च। ब्रह्मंस्तदन्यद्यत्किंचित्स्वप्नवद्भ्रम एव च॥
विधाता जगतां त्वं च शंभुर्मृत्युंजयः प्रभुः। बिभर्ति शेषो विश्वं च धर्मः साक्षी च देहिनाम्
सर्वाद्यपूज्यो देवानां गणेषु च गणेश्वरः। प्रकृतिः सर्वसूः सर्वे पूजिता यत्प्रसादतः ॥
ऋषयो मुनयश्चैव पूजिता यं निषेव्य च। तत्पादपद्मं ब्रह्मैक्यभावाद्वै चिन्तयाम्यहम् ॥
पद्मास्या पाद्ममित्युक्त्वा पद्मलाभानुसारतः। जगाम तपसे पाद्मे पद्मादीशस्य पद्मजा॥
तपस्तेपे लक्षवर्षमेकपादेन पद्मजा। तदा ददर्श श्रीकृष्णं निर्गुणं प्रकृतेः परम् ॥२८॥
अतीव कमनीयं च रूपं दृष्ट्वा च सुन्दरी। मूर्छां संप्राप कामेन कामेशस्य च कामुकी॥
विज्ञाय तदभिप्रायं सर्वज्ञस्तामुवाच सः। स्वक्रोडे च समुत्थाप्य क्षीणाङ्गीं तपसा चिरम्

श्रीकृष्ण उवाच—

वाराहे च त्वमंशेन मम पत्नी भविष्यसि। नाम्ना नाग्नजिती कन्या कान्ते नग्नजितस्य च
अधुनाऽग्नेर्दाहिका त्वं भवपत्नी च भाविनि। मन्त्राङ्गरूपा पूता च मत्प्रसादाद्भविष्यसि॥
वह्निस्त्वां भक्तिभावेन संपूज्य च गृहेश्वरीम्। रमिष्यते त्वया सार्धं रामया रमणीयया॥
इत्युक्त्वाऽन्तर्दधे देवो देवीमाश्वास्य नारद। तत्राऽऽजगाम संत्रस्तो वह्निर्ब्रह्मनिदेशतः॥
ध्यानैश्च सामवेदोक्तैर्ध्यात्वा तां जगदम्बिकाम्। संपूज्य परितुष्टाव पाणिं जग्राह मन्त्रतः
तदा दिव्यं वर्षशतं स रेमे रामया सह। अतीव निर्जने रम्ये संभोगसुखदे सदा ॥३६॥
बभूव गर्भस्तस्याश्च हुताशस्यैव तेजसा। तद्दधार च सा देवी दिव्यं द्वादशवत्सरम् ॥
ततः सुषाव पुत्रांश्च रमणीयान्मनोहरान्। दक्षिणाग्निगार्हपत्याहवनीयान्क्रमेण च ॥३८॥
ऋषयो मुनयश्चैव ब्राह्मणाः क्षत्रियादयः। स्वाहान्तं मन्त्रमुच्चार्य हविर्ददति नित्यशः॥
स्वाहायुक्तं च मन्त्रं च यो गृह्णाति प्रशस्तकम्। सर्वसिद्धिर्भवेत्तस्य ब्रह्मन्ग्रहणमात्रतः॥
विषहीनो यथा सर्पो वेदहीनो यथा द्विजः। पतिसेवाविहीना स्त्री विद्याहीनो यथा नरः॥
फलशाखाविहीनश्च यथा वृक्षो हि निन्दितः। स्वाहाहीनस्तथा मन्त्रो न हुतं फलदायकः
परितुष्टा द्विजाः सर्वे देवाः संप्रापुराहुतिम्। स्वाहान्तेनैव मन्त्रेण सफलं सर्वकर्म च ॥
इत्येवं वर्णितं सर्वं स्वाहोपाख्यानमुत्तमम्। सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि।

नारद उवाच—

स्वाहापूजाविधानं च ध्यानं स्तोत्रं मुनीश्वर। संपूज्य वह्निस्तुष्टाव येन तां वद मे प्रभो ॥

नारायण उवाच—

ध्यानं च सामवेदोक्तं स्तोत्रं पूजाविधानकम् । वदामि श्रूयतां ब्रह्मन्सावधानं निशामय ॥
सर्वयज्ञारम्भकाले शालग्रामे घटेऽथवा । स्वाहां संपूज्य यत्नेन यज्ञं कुर्यात्फलाप्तये ॥ ६७ ॥
स्वाहां मन्त्राङ्गभूतां च मन्त्रसिद्धिस्वरूपिणीम् । सिद्धां च सिद्धिदां नृणां कर्मणां फलदां भजे
इति ध्यात्वा च मूलेन दत्त्वा पाद्यादिकं नरः । सर्वसिद्धिं लभेत्स्तुत्वा मूलं स्तोत्रं मुने शृणु
ॐ ह्रीं श्रीं वह्निजायायै देव्यै स्वाहेत्यनेन च यः पूजयेच्च तां देवीं सर्वेष्टं लभते ध्रुवम् ॥

वह्निरुवाच—

स्वाहाऽऽद्या प्रकृतेरंशा मन्त्रतन्त्राङ्गरूपिणी । मन्त्राणां फलदात्री च धात्री च जगतां सती ॥
सिद्धिस्वरूपा सिद्धा च सिद्धिदा सर्वदा नृणाम् । हुताशदाहिकाशक्तिस्तत्प्राणाधिकरूपिणी
संसारसाररूपा च घोरसंसारतारिणी । देवजीवनरूपा च देवपोषणकारिणी ॥ ७३ ॥
षोडशैतानि नामानि यः पठेद्भक्तिसंयुतः । सर्वसिद्धिर्भवेत्तस्य चेह लोके परत्र च ॥ ७४ ॥
नाङ्गहीनो भवेत्तस्य सर्वकर्मसु शोभनम् । अपुत्रो लभते पुत्रमभार्यो लभते प्रियाम् ॥ ७५ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० स्वाहोपा० स्वाहाजन्मादिकथनं
नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## अथैकचत्वारिंशोऽध्यायः ।

---

नारायण उवाच—

शृणु नारद वक्ष्यामि स्वधोपाख्यानमुत्तमम् । पितॄणां वै तृप्तिकरं श्राद्धानां फलवर्धनम् ॥
सृष्टेरादौ पितृगणान्ससर्ज जगतां विधिः । चतुरो वै मूर्तिमतस्त्रींश्च तेजःस्वरूपिणः ॥ २ ॥
सप्त दृष्ट्वा पितृगणान्सिद्धिरूपान्मनोहरान् । आहारं ससृजे तेषां श्राद्धतर्पणपूर्वकम् ॥ ३ ॥
स्नानं तर्पणपर्यन्तं श्राद्धान्तं देवपूजनम् । आह्निकं च त्रिसंध्यान्तं विप्राणां च श्रुतौ श्रुतम्
नित्यं न कुर्याद्यो विप्रस्त्रिसंध्यं श्राद्धतर्पणम् । बलिं वेदध्वनिं सोऽपि विषहीनो यथोरगः ॥
हरिसेवाविहीनश्च श्रीहरेरनिवेद्यभुक् । जन्मान्तं सूतकं तस्य न कर्मार्हः स नारद ॥ ६ ॥
ब्रह्मा श्राद्धादिकं सृष्ट्वा जगाम पितृहेतवे । न प्राप्नुवन्ति पितरो ददति ब्राह्मणादयः ॥ ७ ॥
सर्वे प्रजग्मुः क्षुधिता विषण्णा ब्रह्मणः सभाम् । सर्वे निवेदनं चक्रुस्तमेव जगतां विधिम् ॥ ८ ॥
ब्रह्मा च मानसीं कन्यां ससृजे तां मनोहराम् । रूपयौवनसंपन्नां शरच्चन्द्रसमप्रभाम् ॥ ९ ॥
विद्यावतीं गुणवतीमपि रूपवतीं सतीम् । श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ॥ १० ॥

विशुद्धां प्रकृतेरंशां सस्मितां वरदां शुभाम्। स्वधाभिधानां सुदतीं लक्ष्मीं लक्षणसंयुताम् ॥
शतपद्मपदन्यस्तपादपद्मं च बिभ्रतीम्। पत्नीं पितॄणां पद्मास्यां पद्मजां पद्मलोचनाम् ॥
पितृभ्यस्तां ददौ कन्यां तुष्टेभ्यस्तुष्टिरूपिणीम्। ब्राह्मणानां चोपदेशं चक्रे वै गोपनीयकम् ॥
स्वधान्तं मन्त्रमुच्चार्य पितृभ्यो देहि चेति च। क्रमेण तेन विप्राश्च पित्रे दानं ददुः पुरा ॥
स्वाहा शस्ता देवदाने पितृदाने स्वधा वरा। सर्वत्र दक्षिणा शस्ता हतो यज्ञस्त्वदक्षिणः ॥
पितरो देवता विप्रा मुनयो मानवास्तथा। पूजां चक्रुः स्वधां शान्तां तुष्टाव परमादरम् ॥
देवादयश्च संतुष्टाः परिपूर्णमनोरथाः। विप्रादयश्च पितरः स्वधादेवी वरेण च ॥ १७ ॥
इत्येवं कथितं सर्वं स्वधोपाख्यानमुत्तमम्। सर्वेषां वै तुष्टिकरं किं भूयः श्रोतुमिच्छसि ॥

नारद उवाच—

स्वधापूजाविधानं च ध्यानं स्तोत्रं महामुने। श्रोतुमिच्छामि यत्नेन वद वेदविदां वर ॥

नारायण उवाच—

तद्ध्यानं स्तवनं ब्रह्मन्वेदोक्तं सर्वसंमतम्। सर्वं जानासि वक्ष्ये वै ज्ञातुमिच्छसि वृद्धये ॥
शरत्कृष्णत्रयोदश्यां मघायां श्राद्धवासरे। स्वधां संपूज्य यत्नेन ततः श्राद्धं समाचरेत् ॥
स्वधां नाभ्यर्च्य यो विप्रः श्राद्धं कुर्यादहंमतिः। न भवेत्फलभाक्सत्यं श्राद्धतर्पणयोस्तथा[1]
ब्रह्मणो मानसीं कन्यां शश्वत्सुस्थिरयौवनाम्। पूज्यां पितॄणां देवानां श्राद्धानां फलदां भजे
इति ध्यात्वा घटे रम्ये शालग्रामेऽथवा शुभे। दद्यात्पाद्यादिकं तस्यै मूलेनेति श्रुतौ श्रुतम् ॥
ओं ह्रीं श्रीं क्लीं स्वधादेव्यै स्वाहेति च महामनुम्। समुच्चार्य च संपूज्य स्तुत्वा तां प्रणमेद्-
द्विजः ॥ २५ ॥
स्तोत्रं शृणु मुनिश्रेष्ठ ब्रह्मपुत्र विशारद। सर्ववाञ्छाप्रदं नृणां ब्रह्मणा यत्कृतं पुरा ॥२६॥

ब्रह्मोवाच—

स्वधोच्चारणमात्रेण तीर्थस्नायी भवेन्नरः। मुच्यते सर्वपापेभ्यो वाजपेयफलं लभेत् ॥ २७ ॥
स्वधा स्वधा स्वधेत्येवं यदि वारत्रयं स्मरेत्। श्राद्धस्य फलमाप्नोति बलेश्च तर्पणस्य च ॥
श्राद्धकाले स्वधास्तोत्रं यः शृणोति समाहितः। लभेच्छ्राद्धशतानां च पुण्यमेव न संशयः ॥
स्वधा स्वधा स्वधेत्येवं त्रिसंध्यं यः पठेन्नरः। प्रियां विनीतां स लभेत्साध्वीं पुत्रं गुणान्वितम्।
पितॄणां प्राणतुल्या त्वं द्विजजीवनरूपिणी। श्राद्धाधिष्ठातृदेवी च श्राद्धादीनां फलप्रदा ॥
बहिर्मन्मनसो गच्छ पितॄणां तुष्टिहेतवे। संप्रीतये द्विजातीनां गृहिणां वृद्धिहेतवे[2] ॥ ३२ ॥
नित्यानित्यस्वरूपाऽसि गुणरूपाऽसि सुव्रते। आविर्भावस्तिरोभावः सृष्टौ च प्रलये तव ॥

---

[1] ख. कालतर्पणयोस्तथा। [2] क. बुद्धि°।

ॐ स्वस्ति च नमः स्वाहा स्वधा त्वं दक्षिणा तथा । निरूपिताश्चतुर्वेदे षट् प्रशस्ताश्च कर्मणाम् ॥ ३४ ॥
पुराऽऽसीस्त्वं स्वधागोपी गोलोके राधिकासखी । धृता स्वोरसि कृष्णेन यतस्तेन स्वधा स्मृता
ध्वस्ता त्वं राधिकाशापाद्गोलोकाद्विश्वमागता । कृष्णाश्लिष्टा तया दृष्टा पुरा वृन्दावने वने ॥
कृष्णालिङ्गनपुण्येन भूता मे मानसी सुता । अतृप्ता सुरते तेन चतुर्णां स्वामिनां प्रिया ॥
स्वाहा सा सुन्दरी गोपी पुराऽऽसीद्राधिकासखी । रतौ स्वयं कृष्णमाह तेन स्वाहा प्रकीर्तिता ॥ ३८ ॥
कृष्णेन सार्धं सुचिरं वसन्ते रासमण्डले । प्रमत्ता सुरते श्लिष्टा दृष्टा सा राधया पुरा ॥
तस्याः शापेन सा ध्वस्ता गोलोकाद्विश्वमागता । कृष्णालिङ्गनपुण्येन समभूद्वह्निकामिनी
पवित्ररूपा परमा देवाद्यैर्वन्दिता नृभिः । यन्नामोच्चारणेनैव नरो मुच्येत पातकात् ॥ ४१ ॥
या सुशिलाभिधा गोपी पुराऽऽसीद्राधिकासखी । उवास दक्षिणे क्रोडे कृष्णस्य च महात्मनः
प्रध्वस्ता सा च तच्छापाद्गोलोकाद्विश्वमागता । कृष्णालिङ्गनपुण्येन सा बभूव च दक्षिणा ॥
सा प्रेयसी रतौ दक्षा प्रशस्ता सर्वकर्मसु । उवास दक्षिणे भर्तुर्दक्षिणा तेन कीर्तिता ॥ ४४ ॥
गोप्यो बभूवुस्तिस्रो वै स्वधा स्वाहा च दक्षिणा । कर्मिणां कर्मपूर्णार्थं पुरा चैवेश्वरेच्छया ॥
इत्येवमुक्त्वा स ब्रह्मा ब्रह्मलोके च संसदि । तस्थौ च सहसा सद्यः स्वधा साऽऽविर्बभूव ह
तदा पितृभ्यः प्रददौ तामेव कमलाननाम् । तां संप्राप्य ययुस्ते च पितरश्च प्रहर्षिताः ॥
स्वधास्तोत्रमिदं पुण्यं यः शृणोति समाहितः । स स्नातः सर्वतीर्थेषु वेदपाठफलं लभेत् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० स्वधोपा० स्वधोत्पत्तितत्पूजादिकं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

===

अथ द्विचत्वारिंशोऽध्यायः ।

---

नारायण उवाच—

उक्तं स्वाहास्वधाख्यानं प्रशस्तं मधुरं परम् । वक्ष्यामि दक्षिणाख्यानं सावधानं निशामय ॥
गोपी सुशीला गोलोके पुराऽऽसीत्प्रेयसी हरेः । राधाप्रधाना सध्रीची धन्या मान्या मनोहरा ॥
अतीव सुन्दरी रामा सुभगा सुदती सती ॥ २ ॥
विद्यावती गुणवती सती रूपवती तथा । कलावती कोमलाङ्गी कान्ता कमललोचना ॥ ३ ॥
सुश्रोणी सुस्तनी श्यामा न्यग्रोधपरिमण्डला । ईषद्धास्यप्रसन्नास्या रत्नालंकारभूषिता ॥

---

१ क. °स्य राधिकाग्रतः ।

श्वेतचम्पकवर्णाभा-बिम्बोष्ठी मृगलोचना। कामशास्त्रसुनिष्णाता कामिनी कलहंसगा ॥
भावानुरक्ता भावज्ञा कृष्णस्य प्रियभामिनी। रसज्ञा रसिका रासे रासेशस्य रसोत्सुका
उवास दक्षिणे क्रोडे राधायाः पुरतः पुरा। संबभूवाऽऽनम्रमुखो भयेन मधुसूदनः ॥ ७॥
दृष्ट्वा राधां च पुरतो गोपीनां प्रवरां पराम्। मानिनीं रक्तवदनां रक्तपङ्कजलोचनाम् ॥
कोपेन कम्पिताङ्गीं च कोपनां कोपदर्शनाम्। कोपेन निष्ठुरं वक्तुमुद्यतां स्फुरिताधराम् ॥
आगच्छन्तीं च वेगेन विज्ञाय तदनन्तरम्। विरोधभीतो भगवानन्तर्धानं जगाम सः ॥
पलायन्तं च तं शान्तं सत्त्वाधारं सुविग्रहम्। विलोक्य कम्पिता गोपी सुशीलाऽन्तर्दधौ भिया
विलोक्य संकटं तत्र गोपीनां लक्षकोटयः। बद्धाञ्जलिपुटा भीता भक्तिनम्रात्मकंधराः ॥
रक्ष रक्षेत्युक्तवत्यो हे देवीति पुनः पुनः। ययुर्भयेन शरणं तस्याश्चरणपङ्कजे ॥ ११ ॥
त्रिलक्षकोटयो गोपाः सुदामादय एव च। ययुर्भयेन शरणं तत्पादाब्जे च नारद ॥
पलायन्तं च कान्तं वै विज्ञाय परमेश्वरी। पलायन्तीं सहचरीं सुशीलां च शशाप सा ॥
अद्यप्रभृति गोलोकं सा चेदायाति गोपिका। सद्यो गमनमात्रेण भस्मसाच्च भविष्यति ॥
इत्येवमुक्त्वा तत्रैव देवदेवीश्वरी रुषा। रासेश्वरी रासमध्ये रासेशं चाऽऽजुहाव ह ॥
नाऽऽलोक्य पुरतः कृष्णं राधा विरहकातरा। युगकोटिसमं मेने क्षणं भेदेन सुव्रता ॥
हे कृष्ण हे प्राणनाथाऽऽगच्छ प्राणाधिकप्रिय। प्राणाधिष्ठातृदेवेह प्राणा यान्ति त्वया विना
स्त्रीगर्वः पतिसौभाग्याद्वर्धते च दिने दिने। सुखी चेद्विभवो यस्मात्तं भजेद्धर्मतः सदा ॥
पतिर्बन्धुः कुलस्त्रीणामधिदेवः सदागतिः। परं संपत्स्वरूपश्च सुखरूपश्च मूर्तिमान् ॥
धर्मदः सुखदः शश्वत्प्रीतिदः शान्तिदः सदा। संमानदो मानदश्च मान्यो वै मानमण्डनः
सारात्सारतमः स्वामी बन्धूनां बन्धुवर्धनः। न च भर्तृसमो बन्धुः सर्वबन्धुषु दृश्यते ॥
भरणादेव भर्ताऽयं पालनात्पतिरुच्यते। शरीरेशाच्च स स्वामी कामदः कान्त एव च
बन्धुश्च सुखबन्धाच्च प्रीतिदानात्प्रियः परः। ऐश्वर्यदानादीशश्च प्राणेशात्प्राणनायकः ॥
रतिदानाच्च रमणः प्रियो नास्ति प्रियात्परः। पुत्रस्तु स्वामिनः शुक्राज्जायते तेन स प्रियः ॥ २१ ॥
शतपुत्रात्परः स्वामी कुलजानां प्रियः सदा। असत्कुलप्रसूता या कान्तं विज्ञातुमक्षमा ॥
स्नानं च सर्वतीर्थेषु सर्वयज्ञेषु दीक्षणम्। प्रादक्षिण्यं पृथिव्याश्च सर्वाणि च तपांसि वै ॥
सर्वाण्येव व्रतादीनि महादानानि यानि च। उपोषणानि पुण्यानि यान्यन्यानि च विश्वतः
गुरुसेवा विप्रसेवा देवसेवादिकं च यत्। स्वामिनः पादसेवायाः कलां नार्हन्ति षोडशीम्

१ क. क्रोडाब्जा°।

गुरुर्विप्रेष्टदेवेषु सर्वेभ्यश्च पतिर्गुरुः । विद्यादाता यथा पुंसां कुलजानां तथा प्रियः ॥३१॥
गोपीत्रिलक्षकोटीनां गोपानां च तथैव च । ब्रह्माण्डानामसंख्यानां तत्रस्थानां तथैव च ॥
रमादिगोपकान्तानामीश्वरी यत्प्रसादतः । अहं न जाने तं कान्तं स्त्रीस्वभावो दुरत्ययः
इत्युक्त्वा राधिका कृष्णं तत्र दध्यौ सुभक्तितः । आराप्तं प तं तेन विजहार च तत्र वै
अथ सा दक्षिणा देवी ध्वस्ता गोलोकतो मुने । सुचिरं च तपस्तप्त्वा विवेश कमलातनौ ॥
अथ देवादयः सर्वे यज्ञं कृत्वा सुदुष्करम् । न लभन्ते फलं तेषां विषण्णाः प्रययुर्विधिम्
विधिर्निवेदनं श्रुत्वा देवादीनां जगत्पतिः । दध्यौ सुचिन्तितो भक्त्या तत्प्रत्यादेशमाप सः
नारायणश्च भगवान्महालक्ष्म्याश्च देहतः । मर्त्यलक्ष्मीं विनिष्कृष्य ब्रह्मणे दक्षिणां ददौ ॥
ब्रह्मा ददौ तां यज्ञाय पूर्णार्थं कर्मणां सताम् । यज्ञः संपूज्य विधिवत्तां तुष्टाव रमां मुदा ॥
तप्तकाञ्चनवर्णाभां चन्द्रकोटिसमप्रभाम् । अतीव कमनीयां च सुन्दरीं सुमनोहराम् ॥४०॥
कमलास्यां कोमलाङ्गीं कमलायतलोचनाम् । कमलासनसंपूज्यां कमलाङ्कसमुद्भवाम् ॥
वह्निशुद्धांशुकाधानां बिम्बोष्ठीं सुदतीं सतीम् । बिभ्रतीं कबरीभारं मालतीमाल्यभूषितम्
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम् । सुवेषाढ्यां च सुस्नातां मुनिमानसमोहिनीम् ॥
कस्तूरीबिन्दुभिः सार्धं चन्दनैश्च सुगन्धिभिः । सिन्दूरबिन्दुनाऽत्यन्तं मस्तकाधःस्थलोज्ज्वलाम् ॥ ४४ ॥
सुप्रशस्तनितम्बाढ्यां बृहच्छ्रोणिपयोधराम् । कामदेवाधाररूपां कामबाणप्रपीडिताम् ॥
तां दृष्ट्वा रमणीयां च यज्ञो मूर्च्छामवाप ह । पत्नीं तामेव जग्राह विधिबोधितमार्गतः ॥
दिव्यं वर्षशतं चैव तां गृहीत्वाऽथ निर्जने । यज्ञो रेमे मुदा युक्तो रामया रमया सह ॥
गर्भं दधार सा देवी दिव्यं द्वादशवत्सरम् । ततः सुषाव पुत्रं च फलं वै सर्वकर्मणाम् ॥
कर्मणां फलदाता च दक्षिणा कर्मणां सताम् । परिपूर्णे कर्मणि च तत्पुत्रः फलदायकः ॥
यज्ञो दक्षिणया सार्धं पुत्रेण च फलेन च । कर्मणां फलदाता चेत्येवं वेदविदो विदुः ॥
यज्ञश्च दक्षिणां प्राप्य पुत्रं च फलदायकम् । फलं ददौ च सर्वेभ्यः कर्मठेभ्यो यदा मुने
तदा देवादयस्तुष्टाः परिपूर्णमनोरथाः । स्वस्थानं प्रययुः सर्वे धर्मवक्त्रादिदं श्रुतम् ॥
कृत्वा कर्म च कर्ता तु तूर्णं दद्याच्च दक्षिणाम् । तत्क्षणं फलमाप्नोति वेदैरुक्तमिदं मुने ॥
कर्ता कर्मणि पूर्णेऽपि तत्क्षणाद्यदि दक्षिणाम् । न दद्याद्ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा
मुहूर्ते समतीते च द्विगुणा सा भवेद्ध्रुवम् । एकरात्रे व्यतीते तु भवेद्दशगुणा च सा ॥
त्रिरात्रे वै दशगुणा सप्ताहे द्विगुणा ततः ॥ ५१ ॥

---

१ क. पूर्णरूपा च ।

मासे लक्षगुणा प्रोक्ता ब्राह्मणानां च वर्धते । संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवेत् ।
कर्म तद्यजमानानां सर्वं वै निष्फलं भवेत् । स च ब्रह्मस्वापहारी न कर्मार्होऽशुचिर्नरः ॥
दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी । तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम् ।
पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम् । एवं सुराश्च तत्पूजां तद्दत्तां पावकाहुतिम् ॥
दाता ददाति नो दानं गृहीता तन्न याचते । उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः ॥
नार्पयेद्यजमानश्चेद्याचितारं च दक्षिणाम् । भवेद्ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद्ध्रुवम् ॥
वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः । ततो भवेत्स चण्डालो व्याधियुक्तो दरिद्रकः ॥
पातयेत्पुरुषान्सप्त पूर्वान्वै पूर्वजन्मनः । इत्येवं कथितं विप्र किं भूयः श्रोतुमिच्छसि ॥

नारद उवाच—

यत्कर्म दक्षिणाहीनं को भुङ्क्ते तत्फलं मुने । पूजाविधिं दक्षिणायाः पुरा यज्ञकृतं वद ॥

नारायण उवाच—

कर्मणोऽदक्षिणस्यैव कुत एव फलं मुने । सदक्षिणे कर्मणि च फलमेव प्रवर्धते ॥६१॥
या या कर्माणि सामग्री बलिर्भुङ्क्ते च तां मुने । बलये तत्प्रदत्तं च वामनेन पुरा मुने ॥
अश्रोत्रियं श्राद्धवस्तु चाश्राद्धं दानमेव च । वृषलीपतिविप्राणां पूजाद्रव्यादिकं च यत् ।
ऋत्विजा न कृतं यज्ञमशुचेः पूजनं च यत् । गुरावभक्तस्य कर्म बलिर्भुङ्क्ते न संशयः ॥
दक्षिणायाश्च यद्ध्यानं स्तोत्रं पूजाविधिक्रमम् । तत्सर्वं काण्वशाखोक्तं प्रवक्ष्यामि निशामय
पुरा संप्राप्य तां यज्ञः कर्मदक्षां च दक्षिणाम् । मुमोह तस्या रूपेण तुष्टुवे कामकातरः ॥

यज्ञ उवाच—

पुरा गोलोकगोपी त्वं गोपीनां प्रवरा परा । राधासमा तत्सखी च श्रीकृष्णप्रेयसी प्रिये ॥
कार्तिके पूर्णिमायां तु रासे राधामहोत्सवे । आविर्भूता दक्षिणांशात्कृष्णस्यातो हि दक्षिणा
पुरा त्वं च सुशीलाख्या शीलेन सुशुभेन च । कृष्णदक्षांशवासाच्च राधाशापाच्च दक्षिणा
गोलोकात्त्वं परिध्वस्ता मम भाग्यादुपस्थिता । कृपां कुरु त्वमेवाद्य स्वामिनं कुरु मां प्रिये
कर्तॄणां कर्मणां देवी त्वमेव फलदा सदा । त्वया विना च सर्वेषां सर्वं कर्म च निष्फलम् ॥
फलशाखाविहीनश्च यथा वृक्षो महीतले । त्वया विना तथा कर्म कर्तॄणां च न शोभते ॥
ब्रह्मविष्णुमहेशाश्च दिक्पालादय एव च । कर्मणश्च फलं दातुं न शक्ताश्च त्वया विना
कर्मरूपी स्वयं ब्रह्मा फलरूपी महेश्वरः । यज्ञरूपी विष्णुरहं त्वमेषां साररूपिणी ॥
फलदाता परं ब्रह्म निर्गुणः प्रकृतेः परः । स्वयं कृष्णश्च भगवान्न च शक्तस्त्वया विना
त्वमेव शक्तिः कान्ते मे शश्वज्जन्मनि जन्मनि । सर्वकर्मणि शक्तोऽहं त्वया सह वरानने

इत्युक्त्वा तत्पुरस्तस्थौ यज्ञाधिष्ठातृदेवकः । तुष्टा बभूव सा देवी भेजे तं कमलाकला
इदं च दक्षिणास्तोत्रं यज्ञकाले च यः पठेत् । फलं च सर्वयज्ञानां लभते नात्र संशयः
राजसूये वाजपेये गोमेधे नरमेधके । अश्वमेधे लाङ्गले च विष्णुयज्ञे यशस्करे ॥८४॥
धनदे भूमिदे फल्गौ[1] पुत्रेष्टौ गजमेधके । लोहयज्ञे स्वर्णयज्ञे पटलव्याधिखण्डने[2]॥८५॥
शिवयज्ञे रुद्रयज्ञे शक्रयज्ञे च बन्धके[3] । इष्टौ वरुणयागे च कन्दुके वैरिमर्दने ॥ ८६ ॥
शुचियागे धर्मयागे रेचने पापमोचने । बन्धने[4] कर्मयागे च मणियागे सुभद्रके ॥ ८७ ॥
एतेषां च समारम्भ इदं स्तोत्रं च यः पठेत् । निर्विघ्नेन च तत्कर्म साङ्गं भवति निश्चितम्
इति स्तोत्रं च कथितं ध्यानं पूजाविधिं शृणु । शालग्रामे घटे वाऽपि दक्षिणां पूजयेत्सुधीः॥
लक्ष्मीदक्षांशसंभूतां दक्षिणां कमलांकलाम् । सर्वकर्मसु दक्षां च फलदां सर्वकर्मणाम् ॥
विष्णोः शक्तिस्वरूपां च पूजितां वन्दितां शुभाम् । शुद्धिदां शुद्धिरूपां च सुशीलां शुभदां भजे ॥ ९१ ॥
ध्यात्वाऽनेनैव वरदां सुधीर्मूलेन पूजयेत् । दत्त्वा पाद्यादिकं देव्यै वेदोक्तेन च नारद ॥
ॐ श्रीं क्लीं ह्रीं दक्षिणायै स्वाहेति च विचक्षणः । पूजयेद्विधिवद्भक्त्या दक्षिणां सर्वपूजिताम्
इत्येवं कथितं सर्वं दक्षिणाख्यानमुत्तमम् । सुखदं प्रीतिदं चैव फलदं सर्वकर्मणाम् ॥
इदं च दक्षिणाख्यानं यः शृणोति समाहितः । अङ्गहीनं च तत्कर्म न भवेद्भारते भुवि॥
अपुत्रो लभते पुत्रं निश्चितं च गुणान्वितम् । भार्याहीनो लभेद्भार्यां सुशीलां सुन्दरीं पराम्
वरारोहां पुत्रवतीं विनीतां प्रियवादिनीम् । पतिव्रतां सुव्रतां च शुद्धां च कुलजां वराम्॥
विद्याहीनो लभेद्विद्यां धनहीनो धनं लभेत् । भूमिहीनो लभेद्भूमिं प्रजाहीनो लभेत्प्रजाः॥
संकटे बन्धुविच्छेदे विपत्तौ बन्धने तथा । मासमेकमिदं श्रुत्वा मुच्यते नात्र संशयः ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दक्षिणोपा० दक्षिणोत्पत्ति-
तत्पूजादिविधानं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

अथ त्रिचत्वारिंशोऽध्यायः ।

---

नारद उवाच—

अनेकासां च देवीनां श्रुतमाख्यानमुत्तमम् । अन्यासां चरितं ब्रह्मन्वद वेदविदां वर ॥

---

१ क. फालौ । २ क. पाटलव्या° । ३ क. °बन्धुके । ४ क. वर्धने । ५ क. °लाननाम् ।

नारायण उवाच—

सर्वासां चरितं विप्र वेदेष्वस्ति पृथक्पृथक् । पूर्वोक्तानां च देवीनां त्वं कासां श्रोतुमिच्छसि

नारद उवाच—

षष्ठी मङ्गलचण्डी च मनसा प्रकृतेः कला । उत्पत्तिमासां चरितं श्रोतुमिच्छामि तत्त्वतः

नारायण उवाच—

षष्ठांशा प्रकृतेर्या च सा च षष्ठी प्रकीर्तिता । बालकाधिष्ठातृदेवी विष्णुमाया च बालदा ॥
मातृकासु च विख्याता देवसेनाभिधा च सा । प्राणाधिकप्रिया साध्वी स्कन्दभार्या च सुव्रता
आयुःप्रदा च बालानां धात्री रक्षणकारिणी । सततं शिशुपार्श्वस्था योगाद्वै सिद्धियोगिनी
तस्याः पूजाविधौ ब्रह्मन्नितिहासविधिं शृणु । यच्छ्रुतं धर्ममुखतो सुखदं पुत्रदं परम् ।७॥
राजा प्रियव्रतश्चासीत्स्वायंभुवमनोः सुतः । योगीन्द्रो नोद्वहेद्भार्यां तपस्यासु रतः सदा ॥
ब्रह्माज्ञया च यत्नेन कृतदारो बभूव सः । सुचिरं कृतदारश्च न लेभे तनयं मुने ॥ ९ ॥
पुत्रेष्टियज्ञं तं चापि कारयामास कश्यपः । मालिन्यै तस्य कान्तायै मुनिर्यज्ञचरुं ददौ ॥
भुक्त्वा चरुं च तस्याश्च सद्यो गर्भो बभूव ह । दधार तं च सा देवी दैवं द्वादशवत्सरम् ॥
ततः सुषाव सा ब्रह्मन्कुमारं कनकप्रभम् । सर्वावयवसंपन्नं मृतमुत्तारलोचनम् ॥ १२ ॥
तं दृष्ट्वा रुरुदुः सर्वा नार्यो वै बान्धवस्त्रियः । मूर्छामवाप तन्माता पुत्रशोकेन सुव्रता ॥
श्मशानं च ययौ राजा गृहीत्वा बालकं मुने । रुरोद तत्र कान्तारे पुत्रं कृत्वा स्ववक्षसि ॥
नोत्सृज्य बालकं राजा प्राणांस्त्यक्तुं समुद्यतः । ज्ञानयोगं विसस्मार पुत्रशोकात्सुदारुणात्
एतस्मिन्नन्तरे तत्र विमानं च ददर्श ह । शुद्धस्फटिकसंकाशं मणिराजविराजितम् ॥ १६ ॥
तेजसा ज्वलितं शश्वच्छोभितं क्षौमवाससा । नानाचित्रविचित्राढ्यं पुष्पमालाविराजितम्
ददर्श तत्र देवीं च कमनीयां मनोहराम् । श्वेतचम्पकवर्णाभां रम्यसुस्थिरयौवनाम् ॥ १८॥
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम् । कृपामयीं योगसिद्धां भक्तानुग्रहकारिणीम् ॥ १९॥
दृष्ट्वा तां पुरतो राजा तुष्टाव परमादरात् । चकार पूजनं तस्या विहाय भुवि बालकम् ॥
पप्रच्छ राजा तां दृष्ट्वा ग्रीष्मसूर्यसमप्रभाम् । तेजसा ज्वलितां शान्तां कान्तां स्कन्दस्य नारद ॥ २१ ॥

प्रियव्रत उवाच—

का त्वं सुशोभने कान्ते कस्य कान्ताऽसि सुव्रते । कस्य कन्या वरारोहे धन्या मान्या च योषिताम् ॥ २२ ॥

---

१ क. °विनिर्मितम् ।

नृपेन्द्रस्य वचः श्रुत्वा जगन्मङ्गलदायिनी । उवाच देवसेना सा देवरक्षणकारिणी ॥ २१ ॥
देवानां दैत्यभीतानां पुरा सेना बभूव सा । जयं ददौ च तेभ्यश्च देवसेना च तेन सा ॥

देवसेनोवाच—

ब्रह्मणो मानसी कन्या देवसेनाऽहमीश्वरी । सृष्ट्वा मां मनसो धाता ददौ स्कन्दाय भूमिप ॥
मातृकासु च विख्याता स्कन्दसेना च सुव्रता । विश्वे षष्ठीति विख्याता षष्ठांशा प्रकृतेर्यतः
पुत्रदाऽहमपुत्राय प्रियस्त्रीदा प्रियाय च । धनदा च दरिद्रेभ्यः कर्तृभ्य. शुभकर्मदा ॥
सुखं दुःखं भयं शोकं हर्षं मङ्गलमेव च । संपत्तिश्च विपत्तिश्च सर्वं भवति कर्मणा ॥
कर्मणा बहुपुत्री च वंशहीनश्च कर्मणा । कर्मणा च दरिद्रश्च धनाढ्यश्च स्वकर्मणा ॥
कर्मणा रूपवांश्चैव रोगी शश्वत्स्वकर्मणा ॥ २९ ॥
कर्मणा मृतपुत्रश्च कर्मणा चिरजीविनः । कर्मणा गुणवन्तश्च कर्मणा चाङ्गहीनकाः ॥
तस्मात्कर्म परं राजन्सर्वेभ्यश्च श्रुतौ श्रुतम् । कर्मरूपी च भगवांस्तद्द्वारा फलदो हरिः ॥
इत्येवमुक्त्वा सा देवी गृहीत्वा बालकं मुने । महाज्ञानेन सहसा जीवयामास लीलया ॥
राजा ददर्श तं बालं सस्मितं कनकप्रभम् । देवसेना च पश्यन्तं नृपमम्बरमेव च ॥ ३३ ॥
गृहीत्वा बालकं देवी गगनं गन्तुमुद्यता । पुनस्तुष्टाव तां राजा शुष्ककण्ठौष्ठतालुकः ॥
नृपस्तोत्रेण सा देवी परितुष्टा बभूव ह । उवाच तं नृपं ब्रह्मन्वेदोक्तं कर्मनिर्मितम् ॥

देवसेनोवाच—

त्रिषु लोकेषु राजा त्वं स्वायंभुवमनोः सुतः । मम पूजां च सर्वत्र कारयित्वा स्वयं कुरु
तदा दास्यामि पुत्रं ते कुलपद्मं मनोहरम् । सुव्रतं नाम विख्यातं गुणवन्तं सुपण्डितम् ॥
जातिस्मरं च योगीन्द्रं नारायणपरायणम् । शतक्रतुकरं श्रेष्ठं क्षत्रियाणां च वन्दितम् ॥
मत्तमतङ्गलक्षाणां धृतवन्तं बलं शुभम् । धन्विनं गुणिनं शुद्धं विदुषां प्रियमेव च ॥
योगिनं[3] ज्ञानिनं चैव सिद्धरूपं तपस्विनम् । यशस्विनं च लोकेषु दातारं सर्वसंपदाम् ॥
इत्येवमुक्त्वा सा देवी तस्मै तद्बालकं ददौ । राजा च तं स्वी चकार तत्पूजार्थं च सुव्रतः
जगाम देवी स्वर्गं च दत्त्वा तस्मै शुभं वरम् । आजगाम महाराजः स्वगृहं हृष्टमानसः ॥
आगत्य कथयामास वृत्तान्तं पुत्रहेतुकम् । तुष्टा बभूवुः संतुष्टा नरा नार्यश्च नारद ॥ ४२ ॥
मङ्गलं कारयामास सर्वत्र सुतहेतुकम् । देवीं च पूजयामास ब्राह्मणेभ्यो धनं ददौ ॥ ४३ ॥
राजा च प्रतिमासेषु शुक्लषष्ठ्यां महोत्सवम् । षष्ठ्या देव्याश्च यत्नेन कारयामास सर्वतः ॥
बालानां सूतिकागारे षष्ठाहे यत्नपूर्वकम् । तत्पूजां कारयामास चैकविंशतिवासरे ॥ ४५ ॥

---

१ क. °त्यभस्तानां. २ क. °न्दभार्या च. ३ क. °गिनां प्राणिनां चै°। ४ क. शुक्लाष्टम्यां।

बालानां शुभकार्ये च शुभान्नप्राशने तथा । सर्वत्र वर्धयामास स्वयमेव चकार ह ॥
ध्यानं पूजाविधानं च स्तोत्रं मत्तो निशामय । यच्छ्रुतं धर्मवक्त्रेण कौथुमोक्तं च सुव्रत
शालग्रामे घटे वाऽथ वटमूलेऽथवा मुने । भित्त्यां पुत्तलिकां कृत्वा पूजयेद्वा विचक्षणः ॥
षष्ठांशां प्रकृतेः शुद्धां सुप्रतिष्ठां च सुव्रताम् । सुपुत्रदां च शुभदां दयारूपां जगत्प्रसूम् ॥
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् । पवित्ररूपां परमां देवसेनां परां भजे ॥ ५० ॥
इति ध्यात्वा स्वशिरसि पुष्पं दद्याद्विचक्षणः पुनर्ध्यात्वा च मूलेन पूजयेत्सुव्रतां सतीम्
पाद्यार्घ्याचमनीयैश्च गन्धधूपप्रदीपकैः । नैवेद्यैर्विविधैश्चापि फलेन च शुभेन च ॥५२॥
मूलमों ह्रीं षष्ठीदेव्यै स्वाहेति विधिपूर्वकम् । अष्टाक्षरं महामन्त्रं यथाशक्ति जपेन्नरः ॥
ततः स्तुत्वा च प्रणमेद्भक्तियुक्तः समाहितः । स्तोत्रं च सामवेदोक्तं धनपुत्रफलप्रदम् ॥
अष्टाक्षरं महामन्त्रं लक्षधा यो जपेन्मुने । स पुत्रं लभते नूनमित्याह कमलोद्भवः ॥ ५५ ॥
स्तोत्रं शृणु मुनिश्रेष्ठ सर्वेषां च शुभावहम् । वाञ्छाप्रदं च सर्वेषां गूढं वेदे च नारद ॥

प्रियव्रत उवाच—

नमो देव्यै महादेव्यै सिद्ध्यै शान्त्यै नमो नमः । शुभायै देवसेनायै षष्ठीदेव्यै न० ॥
वरदायै पुत्रदायै धनदायै न० । सुखदायै मोक्षदायै षष्ठीदेव्यै न० ॥ ५८ ॥
शक्तेः षष्ठांशरूपायै सिद्धायै च न० । मायायै सिद्धयोगिन्यै षष्ठीदेव्यै न० ॥५९॥
पारायै पारदायै च षष्ठीदेव्यै न० । सारायै सारदायै च पारायै सर्वकर्मणाम् ॥६०॥
बालाधिष्ठातृदेव्यै च षष्ठीदेव्यै न० । कल्याणदायै कल्याण्यै फलदायै च कर्मणाम् ॥६०॥
प्रत्यक्षायै च भक्तानां षष्ठीदेव्यै न० ॥ ६२ ॥
पूज्यायै स्कन्दकान्तायै सर्वेषां सर्वकर्मसु । देवरक्षणकारिण्यै षष्ठीदेव्यै न० ॥ ६३ ॥
शुद्धसत्त्वस्वरूपायै वन्दितायै नृणां सदा । हिंसाक्रोधैर्वर्जितायै षष्ठीदेव्यै न० ॥६४॥
धनं देहि प्रियां देहि पुत्रं देहि सुरेश्वरि । धर्मं देहि यशो देहि षष्ठीदेव्यै न० ॥६५॥
भूमिं देहि प्रजां देहि देहि विद्यां सुपूजिते । कल्याणं च जयं देहि षष्ठीदेव्यै न० ॥
इति देवीं च संस्तूय लेभे पुत्रं प्रियव्रतः । यशस्विनं च राजेन्द्रं षष्ठीदेवीप्रसादतः ॥
षष्ठीस्तोत्रमिदं ब्रह्मन्यः शृणोति[2] च वत्सरम् । अपुत्रो लभते पुत्रं वरं सुचिरजीविनम् ॥
वर्षमेकं च या भक्त्या संयत्तेदं शृणोति च । सर्वपापाद्विनिर्मुक्ता महावन्ध्या प्रसूयते ॥
वीरपुत्रं च गुणिनं विद्यावन्तं यशस्विनम् । सुचिरायुष्मन्तमेव षष्ठीमातृप्रसादतः ॥७०॥
काकवन्ध्या च या नारी मृतापत्या च या भवेत् । वर्षं श्रुत्वा लभेत्पुत्रं षष्ठीदेवीप्र० ॥

---

१ क सर्वकामशु° २ क. °ति समाहितः ।

रोगयुक्ते च बाले च पिता माता शृणोति च । मासं च मुच्यते बालः षष्ठीदेवीप्र० ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० षष्ठ्युपा० षष्ठीदेव्युत्पत्ति-
तत्पूजास्तोत्रादिकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

====

अथ चतुश्चत्वारिंशोऽध्यायः

---

**नारायण उवाच—**

कथितं षष्ठ्युपाख्यानं ब्रह्मपुत्र यथागमम् । देवी मङ्गलचण्डी या तदाख्यानं निशामय
तस्याः पूजादिकं सर्वं धर्मवक्त्राच्च यच्छ्रुतम् । श्रुतिसंमतमेवेष्टं सर्वेषां विदुषामपि ॥
चण्डा या वर्तते चण्डी जाग्रती शत्रुमण्डले । मङ्गलेषु च या दक्षा मङ्गला सैव चण्डिका
दुर्गायां विद्यते चण्डी मङ्गलोऽपि महीसुतः । मङ्गलाऽभीष्टदेवी या सा स्यान्मङ्गल-
चण्डिका ॥ ४ ॥
मङ्गलो मनुवंशश्च सप्तद्वीपावनीपतिः । तस्य पूज्याऽभीष्टदेवी तेन मङ्गलचण्डिका ॥
मूर्तिभेदेन सा दुर्गा मूलप्रकृतिरीश्वरी । कृपारूपाऽतिप्रत्यक्षा योषितामिष्टदेवता ॥
प्रथमे पूजिता सा च शंकरेण पुरा परा । त्रिपुरस्य वधे घोरे विष्णुना प्रेरितेन च ॥
ब्रह्मन्ब्रह्मोपदेशेन दुर्गप्रस्थे च संकटे । आकाशात्पतिते याने रुषा दैत्येन पातिते ॥
ब्रह्मविष्ण्वादिष्टश्च दुर्गां तुष्टाव शंकरः । सा च मङ्गलचण्डीयमभवद्रूपभेदतः ॥ ९ ॥
उवाच पुरतः शंभोर्भयं नास्तीति ते प्रभो । भगवान्वृषरूपश्च सर्वेशश्च बभूव ह ॥
युद्धशक्तिस्वरूपाऽहं भविष्यामि तदाज्ञया । मयाऽऽत्मना च हरिणा सहायेन वृषध्वज
जहि दैत्यं च देवेश सुराणां पदघातकम् ॥ ११ ॥
इत्युक्त्वाऽन्तर्हिता देवी शंभोःशक्तिर्बभूव सा । विष्णुदत्तेन शस्त्रेण जघान तमुमापतिः
मुनीन्द्र पतिते दैत्ये सर्वे देवा महर्षयः । तुष्टुवुः शंकरं देवा भक्तिनम्रात्मकंधराः॥ १३॥
सद्यः शिरसि शंभोश्च पुष्पवृष्टिर्बभूव ह । ब्रह्मा विष्णुश्च संतुष्टो ददौ तस्मै शुभाशिषम्
ब्रह्मविष्ण्वादिष्टश्च सुस्नातः शंकरः शुचिः । पूजयामास तां शक्तिं देवीं मङ्गलचण्डिकाम्
पाद्यार्घ्याचमनीयैश्च बलिभिर्विविधैरपि । पुष्पचन्दननैवेद्यैर्भक्ष्यैस्तथा नानाविधैर्मुने ॥ १६ ॥
छागैर्मेषैश्च महिषैर्गण्डैर्मायाविभिर्वरैः । वस्त्रालंकारमाल्यैश्च पायसैः पिष्टकैरपि ॥ १७॥
मधुभिश्च सुधाभिश्च पक्वैर्नानाविधैः फलैः । संगीतैर्नर्तनैर्वाद्यैरुत्सवैः कृष्णकीर्तनैः ॥
ध्यात्वा माध्यंदिनोक्तेन ध्यानेन विधिपूर्वकम् । ददौ द्रव्याणि मूलेन मन्त्रेणैव च नारद ॥

ॐ ह्रीं श्रीं क्लीं सर्वपूज्ये देवि मङ्गलचण्डिके। ऐं क्रूं फट् स्वाहेत्येवं चाप्येकविंशाक्षरो मनुः ॥ २० ॥
पूज्यः कल्पतरुश्चैव भक्तानां सर्वकामदः। दशलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥२१॥
मन्त्रसिद्धिर्भवेद्यस्य स विष्णुः सर्वकामदः। ध्यानं च श्रूयतां ब्रह्मन्वेदोक्तं सर्वसंमतम्॥
देवीं षोडशवर्षीयां रम्यां सुस्थिरयौवनाम्। सर्वरूपगुणाढ्यां च कोमलाङ्गीं मनोहराम्॥
श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम्। वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥
बिभ्रतीं कबरीभारं मल्लिकामाल्यभूषितम्। बिम्बोष्ठीं सुदतीं शुद्धां शरत्पद्मनिभाननाम् ॥
ईषद्धास्यप्रसन्नास्यां सुनीलोत्पललोचनाम्। जगद्धात्रीं च दात्रीं च सर्वेभ्यः सर्वसंपदाम्
संसारसागरे घोरे तपोरूपां वरां भजे ॥ २७ ॥
देव्याश्च ध्यानमित्येवं स्तवनं श्रूयतां मुने। प्रयतः संकटग्रस्तो येन तुष्टाव शंकरः ॥

**शंकर उवाच--**

रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके। संहर्त्रि विपदां राशेर्हर्षमङ्गलकारिके ॥२९॥
हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके। शुभे मङ्गलदक्षे च शुभमङ्गलचण्डिके ॥ ३० ॥
मङ्गले मङ्गलार्हे च सर्वमङ्गलमङ्गले। सतां मङ्गलदे देवि सर्वेषां मङ्गलालये ॥ ३१ ॥
पूज्या मङ्गलवारे च मङ्गलाभीष्टदेवते। पूज्ये मङ्गलभूपस्य मनुवंशस्य संततम् ॥ ३२ ॥
मङ्गलाधिष्ठातृदेवि मङ्गलानां च मङ्गले। संसारमङ्गलाधारे मोक्षमङ्गलदायिनि ॥ ३३ ॥
सारे च मङ्गलाधारे पारे त्वं सर्वकर्मणाम्। प्रतिमङ्गलवारे च पूज्ये त्वं मङ्गलप्रदे ॥३४॥
स्तोत्रेणानेन शंभुश्च स्तुत्वा मङ्गलचण्डिकाम्। प्रतिमङ्गलवारे च पूजां कृत्वा गतः शिवः
देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः। तन्मङ्गलं भवेच्छश्वन्न भवेत्तदमङ्गलम् ॥
प्रथमे पूजिता देवी शंभुना सर्वमङ्गला। द्वितीये पूजिता देवी मङ्गलेन ग्रहेण च ॥३७॥
तृतीये पूजिता भद्रा मङ्गलेन नृपेण च। चतुर्थे मङ्गले वारे सुन्दरीभिश्च पूजिता ॥
पञ्चमे मङ्गलाकाङ्क्षैर्नरैर्मङ्गलचण्डिका ॥ ३८ ॥
पूजिता प्रतिविश्वेषु विश्वेशैः पूजिता सदा। ततः सर्वत्र संपूज्या सा बभूव सुरेश्वरी ॥ ३९ ॥
देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने। देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ॥४०॥
तन्मङ्गलं भवेच्छश्वन्न भवेत्तदमङ्गलम्। वर्धन्ते तत्पुत्रपौत्रा मङ्गलं च दिने दिने ॥४१॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० मङ्गलचण्डिकोपा० तत्स्तोत्रादिकथनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

१ क. 'के। हुं हुं फ'। २ ख. पीत०। ३ क. भक्त्या। ४ ख. पूजिता।

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

नारायण उवाच—

उक्तं द्वयोरुपाख्यानं ब्रह्मपुत्र यथागमम् । श्रूयतां मनसाख्यानं यच्छ्रुतं धर्मवक्त्रतः ॥१॥
कन्या भगवती सा च कश्यपस्य च मानसी । तेनेयं मनसादेवी मनसा या च दीव्यति ॥
मनसा ध्यायते या वा परमात्मानमीश्वरम् । तेन सा मनसादेवी योगेनैतेन दीव्यति ॥
आत्मारामा च सा देवी वैष्णवी सिद्धयोगिनी । त्रियुगं च तपस्तप्त्वा कृष्णस्य परमात्मनः
जरत्कारु शरीरं च दृष्ट्वा यां क्षणमीश्वरः । गोपीपतिर्नाम चक्रे जरत्कारुरिति प्रभुः
वाञ्छितं च ददौ तस्यै कृपया च कृपानिधिः । पूजां च कारयामास चकार च पुनः स्वयम्
स्वर्गे च नागलोके च पृथिव्यां ब्रह्मलोकतः । भृशं जगत्सु गौरी सा सुन्दरी च मनोहरा ॥
जगद्गौरीति विख्याता तेन सा पूजिता सती ॥ ७ ॥
शिवशिष्या च सा देवी तेन शैवीति कीर्तिता । विष्णुभक्ताऽतीव रम्या वैष्णवी तेन नारद
नागानां प्राणरक्षित्री जनमेजययज्ञके । नागेश्वरीति विख्याता सा नागभगिनी तथा ॥९॥
विषं संहर्तुमीशा सा तेन सा विषहारिणी । सिद्धं योगं हरात्प्राप तेनासौ सिद्धयोगिनी॥
महाज्ञानं च गोप्यं च मृतसंजीविनीं पराम् । महाज्ञानयुतां तां च प्रवदन्ति मनीषिणः ॥
आस्तीकस्य मुनीन्द्रस्य माता सा वै तपस्विनः । आस्तीकमाता विख्याता जरत्कारुरिति स्मृता ॥ १२ ॥
प्रिया मुनेर्जरत्कारोर्मुनीन्द्रस्य महात्मनः । योगिनो विश्वपूज्यस्य जरत्कारोः प्रिया ततः

ॐ नमो मनसायै ।

जरत्कारुर्जगद्गौरी मनसा सिद्धयोगिनी । वैष्णवी नागभगिनी शैवी नागेश्वरी तथा ॥
जरत्कारुप्रियाऽऽस्तीकमाता विषहरीति च । महाज्ञानयुता चैव सा देवी विश्वपूजिता ॥
द्वादशैतानि नामानि पूजाकाले च यः पठेत् । तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च
नागभीते च शयने नागग्रस्ते च मन्दिरे । नागक्षते नागदुर्गे नागवेष्टितविग्रहे ॥ १८ ॥
इदं स्तोत्रं पठित्वा तु मुच्यते नात्र संशयः । नित्यं पठेद्यस्तं दृष्ट्वा नागवर्गः पलायते ॥
दशलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् । स्तोत्रं सिद्धं भवेद्यस्य स विषं भोक्तुमीश्वरः ॥
नागौघं भूषणं कृत्वा स भवेन्नागवाहनः । नागासनो नागतल्पो महासिद्धो भवेन्नरः ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० मनसोपा० मनसास्तोत्रादिकथनं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥



अथ षट्चत्वारिंशोऽध्यायः ।

नारायण उवाच—

पूजाविधानं स्तोत्रं च श्रूयतां मुनिपुंगव । ध्यानं च सामवेदोक्तं देवीपूजाविधानकम् ॥
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् । वह्निशुद्धांशुकाधानां नागयज्ञोपवीतिनीम् ॥ २ ॥
महाज्ञानयुतां चैव प्रवरां ज्ञानिनां सताम् । सिद्धाधिष्ठातृदेवीं च सिद्धां सिद्धिप्रदां भजे ॥
इति ध्यात्वा च तां देवीं मूलेनैव प्रपूजयेत् । नैवेद्यैर्विविधैर्दीपैः पुष्पैर्धूपानुलेपनैः ॥ ४ ॥
मूलमन्त्रश्च वेदोक्तो भक्तानां वाञ्छितप्रदः । मूलकल्पतरुर्नाम प्रसिद्धो द्वादशाक्षरः ॥
ॐ ह्रीं श्रीं क्लीं ऐं मनसादेव्यै स्वाहेति कीर्तितः । पञ्चलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम्
मन्त्रसिद्धिर्भवेद्यस्य स सिद्धो जगतीतले । सुधासमं विषं तस्य धन्वन्तरिसमो भवेत् ॥
ब्रह्मन्नाषाढसंक्रान्त्यां गूढशाखासु यत्नतः । आवाह्य देवीं[1] मासान्तं पूजयेद्यो हि भक्तितः
पञ्चम्यां मनसाख्यायां देव्यै दद्याच्च यो बलिम् । धनवान्पुत्रवांश्चैव कीर्तिमान्स भवेद्ध्रुवम्
पूजाविधानं कथितं तदाख्यानं निशामय । कथयामि महाभाग यच्छ्रुतं धर्मवक्त्रतः ॥
पुरा नागभयाक्रान्ता बभूवुर्मानवा भुवि । यान्यान्खादन्ति नागाश्च न ते जीवन्ति नारद
मन्त्रांश्च ससृजे भीतः कश्यपो ब्रह्मणाऽर्थितः । वेदबीजानुसारेण चोपदेशेन वेधसः ॥
मन्त्राधिष्ठातृदेवीं तां मनसां ससृजे ततः । तपसा मनसा तेन मनसा सा बभूव ह ॥
कुमारी सा च संभूय जगाम च्छंकरालयम् । भक्त्या संपूज्य कैलासे तुष्टुवे चन्द्रशेखरम्
दिव्यं वर्षसहस्रं च तं सिषेवे मुनेः सुता । आशुतोषो महेशश्च तां च तुष्टो बभूव ह ॥
महाज्ञानं ददौ तस्यै पाठयामास साम च । कृष्णमन्त्रं कल्पतरुं ददावष्टाक्षरं मुने ॥
लक्ष्मी माया कामबीजं ङेन्तं कृष्णपदं तथा ॥ ॐ श्रीं ह्रीं क्लीं कृष्णाय ॥
त्रैलोक्यमङ्गलं नाम कवचं पूजनक्रमम् ॥ १७ ॥
स्तवनं सर्वपूज्यं च ध्यानं भुवनपावनम् । पुरश्चर्याक्रमं चापि वेदोक्तं सर्वसंमतम् ॥
प्राप्य मृत्युंजयाज्ज्ञानं परं मृत्युंजयं सती । जगाम तपसे साध्वी पुष्करं शंकराज्ञया ॥
त्रियुगं च तपस्तप्त्वा कृष्णस्य परमात्मनः । सिद्धा बभूव सा देवी ददर्श पुरतः प्रभुम्
दृष्ट्वा कृशाङ्गीं बालां च कृपया च कृपानिधिः । पूजां च कारयामास चकार च हरिः स्वयम्
वरं च प्रददौ तस्यै पूजिता त्वं भवे भव । वरं दत्त्वा च कल्याण्यै सद्यश्चान्तर्दधे विभुः
प्रथमे पूजिता सा च कृष्णेन परमात्मना । द्वितीये शंकरेणैव कश्यपेन सुरेण च ॥ २१ ॥

१ क. 'वीमीशां तां पू' ।

मनुना मुनिना चैव ह्यहिना मानवादिना । बभूव पूजिता सा च त्रिषु लोकेषु सुव्रता ॥
जरत्कारुमुनीन्द्राय कश्यपस्तां ददौ पुरा । अयाचितो मुनिश्रेष्ठो जग्राह ब्रह्मणाज्ञया ॥
कृत्वोद्वाहं महायोगी विश्रान्तस्तपसा चिरम् । सुष्वाप देव्या जघने वटमूले च पुष्करे ॥
निद्रां जगाम स मुनिः स्मृत्वा निद्रेशमीश्वरम् । जगामास्तं दिनकरः सायंकाल उपस्थितः
संचिन्त्य मनसा तत्र मनसा च पतिव्रता । धर्मलोपभयेनैव चकाराऽऽलोचनं सती ॥
अकृत्वा पश्चिमां संध्यां नित्यां चैव द्विजन्मनाम् । ब्रह्महत्यादिकं पापं लभिष्यति पतिर्मम
नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स सर्वदाऽशुचिर्नित्यं ब्रह्महत्यादिकं लभेत्
वेदोक्तमिति संचिन्त्य बोधयामास तं मुनिम् । स च बुध्वा मुनिश्रेष्ठस्तां चुकोप भृशं मुनिः

जरत्कारुरुवाच—

कथं मे सुव्रते साध्वि निद्राभङ्गः कृतस्त्वया । व्यर्थं व्रतादिकं तस्या या भर्तुश्चापकारिणी
तपश्चानशनं चैव व्रतं दानादिकं च यत् । भर्तुरप्रियकारिण्याः सर्वं भवति निष्फलम् ॥
यया पतिः पूजितश्च श्रीकृष्णः पूजितस्तया । पतिव्रताव्रतार्थं च पतिरूपी हरिः स्वयम्
सर्वदानं सर्वयज्ञं सर्वतीर्थनिषेवणम् । सर्वं तपो व्रतं सर्वमुपवासादिकं च यत् ॥ ३९ ॥
सर्वधर्मश्च सत्यं च सर्वदेवप्रपूजनम् । तत्सर्वं स्वामिसेवायाः कलां नार्हन्ति षोडशीम् ॥
सुपुण्ये भारते वर्षे पतिसेवां करोति या । वैकुण्ठं स्वामिना सार्धं सा याति ब्रह्मणः शतम्
विप्रियं कुरुते भर्तुर्विप्रियं वदति प्रियम् । असत्कुलप्रजाता या तत्फलं श्रूयतां सति ॥
कुम्भीपाकं व्रजेत्सा च यावच्चन्द्रदिवाकरौ । ततो भवति चाण्डाली पतिपुत्रविवर्जिता ॥
इत्युक्त्वा च मुनिश्रेष्ठो बभूव स्फुरिताधरः । चकम्पे मनसा साध्वी भयेनोवाच तं पतिम्

मनसोवाच—

संध्यालोपभयेनैव निद्राभङ्गः कृतस्तव । कुरु शान्तिं महाभाग दुष्टाया मम सुव्रत ॥
शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च । स व्रजेत्कालसूत्रं च स्वामिनश्च विशेषतः ॥
इत्युक्त्वा मनसादेवी स्वामिनश्चरणाम्बुजे । पपात भक्त्या भीता च रुरोद च पुनः पुनः
कुपितं च मुनिं दृष्ट्वा श्रीसूर्यं शप्तुमुद्यतम् । तत्राऽऽजगाम भगवान्संध्यया सह नारद ॥
तत्राऽऽगत्य मुनिश्रेष्ठमवोचद्भास्करः स्वयम् । विनयेन विनीतश्च तया सह यथोचितम् ॥

श्रीसूर्य उवाच—

सूर्यास्तसमयं दृष्ट्वा धर्मलोपभयेन च । त्वां बोधयामास विप्र नाहमस्तं गतस्तदा ॥४६॥
क्षमस्व भगवन्ब्रह्मन्मां शप्तुं नोचितं मुने । ब्राह्मणानां च हृदयं नवनीतसमं सदा ॥४७॥

---

१ ख. सुश्रुता । २ ख. °णः पदम् ।

तेषां क्षणार्धं क्रोधश्चेत्ततो भस्म भवेज्जगत् । पुनः स्रष्टुं द्विजः शक्तो न तेजस्वी द्विजात्परः
ब्रह्मणो वंशसंभूतः प्रज्वलन्ब्रह्मतेजसा । श्रीकृष्णं भावयेन्नित्यं ब्रह्मज्योति सनातनम् ॥
सूर्यस्य वचनं श्रुत्वा द्विजस्तुष्टो बभूव ह । सूर्यो जगाम स्वस्थानं गृहीत्वा ब्राह्मणाशिषम्
तत्याज मनसां विप्रः प्रतिज्ञापालनाय च । रुदतीं शोकयुक्तां च हृदयेन विदूयता॥९१॥
सा सस्मार गुरुं शंभुमिष्टदेवं हरिं विधिम् । कश्यपं जन्मदातारं विपत्तौ भयकर्शिता ॥
तत्राऽऽजगाम भगवान्गोपीशः शंभुरेव च । विधिश्च कश्यपश्चैव मनसापरिचिन्तितः ॥
विप्रो दृष्ट्वाऽभीष्टदेवं निर्गुणं प्रकृतेः परम् । तुष्टाव परया भक्त्या प्रणनाम मुहुर्मुहुः ॥
नमश्चकार शंभुं च ब्रह्माणं कश्यपं तथा । कथमागमनं देवा इति प्रश्नं चकार सः ॥
ब्रह्मा तद्वचनं श्रुत्वा सहसा समयोचितम् । तमुवाच नमस्कृत्य हृषीकेशपदाम्बुजम् ॥

ब्रह्मोवाच—

यदि त्यक्ता धर्मपत्नी धर्मिष्ठा मनसा सती । कुरुष्वास्यां सुतोत्पत्तिं धर्मसंस्थापनाय वै ॥
यतिर्वा ब्रह्मचारी वा भिक्षुर्वनचरोऽपि वा । जायायां च सुतोत्पत्तिं कृत्वा पश्चाद्भवेन्मुनिः
अकृत्वा तु सुतोत्पत्तिं विरागी यस्त्यजेत्प्रियाम् । स्रवेत्तपस्तत्पुण्यं च चालिन्यां च यथा जलम् ॥ ९९ ॥
ब्रह्मणो वचनं श्रुत्वा जरत्कारुर्मुनीश्वरः । चक्रे तन्नाभिसंस्पर्शी योगाद्वै मन्त्रपूर्वकम् ॥
तस्यै शुभाशिषं दत्त्वा ययुर्देवा मुदाऽन्विताः । मुदाऽन्विता च मनसा जरत्कारुर्मुदाऽन्वितः
मुनेः करस्पर्शमात्रात्सद्यो गर्भो बभूव ह । मनसाया मुनिश्रेष्ठ मुनिश्रेष्ठ उवाच ताम् ॥

जरत्कारुरुवाच—

गर्भेणानेन मनसे तव पुत्रो भविष्यति । जितेन्द्रियाणां प्रवरो धर्मिष्ठो वैष्णवाग्रणीः ॥
तेजस्वी च तपस्वी च यशस्वी च गुणान्वितः । वरो वेदविदां चैव योगिनां ज्ञानिनां तथा ॥
स च पुत्रो विष्णुभक्तो धार्मिकः कुलमुद्धरेत् । नृत्यन्ति पितरः सर्वे जन्ममात्रेण वै मुदा ॥
पतिव्रता सुशीला या सा प्रिया प्रियवादिनी । धर्मिष्ठा पुत्रमाता च कुलजा कुलपालिका ॥
हरिभक्तिप्रदो बन्धुस्तदिष्टं यत्सुखप्रदम् । यो बन्धच्छित्स च पिता हरेर्वर्त्मप्रदर्शकः ॥
सा गर्भधारिणी या च गर्भवासविमोचिनी । दयारूपा च भगिनी यमभीतिविमोचिनी ॥
विष्णुमन्त्रप्रदाता च स गुरुर्विष्णुभक्तिदः । गुरुश्च ज्ञानदाता च तज्ज्ञानं कृष्णभावनम् ॥
आब्रह्मस्तम्बपर्यन्तं यतो विश्वं चराचरम् । आविर्भूतं तिरोभूतं किं वा ज्ञानं तदन्यतः ॥
वेदजं योगजं यद्यत्तत्सारं हरिसेवनम् । तत्त्वानां सारभूतं च हरेरन्यद्विडम्बनम् ॥

१ क. ब्राह्मणो ब्रह्मणो वंशः प्र° । २ वाच—प° ।

दत्तं ज्ञानं मया तुभ्यं स स्वामी ज्ञानदो हि यः । ज्ञानात्प्रमुच्यते बन्धात्स रिपुर्यो हि बन्धदः
विष्णुभक्तियुतं ज्ञानं न ददाति हि योगतः । स विप्रः शिष्यघाती च यतो बन्धान्न मोचयेत्
जननीगर्भजात्क्लेशाद्यमताडनजात्तथा । न मोचयेद्यः स कथं गुरुस्तातो हि बान्धवः ॥
परमानन्दरूपं च कृष्णमार्गमनश्वरम् । न दर्शयेद्यः स कथं कीदृशो बान्धवो नृणाम् ॥
भज साध्वि परं ब्रह्माच्युतं कृष्णं च निर्गुणम् । निर्मूलं च पुराकर्म भवेद्यत्सेवया ध्रुवम् ॥
मया छलेन त्वं त्यक्ता दोषं मे क्षम्यतां प्रिये । क्षमायुतानां साध्वीनां सत्त्वात्क्रोधो न विद्यते
पुष्करे तपसे यामि गच्छ देवि यथासुखम् । श्रीकृष्णचरणाम्भोजे ध्यानविच्छेदकातरः
धनादिषु स्त्रियां प्रीतिः प्रवृत्तिपथगामिनाम् । श्रीकृष्णचरणाम्भोजे निःस्पृहाणां मनोरथः
जरत्कारुवचः श्रुत्वा मनसा शोककातरा । सा साश्रुनेत्रा विनयादुवाच प्राणवल्लभम् ॥

मनसोवाच—

दोषेणाहं त्वया त्यक्ता निद्राभङ्गेन ते प्रभो । यत्र स्मरामि त्वां बन्धो तत्र मामागमिष्यसि ॥
बन्धुभेदः क्लेशतमः पुत्रभेदस्ततः परः । प्राणेशभेदः प्राणानां विच्छेदात्सर्वतः परः ॥
पतिः पतिव्रतानां च शतपुत्राधिकः प्रियः । सर्वस्माच्च प्रियः स्त्रीणां प्रियस्तेनोच्यते बुधैः ॥
पुत्रे यथैकपुत्राणां वैष्णवानां यथा हरौ । नेत्रे यथैकनेत्राणां तृषितानां यथा जले ॥
क्षुधितानां यथाऽन्ने च कामुकानां यथा स्त्रियाम् । यथा परस्वे चौराणां यथा जारे कुयोषिताम् ॥ ८४ ॥
विदुषां च यथा शास्त्रे वाणिज्ये वणिजां यथा । तथा शश्वन्मनः कान्ते साध्वीनां योषितां प्रभो ॥ ८५ ॥
इत्युक्त्वा मनसादेवी पपात स्वामिनः पदे । क्षणं चकार क्रोडे तां कृपया च कृपानिधिः
नेत्रोदकेन मनसां स्नापयामास तां मुनिः । साऽश्रुणा च मुनेः क्रोडं सिषेवे भेदकातरा ॥
तदा ज्ञानेन तौ द्वौ च विशोकौ च बभूवतुः । स्मारंस्मारं पदाम्भोजं कृष्णस्य परमात्मनः ॥
जगाम तपसे विप्रः स कान्तां सुप्रबोध्य च । जगाम मनसा शंभोः कैलासं मन्दिरं गुरोः
पार्वती बोधयामास मनसां शोककर्शिताम् । शिवश्चातीव ज्ञानेन शिवेन च शिवालये
सुप्रशस्ते दिने साध्वी सुषुवे मङ्गले क्षणे । नारायणांशं पुत्रं च ज्ञानिनां योगिनां गुरुम्
गर्भस्थितो महाज्ञानं श्रुत्वा शंकरवक्त्रतः । स बभूव महायोगी योगिनां ज्ञानिनां गुरुः ॥
जातकं कारयामास वाचयामास मङ्गलम् । वेदांश्च पाठयामास शिवाय च शिवः शिशोः
मणिरत्नत्रिकोटिं च ब्राह्मणेभ्यो ददौ शिवः । पार्वती च गवां लक्षं रत्नानि विविधानि च

१ ख. रत्नत्रिकोटिलक्षं च ।

शंभुश्च चतुरो वेदान्वेदाङ्गानितरांस्तथा । बालकं पाठयामास ज्ञानं मृत्युंजयं परम् ॥
भक्तिरास्ते स्वकान्ते चाभीष्टे देवे हरौ गुरौ । यस्यास्तेन च तत्पुत्रो बभूवास्तीक एव च
जगाम तपसे विष्णोः पुष्करं शंकराज्ञया । संप्राप्य च महामन्त्रं तपश्च परमात्मनः ॥
दिव्यं वर्षत्रिलक्षं च तपस्तप्त्वा तपोधनः । आजगाम महायोगी नमस्कर्तुं शिवं प्रभुम्
शंकरं च नमस्कृत्य पुरः कृत्वा च बालकम् । सा चाऽऽजगाम मनसा कश्यपस्याऽऽश्रमं पितुः
तां सपुत्रां सुतां दृष्ट्वा मुदं प्राप प्रजापतिः । शतलक्षं च रत्नानां ब्राह्मणेभ्यो ददौ मुने
ब्राह्मणान्भोजयामास त्वसंख्याञ्छ्रेयसे शिशोः । अदितिश्च दितिश्चान्या मुदं प्रापुः परं तथा
सा सपुत्रा च सुचिरं तस्थौ तातालये तदा । तदीयं पुनराख्यानं वक्ष्ये त्वं तन्निशामय ॥
अथाभिमन्युतनये ब्रह्मशापः परीक्षिते । बभूव सहसा ब्रह्मन्दैवदोषेण कर्मणा ॥
सप्ताहे समतीते तु तक्षकस्त्वां च दङ्क्ष्यति । शशाप शृङ्गी कौशिक्या जलं संस्पृश्य चेति सः ॥
राजा श्रुत्वा तत्प्रवृत्तिं गङ्गाद्वारं जगाम सः । तत्र तस्थौ च सप्ताहं शुश्रुवे धर्मसंहिताम्
सप्ताहे समतीते तु गच्छन्तं तक्षकं पथि । धन्वन्तरिर्मोचयितुमपश्यद्गन्तुको नृपम् ।
तयोर्बभूव संवादः सुप्रीतिश्च परस्परम् । धन्वन्तरेर्मणिं श्रेष्ठं तक्षकः स्वेच्छया ददौ ॥
स ययौ तं गृहीत्वा तु तुष्टः संहृष्टमानसः । तक्षको भक्षयामास नृपं मञ्चकसंस्थितम् ॥
राजा जगाम वैकुण्ठं रमारम्भारं हरिं गुरुम् । संस्कारं कारयामास पितुर्वै जनमेजयः ॥
राजा चकार यज्ञं च सर्पसत्राभिधं मुने । प्राणांस्तत्याज सर्पाणां समूहो ब्रह्मतेजसा ॥
स तक्षकश्च भीतश्च महेन्द्रं शरणं ययौ । सेन्द्रं च तक्षकं हन्तुं विप्रवर्गः समुद्यतः १११
अथ देवाश्च मुनयश्चाऽऽययुर्मनसान्तिकम् । तां तुष्टाव महेन्द्रश्च समक्षं भयकातरः ॥
तत आस्तीक आगत्य मातुर्यज्ञमथाऽऽज्ञया । महेन्द्रतक्षप्राणान्ययाचे भूमिपं वरम् ॥
ददौ वरं नृपश्रेष्ठः कृपया ब्राह्मणाज्ञया । यज्ञं समाप्य विप्रेभ्यो दक्षिणां च ददौ मुदा ॥
विप्राश्च मुनयो देवा गत्वा च मनसान्तिकम् । मनसां पूजयामासुस्तुष्टुवुश्च पृथक्पृथक् ॥
शक्रः संभृतसंभारो भक्तियुक्तः सदा शुचिः । मनसां पूजयामास तुष्टाव परमादरात् ॥
उपचारैः षोडशभिर्बलिं दत्त्वा प्रियं तदा । प्रददौ परितुष्टश्च ब्रह्मन्विप्रसुराज्ञया ॥ ११७॥
संपूज्य मनसादेवीं प्रययुः स्वालयं च ते । इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥

**नारद उवाच—**

केन स्तोत्रेण तुष्टाव महेन्द्रो मनसां सतीम् । पूजाविधिं क्रमं तस्याः श्रोतुमिच्छामि तत्त्वतः

**नारायण उवाच—**

सुस्नातः शुचिराचान्तो धृत्वा धौते च वाससी । रत्नसिंहासने देवीं वासयामास भक्तितः

स्वर्गगङ्गाजलेनैव रत्नकुम्भस्थितेन च । स्नापयामास मनसां महेन्द्रो वेदमन्त्रतः॥ १२१॥
वाससी वासयामास वह्निशुद्धे मनोरमे । सर्वाङ्गे चन्दनं लिप्त्वा पाद्यार्घ्यं भक्तिसंयुतः॥
गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम्। संपूज्याऽऽदौ देवषट्कं पूजयामास तां सतीम् ॥ १२ ॥
ॐ ह्रीं श्रीं मनसादेव्यै स्वाहेत्येवं च मन्त्रतः। दशाक्षरेण मन्त्रेण ददौ सर्वाण्यथोचितम् ॥
उपचारान्षोडशकान्भक्तितो दुर्लभान्हरिः । पूजयामास भक्त्या च ब्रह्मणा प्रेरितो मुदा
वाद्यं नानाप्रकारं च वादयामास तत्र वै । बभूव पुष्पवृष्टिश्च नभसो मनसोपरि ॥१२६॥
देव विप्राज्ञया तत्र ब्रह्मविष्णुशिवाज्ञया । तुष्टाव साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥१२७॥

महेन्द्र उवाच—

देवि त्वां स्तोतुमिच्छामि साध्वीनां प्रवरां पराम् । परात्परां च परमां नहि स्तोतुं क्षमोऽधुना ॥ १२८ ॥
स्तोत्राणां लक्षणं वेदे स्वभावाख्यानतः परम् । न क्षमः प्रकृतिं वक्तुं गुणानां तव सुव्रते ॥
शुद्धसत्त्वस्वरूपा त्वं कोपहिंसाविवर्जिता । न च शप्तो मुनिस्तेन त्यक्तया च त्वया यतः॥
त्वं मया पूजिता साध्वी जननी च यथाऽदितिः । दयारूपा च भगिनी क्षमारूपा यथा प्रसूः
त्वया मे रक्षिताः प्राणाः पुत्रदाराः सुरेश्वरि । अहं करोमि त्वां पूज्यां मम प्रीतिश्च वर्धते
नित्यं यद्यपि पूज्या त्वं भवेऽत्र जगदम्बिके । तथाऽपि तव पूजां वै वर्धयामि पुनः पुनः ॥
ये त्वामाषाढसंक्रान्त्यां पूजयिष्यन्ति भक्तितः । पञ्चम्यां मनसाख्यायां मासान्ते वा दिने दिने
पुत्रपौत्रादयस्तेषां वर्धन्ते च धनानि च । यशस्विनः कीर्तिमन्तो विद्यावन्तो गुणान्विताः ॥
ये त्वां न पूजयिष्यन्ति निन्दन्त्यज्ञानतो जनाः । लक्ष्मीहीना भविष्यन्ति तेषां नागभयं सदा
त्वं स्वर्गलक्ष्मीः स्वर्गे च वैकुण्ठे कमलाकला । नारायणांशो भगवाञ्जरत्कारुर्मुनीश्वरः ॥
तपसा तेजसा त्वां च मनसा ससृजे पिता । अस्माकं रक्षणायैव तेन त्वं मनसाभिधा ॥
मनसा देवितुं शक्ता चाऽऽत्मना सिद्धयोगिनी । तेन त्वं मनसादेवी पूजिता वन्दिता भवे ॥
यां भक्त्या मनसा देवाः पूजयन्त्यनिशं भृशम् । तेन त्वां मनसादेवीं प्रवदन्ति पुराविदः
सत्त्वरूपा च देवी त्वं शश्वत्सत्त्वनिषेवया । यो हि यद्भावयेन्नित्यं शतं प्राप्नोति तत्समम् ॥
इन्द्रश्च मनसां स्तुत्वा गृहीत्वा भगिनीं च ताम् । निर्जगाम स्वभवनं भूषावासपरिच्छदाम् ॥
पुत्रेण सार्धं सा देवी चिरं तस्थौ पितुर्गृहे । भ्रातृभिः पूजिता शश्वन्मान्या वन्द्या च सर्वतः॥
गोलोकात्सुरभी ब्रह्मंस्तत्राऽऽगत्य सुपूजिताम् । तां स्नापयित्वा क्षीरेण पूजयामास सादरम्

१ क. मूलेन ।

ज्ञानस्य कथयामास स्वरूपं सर्वदुर्लभम् । तदा देवैः पूजिता सा स्वर्गलोकं पुनर्ययौ ॥
इदं स्तोत्रं पुण्यबीजं तां संपूज्य च यः पठेत् । तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च
विषं भवेत्सुधातुल्यं सिद्धस्तोत्रं यदा पठेत् । पञ्चलक्षजपेनैव सिद्धस्तोत्रो नरो नरः ॥
सर्पशायी भवेत्सोऽपि निश्चितं सर्पवाहनः ॥ १४८ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० मनसोपा० तदुत्पत्तिपूजास्तो-
त्रादिकथनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

अथ सप्तचत्वारिंशोऽध्यायः ।

नारद उवाच—

का वा सा सुरभी देवी गोलोकादागता च या । तज्जन्मचरितं ब्रह्मञ्छ्रोतुमिच्छामि तत्त्वतः

नारायण उवाच—

गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः । गवां प्रधाना सुरभी गोलोके च समुद्भवा ॥
सर्वादिसृष्टेः कथनं कथयामि निशामय । बभूव येन तज्जन्म पुरा वृन्दावने वने ॥ ३ ॥
एकदा राधिकानाथो राधया सह कौतुकात् । गोपाङ्गनापरिवृतः पुण्यं वृन्दावनं ययौ ॥
सहसा तत्र रहसि विजहार च कौतुकात् । बभूव क्षीरपानेच्छा तदा स्वेच्छापरस्य च ॥
ससृजे सुरभीं देवो लीलया वामपार्श्वतः । वत्सयुक्तां दुग्धवतीं वत्सानां च मनोरमाम् ॥
दृष्ट्वा सवत्सां सुरभीं रत्नभाण्डे दुदोह सः । क्षीरं सुधातिरिक्तं च जन्ममृत्युजराहरम् ॥
तदुष्णं च पयः स्वादु पपौ गोपीपतिः स्वयम् । सरो बभूव पयसा भाण्डविस्रंसनेन च ॥
दैर्घ्ये च विस्तृते चैव परितः शतयोजनम् । गोलोकेषु प्रसिद्धं तद्रम्यं क्षीरसरोवरम् ॥
गोपिकानां च राधायाः क्रीडापापी बभूव सा । रत्नेन रचिता तूर्णं भूता वाऽीश्वरेच्छया ॥
बभूवुः कामधेनूनां सहसा लक्षकोटयः । तावन्तो हि सवत्साश्च सुरभीलोमकूपतः ॥ ११ ॥
तासां पुत्राश्च पौत्राश्च संबभूवुरसंख्यकाः । कथिता च गवां सृष्टिस्तया संपूरितं जगत् ॥
पूजां चकार भगवान्सुरभ्याश्च पुरा मुने । ततो बभूव तत्पूजा त्रिषु लोकेषु दुर्लभा ॥
दीपान्विता परदिने श्रीकृष्णस्याऽऽज्ञया भवे । बभूव सुरभीपूजा धर्मवक्त्रादिति श्रुतम् ॥
ध्यानं स्तोत्रं मूलमन्त्रं यद्यत्पूजाविधिक्रमम् । वेदोक्तं च महाभाग निबोध कथयामि ते ॥
ॐ सुरभ्यै नम इति मन्त्रस्तस्याः षडक्षरः । सिद्धो लक्षजपेनैव भक्तानां कल्पपादपः ॥

१ क. सहसा ।

स्थितं ध्यानं यजुर्वेदे पूजनं सर्वसंमतम् । ऋद्धिदां वृद्धिदां चैव मुक्तिदां सर्वकामदाम् ॥
लक्ष्मीस्वरूपां परमां राधासहचरीं पराम् । गवामधिष्ठातृदेवीं गवामाद्यां गवां प्रसूम् ॥
पवित्ररूपां पूज्यां च भक्तानां सर्वकामदाम् । यया पूतं सर्वविश्वं तां देवीं सुरभीं भजे ॥
घटे वा धेनुशिरसि बन्धस्तम्भे गवां च वा । शालग्रामे जलेऽग्नौ वा सुरभीं पूजयेद्द्विजः ॥
दीपान्विता परदिने पूर्वाह्णे भक्तिसंयुतः । यः पूजयेच्च सुरभीं स च पूज्यो भवेद्भुवि ॥
एकदा त्रिषु लोकेषु वाराहे विष्णुमायया । क्षीरं जहार सहसा चिन्तिताश्च सुरादयः
ते गत्वा ब्रह्मणो लोकं ब्रह्माणं तुष्टुवुस्तदा । तदाज्ञया च सुरभीं तुष्टुवे पाकशासनः ॥

महेन्द्र उवाच—

नमो देव्यै महादेव्यै सुरभ्यै च नमो नमः । गवां बीजस्वरूपायै नमस्ते जगदम्बिके ॥
नमो राधाप्रियायै च पद्मांशायै न० । नमः कृष्णप्रियायै च गवां मात्रे न० ॥२५॥
कल्पवृक्षस्वरूपायै प्रदात्र्यै सर्वसंपदाम् । श्रीदायै धनदायै च बुद्धिदायै न० ॥२६॥
शुभदायै प्रसन्नायै[1] गोप्रदायै न० । यशोदायै सौख्यदायै धर्मदायै न० ॥ २७ ॥
स्तोत्रश्रवणमात्रेण तुष्टा हृष्टा जगत्प्रसूः । आविर्बभूव तत्रैव ब्रह्मलोके सनातनी ॥२८॥
महेन्द्राय वरं दत्त्वा वाञ्छितं सर्वदुर्लभम् । जगाम सा च गोलोकं ययुर्देवादयो गृहम् ॥
बभूव विश्वं सहसा दुग्धपूर्णं च नारद । दुग्धाद्घृतं ततो यज्ञस्ततः प्रीतिः सुरस्य च
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् । स गोमान्धनवांश्चैव कीर्तिमान्पुण्यवान्भवेत् ॥
सुस्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । इह लोके सुखं भुक्त्वा यात्यन्ते कृष्णमन्दिरम् ॥
सुचिरं निवसेत्तत्र कुरुते कृष्णसेवनम् । न पुनर्भवनं तस्य ब्रह्मपुत्र भवे भवेत् ॥३३॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० सुरभ्युपा० तदुत्पत्तितत्पूजादिकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अथाष्टचत्वारिंशोऽध्यायः ।

---

नारद उवाच

नारायण महाभाग नारायणपरायण । नारायणांश भगवन्ब्रूहि नारायणीं कथाम् ॥
श्रुतं सुरभ्युपाख्यानमतीव सुमनोहरम् । गोप्यं सर्वपुराणेषु पुराविद्भिः प्रशंसितम् ॥
अधुना श्रोतुमिच्छामि राधिकाख्यानमुत्तमम् । तदुत्पत्तिं च तद्ध्यानं स्तोत्रं कवचमुत्तमम्

---

[1] क. 'यै शुभदायै गो'।

नारायण उवाच—

पुरा कैलासशिखरे भगवन्तं सनातनम् । सिद्धेशं सिद्धिदं सर्वस्वरूपं शंकरं परम् ॥
प्रफुल्लवदनं प्रीतं सस्मितं मुनिभिः स्तुतम् । कुमाराय प्ररोचन्तं कृष्णस्य परमात्मनः ॥
रासोत्सवरसाख्यानं रासमण्डलवर्णनम् ॥ ६ ॥
तदाख्यानावसाने च प्रस्तावावसरे सती । पप्रच्छ पार्वती स्फीता सस्मिता प्राणवल्लभम् ॥
स्तवनं कुर्वती भीता प्राणेशेन प्रसादिता । प्रोवाच तं महादेवं महादेवी सुरेश्वरी ॥ ७ ॥

पार्वत्युवाच—

अपूर्वं राधिकाख्यानं पुराणेषु सुदुर्लभम् । आगमं निखिलं नाथ श्रुतं सर्वमनुत्तमम् ॥
पाञ्चरात्रादिकं नीतिशास्त्रं योगं च योगिनाम् । सिद्धानां सिद्धिशास्त्रं च नानातन्त्रं मनोहरम्
भक्तानां भक्तिशास्त्रं च कृष्णस्य परमात्मनः । देवीनामपि सर्वासां चरितं त्वन्मुखाम्बुजात्
अधुना श्रोतुमिच्छामि राधिकाख्यानमुत्तमम् । श्रुतौ श्रुतं प्रशस्तं च राधायाश्च समासतः ॥
त्वन्मुखात्काण्वशाखायां व्यासेनोक्तं वदाधुना । आगमाख्यानकाले च भवता स्वीकृतं पुरा
महेश्वरव्याहृतिश्च मिथ्या भवितुमर्हति । तदुत्पत्तिं च तद्ध्यानं नाम्नो महात्म्यमुत्तमम् ॥
पूजाविधानं चरितं स्तोत्रं कवचमुत्तमम् । आराधनविधानं च पूजापद्धतिमीप्सिताम् ॥
सांप्रतं ब्रूहि भगवन्मां भक्तां भक्तवत्सल । कथं न कथितं पूर्वमागमाख्यानकालतः ॥
पार्वतीवचनं श्रुत्वा नम्रवक्त्रो बभूव सः । पञ्चवक्त्रश्च भगवाञ्छुष्ककण्ठोष्ठतालुकः ॥
स्वसत्यभङ्गभीतश्च मौनीभूय विचिन्तयन् । सस्मार कृष्णं ध्यानेनाभीष्टदेवं कृपानिधिम्
तदनु ज्ञानं संप्राप्य स्वार्धाङ्गां तामुवाच सः ॥ १८ ॥

महादेव उवाच—

निषिद्धोऽहं भगवता कृष्णेन परमात्मना । आगमारम्भसमये राधाख्यानप्रसङ्गतः ॥
मदर्धाङ्गस्वरूपा त्वं न मद्भिन्ना स्वरूपतः । अतोऽनुज्ञां ददौ कृष्णो मह्यं वक्तुं महेश्वरि
मदिष्टदेवकान्ताया राधायाश्चरितं सति । अतीव गोपनीयं च सुखदं कृष्णभक्तिदम् ॥
जानामि तदहं दुर्गे सर्वं पूर्वापरं वरम् । यज्जानामि रहस्यं च न तद्ब्रह्मा फणीश्वरः ॥
न तत्सनत्कुमारश्च न च धर्मः सनातनः । न देवेन्द्रो मुनीन्द्राश्च सिद्धेन्द्राः सिद्धपुंगवाः
मत्तो बलवती त्वं च प्राणांस्त्यक्तुं समुद्यता । अतस्त्वां गोपनीयं च कथयामि सुरेश्वरि ॥
शृणु दुर्गे प्रवक्ष्यामि रहस्यं परमाद्भुतम् । चरितं राधिकायाश्च दुर्लभं च सुपुण्यदम् ॥
पुरा वृन्दावने रम्ये गोलोके रासमण्डले । शतशृङ्गैकदेशे च मालतीमल्लिकावने ॥२१॥

1 क. जगत्प्रसूः ।

रत्नसिंहासने रम्ये तस्थौ तत्र जगत्पतिः । स्वेच्छामयश्च भगवान्बभूव रमणोत्सुकः ॥
रिरंसोस्तस्य जगतां पत्युस्तन्मल्लिकावने । इच्छया च भवेत्सर्वं तस्य स्वेच्छामयस्य च
एतस्मिन्नन्तरे दुर्गे द्विधारूपो बभूव सः । दक्षिणाङ्गं च श्रीकृष्णो वामार्धाङ्गं च राधिका
बभूव रमणी रम्या रासेशा रमणोत्सुका । अमूल्यरत्नाभरणा रत्नसिंहासनस्थिता ॥
वह्निशुद्धांशुकाधाना कोटिपूर्णशशिप्रभा । तप्तकाञ्चनवर्णाभा राजिता च स्वतेजसा ॥
सस्मिता सुदती शुद्धा शरत्पद्मनिभानना । बिभ्रती कबरीं रम्यां मालतीमाल्यमण्डिताम्
रत्नमालां च दधती ग्रीष्मसूर्यसमप्रभाम् । मुक्ताहारेण शुभ्रेण गङ्गाधारानिभेन च ॥
संयुक्तं वर्तुलोत्तुङ्गं सुमेरुगिरिसंनिभम् । कठिनं सुन्दरं दृश्यं कस्तूरीपत्रचिह्नितम् ॥
माङ्गल्यं मङ्गलार्हं च स्तनयुग्मं च बिभ्रती । नितम्बश्रोणिभारार्ता नवयौवनसुन्दरी ॥
कामातुरां सस्मितां तां ददर्श रसिकेश्वरः । दृष्ट्वा कान्तां जगत्कान्तो बभूव रमणोत्सुकः
दृष्ट्वा रिरंसुं कान्तं च सा दधार हरेः पुरः । तेन राधा समाख्याता पुराविद्भिर्महेश्वरि ॥
राधा भजति तं कृष्णं स च तां च परस्परम् । उभयोः सर्वसाम्यं च सदा सन्तो वदन्ति च
भवनं धावनं रासे स्मरत्यालिङ्गनं जपन् । तेन जल्पति संकेतं तत्र राधां स ईश्वरः ॥
राशब्दोच्चारणाद्भक्तो राति मुक्तिं सुदुर्लभाम् । धाशब्दोच्चारणाद्दुर्गे धावत्येव हरेः पदम्
कृष्णवामांशसंभूता राधा रासेश्वरी पुरा । तस्याश्चांशांशकलया बभूवुर्देवयोषितः ॥४१॥
रा इत्यादानवचनो धा च निर्वाणवाचकः । ततोऽवाप्नोति मुक्तिं च तेन राधा प्रकीर्तिता
बभूव गोपीसंघश्च राधाया लोमकूपतः । श्रीकृष्णलोमकूपेभ्यो बभूवुः सर्वबल्लवाः ॥४२॥
राधावामांशभागेन महालक्ष्मीर्बभूव सा । तस्याधिष्ठातृदेवी सा गृहलक्ष्मीर्बभूव सा ॥
चतुर्भुजस्य सा पत्नी देवी वैकुण्ठवासिनी । तदंशा सिन्धुकन्या च श्वेतद्वीपनिवासिनी ॥
क्षीरोदशायिनः पत्नी विष्णोर्विषायेणः शिवे । तदंशा सा स्वर्गलक्ष्मीः शक्रसंपत्प्रदायिनी ॥
तदंशा राजलक्ष्मीश्च राजसंपत्प्रदायिनी ॥ ४९ ॥[3]
तदंशा मर्त्यलक्ष्मीश्च गृहिणां च गृहे गृहे । दीपाधिष्ठातृदेवी च सा चैव गृहदेवता ॥
स्वयं राधा कृष्णपत्नी कृष्णवक्षःस्थलस्थिता । प्राणाधिष्ठातृदेवी च तस्यैव परमात्मनः ॥
आब्रह्मस्तम्बपर्यन्तं सर्वं मिथ्यैव पार्वति । भज सत्यं परं ब्रह्म राधेशं त्रिगुणात्परम् ॥
परं प्रधानं परमं परमात्मानमीश्वरम् । सर्वाद्यं सर्वपूज्यं च निरीहं प्रकृतेः परम् ॥४९॥
स्वेच्छामयं नित्यरूपं भक्तानुग्रहविग्रहम् । तद्भिन्नानां च देवानां प्राकृतं रूपमेव च ॥

---

१ क. रमणीं कर्तुमिच्छामि तद्बभूव सुरेश्वरी । इ° । २ क. धारयामास सा रत्याऽऽलिङ्गने जयात् । ते° । ३ क. सत्याधि° ।

स गत्वा शङ्खचूडं तं ददर्श सुमनोहरम् । सभामण्डलमध्यस्थं स्वर्णसिंहासनस्थितम् ॥
मणीन्द्ररचितं चित्रं रत्नदण्डसमन्वितम् । रत्नकृत्रिमपुष्पैश्च प्रशस्तं शोभितं सदा ॥
भृत्येन हस्तविधृतं स्वर्णच्छत्रं मनोहरम् । सेवितं पार्षदगणैर्गजनैः श्वेतचामरैः ॥२२॥
सुवेषं सुन्दरं रम्यं रत्नभूषणभूषितम् । माल्यानुलेपनं सूक्ष्मवस्त्रं च दधतं मुने ॥२३॥
दानवेन्द्रैः परिवृतं सुवेषैश्च त्रिकोटिभिः । शतकोटिभिरन्यैश्च भ्रमद्भिः शस्त्रधारिभिः ॥
एवंभूतं च तं दृष्ट्वा पुष्पदन्तः सविस्मयः । उवाच रणवृत्तान्तं यदुक्तं शंकरेण च ॥

पुष्पदन्त उवाच—

राजेन्द्र शिवदूतोऽहं पुष्पदन्ताभिधः प्रभो । यदुक्तं शंकरेणैव तद्ब्रवीमि निशामय ॥
राज्यं देहि च देवानामधिकारं च सांप्रतम् । देवाश्च शरणापन्ना देवेशे श्रीहरौ परे ॥
दत्त्वा त्रिशूलं हरिणा तुभ्यं प्रस्थापितः शिवः । चैन्द्रभागानदीतीरे वटमूले त्रिलोचनः
विषयं देहि तेषां च युद्धं वा कुरु निश्चितम् । गत्वा वक्ष्यामि किं शंभुं तद्भवान्वक्तुमर्हति ॥
दूतस्य वचनं श्रुत्वा शङ्खचूडः प्रहस्य च । प्रभाते ह्यागमिष्यामि त्वं च गच्छेत्युवाच ह
स गत्वोवाच तूर्णं तं वटमूलस्थमीश्वरम् । शङ्खचूडस्य वचनं तदीयं यत्परिच्छदम् ॥३१॥
एतस्मिन्नन्तरे स्कन्द आजगाम शिवान्तिकम् । वीरभद्रश्च नन्दी च महाकालः सुभद्रकः ॥
विशालाक्षश्च बाणश्च पिङ्गलाक्षो विकम्पनः । विरूपो विकृतिश्चैव मणिभद्रश्च बाष्कलः
कपिलाक्षो दीर्घदंष्ट्रो विकटस्ताम्रलोचनः । कालकूटो बलीभद्रः कालजिह्वः कुटीचरः ॥
बलोन्मत्तो रणश्लाघी दुर्जयो दुर्गमस्तथा । अष्टौ च भैरवा रौद्रा रुद्राश्चैकादश स्मृताः
वसवो वासवाद्याश्च आदित्या द्वादश स्मृता । हुताशनश्च चन्द्रश्च विश्वकर्माऽश्विनौ च तौ
कुबेरश्च यमश्चैव जयन्तो नलकूबरः । वायुश्च वरुणश्चैव बुधो वै मङ्गलस्तथा ॥ ३७ ॥
धर्मश्च शनिरीशानः कामदेवश्च वीर्यवान् । उग्रदंष्ट्रा चोग्रदंष्ट्रा कोटकी कैटभी तथा ॥
स्वयं शतभुजा देवी भद्रकाली भयंकरी । रत्नेन्द्रराजखचितविमानोपरिसंस्थिता ॥
रक्तवस्त्रपरीधाना रक्तमाल्यानुलेपना । नृत्यन्ती च हसन्ती च गायन्ती सुस्वरं मुदा ॥
अभयं ददती भक्तमभया सा भयं रिपुम् । बिभ्रती विकटां जिह्वां सुलोलां योजनायताम् ॥
खर्परं वर्तुलाकारं गम्भीरं योजनायतम् । त्रिशूलं गगनस्पर्शि शक्तिं वै योजनायताम् ॥
शङ्खं चक्रं गदां पद्मं शरांश्चापं भयंकरम् । मुद्गरं मुसलं वज्रं खड्गं फलकमुज्ज्वलम् ॥
वैष्णवास्त्रं वारुणास्त्रमाग्नेयं नागपाशकम् । नारायणास्त्रं ब्रह्मास्त्रं गान्धर्वं गारुडं तथा ॥

---

१ क. प्रदर्सि शो° । २ क. °णैः सुवेशै रुचिरप्रभैः । ३ क. पुष्पभद्रान° । ४ क. °भुमथवा वद मामपि । ५ क. °तेऽहं करिष्यामि युद्धं ग°।

दशयोजनविस्तीर्णं दैर्घ्ये तच्छतयोजनम् । सहस्रचक्रयुक्तं च नानाचित्रसमन्वितम् ॥
नानाविचित्रवसनैः सूक्ष्मैः क्षौमैर्विराजितम् । अमूल्यरत्ननिर्माणदर्पणैः परिशोभितम् ॥
मणीन्द्रजालमालाभिः पुष्पमालासहस्रकैः । सद्रत्नकलशैर्युक्तं रम्यैर्मन्दिरकोटिभिः ॥ १७॥
त्रिलक्षकोटिभिः सार्धं गोपीभिश्च प्रियालिभिः । ययौ रथेन तेनैव सुमनोमालिना प्रिये ॥
श्रुत्वा कोलाहलं गोपः सुदामा कृष्णपार्षदः । कृष्णं कृत्वा सावधानं गोपैः सार्धं पलायितः ॥
भयेन कृष्णः संत्रस्तो विहाय विरजां सतीम् । स्वप्रेममग्नः कृष्णोऽपि तिरोधानं चकार सः ॥
सा सती समयं ज्ञात्वा विचार्य स्वहृदि क्रुधा । राधाप्रकोपभीता च प्राणांस्तत्याज तत्क्षणम्
विरजाल्गिणास्तत्र भयविह्वलकातराः । प्रययुः शरणं साध्वीं विरजां तत्क्षणं भिया ॥ २२॥
गोलोके सा सरिद्रूपा जाता वै शैलकन्यके । कोटियोजनविस्तीर्णा दैर्घ्ये शतगुणा तथा २३॥
गोलोकं वेष्टयामास परिखेव मनोहरा । बभूवुः क्षुद्रनद्यश्च तदाऽन्या गोप्य एव च ॥ २४॥
सर्वा नद्यस्तदंशाश्च प्रतिविश्वेषु सुन्दरि । इमे सप्त समुद्राश्च विरजानन्दना भुवि ॥ २५॥
अथाऽऽगत्य महाभागा राधा रासेश्वरी परा । न दृष्ट्वा विरजां कृष्णं स्वगृहं च पुनर्ययौ ॥
जगाम कृष्णस्तां राधां गोपालैरष्टभिः सह । गोपीभिर्द्वारियुक्ताभिर्वारितोऽपि पुनः पुनः ॥
दृष्ट्वा कृष्णं च सा देवी भर्त्सयामास तं तदा । सुदामा भर्त्सयामास तां तथा कृष्णसंनिधौ ॥
क्रुद्धा शशाप सा देवी सुदामानं सुरेश्वरी । गच्छ त्वमासुरीं योनिं गच्छ दूरमतो द्रुतम् ॥
शशाप तां सुदामा च त्वमितो गच्छ भारतम् । भव गोपी गोपकन्या मुख्याभिः स्वाभिरेव च
तत्र ते कृष्णविच्छेदो भविष्यति शतं समाः । तत्र भारावतरणं भगवांश्च करिष्यति ॥ ३०॥
इति शप्त्वा सुदामाऽसौ प्रणम्य जननीं हरिम् । साश्रुनेत्रो मोहयुक्तस्ततो गन्तुं समुद्यतः ॥
राधा जगाम तत्पश्चात्साश्रुनेत्राऽतिविह्वला । वत्स क्व यासीत्युच्चार्य पुत्रविच्छेदकातरा ॥
कृष्णस्तां बोधयामास विद्यया च कृपानिधिः । शीघ्रं संप्राप्स्यसि सुतं मा रुदस्त्वं वरानने ॥
स चासुरः शङ्खचूडो बभूव तुलसीपतिः । मच्छूलभिन्नकायेन गोलोकं वै जगाम सः ॥ ३४॥
राधा जगाम वाराहे गोकुलं भारतं सती । वृषभानोश्च वैश्यस्य सा च कन्या बभूव ह ॥ ३५॥
अयोनिसंभवा देवी वायुगर्भा कलावती । सुषुवे मायया वायुं सा तत्राऽऽविर्बभूव ह ॥ ३६॥
अतीते द्वादशाब्दे तु दृष्ट्वा तां नवयौवनाम् । सार्धं रायणवैश्येन तत्संबन्धं चकार सः ॥ ३७॥
छायां संस्थाप्य तद्गेहे साऽन्तर्धानमवाप ह । बभूव तस्य वैश्यस्य विवाहश्छायया सह ॥
गते चतुर्दशाब्दे तु कंसभीतेश्छलेन च । जगाम गोकुलं कृष्णः शिशुरूपी जगत्पतिः ॥
कृष्णमातुर्यशोदाया रायणस्तत्सहोदरः । गोलोके गोपकृष्णांशः संबन्धात्कृष्णमातुलः ॥
कृष्णेन सह राधायाः पुण्ये वृन्दावने वने । विवाहं कारयामास विधिना जगतां विधिः ॥

---

१ क. विहारं का° ।

स्वप्ने राधापदाम्भोजं नहि पश्यन्ति बल्लवाः। स्वयं राधा हरेः क्रोडे छाया रायणमन्दिरे॥
षष्टिवर्षसहस्राणि तपस्तेपे पुरा विधिः। राधिकाचरणाम्भोजदर्शनार्थी च पुष्करे॥४३॥
भारावतरणे भूमेर्भारते नन्दगोकुले। ददर्श तत्पदाम्भोजं तपसस्तत्फलेन च ॥ ४४ ॥
किंचित्कालं स वै कृष्णः पुण्ये वृन्दावने वने। रेमे गोलोकनाथश्च राधया सह भारते ॥
ततः सुदामशापेन विच्छेदश्च बभूव ह। तत्र भारावतरणं भूमेः कृष्णश्चकार सः॥४६॥
शताब्दे समतीते तु तीर्थयात्राप्रसङ्गतः। ददर्श कृष्णं सा राधा स च तां च परस्परम् ॥
ततो जगाम गोलोकं राधया सह तत्त्ववित्। कलावती यशोदा च पर्यगाद्राधया सह ॥
वृषभानुश्च नन्दश्च ययौ गोलोकमुत्तमम्। सर्वे गोपाश्च गोप्यश्च ययुस्ता याः समागताः ४९
छायागोपाश्च गोप्यश्च प्रापुर्मुक्तिं च संनिधौ। रेमिरे ताश्च तत्रैव सार्धं कृष्णेन पार्वति ५०
षट्त्रिंशल्लक्षकोट्यश्च गोप्यो गोपाश्च तत्समाः। गोलोकं प्रययुर्मुक्ताः सार्धं कृष्णेन राधया
द्रोणः प्रजापतिर्नन्दो यशोदा तत्प्रिया धरा। संप्राप पूर्वतपसा परमात्मानमीश्वरम् ॥
वसुदेवः कश्यपश्च देवकी चादितिः सती। देवमाता देवपिता प्रतिकल्पे स्वभावतः ॥
पितॄणां मानसी कन्या राधामाता कलावती। वसुदामाऽपि गोलोकाद्वृषभानुः समाययौ
इत्येवं कथितं दुर्गे राधिकाख्यानमुत्तमम्। संपत्करं पापहरं पुत्रपौत्रविवर्धनम्॥ ५५ ॥
श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः। चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम्
चतुर्भुजस्य पत्नी च महालक्ष्मीः सरस्वती। गङ्गा च तुलसी चैव देव्यो नारायणप्रियाः
श्रीकृष्णपत्नी सा राधा तदर्धाङ्गसमुद्भवा। तेजसा वयसा साध्वी रूपेण च गुणेन च ॥
आदौ राधां समुच्चार्य पश्चात्कृष्णं वदेद्बुधः। व्यतिक्रमे ब्रह्महत्यां लभते नात्र संशयः॥
कार्तिके पूर्णिमायां च गोलोके रासमण्डले। चकार पूजां राधायास्तत्संबन्धिमहोत्सवम् ॥
सद्रत्नगुटिकायाश्च कृत्वा तत्कवचं हरिः। दधार कण्ठे बाहौ च दक्षिणे सह गोपकैः ॥
कृत्वा ध्यानं च पूजां च स्तोत्रमेतच्चकार सः। राधाचर्विततांबूलं चखाद मधुसूदनः ॥
राधा पूज्या च कृष्णस्य तत्पूज्यो भगवान्प्रभुः। परस्पराभीष्टदेवे भेदकृन्नरकं व्रजेत् ॥
द्वितीये पूजिता सा च धर्मेण ब्रह्मणा मया। अनन्तवासुकिभ्यां च रविणा शशिना पुरा।
महेन्द्रेण च रुद्रैश्च मनुना मानवेन च। सुरेन्द्रैश्च मुनीन्द्रैश्च सर्वविश्वैश्च पूजिता ॥६६॥
तृतीये पूजिता सा च सप्तद्वीपेश्वरेण च। भारते च सुयज्ञेन पुत्रैर्मित्रैर्मुदाऽऽन्वितैः ॥
ब्राह्मणेनाभिशप्तेन दैवदोषेण भूभृता। व्याधिग्रस्तेन हस्तेन दुःखिना च विदूयता ६७॥
संप्राप राज्यं भ्रष्टश्रीः स च राधावरेण च। स्तोत्रेण ब्रह्मदत्तेन स्तुत्वा च परमेश्वरीम्॥

अभेद्यं कवचं तस्याः कण्ठे बाहौ दधार सः । ध्यात्वा चकार पूजां च पुष्करे शतवत्सरान्
अन्ते जगाम गोलोकं रत्नयानेन भूमिपः । इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० प्रकृति० नारदना० हरगौरिसं० राधोपा० राधाया
सुदामशापादिकथनं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

अथ पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

पार्वत्युवाच—
को वा सुयज्ञो नृपतिः कुत्र वंशे बभूव सः । कथं विप्राभिशप्तश्च कथं संप्राप राधिकाम् ॥
सर्वात्मनश्च कृष्णस्य पत्नीं श्रीकृष्णपूजिताम् । कथं विण्मूत्रधारी च सिषेवे परमेश्वरीम् ॥
षष्टिवर्षसहस्राणि तपस्तेपे पुरा विधिः । यत्पादाम्भोजरेणूनां लब्धये पुष्करे विभुः ॥३॥
कथं ददर्श तां देवीं महालक्ष्मीं पुरा सतीम् । दुर्दर्शामपि युष्माकं दृश्या साऽभूत्कथं नृणाम्
कथं त्रिजगतां धाता तस्मै तत्कवचं ददौ । ध्यानं पूजाविधिं स्तोत्रं तन्मे व्याख्यातुमर्हसि

महादेव उवाच—
स्वायंभुवो मनुर्देवि मनूनामादिरेव च । ब्रह्मात्मजस्तपस्वी च शतरूपापतिः प्रभुः ॥ ६ ॥
उत्तानपादस्तत्पुत्रस्तत्पुत्रो ध्रुव एव च । ध्रुवस्य कीर्तिर्विख्याता त्रैलोक्ये शैलकन्यके ॥७॥
उत्कलस्तस्य पुत्रश्च नारायणपरायणः । सहस्रं राजसूयानां पुष्करे स चकार ह ॥ ८ ॥
सर्वाणि रत्नपात्राणि ब्राह्मणेभ्यो ददौ मुदा । अमूल्यरत्नराशीनां सहस्रं तेजसाऽऽवृतम् ॥
ब्राह्मणेभ्यो ददौ राजा यज्ञान्ते सुमहोत्सवे ॥ ९ ॥
दृष्ट्वा तच्छोभनं यज्ञं विधाता जगतां प्रिये । सुयज्ञं नाम नृपतिं चकार सुरसंसदि ॥ १० ॥
स च राजा सुयज्ञश्च मनुवंशसमुद्भवः । अन्नदाता रत्नदाता दाता वै सर्वसंपदाम् ॥ ११ ॥
दशलक्षं गवां चैव रत्नशृङ्गपरिच्छदम् । नित्यं ददौ स विप्रेभ्यो मुदा युक्तः सदक्षिणम् ॥
गवां द्वादशलक्षाणां ददौ नित्यं मुदाऽन्वितः । सुपक्वानि च मांसानि ब्राह्मणेभ्यश्च पार्वति
षट्कोटीर्ब्राह्मणानां च भोजयामास नित्यशः । चोष्यैश्चर्व्यैर्लेह्यपेयैरतितृप्तं दिने दिने ॥
विप्रलक्षं सूपकारं भोजयामास तत्परम् । पूर्णमन्नं च सूपाक्तं सगव्यं मांसवर्जितम् ॥ १५ ॥
विप्रा भोजनकाले च मनुवंशसमुद्भवम् । न तुष्टुवुः सुयज्ञं च तुष्टुवुस्तातिपितृंश्च ते ॥ १६ ॥
दिने सुयज्ञयज्ञान्ते षट्त्रिंशल्लक्षकोटयः । चक्रुः सुभोजनं विप्राश्चातितृप्ताश्च सुन्दरि ॥
गृहीतानि च रत्नानि स्वगृहं वोढुमक्षमाः । वृषलेभ्यो ददुः किंचित्किंचित्पथि च तत्यजुः

1 क. आर्थं च क° । २ क. परां ।

विप्राणां भोजनान्ते च विप्रान्येभ्यो ददौ नृपः । तथाऽप्युर्वरितं तत्र चान्नराशिसहस्रकम्
कृत्वा यज्ञं महाबाहुः समुवास स्वसंसदि । रत्नेन्द्रसारसंक्लृप्तच्छत्रकोटिसमन्विते २०
रत्नसिंहासने रम्ये पट्टवस्त्रैः सुसंस्कृते । चन्दनादिसुसंसृष्टे रम्ये चन्दनपल्लवैः ॥ २१ ॥
शाखायुक्तैः पूर्णकुम्भै रम्भावृक्षैश्च शोभिते । चन्दनागुरुकस्तूरीघनसिन्दूरसंस्कृते ॥ २२ ॥
वसुवासवचन्द्रेन्द्ररुद्रादित्यसमन्विते । मुनिनारदमन्वादिब्रह्मविष्णुशिवान्विते ॥ २३ ॥
एतस्मिन्नन्तरे तत्र विप्र एकः समाययौ । रूक्षो मलिनवासाश्च शुष्ककण्ठौष्ठतालुकः ॥
रत्नसिंहासनस्थं च माल्यचन्दनचर्चितम् । राजानमाशिषं चक्रे सस्मितः संपुटाञ्जलिः ॥
प्रणनाम नृपस्तं च नोत्तस्थौ किंचिदेव हि । सभासदश्च नोत्तस्थुर्जहसुः स्वल्पमेव च ॥
मुनिभ्योऽपि च देवेभ्यो नमस्कृत्य द्विजोत्तमः । शशाप नृपतिं क्रोधात्तत्रातिष्ठन्निरङ्कुशः
गच्छ दूरमतो राज्याद्भ्रष्टश्रीर्भव पामर । भवाचिरं गलत्कुष्ठी बुद्धिहीनोऽप्युपद्रुतः ॥
इत्युक्त्वा कम्पितः क्रोधात्सभास्थान्गन्तुमुद्यतः । ये तत्र जहसुः सर्वे समुत्तस्थुः सभासदः
सर्वे चक्रुः प्रणामं ते क्रोधं तत्याज वाडवः ॥ ३० ॥
प्रणम्याऽऽगत्य राजा तं रुरोद भयकातरः । निःससार सभामध्याद्धृदयेन विदूयता ॥
ब्राह्मणो गूढरूपी च प्रज्वलन्ब्रह्मतेजसा । तत्पश्चान्मुनयः सर्वे प्रययुर्भयकातराः ॥ ३२ ॥
हे विप्र तिष्ठ तिष्ठेति समुच्चार्य पुनः पुनः । पुलहश्च पुलस्त्यश्च प्रचेता भृगुरङ्गिराः ॥
मरीचिः कश्यपश्चैव वसिष्ठः क्रतुरेव च । शुक्रो बृहस्पतिश्चैव दुर्वासा लोमशस्तथा ॥
गौतमश्च कणादश्च कण्वः कात्यायनः कठः । पाणिनिर्जाबलिश्चैव ऋष्यशृङ्गो विभाण्डकः
तैत्तिरिश्चाऽऽप्याशिशिर्मार्कण्डेयो महातपाः । सनकश्च सनन्दश्च वोढुः पैलः सनातनः
सनत्कुमारो भगवान्नरनारायणावृषी । पराशरो जरत्कारुः संवर्तः करभस्तथा ॥ ३७ ॥
भरद्वाजश्च वाल्मीकिरौर्वश्च च्यवनस्तथा । अगस्त्योऽत्रिरुतथ्यश्च संकर्ताऽऽस्तीक आसुरिः
शिलालिर्लाङ्गलिश्चैव शाकल्यः शाकटायनः । गर्गो वत्सः पञ्चशिखो जमदग्निश्च देवलः
जैगीषव्यो वामदवो वालखिल्यादयस्तथा । शक्तिर्दक्षः कर्दमश्च प्रस्कन्नः कपिलस्तथा ॥
विश्वामित्रश्च कौत्सश्चाप्यृचीकोऽप्यघमर्षणः । एते चान्ये च मुनयः पितरोऽग्निर्हरिप्रिया[1]
दिक्पाला देवताः सर्वा विप्रं पश्चात्समाययुः । ब्राह्मणं बोधयामासुर्वासयामासुरीश्वरि ॥
समूचुस्तं क्रमेणैव नीतिं नीतिविशारदाः ॥ ४१ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० हरगौरीसं० राधोपा० सुयज्ञोपाख्यानं
नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

१ क. °हविःप्रिया ।

## अथैकपञ्चाशत्तमोऽध्यायः ।

पार्वत्युवाच—

किमूचुर्ब्राह्मणं ब्रह्मन्ब्राह्मणा ब्रह्मणः सुताः । नीतिज्ञा नीतिवचनं तन्मां व्याख्यातुमर्हसि ॥

महादेव उवाच—

संतोष्य तं ब्राह्मणं च स्तवेन विनयेन च । क्रमेण वक्तुमारेभे मुनिसंघो वरानने ॥ २ ॥

सनत्कुमार उवाच—

स्वत्पश्चादागता लक्ष्मीः कीर्तिः सत्त्वं यशस्तथा । सुशीलं च महैश्वर्यं पितरोऽग्निः सुरास्तथा

आगता नृपगेहेभ्यः कृत्वा भ्रष्टश्रियं नृपम् । भव तुष्टो द्विजश्रेष्ठ चाऽऽशुतोषश्च बालवत् ॥

ब्राह्मणानां तु हृदयं कोमलं नवनीतवत् । शुद्धं सुनिर्मलं चैव मार्जितं तपसा मुने ॥५॥

क्षमस्वाऽऽगच्छ विप्रेन्द्र शुद्धं कुरु नृपालयम् । आशिषं कुरु तस्मै त्वं पवित्रपदरेणुना ॥

भृगुरुवाच—

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । पितरस्तस्य देवाश्च वह्निश्चैव तथैव च ॥७॥

निराशाः प्रतिगच्छन्ति चातिथेरप्रतिग्रहात् । क्षमस्वाऽऽगच्छ विप्रेन्द्र शुद्धं कुरु नृपालयम्

स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः । तुल्यदोषो भवत्येतैर्यस्यातीथिरनार्चितः ॥ ९ ॥

पुलस्त्य उवाच—

पश्यन्ति ये वक्रदृष्ट्या चातिथिं गृहमागतम् । दत्त्वा स्वपापं तस्मै तत्पुण्यमादाय गच्छति

क्षमस्व नृपदोषं च गच्छ वत्स यथासुखम् । राजा स्वकर्मदोषेण नोत्तस्थौ तत्क्षमां कुरु ॥

पुलह उवाच—

राजश्रिया विद्यया वा ब्राह्मणं योऽवमन्यते । विप्रस्त्रिसंध्यहीनो यः श्रीहीनः क्षत्रियो भवेत ॥ १२ ॥

एकादशीविहीनश्च विष्णुनैवेद्यवञ्चितः । क्षमस्वाऽऽगच्छ विप्रेन्द्र शुद्धं कुरु नृपालयम् ॥

क्रतुरुवाच—

ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा शूद्र एव च । दीक्षाहीनो भवेत्सोऽपि ब्राह्मणं योऽवमन्यते ॥ १४ ॥

धनहीनः पुत्रहीनो भार्याहीनो भवेद्ध्रुवम् । क्षमस्वाऽऽगच्छ भगवञ्छुद्धं कुरु नृपालयम् ॥

अङ्गिरा उवाच—

ज्ञानवान्ब्राह्मणो भूत्वा ब्राह्मणं योऽवमन्यते । वृषवाहो भवेत्सोऽपि भारते सप्तजन्मसु ॥

मरीचिरुवाच—

पुण्यक्षेत्रे भारते च देवं च ब्राह्मणं गुरुम् । विष्णुभक्तिविहीनश्च स भवेद्योऽवमन्यते ॥

कश्यप उवाच—

वैष्णवं ब्राह्मणं दृष्ट्वा यो हसत्यवमन्यते । विष्णुमन्त्रविहीनश्च तत्पूजाविरतो भवेत् ॥

प्रचेता उवाच—

अतिथिं ब्राह्मणं दृष्ट्वा नाभ्युत्थानं करोति यः । पितृमातृभक्तिहीनः स भवेद्भारते भुवि ॥

प्राप्नोति कौञ्जरीं योनिं स मूढः सप्तजन्मसु । शीघ्रं गच्छ द्विजश्रेष्ठ राज्ञे देह्याशिषः शुभाः

दुर्वासा उवाच—

गुरुं वा ब्राह्मणं वाऽपि देवताप्रतिमामपि । दृष्ट्वा शीघ्रं न प्रणमेत्स भवेत्सूकरो भुवि ॥

मिथ्यासाक्षी च भवति तथा विश्वासघातकः । क्षमस्व सर्वमस्माकमातिथ्यग्रहणं कुरु ॥

राजोवाच—

छलेन कथितो धर्मो युष्माभिर्मुनिपुंगवैः । सर्वं कृत्वा च विस्पष्टं मां मूढं बोधयन्त्वहो ॥

स्त्रीघ्नगोघ्नकृतघ्नानां गुरुस्त्रीगामिनां तथा । ब्रह्मघ्नानां च को दोषो ब्रूत मां योगिनां वराः ॥

वसिष्ठ उवाच—

कामतो गोवधे राजन्वर्षं तीर्थं भ्रमेन्नरः । यवयावकभोजी च करेण च जलं पिबेत् ॥

तदा धेनुशतं दिव्यं ब्राह्मणेभ्यः सदक्षिणम् । दत्त्वा मुच्यति पापाच्च भोजयित्वा शतं द्विजान्

प्रायश्चित्ते तु वै चीर्णे सर्वपापान्न मुच्यते । पापावशेषाद्भवति दुःखी चाण्डाल एव च ॥

आतिदेशिकहत्यायां तदर्धं फलमश्नुते । प्रायश्चित्तानुकल्पेन सर्वपापान्न मुच्यते ॥२८॥

शुक्र उवाच—

गोहत्याद्विगुणं पापं स्त्रीहत्यायां भवेद्ध्रुवम् । षष्टिवर्षसहस्राणि कालसूत्रे वसेद्ध्रुवम् ॥

ततो भवेन्महापापी सूकरः सप्तजन्मसु । ततो भवति सर्पश्च सप्तजन्मन्यतः शुचिः ॥

बृहस्पतिरुवाच—

स्त्रीहत्याद्विगुणं पापं ब्रह्महत्याकृतो भवेत् । लक्षवर्षं महाघोरे कुम्भीपाके वसेद्ध्रुवम् ॥

ततो भवेन्महापापी विष्ठाकीटः शताब्दकम् । ततो भवति सर्पश्च सप्तजन्मन्यतः शुचिः

गौतम उवाच—

दोषः कृतघ्ने राजेन्द्र ब्रह्महत्याचतुर्गुणः । निष्कृतिर्नास्ति वेदोक्ता कृतघ्नानां च निश्चितम्

राजोवाच—

लक्षणं च कृतघ्नानां वद वेदविदां वर । कृतघ्नः कतिधा प्रोक्तः केषु को दोष एव च ॥

ऋष्यशृङ्ग उवाच—

कृतघ्नाः षोडशविधाः सामवेदे निरूपिताः । सर्वः प्रत्येकदोषेण प्रत्येकं फलमश्नुते ॥

कृते सत्ये च पुण्ये च स्वधर्मे तपसि स्थिते । प्रतिज्ञायां च दाने च स्वगोष्ठीपरिपालने ॥

---

१ क. सौकरीं ।

गुरुकृत्ये देवकृत्ये काम्यकृत्ये द्विजार्चने । नित्यकृत्ये च विश्वासे परधर्मप्रदानयोः ॥
एतान्यो हन्ति पापिष्ठः स कृतघ्न इति स्मृतः । एतेषां सन्ति लोकाश्च तज्जन्म भिन्नयोनिषु ॥
यान्यांश्च नरकांस्ते च यान्ति राजेन्द्र पापिनः । ते ते च नरकाः सन्ति यमलोके सुनिश्चितम्

सुयज्ञ उवाच—

के किं कृत्वा कृतघ्नाश्च कान्कान्गच्छन्ति रौरवान् । प्रत्येकं श्रोतुमिच्छामि वक्तुमर्हसि मे प्रभो ॥ ४० ॥

कात्यायन उवाच—

कृत्वा शपथरूपं च सत्यं हन्ति न पालयेत् । स कृतघ्नः कालसूत्रे वसेदेव चतुर्युगम् ॥
सप्तजन्मसु काकश्च सप्तजन्मसु पेचकः । ततः शूद्रो महाव्याधिः सप्तजन्मस्वतः शुचिः ॥

सनन्दन उवाच—

पुण्यं कृत्वा वदत्येव कीर्तिवर्धनहेतुना । स कृतघ्नस्तप्तसूर्म्यां वसत्येव युगत्रयम् ॥
पञ्चजन्मसु मण्डूकस्त्रिषु जन्मसु कर्कटः । तदा मूको महाव्याधिर्दरिद्रश्च ततः शुचिः ॥

सनातन उवाच—

स्वधर्मं हन्ति यो विप्रः संध्यात्रयविवार्जितः । अतर्पयंश्च यत्स्नाति विष्णुनैवेद्यवार्जितः ॥
विष्णुपूजाविष्णुभक्तिविष्णुमन्त्रविहीनकः । एकादशीविहीनः श्रीकृष्णजन्मदिने तथा ॥
शिवरात्रौ च यो भुङ्क्ते श्रीरामनवमीदिने । पितृकृत्याविहीनो यः स कृतघ्न इति स्मृतः ॥
कुम्भीपाके वसत्येव यावदिन्द्राश्चतुर्दश । ततश्चाण्डालतां याति सप्तजन्मसु निश्चितम् ॥
शतजन्मनि गृध्रश्च शतजन्मनि सूकरः । ततो भवेद्ब्राह्मणश्च शूद्राणां सूपकारकः ॥ ४९ ॥
ततो भवेज्जन्मसप्त ब्राह्मणो वृषवाहकः । शूद्राणां शवदाही च भवेत्सप्तसु जन्मसु ॥
द्विजो भूत्वा सप्तजनौ भारते वृषलीपतिः । भुक्त्वा स्वभोगलेशं च भ्रमित्वा याति रौरवम् ॥
पुनः पुनः पापयोनिं नरकं च पुनः पुनः । ततो भवेद्गर्दभश्च मार्जारः पञ्चजन्मसु ॥ ५२ ॥
पञ्चजन्मसु मण्डूको भवेच्छुद्धस्ततः क्रमात् ॥ ५३ ॥

सुयज्ञ उवाच—

शूद्राणां सूपकरणे शूद्राणां शवदाहने । शूद्रान्नभोजने वाऽपि शूद्रस्त्रीगमनेऽपि च ॥
ब्राह्मणानां च को दोषो वृषाणां वाहने तथा । एतान्सर्वान्समालोच्य ब्रूहि मां निश्चितं मुने

पराशर उवाच—

शूद्राणां सूपकारश्च यो विप्रो ज्ञानदुर्बलः । असिपत्रे वसत्येव युगानामेकसप्ततिः ॥ ५६ ॥

---

१ क. °वच्चन्द्रदिवाकरौ । २ क. °कविंशतिः ।

ततो भवेद्दर्दुरश्च मूषकः सप्तजन्मसु । तैलकीटः सप्तजन्मस्वतः शुद्धो भवेन्नरः ॥ ९७ ॥

नरस्कन्द उवाच—

भृत्यद्वारा स्वयं वाऽपि यो विप्रो वृषवाहकः । स कृतघ्न इति ख्यातः प्रसिद्धो भारते नृप ॥
ब्रह्महत्यासमं पापं तन्नित्यं वृष ताडने । वृषपृष्ठे भारवाहात्पापं तद्द्विगुणं भवेत् ॥५९॥
सूर्यातपे वाहयेद्यः क्षुधितं तृषितं वृषम् । ब्रह्महत्याशतं पापं लभते नात्र संशयः ॥६०॥
अन्नं विष्ठा जलं मूत्रं विप्राणां वृषवाहिनाम् । पितरो नैव गृह्णन्ति तेषां श्राद्धं च तर्पणम्
देवता नहि गृह्णन्ति तेषां पुष्पं फलं जलम् । ददाति यदि दम्भेन विपाताय प्रकल्पते ॥
यो भुङ्क्ते कामतोऽन्नं च ब्राह्मणो वृषवाहिनाम् । नाधिकारो भवेत्तेषां पितृदेवार्चने नृप ॥
कालीकुण्डे वसत्येव यावच्चन्द्रदिवाकरौ । विष्ठा भक्ष्यं मूत्रजलं तत्र तस्य भवेद्ध्रुवम् ॥
त्रिसंध्यं ताडयेत्तं च शूलेन यमकिंकरः । उल्कां ददाति मुखतः सूच्या कृन्तति संततम्
षष्टिवर्षसहस्राणि विष्ठायां च कृमिर्भवेत् । ततः काकः पञ्चजन्मस्वथैवं बक एव च ॥
पञ्चजन्मसु गृध्रश्च शृगालः सप्तजन्मसु । ततो दरिद्रः शूद्रश्च महाव्याधिस्ततः शुचिः ॥

भरद्वाज उवाच—

शूद्राणां शवदाही यः स कृतघ्न इति स्मृतः । वेदप्रमाणां राजेन्द्र ब्रह्महत्यां लभेद्ध्रुवम् ॥
तत्तुल्ययोनिभ्रमणात्तत्तुल्यनरकाच्छुचिः ॥ ६७ ॥
यो दोषो ब्राह्मणानां च शूद्राणां शवदाहने । तावदेव भवेद्दोषः शूद्रश्राद्धान्नभोजने ॥

विभाण्डक उवाच—

पितृश्राद्धे च शूद्राणां भुङ्क्ते यो ब्राह्मणोऽधमः । सुरापीती ब्रह्मघाती पितृदेवार्चनाद्बहिः

मार्कण्डेय उवाच—

यो दोषो ब्राह्मणानां च शूद्रस्त्रीगमने नृप । अहं वक्ष्यामि वेदोक्तं सावधानं निशामय ॥
कृतघ्नानां प्रधानश्च यो विप्रो वृषलीपतिः । कृमिदंष्ट्रे वसेत्सोऽपि यावदिन्द्राश्चतुर्दश ॥
कृमिभक्ष्यो भवेद्विप्रो विद्धश्च यमकिंकरैः । प्रतिमायां तप्तलोहमाश्लेषयति नित्यशः ॥
ततश्च पुंश्चलीयोनौ कृमिर्भवति निश्चितम् । एवं वर्षसहस्रं च ततः शूद्रस्ततः शुचिः ॥

सुयज्ञ उवाच—

अन्येषां च कृतघ्नानां वद कर्मफलं मुने । श्लाघ्यो मे ब्रह्मशापश्च कस्य संपद्विनाऽऽपदम् ॥
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम । आगतास्तु यतो मुक्ता मद्गेहे मुनयः सुराः

इति श्रीब्रह्म० महा० प्रकृति० नारदना० नृपमुनिसं० राधोपा० कर्मविपाको नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

१ क. 'लामश्ले व' । २ क. 'वदिन्द्राश्चतुर्दश' । ३ क. 'शवम' ।

अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

पार्वत्युवाच—

अन्येषां च कृतघ्नानां यद्यत्कर्मफलं प्रभो । तेषां किमूचुर्मुनयो वेदवेदाङ्गपारगाः ॥ १ ॥

महेश्वर उवाच—

प्रश्नं कुर्वति राजेन्द्रे सर्वेषु मुनिषु प्रिये । तत्र प्रवक्तुमारेभे ऋषिर्नारायणो महान् ॥ २ ॥

नारायण उवाच—

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । स कृतघ्न इति ज्ञेयः फलं शृणु च भूमिप ।

यावन्तो रेणवः सिक्ता विप्राणां नेत्रबिंदुभिः । तावद्वर्षसहस्रं च शूलपाते स तिष्ठति ॥

तप्ताङ्गारं च तद्भक्ष्यं पानं वै तप्तमूत्रकम् । तप्ताङ्गारे च शयनं ताडितो यमकिंकरैः॥

तदन्ते च महापापी विष्ठायां जायते कृमिः । षष्टिवर्षसहस्राणि देवमानेन भारते ॥ ६ ॥

ततो भवेद्भूमिहीनः प्रजाहीनश्च मानवः । दरिद्रः कृपणो रोगी शूद्रो निन्द्यस्ततः शुचिः

नारद उवाच—

हन्ति यः परकीर्तिं च स्वकीर्तिं वा नराधमः । स कृतघ्न इति ख्यातस्तत्फलं च निशामय ॥

अन्धकूपे वसेत्सोऽपि यावदिन्द्राश्चतुर्दश । कीटैर्नकुलगृध्रैश्च भक्षितः सततं नृप ॥ ९ ॥

तप्तक्षारोदकं पापी नित्यं पिबति वै ततः । सप्तजन्मस्वतः सर्पः काकः पञ्चस्वतः शुचिः ॥

देवल उवाच—

ब्रह्मस्वं वा गुरुस्वं वा देवस्वं वाऽपि यो हरेत् । स कृतघ्न इति ज्ञेयो महापापी च भारते ॥

अवटोदे वसेत्सोऽपि यावदिन्द्राश्चतुर्दश । ततो भवेत्सुरापी स ततः शूद्रस्ततः शुचिः ॥

जैगीषव्य उवाच—

पितृमातृगुरूंश्चापि भक्तिहीनो न पालयेत् । वाचाऽपि ताडयेत्तांश्च स कृतघ्न इति स्मृतः ॥

वाचा च ताडयेन्नित्यं स्वामिनं कुलटा च या । सा कृतघ्नीति विख्याता भारते पापिनी वरा ॥

वह्निकुण्डं महाघोरं तौ प्रयातः सुनिश्चितम् । तत्र वह्नौ वसत्येव यावच्चन्द्रदिवाकरौ ॥

ततो भवेज्जलौकाश्च सप्तजन्मस्वतः शुचिः ॥ १५ ॥

वाल्मीकिरुवाच—

यथा तरुषु वृक्षत्वं सर्वत्र न जहाति च । तथा कृतघ्नता राजन्सर्वपापेषु वर्तते ॥ १६ ॥

मिथ्यासाक्ष्यं यो ददाति कामात्क्रोधात्तथा भयात् । सभायां पाक्षिकं वक्ति स कृतघ्न इति स्मृतः ॥ १७ ॥

पुण्यमात्रं चापि राजन्यो हन्ति स कृतघ्नकः । सर्वत्रापि च सर्वेषां पुण्यहानौ कृतघ्नता ॥
मिथ्यासाक्ष्यं पाक्षिकं वा भारते वक्ति यो नृप । यावदिन्द्रसहस्रं च सर्पकुण्डे वसेद्ध्रुवम् ॥
संततं वेष्टितः सर्पैर्भीतो वै भक्षितस्तथा । भुङ्क्ते च सर्पविण्मूत्रं यमदूतेन ताडितः ॥२०॥
कृकलासो भवेत्तत्र भारते सप्तजन्मसु । सप्तजन्मसु मण्डूकः पितृभिः सप्तभिः सह ॥ २१ ॥
ततो भवेद्वै वृक्षश्च महारण्ये तु शाल्मलिः । ततो भवेन्नरो मूकस्ततः शूद्रस्ततः शुचिः ॥

आस्तीक उवाच—

गुर्वङ्गनानां गमने मातृगामी भवेन्नरः । नराणां मातृगमने प्रायश्चित्तं न विद्यते ॥ २३ ॥
भारते च नृपश्रेष्ठ यो दोषो मातृगामिनाम् । ब्राह्मणीगमने चैव शूद्राणां तावदेव हि ॥
ब्राह्मण्यास्तावदेव स्याद्दोषः शूद्रेण मैथुने । कन्यानां पुत्रपत्नीनां श्वश्रूणां गमने तथा ॥
सगर्भभ्रातृपत्नीनां भगिनीनां तथैव च । दोषं वक्ष्यामि राजेन्द्र यदाह कमलोद्भवः ॥
यः करोति महापापी चैताभिः सह मैथुनम् । जीवन्मृतो भवेत्सोऽपि चण्डालोऽस्पृश्य एव च
नाधिकारो भवेत्तस्य सूर्यमण्डलदर्शने । शालग्रामं तज्जलं च तुलस्याश्च दलं जलम् ॥२८॥
सर्वतीर्थजलं चैव विप्रपादोदकं तथा । स्प्रष्टुं च नैव शक्नोति विट्तुल्यः पातकी नरः ॥
देवं गुरुं ब्राह्मणं च नमस्कर्तुं न चार्हति । विष्ठाधिकं तदन्नं च जलं मूत्राधिकं तथा ॥
देवताः पितरो विप्रा नैव गृह्णन्ति भारते । भवेत्तदङ्गवातेन तीर्थमङ्गारवाहनम् ॥३१॥
सप्तरात्रं ह्युपवसेद्दैवस्पर्शात्तथा द्विजः । भाराक्रान्ता च पृथिवी तद्भारं वोढुमक्षमा ॥
तत्पापात्पतितो देशः कन्याविक्रयिणो यथा । तत्स्पर्शाच्च तदालापाच्छयनाश्रयभोजनात्
नृणां च तत्समं पापं भवत्येव न संशयः । कुम्भीपाके वसेत्सोऽपि यावद्वै ब्रह्मणः शतम्
दिवानिशं भ्रमेत्तत्र चक्रावर्तं निरन्तरम् । दग्धो वाऽग्निशिखाभिश्च यमदूतैश्च ताडितः ॥
एवं नित्यं महापापी भुङ्क्ते निरययातनाम् । [1]विष्ठाहारश्च सर्वत्र कुम्भीपाकेऽथ पातितः
गते प्राकृतिके घोरे महति प्रलये तथा । पुनः सृष्टेः समारम्भे तद्विधो वा भवेत्पुनः ॥
( षष्टिवर्षसहस्राणि कृमिश्च पुंश्चलीभगे । षष्टिवर्षसहस्राणि विष्ठायां च कृमिर्भवेत् ) ॥
ततो भवति चण्डालो भार्याहीनो नपुंसकः । (सप्तजन्म गलत्कुष्ठी चाण्डालोऽस्पृश्य एव च
ततस्तीर्थे भवेद्वृक्षः क्षुधितः सप्तजन्मसु । सप्तजन्मसु सर्पश्च भार्याहीनो नपुंसकः ) ॥
सप्तजन्मसु शूद्रश्च गलत्कुष्ठी नपुंसकः । ततो भवेद्ब्राह्मणश्चाप्यन्धः कुष्ठी नपुंसकः ॥
लब्ध्वैवं सप्त जन्मानि महापापी भवेच्छुचिः ॥ ४० ॥

मुनय ऊचुः—

इत्येवं कथितं सर्वमस्माभिर्वो यथागमम् । एभिस्तुल्यो भवेद्दोषोऽप्यतिथीनां पराभवे ॥

---

1 क. आहारश्चास्ति सर्वत्र कुम्भीपाके विवर्जिते ।

प्रणामं कुरु विप्रेन्द्रं गृहं प्रापय निश्चितम् । संपूज्य ब्राह्मणं यत्नाद्गृहीत्वा ब्राह्मणाशिषम्
वनं गच्छ महाराज तपस्यां कुरु सत्वरम् । ब्रह्मशापैर्विनिर्मुक्तः पुनरेवाऽऽगमिष्यसि ॥
इत्युक्त्वा मुनयः सर्वे ययुस्तूर्णं स्वमन्दिरम् । सुराश्चापि च राजानो बन्धुवर्गाश्च पार्वति

इति श्रीब्रह्म० महा० प्रकृति० नारदना० हरगौरीसं० राधोपा० सुयज्ञोपा० कर्मविपाको नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

**पार्वत्युवाच—**

गतेषु मुनिसंघेषु श्रुत्वा कर्मफलं नृणाम् । किं चकार नृपश्रेष्ठो ब्रह्मशापेन विह्वलः ॥
अतिथिर्ब्राह्मणो वाऽपि किं चकार तदा प्रभो । जगाम नृपगेहं वा न वा तद्वक्तुमर्हसि ॥

**महेश्वर उवाच—**

गतेषु मुनिसंघेषु चिन्ताग्रस्तो नराधिपः । प्रेरितश्च वसिष्ठेन धर्मिष्ठेन पुरोधसा ॥३॥
पपात दण्डवद्भूमौ पादयोर्ब्राह्मणस्य च । त्यक्त्वा मन्युं द्विजश्रेष्ठो ददौ तस्मै शुभाशिषम्
सस्मितं ब्राह्मणं दृष्ट्वा त्यक्तमन्युं कृपामयम् । उवाच नृपतिश्रेष्ठः साश्रुनेत्रः कृताञ्जलिः

**राजोवाच—**

कुत्र वंशे भवाञ्जातः किं नाम भवतः प्रभो । किं नाम वा पितुर्ब्रूहि क्व वासः कथमागतः ॥
विप्ररूपी स्वयं विष्णुर्गूढः कपटमानुषः । साक्षात्त्वं मूर्तिमानग्निः प्रज्वलन्ब्रह्मतेजसा ॥
को वा गुरुस्ते भगवन्निष्टदेवश्च भारते । तव वेषः कथमयं ज्ञानपूर्णस्य सांप्रतम् ॥
गृहाण राज्यं निखिलमैश्वर्यं कोशमेव च । स्वभृत्यं कुरु मे पुत्रं मां च दासीं स्त्रियं मुने
सप्तसागरसंयुक्तां सप्तद्वीपां वसुंधराम् । [1]अष्टादशोपद्वीपाढ्यां सशैलवनशोभिताम् ॥
मया भृत्येन शाधि त्वं राजेन्द्रो भव भारते । रत्नेन्द्रसाररचिते तिष्ठ सिंहासने वरे ॥
नृपस्य वचनं श्रुत्वा जहास मुनिपुंगवः । उवाच परमं तत्त्वमज्ञातं सर्वदुर्लभम् ॥१२॥

**अतिथिरुवाच—**

मरीचिर्ब्रह्मणः पुत्रस्तत्पुत्रः कश्यपः स्वयम् । कश्यपस्य सुताः सर्वे प्रापा देवत्वमीप्सितम्
तेषु त्वष्टा महाज्ञानी चकार परमं तपः । दिव्यं वर्षसहस्रं च पुष्करे दुष्करं तपः ॥१४॥
सिषेवे ब्राह्मणार्थं च देवदेवं हरिं परम् । नारायणाद्वरं प्राप विप्रं तेजस्विनं सुतम् ॥१५॥
ततो बभूव तेजस्वी विश्वरूपस्तपोधनः । पुरोधसं चकारेन्द्रो वाक्पतौ तं क्रुधा गते ॥

---

1 क. नवद्वीपोपद्वीपां तां स° ।

मातामहेभ्यो दैत्येभ्यो दत्तवन्तं घृताहुतिम् । चिच्छेद तं शुनासीरो ब्राह्मणं मातुराज्ञया
विश्वरूपस्य तनयो विरूपो मत्पिता नृप । अहं च सुतपा नाम विरागी काश्यपो द्विजः॥
महादेवो मम गुरुर्विद्याज्ञानमनुप्रदः । अभीष्टदेवः सर्वात्मा श्रीकृष्णः प्रकृतेः परः ॥१९॥
तच्चिन्तयामि पादाब्जं न मे वाञ्छाऽस्ति संपदि । सालोक्यसार्ष्टिसारूप्यसामीप्यं राधिकापतेः
तेन दत्तं न गृह्णामि विना तत्सेवनं शुभम् । ब्रह्मत्वममरत्वं वा मन्येऽहं जलबिन्दुवत्॥२१॥
भक्तिव्यवहितं मिथ्याभ्रममेव तु नश्वरम् । इन्द्रत्वं वा मनुत्वं वा सौरत्वं वा नराधिप ॥
न मन्ये जलरेखेति नृपत्वं केन गण्यते ॥ २२ ॥
श्रुत्वा सुयज्ञ यज्ञे ते मुनीनां गमनं नृप । लालसां विष्णुभक्तिं ते संप्रापयितुमागतः ॥२३॥
केवलानुगृहीतस्त्वं नहि शप्तो मयाऽधुना । समुद्धृतश्च पतितो घोरे निम्ने भवार्णवे॥२४॥
नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन कृष्णभक्ताश्च दर्शनात्॥
राजन्निर्गम्यतां गेहाद्देहि राज्यं सुताय च । पुत्रे न्यस्य प्रियां साध्वीं गच्छ वत्स वनं द्रुतम्
ब्रह्मादिस्तम्बपर्यन्तं सर्वं मिथ्यैव भूमिप । श्रीकृष्णं भज राधेशं परमात्मानमीश्वरम् ॥
ध्यानसाध्यं दुराराध्यं ब्रह्मविष्णुशिवादिभिः । आविर्भूतैस्तिरोभूतैः प्राकृतैः प्रकृतेः परम्
ब्रह्मा स्रष्टा हरिः पाता हरः संहारकारकः । दिक्पालाश्च दिगीशाश्च भ्रमन्त्येवास्य मायया
यदाज्ञया वाति वायुः सूर्यो दिनपतिः सदा । निशापतिः शशी शश्वत्सस्यसुस्निग्धताकरः
कालेन मृत्युः सर्वेषां सर्वविश्वेषु वै भवेत् । काले वर्षति शक्रश्च दहत्यग्निश्च कालतः ॥
भीतवद्विश्वशास्ता च प्रजासंयमनो यमः । कालः संहरते काले काले सृजति पाति च॥
स्वदेशे वै समुद्रश्च स्वदेशे वै वसुंधरा । स्वदेशे पर्वताश्चैव स्वाः पातालाः स्वदेशतः॥
स्वर्लोकाः सप्त राजेन्द्र सप्तद्वीपा वसुंधरा । शैलसागरसंयुक्ताः पातालाः सप्त चैव हि ॥
ब्रह्माण्डमेभिर्लोकैश्च डिम्बाकारं जलप्लुतम् । सन्त्येव प्रतिविध्यण्डे ब्रह्मविष्णुशिवादयः
सुरा नराश्च नागाश्च गन्धर्वा राक्षसादयः । आपातालाद्ब्रह्मलोकपर्यन्तं डिम्बरूपकम् ॥
इदमेव तु विध्यण्डमुत्तमं कृत्रिमं नृप । नाभिपद्मे विराड्विष्णोः क्षुद्रस्य जलशालिनः ॥
स्थितं यथा पद्मबीजं कर्णिकायां च पङ्कजे । एवं सोऽपि शयानः स्याज्जलतल्पे सुविप्लुते॥
ध्यायत्येव महायोगी प्राकृतः प्रकृतेः परम् । कालभीतश्च कालेशं कृष्णमात्मानमीश्वरम्
महाविष्णोर्लोमकूपे साधारः सोऽस्ति विस्तृते । कूपेषु लोम्नां प्रत्येकमेवं विश्वानि सन्ति वै
महाविष्णोर्गात्रलोम्नां ब्रह्माण्डानां च भूमिप । संख्यां कर्तुं न शक्नोति कृष्णोऽप्यन्यस्य का
कथा ॥ ४१ ॥

१ क. विम्बा° ।

महाविष्णुः प्राकृतिकः सोऽपि डिम्बोद्भवः सदा । भवेत्कृष्णेच्छया डिम्बः प्रकृतेर्गर्भसंभवः
सर्वाधारो महाविष्णुः कालभीतः स शङ्कितः । कालेशं ध्यायति स्वैरं कृष्णमात्मानमीश्वरम्
एवं च सर्वविश्वस्था ब्रह्मविष्णुशिवादयः । महान्विराट् क्षुद्रविराट् सर्वे प्राकृतिकाः सदा[1]॥
सा सर्वबीजरूपा च मूलप्रकृतिरीश्वरी । काले लीना च कालेशे कृष्णे तं ध्यायति स्म सा ॥
एवं सर्वे कालभीताः प्रकृतिः प्राकृतास्तथा । आविर्भूतास्तिरोभूताः कालेन परमात्मनि ॥
इत्येवं कथितं सर्वं महाज्ञानं सुदुर्लभम् । शिवेन गुरुणा दत्तं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० हरगौरीसं० राधोपा० सुयज्ञोपा०
सुयज्ञं प्रत्यतिथ्युपदेशो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## अथ चतुःपञ्चाशत्तमोऽध्यायः ।

राजोवाच—

कुत्राऽऽधारो महाविष्णोः सर्वाधारस्य तस्य च । कालभीतस्य कतिचित्कालमायुर्मुनीश्वर॥
क्षुद्रस्य कतिचित्कालं ब्रह्मणः प्रकृतेस्तथा । मनोरिन्द्रस्य चन्द्रस्य सूर्यस्याऽऽयुस्तथैव च
अन्येषां वै जनानां च प्राकृतानां परं वयः । वेदोक्तं सुविचार्यं च वद वेदविदां वर ॥
विश्वानामूर्ध्वभागे च कः स्याद्वा लोक एव सः । कथयस्व महाभाग संदेहच्छेदनं कुरु

मुनिरुवाच—

गोलोको नृप विश्वानां विस्तृतश्च नभःसमः । तथा नित्यं डिम्बरूपः श्रीकृष्णेच्छासमुद्भवः
जलेन परिपूर्णश्च कृष्णस्य मुखबिन्दुना । सृष्ट्युन्मुखस्याऽऽदिसर्गे परिश्रान्तस्य खेलतः
प्रकृत्या सह युक्तस्य कलया निजया नृप । तत्राऽऽधारो महाविष्णोर्विश्वाधारस्य विस्तृतः
प्रकृतेर्गर्भसंभूतडिम्बोद्भूतस्य भूमिप । सुविस्तृते जलाधारे शयानश्च महाविराट् ॥
राधेश्वरस्य कृष्णस्य षोडशांशः प्रकीर्तितः । दूर्वादलश्यामरूपः सस्मितश्च चतुर्भुजः ॥
वनमालाधरः श्रीमाञ्शोभितः पीतवाससा । ऊर्ध्वं नभसि तद्विष्णोर्नित्यवैकुण्ठ एव च
आत्माकाशसमो नित्यो विस्तृतश्चन्द्रबिम्बवत् । ईश्वरेच्छासमुद्भूतो निर्लक्ष्यश्च निराश्रयः
आकाशवत्सुविस्तारो रत्नैर्वैश्च विनिर्मितः । तत्र नारायणः श्रीमान्वनमाली चतुर्भुजः
लक्ष्मीसरस्वतीगङ्गातुलसीपतिरीश्वरः । सुनन्दनन्दकुमुदपार्षदादिभिरावृतः ॥ १३ ॥
सर्वेशः सर्वसिद्धेशो भक्तानुग्रहविग्रहः । श्रीकृष्णश्च द्विधाभूतो द्विभुजश्च चतुर्भुजः ॥

---

१ क. °शे प्राकृते ध्यायते सदा ।

चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् । ऊर्ध्वं वैकुण्ठलोकाच्च पञ्चाशत्कोटियोजनात् ॥
गोलोको वर्तुलाकारो वरिष्ठः सर्वलोकतः । अमूल्यरत्नखचितैर्मन्दिरैश्च विभूषितः ॥ १७ ॥
रत्नेन्द्रसारखचितैः स्तम्भसोपानचित्रितैः । मणीन्द्रदर्पणासक्तैः कपाटैः कलशोज्ज्वलैः ॥
नानाचित्रविचित्रैश्च शिबिरैश्च विराजितः । कोटियोजनविस्तीर्णो दैर्घ्ये शतगुणस्तथा ॥
विरजासरिदाकीर्णैः शतशृङ्गैः सुवेष्टितः । सरिदर्धप्रमाणेन दैर्घ्येण च ततेन च ॥ १८ ॥
शैलार्धपरिमाणेन युक्तो वृन्दावनेन च । तदर्धमानविलसद्रासमण्डलमण्डितः ॥ १९ ॥
सरिच्छैलवनादीनां मध्ये गोलोक एव च । यथा पङ्कजमध्ये च कर्णिका सुमनोहरा ॥
तत्र गोगोपगोपीभिर्गोपीशो रासमण्डले । रासेश्वर्या राधिकया संयुक्तः संततं नृप ॥
द्विभुजो मुरलीहस्तः शिशुर्गोपालरूपधृत् । वह्निशुद्धांशुकाधानो रत्नभूषणभूषितः २२
चन्दनोक्षितसर्वाङ्गो रत्नमाला विराजितः । रत्नसिंहासनस्थश्च रत्नच्छत्रेण शोभितः ॥
तथा स प्रियगोपालैः सेवितः श्वेतचामरैः । भूषिताभिश्च गोपीभिर्मालाचन्दनचर्चितः ॥
सस्मितः सकटाक्षाभिः सुवेषाभिश्च वीक्षितः । कथितो लोकविस्तारो यथाशक्ति यथागमम्
यथाश्रुतं शंभुवक्त्रात्कालमानं निशामय । पात्रं षट्पलसंभूतं गभीरं चतुरङ्गुलम् ॥ २६ ॥
स्वर्णमाषकृतच्छिद्रं दण्डैश्च चतुरङ्गुलैः । यावज्जलप्लुतं पात्रं तत्कालं दण्डमेव च ॥
दण्डद्वयं मुहूर्तं च यामस्तस्य चतुष्टयम् । वासरश्चाष्टभिर्यामैः पक्षस्तैर्दशपञ्चभिः ॥
मासो द्वाभ्यां च पक्षाभ्यां वर्षं द्वादशमासकैः । मासेन वै नराणां च पितॄणां तदहर्निशम् ॥
कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्तिता । वत्सरेण नराणां च देवानां च दिवानिशम् ॥
अयनं चोत्तरमहो रात्रिर्वै दक्षिणायनम् । युगकर्मानुरूपं च नरादीनां वयो नृप ॥ ३३ ॥
प्रकृतेः प्राकृतानां च ब्रह्मादीनां निशामय । कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥
दिव्यैर्द्वादशसाहस्रैः सावधानं निशामय । चत्वारि त्रीणि च द्वयेकं सहस्राणि कृतादिकम्
तेषां च संध्यासंध्यांशौ द्वे सहस्रे प्रकीर्तिते । त्रिचत्वारिंशकैर्लक्षैः सविंशतिसहस्रकैः ३६
चतुर्युगं परिमितं नरमानक्रमेण च । लक्षैश्च सप्तदशभिः साष्टविंशसहस्रकैः ॥ ३७ ॥
कृतं युगं नृमानेन संख्याविद्भिः प्रकीर्तितम् ॥ ३८ ॥
सहस्रैः षण्णवतिभिर्लक्षैर्द्वादशभिः सह । त्रेतायुगं परिमितं कालविद्भिः प्रकीर्तितम् ॥ ३९ ॥
अष्टलक्षैः सह मितं चतुःषष्टिसहस्रकम् । परिमाणं द्वापरस्य संख्याविद्भिरितीरितम् ॥
सद्वात्रिंशत्सहस्रैश्च चतुर्लक्षैश्च वत्सरैः । नृमानाद्वै कलियुगं विदुः कालविदो बुधाः ॥
यथा सप्त च वारा वै तिथयः षोडश स्मृताः । दिवारात्र्यश्च पक्षौ द्वौ मासो वर्षं च निर्मितम्
यथा भ्रमति तत्क्रमेवमेव चतुर्युगम् । यथा युगानि राजेन्द्र तथा मन्वन्तराणि च ॥

मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । एवं क्रमाद्ब्रह्मणश्चैव मनवश्च चतुर्दश ॥
पञ्चविंशतिसाहस्रं षष्ट्यन्तशतपञ्चकम् । नरमानयुगं चैव परं मन्वन्तरं स्मृतम् ॥
आख्यानं च मनूनां च धर्मिष्ठानां नराधिप । यच्छ्रुतं शिववक्त्रेण तत्त्वं मत्तो निशामय ॥
आद्यो मनुर्ब्रह्मपुत्रः शतरूपा पतिव्रता । धर्मिष्ठानां वरिष्ठश्च गरिष्ठो मनुषु प्रभुः ॥
स्वायंभुवः शंभुशिष्यो विष्णुव्रतपरायणः । जीवन्मुक्तो महाज्ञानी भवतः प्रपितामहः ॥
राजसूयसहस्रं च चक्रे वै नर्मदातटे । त्रिलक्षमश्वमेधं च त्रिलक्षं नरमेधकम् ॥ ४७ ॥
गोमेधं च चतुर्लक्षं विधिवन्महदद्भुतम् । ब्राह्मणानां त्रिकोटीश्च भोजयामास नित्यशः ॥
पञ्चलक्षगवां मांसैः सुपक्वैर्घृतसंस्कृतैः । चर्व्यैश्चोष्यैर्लेह्यपेयैर्मिष्टद्रव्यैः सुदुर्लभैः ॥ ४९ ॥
अमूल्यरत्नलक्षं च दशकोटिसुवर्णकम् । स्वर्णशृङ्गयुतं दिव्यं गवां लक्षं सुपूजितम् ॥ ५० ॥
वह्निशुद्धानि वस्त्राणि मणीन्द्राणां च लक्षकम् । भूमिं च सर्वसस्याढ्यां गजेन्द्राणां च लक्षकम् ॥
त्रिलक्षमश्वरत्नं च शातकुम्भविभूषितम् । सहस्ररथरत्नं च शिबिकालक्षमेव च ॥ ५१ ॥
त्रिकोटिस्वर्णपात्रं च सान्नं सजलमीप्सितम् । त्रिकोटिस्वर्णभूषाश्च कर्पूरादिसुवासितम् ॥
ताम्बूलं सुविचित्रं च त्रिकोटिस्वर्णतल्पकम् । रत्नेन्द्रखचितैर्मञ्चै रचितैर्विश्वकर्मणा ॥ ५३ ॥
वह्निशुद्धांशुकैश्चित्रै राजितं माल्यजालकैः । नित्यं ददौ ब्राह्मणेभ्यो विष्णुप्रीत्यै शिवाज्ञया
संप्राप्य शंकराज्ज्ञानं कृष्णमन्त्रं सुदुर्लभम् । संप्राप्य कृष्णदास्यं च गोलोकं वै जगाम सः ॥
दृष्ट्वा मुक्तं स्वपुत्रं च प्रहृष्टोऽभूत्प्रजापतिः । तुष्टाव शंकरं तुष्टः ससृजेऽन्यं मनुं विधिः ॥
यतः स्वयंभुपुत्रोऽयमतः स्वायंभुवो मनुः । स्वारोचिषो मनुश्चैव द्वितीयो वह्निनन्दनः ॥
राजा वदान्यो धर्मिष्ठः स्वायंभुवसमो महान् । प्रियव्रतसुतावन्यौ द्वौ मनू धर्मिणां वरौ ॥
तौ तृतीयौ चतुर्थौ च वैष्णवौ तापसोत्तमौ । तौ च शंकरशिष्यौ च कृष्णभक्तिपरायणौ ॥
धर्मिष्ठानां वरिष्ठश्च रैवतः पञ्चमो मनुः । षष्ठश्च चाक्षुषो ज्ञेयो विष्णुभक्तिपरायणः ॥ ६० ॥
श्राद्धदेवः सूर्यसुतो वैष्णवः सप्तमो मनुः । सावर्णिः सूर्यतनयो वैष्णवो मनुरष्टमः ॥
नवमो दक्षसावर्णिर्विष्णुव्रतपरायणः । दशमो ब्रह्मसावर्णिर्ब्रह्मज्ञानविशारदः ॥ ६२ ॥
ततश्च धर्मसावर्णिर्मनुरेकादशः स्मृतः । धर्मिष्ठश्च वरिष्ठश्च वैष्णवव्रततत्परः ॥ ६३ ॥
ज्ञानी च रुद्रसावर्णिर्मनुश्च द्वादशः स्मृतः । धर्मात्मा देवसावर्णिर्मनुरेवं त्रयोदश ॥ ६४ ॥
चतुर्दशो महाज्ञानी चन्द्रसावर्णिरेव च । यावदायुर्मनूनां स्यादिन्द्राणां तावदेव हि ॥ ६५ ॥
चतुर्दशेन्द्रावच्छिन्नं ब्रह्मणो दिनमुच्यते । तावती ब्रह्मणो रात्रिः सा च ब्राह्मी निशा नृप ॥

१ क. धर्मव° । २ क. °लयान्नं च ।

कालरात्रिश्च सा ज्ञेया वेदेषु परिकीर्तिता। ब्रह्मणो वासरे राजन्क्षुद्रकल्पः प्रकीर्तितः ॥
सप्तकल्पे चिरंजीवी मार्कण्डेयो महातपाः। ब्रह्मलोकादधः सर्वे लोका दग्धाश्च तत्र वै॥
उत्थितेनैव सहसा संकर्षणमुखाग्निना। चन्द्रार्कब्रह्मपुत्राश्च ब्रह्मलोकं गता ध्रुवम् ॥
ब्रह्मरात्रिव्यतीते तु पुनश्च ससृजे विधिः। तस्यां ब्रह्मनिशायां च क्षुद्रः प्रलय उच्यते॥
देवाश्च मनवश्चैव तत्र दग्धा नरादयः। एवं त्रिंशद्दिवारात्रैर्ब्रह्मणो मास एव च॥७१॥
वर्षं द्वादशमासैश्च ब्रह्मसंबन्धि चैव हि। एवं पञ्चदशाब्दे तु गते च ब्रह्मणो नृप ॥
दैनंदिनस्तु प्रलयो वेदेषु परिकीर्तितः ॥ ७२ ॥
मोहरात्रिश्च सा प्रोक्ता वेदविद्भिः पुरातनैः। तत्र सर्वे प्रणष्टाः स्युश्चन्द्रार्कादिदिगीश्वराः॥
आदित्या वसवो रुद्रा मनवो मानवादयः। ऋषयो मुनयश्चैव गन्धर्वा राक्षसादयः ॥
मार्कण्डेयो लोमशश्च पेचकश्चिरजीविनः। इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः॥७९॥
नाडीजङ्घो बकश्चैव सर्वे नष्टाश्च तत्र वै। ब्रह्मलोकादधः सर्वे लोका नागालयास्तथा॥
ब्रह्मलोकं ययुः सर्वे ब्रह्मपुत्रादयस्तथा। गते दैनंदिने ब्रह्मा लोकांश्च ससृजे पुनः॥ ७७॥
एवं शताब्दपर्यन्तं परमायुः प्रजापतेः। ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप ॥
प्रकीर्तिता महारात्रिः सैव चेह पुरातनैः। ब्रह्मणश्च निपाते च ब्रह्माण्डौघो जलप्लुतः॥
वेदमाता च सावित्री वेदा धर्मादयस्तथा। सर्वे प्रणष्टा मृत्युश्च प्रकृतिं च शिवं विना॥
नारायणे प्रलीनाश्च विश्वस्था वैष्णवास्तथा। कालाग्निरुद्रः संहर्ता सर्वरुद्रगणैः सह ॥
मृत्युंजये महादेवे प्रलीनः स तमोगुणः। ब्रह्मणश्च विपातेन निमेषः प्रकृतेर्भवेत् ॥
नारायणस्य शंभोश्च महाविष्णोश्च निश्चितम्। निमेषान्ते पुनः सृष्टिर्भवेत्कृष्णेच्छया नृप
कृष्णो निमेषरहितो निर्गुणः प्रकृतेः परः। सगुणानां निमेषश्च कालसंख्यावयोमितः॥
निर्गुणस्य च नित्यस्य चाऽऽद्यन्तरहितस्य च। निमेषाणां सहस्रेण प्रकृतेर्दण्ड उच्यते ॥
षष्टिदण्डात्मकस्तस्य वासरश्च प्रकीर्तितः। त्रिंशद्रात्रिदिनैर्मासो वर्षं द्वादशमासकैः॥
एवं गते शताब्दे च श्रीकृष्णे प्रकृतेर्लयः। प्रकृत्यां च प्रलीनायां श्रीकृष्णे प्राकृतो लयः
सर्वान्संहृत्य सा चैका महाविष्णोः प्रसूश्च या। कृष्णवक्षसि लीना च मूलप्रकृतिरीश्वरी॥
सन्तो वदन्ति तां दुर्गां विष्णुमायां सनातनीम्। सर्वशक्तिस्वरूपां च परां नारायणीं सतीम्
बुद्ध्यधिष्ठातृदेवीं चं कृष्णस्य त्रिगुणात्मिकाम्। यन्मायामोहिताश्चैव ब्रह्मविष्णुशिवादयः
वैष्णवास्तां महालक्ष्मीं परां राधां वदन्ति ते। यदर्धाङ्गा महालक्ष्मीः प्रिया नारायणस्य च
प्राणाधिष्ठातृदेवी च प्रेम्णा प्राणाधिकां वराम्। स्थिरप्रेममयीं शक्तिं निर्गुणां निर्गुणस्य च॥

१ क. मुनयश्चै॰। २ क. ॰च श्रीकृष्णस्यैव निर्गुणम्।

नारायणश्च शंभुश्च संहृत्य स्वगुणान्बहून् । शुद्धसत्त्वस्वरूपी श्रीकृष्णे लीनश्च निर्गुणे ॥
गोपा गोप्यश्च गावश्च सवत्साश्च नराधिप । सर्वे लीनाः प्रकृत्यां च प्रकृतिः परमेश्वरे ॥
महाविष्णौ विलीनाश्च ते सर्वे क्षुद्रविष्णवः । महाविष्णुः प्रकृत्यां च सा चैवं परमात्मनि
प्रकृतिर्योगिनिद्रा च श्रीकृष्णनयनद्वये । अधिष्ठानं चकारैवं मायया चेश्वरेच्छया ॥
प्रकृतेर्वासरो यावन्मितः कालः प्रकीर्तितः । तावद्वृन्दावने निद्रा कृष्णस्य परमात्मनः
अमूल्यरत्नतल्पे च वह्निशुद्धांशुकार्चिते । गन्धचन्दनमाल्यौघवाय्वादिसुरभीकृते ॥
पुनः प्रजागरे तस्य सर्वसृष्टिर्भवेत्पुनः । एवं सर्वे प्राकृताश्च श्रीकृष्णं निर्गुणं विना ॥९९॥
तद्वन्दनं तत्स्मरणं तस्य ध्यानं तदर्चनम् । कीर्तनं तद्गुणानां च महापातकनाशनम् ॥
एतत्ते कथितं सर्वं यद्यन्मृत्युंजयाच्छ्रुतम् । यथागमं महाराज किं भूयः श्रोतुमिच्छसि ॥

सुयज्ञ उवाच—

कालाग्निरुद्रो विश्वानां संहर्ता च तमोगुणः । ब्रह्मणोऽन्ते विलीनश्च सत्त्वं मृत्युंजये शिवे ॥
शिवो लीनो निर्गुणे च श्रीकृष्णे प्राकृते लये । कथं तव गुरोर्नाम मृत्युंजय इति श्रुतम् ॥
कथं प्रसूर्महाविष्णोर्मूलप्रकृतिरीश्वरी । असंख्यानि च विश्वानि सन्ति वै यस्य लोमसु ॥

सुतपा उवाच—

ब्रह्मणोऽन्ते मृत्युकन्या प्रणष्टा जलबिन्दुवत् । संहर्त्री सर्वलोकानां ब्रह्मादीनां नराधिप ॥
कतिधा मृत्युकन्यानां ब्रह्मणां कोटिशो लये । कालेन लीनः शंभुश्च सत्त्वरूपे च निर्गुणे
मृत्युकन्या जिता शश्वच्छिवेन गुरुणा मम । न मृत्युना जितः शंभुः कल्पे कल्पे श्रुतौ श्रुतम् ॥ १०७ ॥
शंभुर्नारायणस्यैव प्रकृतेश्च नराधिप । नित्यानां लीनता नित्ये तन्माया न तु वास्तवी ॥
स्वयं पुमान्निर्गुणश्च कालेन सगुणः स्वयम् । स्वयं नारायणः शंभुर्मायया प्रकृतिः स्वयम्
तदंशस्तत्समः शश्वद्यथा वह्नेः स्फुलिङ्गवत् । ये ये च ब्रह्मणा सृष्टा रुद्रादित्यादयस्तथा ॥
कल्पे कल्पे जितास्ते ते नश्वरा मृत्युकन्यया । न शिवो ब्रह्मणा सृष्टः सत्यो नित्यः सनातनः
कतिधा ब्रह्मणां पातो यन्निमेषेण भूमिप । अथाऽऽदिसर्गे श्रीकृष्णः प्रकृत्यां च जगद्गुरुः ॥
चकार वीर्याधानं च पुण्ये वृन्दावने वने । तद्वामांशसमुद्भूता रासे रासेश्वरी परा ॥
गर्भं दधार सा राधा यावद्वै ब्रह्मणो वयः । ततः सुषाव सा डिम्भं गोलोके रासमण्डले ॥
चुकोप डिम्भं सा दृष्ट्वा हृदयेन विदूयता । तद्डिम्भं प्रेरयामास तदधो विश्वगोलके ॥
त्यक्त्वाऽपत्यं महादेवी रुरोद च मुहुर्मुहुः । कृष्णस्तां बोधयामास महायोगेन योगवित्
बभूव तस्माद्डिम्भाच्च सर्वाधारो महाविराट् ॥ ११७ ॥

सुयज्ञ उवाच—

अद्य मे सफलं जन्म जीवनं सार्थकं मम । शापो मे वरूपश्च प्रभवद्भक्तिकारणम् ॥
सुदुर्लभा हरेर्भक्तिः सर्वमङ्गलमङ्गला । न तस्याश्च समं विप्र वेदोक्तं भक्तिपञ्चकम् ॥
यथा भक्तिर्मम भवेच्छ्रीकृष्णे परमात्मनि । सुदुर्लभा च सर्वेषां तत्कुरुष्व महामुने ॥
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन कृष्णभक्ताश्च दर्शनात्
सर्वेषामाश्रमाणां च द्विजजातिरुत्तमा । स्वधर्मनिरतश्चैव तेषु श्रेष्ठश्च भारते ॥ १२२ ॥
कृष्णमन्त्रोपासकश्च कृष्णभक्तिपरायणः । नित्यं नैवेद्यभोजी च ततः श्रेष्ठो महाञ्छुचिः
त्वां वैष्णवं द्विजश्रेष्ठं महाज्ञानार्णवं परम् । संप्राप्य शिवशिष्यं च कं यामि शरणं मुने
अधुनाऽहं गलत्कुष्ठी तव शापान्महामुने । कथं तपस्यामशुचिर्नाधिकारी करोमि च ॥

सुतपा उवाच—

हरिभक्तिप्रदात्री सा विष्णुमाया सनातनी । सा च याननुगृह्णाति तेभ्यो भक्तिं ददाति च
मायया मोहयति तेभ्यस्तां न ददाति च । करोति वञ्चनां तेषां नश्वरेण धनेन च ॥
कृष्णप्रेममयीं शक्तिं प्राणाधिष्ठातृदेवताम् । भज राधां निर्गुणां तां प्रदात्रीं सर्वसंपदाम्
शीघ्रं यास्यसि गोलोकं तदनुग्रहसेवया । या सेविता श्रीकृष्णेन सर्वाराध्येन पूजिता ॥
ध्यानासाध्यं दुराराध्यं भक्ताः संसेव्य निर्गुणम् । सुचिरेण च गोलोकं प्रयान्ति बहुजन्मतः
कृष्णमयीं च संसेव्य भक्ता यान्त्यचिरेण वै । सा प्रसूश्च महाविष्णोः सर्वसंपत्स्वरूपिणी ॥
विप्रपादोदकं भुङ्क्ष्व वर्षं च संयतः शुचिः । कामदेवस्वरूपश्च रोगहीनो भविष्यसि ॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी । तावत्पुष्करपत्रेषु पिबन्ति पितरो जलम् ॥
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे । सागरे यानि तीर्थानि विप्रपादेषु तानि च ॥
विप्रपादोदकं चैव पापव्याधिविनाशनम् । सर्वतीर्थोदकसमं भुक्तिमुक्तिप्रदं शुभम् ॥
विप्रो मानवरूपी च देवदेवो जनार्दनः । विप्रेण दत्तं द्रव्यं च भुञ्जते सर्वदेवताः ॥
इत्येवमुक्त्वा विप्रश्च गृहीत्वा तस्य पूजनम् । जगाम गृहमित्युक्त्वा त्वायास्ये वत्स-
रान्तरे ॥ १२७ ॥
भक्त्या च बुभुजे राजा विप्रपादोदकं शिवे । विप्रांश्च पूजयामास भोजयामास वत्सरम्
संवत्सरे व्यतीते तु निर्मुक्तो व्याधितो नृपः । आजगाम मुनिश्रेष्ठः सुतपाः कश्यपाग्रणीः
राधापूजाविधानं च स्तोत्रं च कवचं मनुम् । ध्यानं च सामवेदोक्तं ददौ तस्मै नृपाय सः

राजन्निर्गम्यतां शीघ्रमित्युक्त्वा तपसे मुनिः । जगाम स्वालयात्तूर्णं निर्जगाम त्वरन्नृपः ॥
रुरुदुर्बान्धवाः सर्वे त्रिरात्रं शोकमूर्छिताः । भार्याश्च तत्यजुः प्राणान्पुत्रो राजा बभूव ह ॥
सुयज्ञः पुष्करं गत्वा चक्रे वै दुष्करं तपः । दिव्यं वर्षशतं राजा जजाप परमं मनुम् ॥
सदा ददर्श गगने रथस्थां परमेश्वरीम् । स तद्दर्शनमात्रेण निष्पापश्च बभूव ह ॥
तत्याज मानुषं देहं दिव्यां मूर्तिं दधार ह । सा देवी तेन यानेन रत्नेन्द्रैर्निर्मितेन च ॥
नृपं नीत्वा च गोलोकं तत्र चैषा ययौ तदा । राजा ददर्श गोलोकं नद्या विरजया ऽऽवृतम् ॥
वेष्टितं पर्वतेनैव शतशृङ्गेण चारुणा । श्रीवृन्दावनसंयुक्तं रासमण्डलमण्डितम् ॥ १४७ ॥
गोगोपगोपीनिकरैः शोभितं परिसेवितैः । रत्नेन्द्रसाररचितैर्मन्दिरैः सुमनोहरैः ॥
नानाचित्रविचित्रैश्च राजितं परिशोभितम् । सप्तत्रिंशद्भिराक्रीडैः कल्पवृक्षसमन्वितैः ॥
पारिजातद्रुमाकीर्णैर्वेष्टितं कामधेनुभिः । आकाशवत्सुविस्तीर्णं वर्तुलं चन्द्रबिम्बवत् ॥
अस्योर्ध्वमपि वैकुण्ठात्पञ्चाशत्कोटियोजनम् । शून्ये स्थितं निराधारं प्रभुर्नमेऽधरेच्छया ॥
आत्माकाशसमं नित्यमस्माकं च सुदुर्लभम् । अहं नारायणोऽनन्तो ब्रह्मा विष्णुर्महान्विराट् ॥
धर्मः क्षुद्रविराट्संघो गङ्गा लक्ष्मीः सरस्वती । त्वं विष्णुमाया सावित्री तुलसी च गणेश्वरः ॥
सनत्कुमारः स्कन्दश्च नरनारायणावृषी । कपिलो दक्षिणा यज्ञो ब्रह्मपुत्राश्च योगिनः ॥
पवनो वरुणश्चन्द्रः सूर्यो रुद्रो हुताशनः । कृष्णमन्त्रोपासकाश्च भारतस्थाश्च वैष्णवाः ॥
एभिर्दृष्टश्च गोलोको नान्यैर्दृष्टः कदाचन । निरामये च तत्रैव रत्नसिंहासने स्थितम् ॥
रत्नमालाकिरीटैश्च भूषितं रत्नभूषणैः । सुनिर्मलैः पीतवस्त्रैर्वह्निशुद्धैर्विराजितम् ॥
चन्दनोक्षितसर्वाङ्गं किशोरं गोपरूपिणम् । नवीननीरदश्यामं श्वेतपङ्कजलोचनम् ॥
शरत्पार्वणचन्द्रास्यमीषद्धास्यं मनोहरम् । द्विभुजं मुरलीहस्तं भक्तानुग्रहविग्रहम् ॥
स्वेच्छामयं परं ब्रह्म निर्गुणं प्रकृतेः परम् । ध्यानसाध्यं दुराराध्यमस्माकं च सुदुर्लभम् ॥
प्रियैर्द्वादशगोपालैः सेवितं श्वेतचामरैः । वीक्षितं गोपिकावृन्दैः सस्मितैः सुमनोहरैः ॥
पीडितैः कामबाणैश्च शश्वत्सुस्थिरयौवनैः । वह्निशुद्धांशुकाधानै रत्नभूषणभूषितैः ॥
रासमण्डलमध्यस्थं श्रीकृष्णं च परात्परम् । ददर्श राजा तत्रैव राधया दर्शितं तदा ॥
स्तुतं चतुर्भिर्वेदैश्च मूर्तिमद्भिर्मनोहरैः । रागिणीनां च रागाणामतीव सुमनोहरम् ॥
श्रुतवन्तं च संगीतं यन्त्रवक्त्रोत्थितं शिवे । नित्यया च सनातन्या प्रकृत्या च सह त्वया ॥
शश्वत्पूजितपादाब्जमखण्डतुलसीदलैः । कस्तूरीकुङ्कुमाक्तैश्च गन्धचन्दनचर्चितैः ॥ १६६ ॥
दूर्वाभिरक्षताभिश्च पारिजातप्रसूनकैः । निर्मलैर्विरजातोयैर्दत्तार्घ्यैरतिशोभितम् ॥ १६७ ॥
सुप्रसन्नं स्वतन्त्रं च सर्वकारणकारणम् । सर्वेषां चान्तरात्मानं सर्वेशं सर्वजीवनम् ॥

सर्वाधारं परं पूज्यं ब्रह्मज्योतिः सनातनम् । सर्वसंपत्स्वरूपं च दातारं सर्वसंपदाम् ॥
सर्वमङ्गलरूपं च सर्वमङ्गलकारणम् । सर्वमङ्गलदं सर्वमङ्गलानां च मङ्गलम् ॥१७०॥
तं दृष्ट्वा नृपतिस्त्रस्तो ह्यवरुह्य रथात्त्वरन् । साश्रुनेत्रः पुलकितो मूर्ध्ना स प्रणनाम च
परमात्मा ददौ तस्मै स्वदास्यं च शुभाशिषम् । स्वभक्तिं निश्चलां सत्यामस्माकं च सुदुर्लभाम्
राधाऽवरुह्य स्वरथात्कृष्णवक्षस्युवास सा । गोपीभिः सुप्रियाभिश्च सेविता श्वेतचामरैः
संभाषिता श्रीकृष्णेन सस्मितेन च पूजिता । समुत्थितेन सहसा भक्त्या वै संभ्रमेण च
आदौ राधां समुच्चार्य पश्चात्कृष्णं च माधवम् । प्रवदन्ति च वेदेषु वेदविद्भिः पुरातनैः ॥
विपर्ययं ये वदन्ति ये निन्दन्ति जगत्प्रसूम् । कृष्णप्राणाधिकां प्रेममयीं शक्तिं च राधिकाम्
ते पच्यन्ते कालसूत्रे यावच्चन्द्रदिवाकरौ । भवन्ति स्त्रीपुत्रहीना रोगिणः शतजन्मसु ॥१७७॥
इत्येवं कथितं दुर्गे राधिकाख्यानमुत्तमम् । सा त्वं सती भगवती वैष्णवी च सनातनी ॥
नारायणी विष्णुमाया मूलप्रकृतिरीश्वरी । मायया मां पृच्छसि त्वं सर्वज्ञा सर्वरूपिणी ॥
श्रीजातिष्वधिदेवी च परा जातिस्मरा वरा । कथितं राधिकाख्यानं किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० प्रकृति० नारदना० हरगौरीसं० राधाख्या० सुय-
ज्ञाख्या० सुयज्ञगोलोकगमनं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

अथ पञ्चपञ्चाशत्तमोऽध्यायः

पार्वत्युवाच—

श्रीकृष्णस्य स्थिते मन्त्रे चान्येषामीश्वरस्य वः । कथं जग्राह राधाया मन्त्रं वै वैष्णवो नृपः
किं विधानं च किं ध्यानं किं स्तोत्रं कवचं च किम् । कं मन्त्रं च ददौ राज्ञे तां पूजापद्धतिं वद

महेश्वर उवाच—

हे विप्र कं भजामीति प्रश्नं कुर्वति राजनि । शीघ्रं प्राप्नोमि गोलोकं कस्याऽऽराधनतो मुने ॥
इत्युक्तवन्तं राजेन्द्रमुवाच ब्राह्मणोत्तमः । तत्सेवया च तल्लोकं प्राप्स्यसे बहुजन्मतः ॥
तत्प्राणाधिष्ठातृदेवीं भज राधां परात्पराम् । कृपामयीप्रसादेन शीघ्रं प्राप्नोषि तत्पदम्
इत्युक्त्वा राधिकामन्त्रं ददौ तस्मै षडक्षरम् । ॐ राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च
प्रणायामं भूतशुद्धिं मन्त्रन्यासं तथैव च । कराङ्गन्यासमेवं च ध्यानं सर्वसुदुर्लभम् ॥ ७ ॥
स्तोत्रं च कवचं तं च शिक्षयामास भक्तितः । राजा तेन क्रमेणैव जजाप परमं मनुम् ॥

१ क. 'र ज्योतिर्ब्र'।

ध्यानं च सामवेदोक्तं मङ्गलानां च मङ्गलम् । कृष्णस्तां पूजयामास पुरा ध्यानेन येन च ॥
श्वेतचम्पकवर्णाभां कोटिचन्द्रसमप्रभाम् । शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् ॥
सुश्रोणीं सुनितम्बां च पक्वबिम्बाधरां वराम् । मुक्तापङ्क्तिप्रतिनिन्दिदन्तपङ्क्तिमनोहराम् ॥
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारिकाम् । वह्निशुद्धांशुकाधानां रत्नमालाविभूषिताम् ॥
रत्नकेयूरवलयां रत्नमञ्जीररञ्जिताम् । रत्नकुण्डलयुग्मेन विचित्रेण विराजिताम् ॥ ११ ॥
सूर्यप्रभाप्रतिकृतिगण्डस्थलविराजिताम् । अमूल्यरत्नखचितग्रैवेयकविभूषिताम् ॥ १२ ॥
सद्रत्नसारखचितकिरीटमुकुटोज्ज्वलाम । रत्नाङ्गुलीयसंयुक्तां रत्नपाशकशोभिताम् ॥ १३ ॥
बिभ्रतीं कबरीभारं मालतीमाल्यशोभितम् । रूपाधिष्ठातृदेवीं च मत्तवारणगामिनीम् ॥
गोपीभिः सुप्रियाभिश्च सेवितां श्वेतचामरैः । कस्तूरीबिन्दुभिः सार्धमधश्चन्दनबिन्दुना ॥
सिन्दूरबिन्दुना चारुसीमन्ताधःस्थलोज्ज्वलाम् । नित्यं सुपूजितां भक्त्या कृष्णेन परमात्मना
कृष्णसौभाग्यसंयुक्तां कृष्णप्राणाधिकां वराम् । कृष्णप्राणाधिदेवीं च निर्गुणां च परात्पराम्
महाविष्णुविधात्रीं च प्रदात्रीं सर्वसंपदाम् । कृष्णभक्तिप्रदां शान्तां मूलप्रकृतिमीश्वरीम् ॥
वैष्णवीं विष्णुमायां च कृष्णप्रेममयीं शुभाम् । रासमण्डलमध्यस्थां रत्नसिंहासनस्थिताम्
रासे रासेश्वरयुतां राधां रासेश्वरीं भजे ॥ १९ ॥
ध्यात्वा पुष्पं मूर्ध्नि दत्त्वा पुनर्ध्यायेज्जगत्प्रसूम् । दद्यात्पुष्पं पुनर्ध्यात्वा चोपचाराणि षोडश
आसनं वसनं पाद्यमर्घ्यं गन्धानुलेपनम् । धूपं दीपं सुपुष्पं च स्नानीयं रत्नभूषणम् ॥ २१ ॥
नानाप्रकारनैवेद्यं ताम्बूलं वासितं जलम् । मधुपर्कं रत्नतल्पमुपचाराणि षोडश ॥ २२ ॥
प्रत्येकं वेदमन्त्रेण दत्तं भक्त्या च भूभृता । मन्त्रांश्च श्रूयतां दुर्गे वेदोक्तान्सर्वसंमतान् ॥
रत्नसारविकारं च निर्मितं विश्वकर्मणा । वरं सिंहासनं रम्यं राधे पूजासु गृह्यताम् ॥
अमूल्यरत्नखचितममूल्यं सूक्ष्ममेव च । वह्निशुद्धं निर्मलं च वसनं देवि गृह्यताम् ॥
सद्रत्नसारपात्रस्थं सर्वतीर्थोदकं शुभम् । पादप्रक्षालनार्थं च राधे पाद्यं च गृ० ॥ २६ ॥
दक्षिणावर्तशङ्खस्थं सदूर्वापुष्पचन्दनम् । पूतं युक्तं तीर्थतोयै राधेऽर्घ्यं प्रतिगृ० ॥ २७ ॥
पार्थिवद्रव्यसंभूतमतीव सुरभीकृतम् । मङ्गलार्हं पवित्रं च राधे गन्धं गृहाण मे ॥ २८ ॥
श्रीखण्डचूर्णं सुस्निग्धं कस्तूरीकुङ्कुमान्वितम् । सुगन्धयुक्तं देवेशि गृह्यतामनुलेपनम् ॥
वृक्षनिर्याससंयुक्तं पार्थिवद्रव्यसंयुतम् । अग्निखण्डशिखाजातं धूपं देवि गृहाण मे ॥ ३० ॥
अन्धकारे भयहरममूल्यमणिशोभितम् । रत्नप्रदीपं शोभाढ्यं गृहाण परमेश्वरि । ३१ ॥

---

१ क. ज्वलदग्निशि°।

पारिजातप्रसूनं च गन्धचन्दनचर्चितम् । अतीव शोभनं रम्यं गृह्यतां परमेश्वरि॥ १२॥
सुगन्धामलकीचूर्णं सुस्निग्धं सुमनोहरम् । विष्णुतैलसमायुक्तं स्नानीयं देवि गृह्यताम् ॥
अमूल्यरत्नखचितं केयूरवलयादिकम् । शश्वत्सुशोभनं राधे गृह्यतां भूषणं मम ॥ १४ ॥
कालदेशोद्भवं पक्कफलं वै लड्डुकादिकम् । परमान्नं च मिष्टान्नं नैवेद्यं देवि गृ० ॥
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् । सर्वभोगाधिकं स्वादु ताम्बूलं देवि गृ० ॥
अशनं रत्नपात्रस्थं सुस्वादु सुमनोहरम् । मया निवेदितं भक्त्या गृह्यतां परमेश्वरि ॥
रत्नेन्द्रसारखचितं वह्निशुद्धांशुकान्वितम् । पुष्पचन्दनचर्चाढ्यं पर्यङ्कं देवि गृ० ॥
एवं संपूज्य देवीं तां दद्यात्पुष्पाञ्जलित्रयम् । यत्नेन पूजयेद्देवीं नायिकाश्च व्रते व्रती ॥
प्राग्यादिक्रमयोगेन दक्षिणावर्ततः प्रिये । भक्त्या पञ्चोपचारेण सुप्रियाः परिचारिकाः ॥
मालावतीं पूर्वकोणे वह्निकोणे च माधवीम् । दक्षिणे रत्नमालां च सुशीलां नैर्ऋते सतीम् ॥
पश्चिमे वै शशिकलां पारिजातां च मारुते । पद्मावतीमुत्तरे चापैशान्यां सुन्दरीं तथा ॥
यूथिकामालतीपद्ममाला दद्याद्व्रते व्रती । परीहारं च कुरुते सामवेदोक्तमेव च । ४३॥
त्वं देवि जगतां माता विष्णुमाया सनातनी । कृष्णप्राणाधिदेवी च कृष्णप्राणाधिका शुभा ।
कृष्णप्रेममयी शक्तिः कृष्णे सौभाग्यरूपिणी । कृष्णभक्तिप्रदे राधे नमस्ते मङ्गलप्रदे ॥
अद्य मे सफलं जन्म जीवनं सार्थकं मम । पूजिताऽसि मया सा च या श्रीकृष्णेन पूजिता
कृष्णवक्षसि या राधा सर्वसौभाग्यसंयुता । रासे रासेश्वरीरूपा वृन्दा वृन्दावने वने ॥
कृष्णप्रिया च गोलोके तुलसीकानने तु या । चम्पावती कृष्णसङ्गे क्रीडा चम्पककानने ॥
चन्द्रावली[1] चन्द्रवने शतशृङ्गे सतीति च । विरजादर्पहन्त्री च विरजातटकानने ॥
पद्मावती पद्मवने कृष्णा कृष्णसरोवरे । भद्रा कुञ्जकुटीरे च काम्या वै काम्यके वने ॥
वैकुण्ठे च महालक्ष्मीर्वाणी नारायणोरसि । क्षीरोदे सिन्धुकन्या च मर्त्ये लक्ष्मीर्हरिप्रिया
सर्वस्वर्गे स्वर्गलक्ष्मीर्देवदुःखविनाशिनी । सनातनी विष्णुमाया दुर्गा शंकरवक्षसि॥ १२॥
सावित्री वेदमाता च कलया ब्रह्मवक्षसि । कलया धर्मपत्नी त्वं नरनारायणप्रसूः॥ १३
कलया तुलसी त्वं च गङ्गा भुवनपावनी । लोमकूपोद्भवा गोप्यः कलांशा रोहिणी रतिः
कलाकलांशरूपा च शतरूपा शची दितिः । अदितिर्देवमाता च त्वत्कलांशा हरिप्रिया ॥
देव्यश्च मुनिपत्न्यश्च त्वत्कलाकलया शुभे । कृष्णभक्तिं कृष्णदास्यं देहि मे कृष्णपूजिते
एवं कृत्वा परीहारं स्तुत्वा च कवचं पठेत् । पुरा कृतं स्तोत्रमेतद्भक्तिदास्यपदं शुभम्
एवं नित्यं पूजयेद्यो विष्णुतुल्यः स भारते जीवन्मुक्तश्च पूतश्च गोलोकं याति निश्चितम्॥

---

१ ख. तु या । २ क. चन्द्रावती ।

कार्तिके पूर्णिमायां च राधां यः पूजयेच्छिवे । एवं क्रमेण प्रत्यब्दं राजसूयफलं लभेत् ॥
परमैश्वर्ययुक्तः स्यादिह लोके स पुण्यवान् । सर्वपापाद्विनिर्मुक्तो यात्यन्ते विष्णुमन्दिरम्
आदावेवं क्रमेणैव रासे वृन्दावने वने । स्तुता सा पूजिता राधा श्रीकृष्णेन पुरा सती
संपूजिता द्वितीये च धात्रा त्वेवंक्रमेण च । त्वद्वरेण च संप्राप्य विधाता वेदमातरम् ॥
नारायणो महालक्ष्मीं प्राप संपूज्य भारतीम् गङ्गां च तुलसीं चैव परां भुवनपावनीम्
विष्णुः क्षीरोदशायी च प्राप सिन्धुसुतां तथा । मृतायां दक्षकन्यायां मया कृष्णाज्ञया पुरा
त्वमेव दुर्गा संप्राप्ता पूजिता पुष्करे च सा । अदितिं कश्यपः प्राप चन्द्रः संप्राप रोहिणीम्
कामो रतिं च संप्राप धर्मो मूर्तिं पतिव्रताम् । देवाश्च मुनयश्चैव यां संपूज्य पतिव्रताम् ॥
संप्रापुर्यद्वरेणैव धर्मकामार्थमोक्षकम् । एवं पूजाविधानं च कथितं च स्तवं शृणु ॥६७॥

महेश्वर उवाच—

एकदा मानिनी राधा बभूवागोचरा प्रभोः । संसक्तस्य तुलस्यां च गोप्यां च तुलसीवने
सा संहृत्य स्वमूर्तीश्च कलाः सर्वाश्च लीलया । सर्वे बभूवुर्देवाश्च ब्रह्मविष्णुशिवादयः ॥
भ्रष्टश्रियश्च निःश्रीका भार्याहीना ह्युपद्रुताः । ते च सर्वे समालोच्य श्रीकृष्णं शरणं ययुः
तेषां स्तोत्रेण संतुष्टः स्नात्वा संपूज्य तां शुचिः । तुष्टाव परमात्मा स सर्वेषां राधिकां
सतीम् ॥ ७१ ॥

श्रीकृष्ण उवाच—

एवमेव प्रियोऽहं ते प्रमोदश्चैव ते मयि । सुव्यक्तमद्य कापट्यवचनं ते वरानने ॥७२॥
हे कृष्ण त्वं मम प्राणा जीवात्मेति च संततम् । यद्ब्रूहि नित्यं प्रेम्णा त्वं सांप्रतं तत्कुतो
गतम् ॥ ७३ ॥
तस्मात्सर्वमलीकं ते वचनं जगदम्बिके क्षुरधारं च हृदयं स्त्रीजातीनां च सर्वतः ७४ ॥
अस्माकं वचनं सत्यं यद्ब्रवीमि च तद्ध्रुवम् । पञ्चप्राणाधिदेवी त्वं राधा प्राणाधिकेति मे
शक्ता न रक्षितुं त्वां च यान्ति प्राणास्त्वया विना । विनाऽधिष्ठातृदेवीं च को वा कुत्र
च जीवति ॥ ७५ ॥
महाविष्णोश्च माता त्वं मूलप्रकृतिरीश्वरी । सगुणा त्वं च कलया निर्गुणा स्वयमेव तु ॥
ज्योतीरूपा निराकारा भक्तानुग्रहविग्रहा । भक्तानां रुचिवैचित्र्यान्नानामूर्तीश्च बिभ्रती ॥
महालक्ष्मीश्च वैकुण्ठे भारती च गिरां प्रसूः । पुण्यक्षेत्रे भारते च सती त्वं पार्वती तथा ॥
तुलसी पुण्यरूपा च गङ्गा भुवनपावनी । ब्रह्मलोके च सावित्री कलया त्वं वसुंधरा ॥
गोलोके राधिका त्वं च सर्वगोपालकेश्वरी । त्वया विनाऽहं निर्जीवो ह्यशक्तः सर्वकर्मसु ॥

शिवः शक्तस्त्वया शक्त्या शवाकारस्त्वया विना। वेदकर्ता स्वयं ब्रह्मा वेदमात्रा त्वया सह नारायणस्त्वया लक्ष्म्या जगत्पाता जगत्पतिः। फलं ददाति यज्ञश्च त्वया दक्षिणया सह बिभर्ति सृष्टिं शेषश्च त्वां कृत्वा मस्तके भुवम्। बिभर्ति गङ्गारूपां त्वां मूर्ध्नि गङ्गाधरः शिवः शक्तिमच्च जगत्सर्वं शवरूपं त्वया विना। वक्ता सर्वस्त्वया वाण्या मृतो मूकस्त्वया विना यथा मृदा घटं कर्तुं कुलालः शक्तिमान्सदा। सृष्टिं स्रष्टुं तथाऽहं च प्रकृत्या च त्वया सह त्वया विना जडश्चाहं सर्वत्र च न शक्तिमान्। सर्वशक्तिस्वरूपा त्वं त्वमागच्छ ममान्तिकम् ॥ ८७ ॥

वह्नौ त्वं दाहिका शक्तिर्नाग्निः शक्तस्त्वया विना। शोभास्वरूपा चन्द्रे त्वं त्वां विना न स सुन्दरः ॥ ८८ ॥

प्रभारूपा हि सूर्ये त्वं त्वां विना न स भानुमान्। न कामः कामिनीबन्धुस्त्वया रत्या विना प्रिये ॥ ८९ ॥

इत्येवं स्तवनं कृत्वा तां संप्राप जगत्प्रभुः। देवा बभूवुः सश्रीकाः सभार्याः शक्तिसंयुताः॥ सस्त्रीकं च जगत्सर्वं समभूच्छैलकन्यके। गोपीपूर्णश्च गोलोको ह्यभवत्तत्प्रसादतः ॥ ९१ ॥ राजा जगाम गोलोकमिति स्तुत्वा हरिप्रियाम्। श्रीकृष्णेन कृतं स्तोत्रं राधाया यः पठेन्नरः कृष्णभक्तिं च तद्दास्यं संप्राप्नोति न संशयः। स्त्रीविच्छेदे यः शृणोति मासमेकमिदं शुचिः अचिराल्लभते भार्यां सुशीलां सुन्दरीं सतीम्। भार्याहीनो भाग्यहीनो वर्षमेकं शृणोति यः अचिराल्लभते भार्यां सुशीलां सुन्दरीं सतीम्। पुरा मया च त्वं प्राप्ता स्तोत्रेणानेन पार्वति मृतायां दक्षकन्यायामाज्ञया परमात्मनः। स्तोत्रेणानेन संप्राप्ता सावित्री ब्रह्मणा पुरा॥ पुरा दुर्वाससः शापान्निःश्रीके देवतागणे। स्तोत्रेणानेन देवैस्तैः संप्राप्ता श्रीः सुदुर्लभा ॥ शृणोति वर्षमेकं च पुत्रार्थी लभते सुतम्। महाव्याधी रोगमुक्तो भवेत्स्तोत्रप्रसादतः ॥ कार्तिके पूर्णिमायां तु तां संपूज्य पठेत्तु यः। अचलां श्रियमाप्नोति राजसूयफलं लभेत् ॥ नारी शृणोति चेत्स्तोत्रं स्वामिसौभाग्यसंयुता। भक्त्या यः शृणोति स्तोत्रं बन्धनान्मुच्यते ध्रुवम् ॥ १०० ॥

नित्यं पठति यो भक्त्या राधां संपूज्य भक्तितः। स प्रयाति च गोलोकं निर्मुक्तो भवबन्धनात् ॥ १०१ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० हरगौरीसं० राधिकोपा० राधापूजास्तोत्रादिकथनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

पार्वत्युवाच—

पूजाविधानं स्तोत्रं च श्रुतमत्यद्भुतं मया । अधुना कवचं ब्रूहि श्रोष्यामि त्वत्प्रसादतः ॥

महेश्वर उवाच—

शृणु वक्ष्यामि हे दुर्गे कवचं परमाद्भुतम् । पुरा मह्यं निगदितं गोलोके परमात्मना ॥ २ ॥

अतिगुह्यं परं तत्त्वं सर्वमन्त्रौघविग्रहम् । यद्धृत्वा पठनाद्ब्रह्मा संप्राप्तो वेदमातरम् ॥

यद्धृत्वाऽहं तव स्वामी सर्वमाता सुरेश्वरी । नारायणश्च यद्धृत्वा महालक्ष्मीमवाप सः

यद्धृत्वा परमात्मा च निर्गुणः प्रकृतेः परः । बभूव शक्तिमान्कृष्णः सृष्टिं कर्तुं पुरा विभुः

विष्णुः पाता च यद्धृत्वा संप्राप्तः सिन्धुकन्यकाम् । शेषो बिभर्ति ब्रह्माण्डं मूर्ध्नि सर्षपवद्यतः

प्रत्येकं लोमकूपेषु ब्रह्माण्डानि महान्विराट् । बिभर्ति धारणाद्यस्य सर्वाधारो बभूव सः ॥

यद्धारणाच्च पठनाद्धर्मः साक्षी च सर्वतः । यद्धारणात्कुबेरश्च धनाध्यक्षश्च भारते ॥

इन्द्रः सुराणामीशश्च पठनाद्धारणाद्विभुः । नृपाणां मनुरीशश्च पठनाद्धारणात्प्रभुः ॥

श्रीमांश्चन्द्रश्च यद्धृत्वा राजसूयं चकार सः । स्वयं सूर्यस्त्रिलोकेशः पठनाद्धारणाद्धरिः ॥

यद्धृत्वा पठनादग्निर्जगत्पूतं करोति च । यद्धृत्वा वाति वातोऽयं पुनाति भुवनत्रयम् ॥

यद्धृत्वा च स्वतन्त्रो हि मृत्युश्चरति जन्तुषु । त्रिःसप्तकृत्वो निःक्षत्रां चकार च वसुन्धराम्

जामदग्न्यश्च रामश्च पठनाद्धारणात्प्रभुः । ययौ समुद्रं यद्धृत्वा राजसूयं चकार सः ॥

पपौ समुद्रं यद्धृत्वा पठनात्कुम्भसंभवः ॥ १३ ॥

सनत्कुमारो भगवान्यद्धृत्वा ज्ञानिनां गुरुः । जीवन्मुक्तौ च सिद्धौ च नरनारायणावृषी ॥

यद्धृत्वा पठनात्सिद्धो वसिष्ठो ब्रह्मपुत्रकः । सिद्धेशः कपिलो यस्माद्यस्माद्दक्षः प्रजापतिः

यस्माद्भृगुश्च मां द्वेष्टि कूर्मः शेषं बिभर्ति च । सर्वाधारो यतो वायुर्वरुणः पवनो यतः ॥

ईशानो दिक्पतिश्चैव यमः शास्ता यतः शिवे । कालः कालाग्निरुद्रश्च संहर्ता जगतां यतः ।

यद्धृत्वा गौतमः सिद्धः कश्यपश्च प्रजापतिः । वसुदेवसुतां प्राप चैकांशेन तु तत्कलाम् ॥

पुरा स्वजायाविच्छेदे दुर्वासा मुनिपुंगवः । संप्राप रामः सीतां च रावणेन हृतां पुरा ॥

पुरा नलश्च संप्राप दमयन्तीं यतः सतीम् । शङ्खचूडो महावीरो दैत्यानामीश्वरो यतः ॥

वृषो वहति मां दुर्गे यतो हि गरुडो हरिम् । एवं संप्रापुः संसिद्धिं सिद्धाश्च मुनयः सुराः

यद्धृत्वा च महालक्ष्मीः प्रदात्री सर्वसंपदाम् । सरस्वती सतां श्रेष्ठा यतः क्रीडावती रतिः

सावित्री वेदमाता च यतः सिद्धिमवाप्नुयात् । सिन्धुकन्या मर्त्यलक्ष्मीर्यतो विष्णुमवाप सा

यद्धृत्वा तुलसी पूता गङ्गा भुवनपावनी । यद्धृत्वा सर्वसस्याढ्या सर्वाधारा वसुंधरा ॥ २४ ॥

यद्धृत्वा मनसा देवी सिद्धा वै विश्वपूजिता। यद्धृत्वा देवमाता च विष्णुं पुत्रमवाप सा ॥
पतिव्रता च यद्धृत्वा लोपामुद्राऽप्यरुन्धती। लेभे च कपिलं पुत्रं देवहूती यतः सती ॥
प्रियव्रतोत्तानपादौ सुतौ प्राप च तत्प्रसूः। स्वयमाता चापि संप्राप रेवां देवीं गिरिजां यतः
एवं सर्वे सिद्धगणाः सर्वैश्वर्यमवाप्नुयुः। श्रीजगन्मङ्गलस्यास्य कवचस्य प्रजापतिः ॥
ऋषिश्छन्दोऽस्य गायत्री देवी राधेश्वरी स्वयम्। श्रीकृष्णभक्तिसंप्राप्तौ विनियोगः प्रकी-
र्तितः ॥ २९ ॥
शिष्याय कृष्णभक्ताय ब्राह्मणाय प्रकाशयेत्। शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्
राज्यं देयं शिरो देयं न देयं कवचं प्रिये। कण्ठे धृतमिदं भक्त्या कृष्णेन परमात्मना॥
मया दृष्टं च गोलोके ब्रह्मणा विष्णुना पुरा। ॐ राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च।
कृष्णेनोपासितो मन्त्रः कल्पवृक्षः शिरोऽवतु। ॐ ह्रीं श्रीं राधिका ङेन्तं वह्निजायान्तमेव च
कपालं नेत्रयुग्मं च श्रोत्रयुग्मं सदाऽवतु। ॐ ऐं ह्रीं श्रीं राधिकायै वह्निजायान्तमेव च
मस्तकं केशसंघांश्च मन्त्रराजः सदाऽवतु। ओं रां राधां चतुर्थ्यन्तं वह्निजायान्तमेव च
सर्वसिद्धिप्रदः पातु कपोलं नासिकां मुखम्। क्लीं ह्रीं कृष्णप्रियां ङेन्तं कण्ठं पातु नमोऽ-
न्तकम् ॥ ३१ ॥
ओं रां रासेश्वरीं ङेन्तं स्कन्धं पातु नमोऽन्तकम्। ओं रां रासविलासिन्यै स्वाहा पृष्ठं
सदाऽवतु ॥ ३७ ॥
वृन्दावनविलासिन्यै स्वाहा वक्षः सदाऽवतु। तुलसीवनवासिन्यै स्वाहा पातु नितम्बकम्
कृष्णप्राणाधिका ङेन्तं स्वाहान्तं प्रणवादिकम्। पादयुग्मं च सर्वाङ्गं संततं पातु सर्वतः
प्राच्यां रक्षतु सा राधा वह्नौ कृष्णप्रियाऽवतु। दक्षे रासेश्वरी पातु गोपीशा नैर्ऋतेऽवतु
पश्चिमे निर्गुणा पातु वायव्ये कृष्णपूजिता। उत्तरे संततं पातु मूलप्रकृतिरीश्वरी ॥
सर्वेश्वरी सदैशान्यां पातु मां सर्वपूजिता। जले स्थले चान्तरिक्षे स्वप्ने जागरणे तथा ॥
महाविष्णोश्च जननी सर्वतः पातु संततम्। कवचं कथितं दुर्गे श्रीजगन्मङ्गलं परम् ॥
यस्मै कस्मै न दातव्यं गुह्याद्गुह्यतरं परम्। तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित्
गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः। कण्ठे वा दक्षिणे बाहौ धृत्वा विष्णुसमो भवेत्
महोत्सवविशेषे च पर्वाख्येति सुकीर्तिता। तस्याधिदेवी या सा च पार्वती परिकीर्तिता ॥
पर्वतस्य सुता देवी साऽऽविर्भूता च पर्वते। पर्वताधिष्ठातृदेवी पार्वती तेन कीर्तिता ॥
सर्वकाले सना प्रोक्ता विस्तृते च तनोति च। सर्वत्र सर्वकाले च विद्यमाना सनातनी ॥

१ क. स्वामेव प्रकृतिं सुताम्। २ क. देवो रासेश्वरः स्व°। ३ क. बाहू।

शतलक्षजपेनैव सिद्धं च कवचं भवेत् । यदि स्यात्सिद्धकवचो न दग्धो वह्निना भवेत् ॥
एतस्मात्कवचाद्दुर्गे राजा दुर्योधनः पुरा । विशारदो जलस्तम्भे वह्निस्तम्भे च निश्चितम् ॥
मया सनत्कुमाराय पुरा दत्तं च पुष्करे । सूर्यपर्वणि मेरौ च स सांदीपनये ददौ ॥
बलाय[1] तेन दत्तं च ददौ दुर्योधनाय सः । कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥
नित्यं पठति भक्त्येदं तन्मन्त्रोपासकश्च यः । विष्णुतुल्यो भवेन्नित्यं राजसूयफलं लभेत् ॥
स्नानेन सर्वतीर्थानां सर्वदानेन यत्फलम् । सर्वव्रतोपवासेन पृथिव्याश्च प्रदक्षिणैः ॥
सर्वयज्ञेषु दीक्षायां नित्यं वै सत्यरक्षणे । नित्यं श्रीकृष्णसेवायां कृष्णनैवेद्यभक्षणे ॥
पाठे चतुर्णां वेदानां यत्फलं च लभेन्नरः । तत्फलं लभते नूनं पठनात्कवचस्य च ॥
राजद्वारे श्मशाने च सिंहव्याघ्रान्विते[2] वने । दावाग्नौ संकटे चैव दस्युचौरान्विते भये ॥
कारागारे विपद्ग्रस्ते घोरे च दृढबन्धने । व्याधियुक्तो भवेन्मुक्तो धारणात्कवचस्य च ॥
इत्येतत्कथितं दुर्गे तवैवेदं महेश्वरि । त्वमेव सर्वरूपा मां माया पृच्छसि मायया ॥

नारायण उवाच—

इत्युक्त्वा राधिकाख्यानं स्मारं स्मारं च माधवम् । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रो बभूव सः ॥
न कृष्णसदृशो देवो न गङ्गासदृशी सरित् । न पुष्करात्परं तीर्थं न वर्णो ब्राह्मणात्परः ॥
परमाणोः परं सूक्ष्मं महाविष्णोः परो महान् । नभःपरं च विस्तीर्णं यथा नास्त्येव नारद ॥
तथा न वैष्णवाज्ज्ञानी योगीन्द्रः शंकरात्परः । कामक्रोधलोभमोहा जितास्तेनैव नारद ॥
स्वप्ने जागरणे शश्वत्कृष्णध्यानरतः शिवः । यथा कृष्णस्तथा शंभुर्न भेदो माधवेशयोः ॥
यथा शंभुर्वैष्णवेषु यथा देवेषु माधवः । तथेदं कवचं वत्स कवचेषु प्रशस्तकम् ॥
शिशब्दो मङ्गलार्थश्च वकारो दातृवाचकः । मङ्गलानां प्रदाता यः स शिवः परिकीर्तितः ॥
नराणां संततं विश्वे शं कल्याणं करोति यः । कल्याणं मोक्ष इत्युक्तं स एव शंकरः स्मृतः ॥
ब्रह्मादीनां सुराणां च मुनीनां वेदवादिनाम् । तेषां च महतां देवो महादेवः प्रकीर्तितः ॥
महती पूजिता विश्वे मूलप्रकृतिरीश्वरी । तस्या देवः पूजितश्च महादेवः स च स्मृतः ॥
विश्वस्थानां च सर्वेषां महतामीश्वरः स्वयम् । महेश्वरं च तेनेमं प्रवदन्ति मनीषिणः ॥
हे ब्रह्मपुत्र धन्योऽसि यद्गुरुश्च महेश्वरः । श्रीकृष्णभक्तिदाता यो भवान्पृच्छति तां कथाम् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० राधिकोपा० तन्मन्त्रादिकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

1 क. बालाय । 2 क. रिपुग्रस्ते ।

## अथ सप्तपञ्चाशत्तमोऽध्यायः ।

**नारद उवाच—**

सर्वाख्यानं श्रुतं ब्रह्मन्नतीव परमाद्भुतम् । अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमुत्तमम्
दुर्गा नारायणीशाना विष्णुमाया शिवा सती । नित्या सत्या भगवती शर्वाणी सर्वमङ्गला
अम्बिका वैष्णवी गौरी पार्वती च सनातनी । नामानि कौथुमोक्तानि सर्वेषां शुभदानि च
अर्थं षोडशनाम्नां च सर्वेषामीप्सितं वरम् । ब्रूहि वेदविदां श्रेष्ठ वेदोक्तं सर्वसंमतम्
केन वा पूजिता साऽऽद्यौ द्वितीये केन वा पुरा । तृतीये वा चतुर्थे वा केन सर्वत्र पूजिता ॥

**नारायण उवाच—**

अर्थं षोडशनाम्नां च विष्णुर्वेदे चकार सः । ज्ञात्वा पुनः पृच्छसि त्वं कथयामि यथागमम् ॥
दुर्गो दैत्ये महाविघ्ने भवबन्धे च कर्मणि । शोके दुःखे च नरके यमदण्डे च जन्मनि ॥
महाभयेऽतिरोगे चाप्याशब्दो हन्तृवाचकः । एतान्हन्त्येव या देवी सा दुर्गा परिकीर्तिता
यशसा तेजसा रूपैर्नारायणसमा गुणैः । शक्तिर्नारायणस्येयं तेन नारायणी स्मृता ॥
ईशानः सर्वसिद्ध्यर्थे चाशब्दो दातृवाचकः । सर्वसिद्धिप्रदात्री या साऽपीशाना प्रकीर्तिता
सृष्टा माया पुरा सृष्टौ विष्णुना परमात्मना । मोहितं मायया विश्वं विष्णुमाया प्रकीर्तिता ॥
शिवे कल्याणरूपा च शिवदा च शिवप्रिया । प्रिये दातरि चाऽऽशब्दो शिवा तेन प्रकीर्तिता
सद्बुद्ध्यधिष्ठातृदेवी विद्यमाना युगे युगे । पतिव्रता सुशीला च सा सती परिकीर्तिता ॥
यथा नित्यो हि भगवान्नित्या भगवती तथा । स्वमायया तिरोभूता तत्रेशे प्राकृते लये ॥
आब्रह्मस्तम्बपर्यन्तं सर्वं मिथ्यैव कृत्रिमम् । दुर्गा सत्यस्वरूपा सा प्रकृतिर्भगवान्यथा ॥
सिद्ध्यैश्वर्यादिकं सर्वं यस्यामस्ति युगे युगे । सिद्ध्यादिके भगो ज्ञेयस्तेन सा भगवती स्मृता
सर्वान्मोक्षं प्रापयति जन्ममृत्युजरादिकम् । चराचरांश्च विश्वस्थान्शर्वाणी तेन कीर्तिता ॥
मङ्गलं मोक्षवचनं चाऽऽशब्दो दातृवाचकः । सर्वान्मोक्षान्ददाति सैव स्यात्सर्वमङ्गला
हर्षे संपदि कल्याणे मङ्गलं परिकीर्तितम् । तान्ददाति च सर्वेभ्यस्तेन सा सर्वमङ्गला ॥
अम्बेति मातृवचनो वन्दने पूजने सदा । पूजिता वन्दिता माता जगतां तेन साऽम्बिका ।
विष्णुभक्ता विष्णुरूपा विष्णोः शक्तिस्वरूपिणी । सृष्टौ च विष्णुना सृष्टा वैष्णवी तेन कीर्तिता ॥ २१ ॥
गौरः पीते च निर्लिप्ते परे ब्रह्मणि निर्मले । तस्याऽऽत्मनः शक्तिरियं गौरी तेन प्रकीर्तिता ॥
गुरुः शंभुश्च सर्वेषां तस्य शक्तिः प्रिया सती । गुरुः कृष्णश्च तन्माया गौरी तेन प्रकीर्तिता
तिथिभेदे पर्वभेदे कल्पभेदेऽन्यभेदके । ख्याता तेषु च विख्याता पार्वती तेन कीर्तिता ॥

महोत्सवविशेषे च पर्वशब्दः प्रकीर्तितः । तस्याधिदेवी या सा च पार्वती परिकीर्तिता ॥
पर्वतस्य सुता देवी साऽऽविर्भूता च पर्वते । पर्वताधिष्ठातृदेवी पार्वती तेन कीर्तिता ॥
सर्वकाले सना प्रोक्तो विस्तृते च तनीति च । सर्वत्र सर्वकाले च विद्यमाना सनातनी ॥
अर्थः षोडशनाम्नां च कीर्तितश्च महामुने । यथागमं त्वं वेदोक्तोपाख्यानं च निशामय ॥
प्रथमे पूजिता सा च कृष्णेन परमात्मना । वृन्दावने च सृष्ट्यादौ गोलोके रासमण्डले ॥
मधुकैटभभीतेन ब्रह्मणा सा द्वितीयतः । त्रिपुरप्रेरितेनैव तृतीये त्रिपुरारिणा ॥ ३० ॥
भ्रष्टश्रिया महेन्द्रेण शापाद्दुर्वाससः पुरा । चतुर्थे पूजिता देवी भक्त्या भगवती सती ॥
तदा मुनीन्द्रैः सिद्धेन्द्रैर्देवैश्च मुनिपुंगवैः । पूजिता सर्वविश्वेषु बभूव सर्वतः सदा ॥
तेजःसु सर्वदेवानां साऽऽविर्भूता पुरा मुने । सर्वे देवा ददुस्तस्यै शस्त्राण्याभरणानि च ॥
दुर्गादयश्च दैत्याश्च निहता दुर्गया तया । दत्तं स्वराज्यं देवेभ्यो वरं च यदभीप्सितम् ॥
कल्पान्तरे पूजिता सा सुरथेन महात्मना । राज्ञा च मेधसः शिष्येण मृन्मय्यां च सरित्तटे ॥
मेषादिभिश्च महिषैः कृष्णसारैश्च गण्डकैः । छागैरिक्षुसकूष्माण्डैः पक्षिभिर्बलिभिर्मुने ॥
वेदोक्तांश्चैव दत्त्वैवमुपचारांस्तु षोडश । ध्यात्वा च कवचं धृत्वा संपूज्य च विधानतः ॥
राजा कृत्वा परीहारं वरं प्राप यथेप्सितम् । मुक्तिं संप्राप वैश्यश्च संपूज्य च सरित्तटे ॥
तुष्टाव राजा वैश्यश्च साश्रुनेत्रः कृताञ्जलिः । ससर्ज मृन्मयीं तां वै गम्भीरे निर्मले जले ॥
मृन्मयीं तामदृष्ट्वा च जलस्थां तां नराधिपः । रुरोद च तदा वैश्यस्ततः स्थानान्तरं ययौ ॥
त्यक्त्वा देहं च वैश्यस्तु पुष्करे दुष्करं तपः । कृत्वा जगाम गोलोकं दुर्गादेवीवरेण सः ॥
राजा ययौ स्वराज्यं च पूज्यो निष्कण्टकं बली । भोगं च बुभुजे भूपः षष्टिवर्षसहस्रकम् ॥
भार्यां स्वराज्यं संन्यस्य पुत्रे वै कालयोगतः । मनुर्बभूव सावर्णिस्तप्त्वा वै पुष्करे तपः ॥
इत्येवं कथितं वत्स समासेन यथागमम् । दुर्गाख्यानं मुनिश्रेष्ठ किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० मनसोपा० दुर्गोपा० दुर्गादिनामव्युत्पत्त्यादिकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

अथाष्टपञ्चाशत्तमोऽध्यायः ।

नारद उवाच—

कस्य वंशोद्भवो राजा सुरथो धर्मिणां वरः । कथं संप्राप वै ज्ञानं मेधसो ज्ञानिनां वरात् ॥
कस्य वंशोद्भवो ब्रह्मन्मेधसो मुनिसत्तम । बभूव कुत्र संवादो नृपस्य मुनिना सह ॥ २ ॥
समयं बभूव कुत्रास्य वा प्रभो नृपवैश्ययोः । व्यासेन श्रोतुमिच्छामि वद वेदविदां वर ॥

नारायण उवाच—

अत्रिश्च ब्रह्मणः पुत्रस्तस्य पुत्रो निशाकरः। स च कृत्वा राजसूयं द्विजराजो बभूव ह
गुरुपत्न्यां च तारायां तस्याभूच्च बुधः सुतः। बुधपुत्रस्तु चैत्रश्च तत्पुत्र. सुरथः स्मृतः

नारद उवाच—

गुरुपत्न्यां च तारायां समभूत्तत्सुतः कथम्। अहो व्यतिक्रमं ब्रूहि देवस्य च महामुने

नारायण उवाच—

संपन्मत्तो महाकामी ददर्श जाह्नवीतटे। तारां सुरगुरोः पत्नीं धर्मिष्ठां च पतिव्रताम्॥
सुस्नातां सुन्दरीं रम्यां पीनोन्नतपयोधराम्। सुश्रोणीं सुनितम्बाढ्यां मध्यक्षीणां मनोहराम्
सुदतीं कोमलाङ्गीं च नवयौवनसंयुताम्। सूक्ष्मवस्त्रपरीधानां रत्नभूषणभूषिताम्॥ ९॥
कस्तूरीबिन्दुना सार्धमधश्चन्दनबिन्दुना। सिन्दूरबिन्दुना चारुफालमध्यस्थलोज्ज्वलाम्
वायुनाऽधोवस्त्रहीनां सकामां रक्तलोचनाम्। शरत्पार्वणचन्द्रास्यां पक्वबिम्बाधरां वराम्
सुस्मितां नम्रवक्त्रां च लज्जया चन्द्रदर्शनात्। गच्छन्तीं स्वगृहं हर्षान्मत्तवारणगामिनीम्
तां दृष्ट्वा मन्मथाक्रान्तश्चन्द्रो लज्जां जहौ मुने। पुलकाङ्कितसर्वाङ्गः सकामस्तामुवाच सः

चन्द्र उवाच—

योषिच्छ्रेष्ठे क्षणं तिष्ठ वरिष्ठे रसिकासु च। सुविदग्धे विदग्धानां मनो हरसि संततम्॥
निषेव्य प्रकृतिं जन्मसहस्रं कामसागरे। तपःफलेन त्वां प्राप बृहच्छ्रोणीं बृहस्पतिः
अहो तपस्विना सार्धमविदग्धेन वेधसा। योजिता त्वं रसवती शश्वत्कामातुरा वरा॥
किं वा सुखं च विज्ञातमविज्ञेषु समागमे। विदग्धाया विदग्धेन संगम. सुखसागरः १७
कामेन कामिनी त्वं च दग्धाऽसि व्यर्थमीश्वरि। कर्मणा वाऽऽत्मदोषाद्वा को जानाति
मनः स्त्रियाः॥ १८॥
दिने दिने वृथा याति दुर्लभं नवयौवनम्। नवीनयौवनस्थाया वृद्धेन स्वामिना तव॥
शश्वत्तपस्यायुक्तश्च कृष्णमात्मानमीप्सितम्। स्वप्ने जागरणे वाऽपि ध्यायन्नास्ते बृहस्पतिः
सर्वकामरसज्ञा त्वं निष्कामं काममीप्सितम्। ध्यायन्ती कामुकी शश्वद्यूनां शृङ्गारमात्मनि
अन्यश्च त्वन्मनःकामो भिन्नं त्वद्भर्तुरीप्सितम्। ययोश्च भिन्नौ विषयौ का प्रीतिः संगमे तयोः
वसन्ती पुष्पतल्पे च गन्धचन्दनचर्चिते। मोदस्व मां गृहीत्वा त्वं वसन्ते माधवीवने
सुगन्धियुत्फुल्लकुसुमे निर्जने चन्दने वने। भवती युवती भाग्यवती तत्रैव मोदताम्॥
चन्दने चम्पकवने शीतचम्पकवायुना। रम्ये चम्पकतल्पे च क्रीडां कुरु मया सह॥
रम्यायां मलयद्रोण्यां मन्दचन्दनवायुना। रामे रम मया सार्धमतीव निर्जने वने॥
स्वर्णरेखातटवने नर्मदापुलिने शुभे। सुराणां वाञ्छितस्थाने रतिं कुरु मया सह॥

---

१ क. श्वचरजा°। २ क. वक्त्री°। ३ क. °मीश्वरम्।

इत्युक्त्वा मदनोन्मत्तो मदनाधिकसुन्दरः । पपात चरणे देव्या मन्दो मन्दाकिनीतटे ॥
निरुद्धमार्गा चन्द्रेण शुष्ककण्ठौष्ठतालुका । अभीतोवाच कोपेन रक्तपङ्कजलोचना ॥

तारोवाच--

धिक् त्वां चन्द्र तृणं मन्ये परस्त्रीलम्पटं शठम् । अत्रेरमाग्यात्त्वं पुत्रो व्यर्थं ते जन्म जीवनम्
अरे कृत्वा राजसूयमात्मानं मन्यसे बली । बभूव पुण्यं ते व्यर्थं विप्रस्त्रीषु च यन्मनः
यस्य चित्तं परस्त्रीषु सोऽशुचिः सर्वकर्मसु । न कर्मफलभाक्पापी निन्द्यो विश्वेषु सर्वतः
सतीत्वं मे नाशयसि यक्ष्मग्रस्तो भविष्यसि । अत्युच्छ्रूनो निपतनं प्राप्नोतीति श्रुतौ श्रुतम्
दुष्टानां दर्पहा कृष्णो दर्पं ते निहनिष्यति । त्यज मां मातरं वत्स सत्यं ते शं भविष्यति
इत्युक्त्वा तारका साध्वी रुरोद च मुहुर्मुहुः । चकार साक्षिणं धर्मं सूर्यं वायुं हुताशनम्
ब्रह्माणं परमात्मानमाकाशं पवनं धराम् । दिनं रात्रिं च संध्यां च सर्वं सुरगणं मुने ॥
तारकावचनं श्रुत्वा नभीतः स चुकोप ह । करे धृत्वा रथे तूर्णं स्थापयामास सुन्दरीम्
रथं च चालयामास मनोयायी मनोहरम् । मनोहरां गृहीत्वा तां स च रेमे मनोहरः ॥
विस्पन्दके सुरवने चन्दने पुष्पभद्रके । पुष्करे च नदीतीरे पुष्पिते पुष्पकानने ॥ १७ ॥
सुगन्धिपुष्पतल्पे च पुष्पचन्दनवायुना । निर्जने मलयद्रोण्यां स्निग्धचन्दनचर्चिते ॥ १८ ॥
शैले शैले नदे नद्यां शृङ्गारं कुर्वतोस्तयोः । गतं वर्षशतं हर्षान्मुहूर्तमिव नारद ॥ १९ ॥
बभूव शरणापन्नो भीतो दैत्येषु चन्द्रमाः । तेजस्विनि तथा शुक्रे तेषां च बलिनां गुरौ
अभयं च ददौ तस्मै कृपया भृगुनन्दनः । गुरुं जहास देवानां स्वविपक्षं बृहस्पतिम् ॥
सभायां जहसुर्हृष्टा बलिनो दितिनन्दनाः । अभयं च ददुस्तस्मै भीताय च कलङ्किने ॥
सतीसतीत्वध्वंसेन पापिष्ठे चन्द्रमण्डले । बभूव शशरूपं च कलङ्कं निर्मले मलम् ॥
उवाच तं महाभीतं शुक्रो वेदविदां वरः । हितं तथ्यं वेदयुक्तं परिणामसुखावहम् ॥

शुक्र उवाच—

त्वमहो ब्रह्मणः पौत्रोऽप्यत्रेर्भगवतः सुतः । दुर्नीतं कर्म ते पुत्र नीचवत्ययशस्करम् ॥
राजसूयस्य सुफले निर्मले कीर्तिमण्डले । सुधाराशौ सुराबिन्दुरूपमङ्कमुपार्जितम् ॥
त्यज देवगुरोः पत्नीं प्रसूमिव महासतीम् । धर्मिष्ठस्य वरिष्ठस्य ब्राह्मणानां बृहस्पतेः ॥
शंभोः सुराणामीशस्य गुरुपुत्रस्य वेधसः । पौत्रस्याऽऽङ्गिरसो नित्यं ज्वलतो ब्रह्मतेजसा
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । इति सद्वंशजातानां स्वभावं च सतामपि॥
स शत्रुर्मे सुरगुरुः परो विश्वे निशाकर । तथाऽपि सहजाख्यानं वर्णितं धर्मसंसदि ॥

१ क. 'सहर्ष तन्म' ।

पुत्रश्चोकश्च धर्मिष्ठास्तत्र धर्मः सनातनः। यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः॥
गौरेकं पश्य च व्याघ्री सिंही सद्य प्रसूयते। हिंसकाः प्रलयं यान्ति धर्मो रक्षति धार्मिकम्॥
देवाश्च गुरवो विप्राः शक्ता यद्यपि रक्षितुम्। तथाऽपि नहि रक्षन्ति धर्मघ्नं पापिनं जनम्॥
कुलजविप्रपत्नीनां गमने सुरविप्रयोः। ब्रह्महत्याषोडशांशपातकं च भवेद्ध्रुवम्॥१६॥
तासामुपस्थितानां च गमने तच्चतुर्थकम्। त्यागे धर्मो नास्ति पापमित्याह कमलोद्भवः
विप्रपत्नीसतीनां च गमनं वै बलेन चेत्। ब्रह्महत्याशतं पापं भवेदेव श्रुतौ श्रुतम्॥
धर्मं चर महाभाग ब्राह्मणीं त्यज सांप्रतम्। कृत्वाऽनुतापं पापाच्च निवृत्तिस्तु महाफला॥
उपवासेन च ते पापं दूरीभूतं भवेन्ननु। शरणागतभीतस्य मयि देवस्य धर्मतः॥१७॥
शस्त्रहीनं च भीतं च दीनं च शरणार्थिनम्। यो न रक्षत्यधर्मिष्ठः कुम्भीपाके वसेद्ध्रुवम्॥
राजसूयशतानां च रक्षिता लभते फलम्। परमैश्वर्ययुक्तश्च धर्मेण स भवेदिह॥१८॥
इत्युक्त्वा वै दैत्यगुरुः स्वर्गे मन्दाकिनीतटे। स्नात्वा तं स्नापयामास विष्णुपूजां चकार सः
विष्णुपादाब्जजातेन तन्नैवेद्यं शुभप्रदम्। गङ्गोदकेन पुण्येन भोजयामास चन्द्रकम्॥
क्रोडे कृत्वा तु तं भीतं लज्जितं पापकर्मणा। कुशहस्तस्तमित्यूचे स्मारंस्मारं हरिं मुने॥

शुक्र उवाच—

यद्यस्ति मे तपः सत्यं सत्यं पूजाफलं हरेः। सत्यं व्रतफलं चैव सत्यं सत्यवचःफलम्।
तीर्थस्नानफलं सत्यं सत्यं दानफलं यदि। उपवासफलं सत्यं पापान्मुक्तो भवान्भवेत्॥
विप्रं त्रिसंध्यहीनं च विष्णुपूजाविहीनकम्। तदाप्नोतु महाघोरं चन्द्रपापं सुदारुणम्॥
स्वभार्यावञ्चनं कृत्वा यः प्रयाति परस्त्रियम्। स यातु नरकं घोरं चन्द्रपापेन पातकी॥
या भ्रष्टा या स्वभर्तृकान्तं दुःशीला दुर्मुखा च या। सा युगं चन्द्रपापेन यातु लालामुखं ध्रुवम्
अनेकेषां नृपाणां च यश्च भुङ्क्ते हरेर्द्विजः। स यातु कालसूत्रं च चन्द्रपापाच्चतुर्युगम्॥
अम्बुवाच्यां भूखननं यः करोति नराधमः। चन्द्रपापाद्युगशतं कालसूत्रं स गच्छतु १९
स्वकान्तं या परित्यज्य च याति परपूरुषम्। सा यातु वह्निकुण्डं च चन्द्रपापाच्चतुर्युगम्
कीर्तिं करोति स्वयशसा परकीर्तिं विलुप्य च। स युगं चन्द्रपापेन कुम्भीपाकं च गच्छतु॥
पितरं मातरं भार्यां यो न पुष्णाति पातकी। स्वयुगं चन्द्रपापेन यातु चण्डालतां ध्रुवम्।
गुरुकान्तां च कन्यां स्वभ्रातृकान्तामेव च। योऽश्नाति चन्द्रपापं च यातु तं पापिनं ध्रुवम्॥
स यातु तेन पापेन कुम्भीपाकं चतुर्युगम्। तस्मात्तु सर्वं चाण्डालीं योनिमाप्नोति पातकी।
दिवसे यो महापापी करोति च। यो गच्छेत्कामतः कामी गुर्विणीं परस्त्रीं कृताम्

१ क. °र्त करोत्यहम्।

तं यातु चन्द्रपापं च महाघोरं च पापिनम् । स यातु तेन पापेन कालसूत्रं चतुर्युगम् ॥
मुखं श्रोणीं स्तनं योनिं यः पश्यति परस्त्रियाः । कामतः कामबुद्ध्या च यातु तं चन्द्रपातकम्
स यातु कालभक्ष्यं च चन्द्रपापाच्चतुर्युगम् । तस्मात्तुतीर्य भवतु चाण्डालोऽप्यथ नपुंसकः ॥
कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च । मांसं मसूरं लकुचं यश्च भुङ्क्ते हरेर्दिने । दिवा ॥
कुरुते ग्राम्यधर्मं च यातु तं चन्द्रकिल्बिषम् । चतुर्युगं कालसूत्रं तेन पापेन गच्छतु ॥
तस्मात्तुतीर्य चाण्डालीं योनिमाप्नोतु पातकी । सप्तजन्म महारोगी दरिद्रः कुब्ज एव च ॥
एकादश्यां च यो भुङ्क्ते कृष्णजन्माष्टमीदिने । शिवरात्रौ महापापी यातु तं चन्द्रपातकम्
स यातु कुम्भीपाकं च यावदिन्द्राश्चतुर्दश । तेन पापेन चाऽऽप्नोतु चाण्डालीयोनिमेव च
ताम्रस्थं दुग्धमाध्वीकमुच्छिष्टं घृतमेव च । नारिकेलोदकं कांस्ये दुग्धं सलवणं तथा ॥
पीतशेषजलं चैव भुक्तशेषं तथौदनम् । असकृच्चौदनं भुङ्क्ते सूर्ये नास्तंगते द्विजः ॥
तं यातु चन्द्रपापं च दुर्निवारं च दारुणम् । स यातु तेन पापेन चान्धकूपं चतुर्युगम् ॥
स्वकन्याविक्रयी विप्रो देवलो वृषवाहकः । शूद्राणां शवदाही च तेषां वै सूपकारकः
अश्वत्थगुरुघाती च विष्णुवैष्णवनिन्दकः । तं यातु चन्द्रपापं च दारुणं पापिनं ध्रुवम्
स यातु तस्मात्पापाच्च तप्तसूर्मीं च पातकी । शश्वद्दग्धो भवतु स यावदिन्द्राश्चतुर्दश ॥
तस्मात्तुतीर्य चाण्डालीं योनिमाप्नोतु पातकी । सप्तजन्मसु चाण्डालो वृषभः पञ्चजन्मसु
गर्दभो जन्मशतकं सूकरः सप्तजन्मसु । तीर्थध्वाङ्क्षः सप्तसु वै विट्कृमिः पञ्चजन्मसु
जलौका जन्मशतकं शुचिर्भवतु तत्परम् ॥ ९१ ॥
वृथामांसं च यो भुङ्क्ते स्वार्थं पाकान्नमेव च । तदर्द्धं महापापी प्राप्नुयाच्चन्द्रपातकम् ॥
स यातु चन्द्रपापेन चासिपत्रं चतुर्युगम् । ततो भवतु सर्पश्च पशुः स्यात्सप्तजन्मसु ॥
विप्रो वार्धुषिको यो हि योनिजीवी चिकित्सकः । हरेर्नाम्नां च विक्रेता यश्च वा स्वात्मविक्रयी
स्वधर्मकथकश्चैव यश्च स्वात्मप्रशंसकः । मषीजीवी धावकश्च कुलटापोष्य एव च ॥
तं यातु चन्द्रपापं च चन्द्रो भवतु विज्वरः । स यातु तेन पापेन शूलप्रोतं युगाष्टकम् ॥
तत्र विद्धो भवतु स यावदिन्द्राश्चतुर्दश । ततो दरिद्रो रोगी च दीनहीनो [illegible] ॥
लाक्षामांसरसानां च तिलानां लवणस्य च । अश्वानां चैव लोहानां विक्रेता ब्राह्मणाधमः ॥
विप्रः कुलालः चौरश्च यातु तं चन्द्रपातकम् । स यातु तेन पापेन क्षुरधारं [illegible] ॥
तत्र छिन्नो भवतु स यावदिन्द्रसहस्रकम् । तस्मात्तुतीर्य स भवेत्सृगालः सप्तजन्मसु ॥
सप्तजन्मसु मार्जारो महिषो जन्मपञ्चकम् । सप्तजन्मसु मल्लूकः कुक्कुरः सप्तजन्मसु ॥

१ [illegible]. रवे° । २ क. वृषलः । ३ क. यज्ञवि° ।

मत्स्यश्च जन्मशतकं कर्कटी जन्मपञ्चकम् । गोधिका जन्मशतकं गर्दभः सप्तजन्मसु ॥
सप्तजन्मसु मण्डूकस्ततः श्वानमानवोऽधमः । चर्मकारश्च रजकस्तैलकारश्च वर्धकि. ॥
नाविकः शवजीवी च व्याधश्च स्वर्णकारकः । कुम्भकारो लोहकारस्ततः क्षत्रस्ततो द्विजः
इति चन्द्रं शुचिं कृत्वा समुवाच स तारकाम् । त्यक्त्वा चन्द्रं महासाध्वि गच्छ कान्त-
मिति द्विजः ॥ १०९ ॥
प्रायश्चित्तं विना पूता त्वमेवं शुद्धमानसा । अकामाया बलिष्ठेन न स्त्री जारेण दुष्यति
इत्येवमुक्त्वा शुक्रश्च चन्द्रं वा तारकां सतीम् । सस्मितां सस्मितं चैव चकार च शुभाशिषः

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० ताराचन्द्रयोर्दोषनिवानिवारणं नामाष्टपञ्चाशतमोऽध्यायः ॥ ५८ ॥

====

अथैकोनषष्टितमोऽध्यायः ।

———

नारद उवाच—

बृहस्पतेः किं चकार तारकाहरणान्तरे । कथं संप्राप तां साध्वीं तन्मे व्याख्यातुमर्हसि

नारायण उवाच—

दृष्ट्वा विलम्बं तारायाः क्लान्त्याश्चापि गुरुः स्वयम् । प्रस्थापयामास शिष्यमन्वेषार्थं च
जानुहर्वाम् ॥ २ ॥
शिष्यो गत्वा च तद्वृत्तं ज्ञात्वा वै लोकवक्त्रतः । रुदन्नुवाच स्वगुरुं तारकाहरणं मुने ॥
श्रुत्वा सुरगुरुर्वार्तां शशिना च प्रियां हृताम् । मुहूर्तं प्राप मूर्छां च ततः संप्राप्य चेतनाम्
रुरोदोच्चैः सशिष्यश्च हृदयेन विदूयता । शोकेन लज्जयाऽऽविष्टो विललाप मुहुर्मुहुः ॥
उवाच शिष्यान्संबोध्य नीतिं च श्रुतिसंमताम् । साश्रुनेत्रः साश्रुनेत्रान्शोकार्तः शोककर्शितान्

बृहस्पतिरुवाच—

हे वत्साः केन शप्तोऽहं न जाने कारणं परम् । दुःखं धर्मविरुद्धो यः स प्राप्नोति न संशयः ॥
यस्य नास्ति सती भार्या गृहेषु प्रियवादिनी । अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम्
भावानुरक्ता वनिता हृता यस्य च शत्रुणा । अरण्यं तेन गन्तव्यं यथाऽरण्यं० ॥ ९ ॥
सुशीला सुन्दरी भार्या गता यस्य गृहादहो । अरण्यं तेन गन्तव्यं यथाऽरण्यं० ॥ १० ॥
दैवेनापहृता यस्य पतिसाध्व्या पतिव्रता । अरण्यं तेन गन्तव्यं यथाऽरण्यं० ॥ ११ ॥

---

१ क. आखुश्च जन्मशतकं कुक्कुटी । २ क. 'गृध्रश्च स' । ३ क. विप्रो । ४ क. 'र्व्यं तथाऽरण्यं गृहाद्वरम् ।

यस्य माता गृहे नास्ति गृहिणी वा सुशासिता । अरण्यं तेन गन्तव्यं यथाऽरण्यं० ॥ १२ ॥
प्रियाहीनं गृहं यस्य पूर्णं द्रविणबन्धुभिः । अरण्यं तेन गन्तव्यं यथाऽरण्यं० ॥ १३ ॥
भार्याशून्या वनसमा सभार्याश्च गृहा गृहाः । गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते ॥
अशुचिः स्त्रीविहीनश्च दैवे पित्र्ये च कर्मणि । यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत् ॥
दाहिकाशक्तिहीनश्च यथा मन्दो हुताशनः । प्रभाहीनो यथा सूर्यः शोभाहीनो यथा शशी
शक्तिहीनो यथा जीवो यथा चाऽऽत्मा तनुं विना । विनाऽऽधारं यथाऽऽधेयो यथेशः प्रकृतिं विना ॥ १७ ॥
न च शक्तो यथा यज्ञः फलदाँ दक्षिणां विना । कर्मणां च फलं दातुं सामग्री मूलमेव च
विना स्वर्णं स्वर्णकारो यथाऽशक्तः स्वकर्मणि । यथाऽशक्तः कुलालश्च मृत्तिकां च विना द्विजाः
तथा गृही न शक्तश्च संततं सर्वकर्मणि । गृहाधिष्ठातृदेवीं च स्वशक्तिगृहिणीं विना ॥
भार्यामूलाः क्रियाः सर्वा भार्यामूला गृहास्तथा । भार्यामूलं सुखं सर्वं गृहस्थानां गृहे सदा
भार्यामूलः सदा हर्षो भार्यामूलं च मङ्गलम् । भार्यामूलश्च संसारो भार्यामूलं च सौरभम् ॥
यथा रथश्च रथिनां गृहिणां च तथा गृहम् । सारथिस्तु यथा तेषां गृहिणां च तथा प्रिया ॥
सर्वरत्नप्रधानं च स्त्रीरत्नं दुष्कुलादपि । गृहीता सा गृहस्थेनैवेत्याह कमलोद्भवः ॥
यथा जलं विना पद्मं पद्मं शोभां विना यथा । तथैव पुंसां स्वगृहं गृहिणां गृहिणीं विना ॥
इत्येवमुक्त्वा स गुरुः प्रविवेश गृहं मुहुः । गृहाद्बहिर्निःससार भूयो भूयः शुचाऽन्वितः
मुहुर्मुहुश्च मूर्छां च चेतनां समवाप सः । भूयो भूयो रुरोदोच्चैः स्मारंस्मारं प्रियागुणान् ॥
अथान्तरे महाज्ञानी ज्ञानिभिश्च प्रबोधितः । सच्छिष्यैर्मुनिभिश्चान्यैः पुरंदरगृहं ययौ ॥
स गुरुः पूजितस्तेन चाऽऽतिथ्येन मरुत्वता । तमुवाच स्ववृत्तान्तं हृदि शल्यमिवाप्रियम्
बृहस्पतिवचः श्रुत्वा रक्तपङ्कजलोचनः । तमुवाच महेन्द्रश्च कोपप्रस्फुरिताधरः ॥ ३० ॥

महेन्द्र उवाच—

दूतानां वै सहस्रं च चारकर्मणि गच्छतु । अतीव निपुणं दक्षं तत्त्वप्राप्तिनिमित्तकम् ॥
यत्रास्ति पातकी चन्द्रो मन्मात्रा तारया सह । गच्छामि तत्र संनद्धः सर्वैर्देवगणैः सह
त्यज चिन्तां महाभाग सर्वं भद्रं भविष्यति । भद्रबीजं दुर्गमिदं कस्य संपद्विपद्विना ॥
इत्युक्त्वा च शुनासीरो दूतानां च सहस्रकम् । तूर्णं प्रस्थापयामास तत्कर्मनिपुणं मुने ॥
ते दूता वै वर्षशतं ययुर्निर्जनमेव च । सुदुर्लङ्घ्यं च विश्वेषु भ्रमित्वा शक्रमाययुः ॥

१ क. °लाश्च पुत्राश्च भा० । २ क. यौवनम् । ३ क. °लेभे च ।

चन्द्रं च गुरुपत्नीं तं प्रपन्नं च विज्वरम् । दृष्ट्वा सतारकं भीतं कथयामासुरीश्वरम् ॥
इति श्रुत्वा सुनासीरो नतकन्धो बृहस्पतिम् । उवाच शोकसंतप्तो हृदयेन विदूयता ॥

महेन्द्र उवाच—

गुरुपत्नीमानयामि अभिप्रायमुत्तमम् । भयं त्यज महाभाग सर्वं भद्रं भविष्यति ॥
त्वया त्यक्ता सा शुभा न मया द्विजनन्दन । एतदालोच्य चन्द्रश्च जगाम शरणं कविम्
गच्छ शीघ्रं मया लोकमस्माभिः सार्धमेव च । ब्रह्मणा सह यास्यामः कैलासे शंकरं वयम्
इत्युक्त्वा तु महेन्द्रश्च संतप्तो गुरुणा सह । जगाम ब्रह्मलोकं च सुखदृश्यं निरामयम्
तत्र दृष्ट्वा च ब्रह्माणं ननाम गुरुणा सह । प्रोवाच सर्ववृत्तान्तं देवानामीश्वरं परम् ॥
महेन्द्रवचनं श्रुत्वा प्रहस्य कमलोद्भवः । हितं तथ्यं नीतिसारमुवाच विनयान्वितः ॥

ब्रह्मोवाच—

यो ददाति परस्मै च दुःखमेव च सर्वतः । तस्मै ददाति दुःखं च शास्ता कृष्णः सनातनः
अहं स्रष्टा च सृष्टेश्च पाता विष्णुः सनातनः । यथा रुद्रश्च संहर्ता ददाति च शिवं शिवः
निरन्तरं सर्वसाक्षी धर्मो वै सर्वकारणम् । सर्वे देवा विषयिणः कृष्णाज्ञापरिपालकाः ॥
बृहस्पतिरुतथ्यश्च संवर्तश्च जितेन्द्रियः । त्रयश्चाङ्गिरसः पुत्रा वेदवेदाङ्गपारगाः ॥
संवर्ताय कनिष्ठाय न च किंचिद्ददौ गुरुः । स बभूव तपस्वी च कृष्णं ध्यायति चेश्वरम् ।
महोतथ्यज्येष्ठकस्य सतीं भार्यां च गुर्विणीम् । जहार कामतस्तां च भ्रातृजायामकामुकीम्
यो हरेद्भ्रातृजायां च कामी कामादकामुकीम् । ब्रह्महत्यासहस्रं च लभते नात्र संशयः ॥
स याति कुम्भीपाकं च यावच्चन्द्रदिवाकरौ । भ्रातृजायापहारी च मातृगामी भवेन्नरः ॥
तस्मादुत्तीर्य पापी च विष्ठायां जायते कृमिः । वर्षकोटिसहस्राणि तत्र स्थित्वा च पातकी
ततो भवेन्महापापी वर्षकोटिसहस्रकम् । पुंश्चलीयोनिगर्ते च कृमिश्चैव पुरंदर ॥१३॥
गृध्रकोटिसहस्राणि शतजन्मानि कुक्कुरः । भ्रातृजायापहरणाच्छतजन्मानि सूकरः ॥१४
ददाति यो न भक्ष्यं च बलिष्ठो दुर्बलाय च । स याति कुम्भीपाकं च यावच्चन्द्रदिवाकरौ ।
माऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
जगद्गुरोः शिष्यस्यापि गुरुपुत्रो बृहस्पतिः । ज्ञातं करोतु वृत्तान्तमीश्वरं ज्ञानिनां वरम्१७
सर्वे सुरा देवगणाः संनद्धाश्च सवाहनाः । मध्यस्था मुनयश्चैव सन्तु वै नर्मदातटे ॥१८॥
पश्चादहं च यास्यामि पुण्यं तं नर्मदातटम् । गुरुस्तद्गुरुपुत्रोऽपि शीघ्रं यातु शिवालयम् ॥

---

१ क. कैलासं शंकरालयम् । २ क. [illegible] ।

महेन्द्र उवाच—

कथं वा वेदकर्तुश्च सिद्धानां योगिनां गुरोः । मृत्युंजयस्य शंभोश्च गुरुपुत्रो बृहस्पतिः
अङ्गिरास्तव पुत्रश्च तत्पुत्रश्च बृहस्पतिः । त्वत्तो ज्ञानी महादेवः कथं शिष्यो गुरो पितुः

ब्रह्मोवाच—

कथेयमतिगुप्ता च पुराणेषु पुरंदर । इमां पुराप्रवृत्तिं च कथयामि निशामय ॥ ६२ ॥
मृतवत्सा कर्मदोषाद्भार्या चाङ्गिरसः पुरा । व्रतं चकार मद्वाक्यात्कृष्णस्य परमात्मनः ॥
व्रतं पुंसवनं नाम वर्षमेकं चकार सा । सनत्कुमारो भगवान्कारयाम स तां व्रतम् ॥
तदाऽऽगत्य च गोलोकात्परमात्मा कृपामयः । स्वेच्छामयं परं ब्रह्म भक्तानुग्रहविग्रहः ॥
सुव्रतां च सलक्ष्मीकां तामुवाच कृपानिधिः । प्रणतां साश्रुनेत्रां च विनीतां च तथा स्तुतः

श्रीकृष्ण उवाच—

गृहाणेदं व्रतफलं मम तेजःसमन्वितम् । भुङ्क्ष्व मद्वरतः पुत्रो भविष्यति मदंशतः ॥
पतिर्गुरुश्च देवानां महतां ज्ञानिनां वरः । पुत्रस्ते भविता साध्वि मद्वरेण बृहस्पतिः ॥
मद्वरेण भवेद्यो हि स च मद्वरपुत्रकः । त्वद्गर्भे मम पुत्रोऽयं चिरजीवी भविष्यति ॥
वरजो वीर्यजश्चैव क्षेत्रजः पालकस्तथा । विद्यामन्त्रसुतो चैव गृहीतः सप्तमः सुतः ॥७०॥
इत्युक्त्वा राधिकानाथः स्वलोकं च जगाम सः । श्रीकृष्णवरपुत्रोऽयं ज्ञानी सुरगुरुः स्वयम्
मृत्युंजयं महाज्ञानं शिवाय प्रददौ पुरा । दिव्यं वर्षत्रिलक्षं च तपश्चक्रे हिमालये ॥
स्वयोगं ज्ञानमखिलं तेजःस्वात्मसमं परम् । स्वशक्तिं विष्णुमायां च स्वांशं वै वाहनं वृषम्
स्वशूलं च स्वकवचं स्वमन्त्रं द्वादशाक्षरम् । कृपामयः स्तुतस्तेन श्रीकृष्णश्च परात्परः ॥
शिवलोके शिवा मा च विष्णुमाया शिवप्रिया शक्तिर्नारायणस्येयं तेन नारायणी स्मृता ।
तेजःसु सर्वदेवानां साऽऽविर्भूता सनातनी जघान दैत्यनिकरं देवेभ्यः प्रददौ पदम् ॥७६॥
कल्पान्ते दक्षकन्या च सा मूलप्रकृतिः सती । पितृयज्ञे तनुं त्यक्त्वा योगाद्वै सिद्धयोगिनी
बभूव शैलकन्या सा साध्वी वै भर्तृनिन्दया । कालेन कृष्णतपसा शंकरं प्राप शंकरी ॥
श्रीकृष्णो हि गुरुः शंभोः परमात्मा परात्परः । कृष्णस्य वरपुत्रोऽयं स्वयमेव बृहस्पतिः ॥
अतो हेतोः सुरगुरुर्गुरुपुत्रः शिवस्य च । इत्येवं कथितं सर्वमतिगुह्यं पुरातनम् । ८१ ॥
इति प्रधानसंबन्धः श्रुतश्च कथितो मया । पारम्पारिकमन्यं च कथयामि निशामय ॥
दुर्वासा गरुडश्चैव शंकरांशः प्रतापवान् । शिष्यौ चाङ्गिरसस्तौ द्वौ गुरुपुत्रोऽथवा ततः ॥

---

१ क. 'व्रतानशनक्षीणां ता' । २ क. यज्ञक' ।

प्राणाधिकायां सत्यां च मृतायां दक्षशापतः। स्वज्ञानं स्वं च भगवान्विसस्मार स्वमोहतः
स्मरणं कारयामास कृष्णेन प्रेरितोऽङ्गिराः। अतो हेतोर्गुरुश्चैवं मत्सुतः स्याच्छिवस्य सः
शीघ्रं गच्छतु कैलासं स्वयमेव बृहस्पतिः। त्वं गच्छ तत्र संनद्धः सदेवो नर्मदातटम् ॥
इत्युक्त्वा जगतां धाता विरराम च नारद। गुरुर्ययौ च कैलासं महेन्द्रो नर्मदातटम् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० बृहस्पतेः कैलासगमनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## अथ षष्टितमोऽध्यायः।

**नारद उवाच—**

नारायण महाभाग वेदवेदाङ्गपारग। निपीतं च सुधाख्यानं त्वन्मुखेन्दुविनिःसृतम् ॥ १॥
अधुना श्रोतुमिच्छामि किमुवाच बृहस्पतिः। शिवं च गत्वा कैलासं दातारं सर्वसंपदाम्
जगत्कर्ता विधाता च किंवा तं प्रत्युवाच सः। एतत्सर्वं समालोच्य वद वेदविदां वर ॥

**नारायण उवाच—**

शीघ्रं गत्वा च कैलासं भ्रष्टश्रीः शंकरं गुरुः। प्रणम्य तस्थौ पुरतो लज्जामलिनविग्रहः॥
दृष्ट्वा गुरुसुतं शंभुरुदतिष्ठत्कुशासनात्। आलिङ्गनं ददौ तस्मै शीघ्रं माङ्गलिकः शिवः॥
स्वासने वासयित्वा वै पप्रच्छ कुशलं वचः। उवाच मधुरं वाक्यं भीतं तं लज्जितं शिवः॥

**शंकर उवाच—**

कथमेवंविधस्त्वं च दुःखी मलिनविग्रहः। साश्रुनेत्रो लज्जितश्च भ्रातस्तत्कारणं वद ॥
किंवा तपस्या हीना ते संध्या हीनाऽथवा मुने। किंवा श्रीकृष्णसेवा सा विहीना दैवदोषतः
किंवा गुरौ भक्तिहीनोऽभीष्टदेवेऽथवा हरौ। किंवा न रक्षितुं शक्तः प्रपन्नं शरणागतम्॥
किंवाऽतिथिस्ते विमुख. किंवा पोष्या बुभुक्षिताः किंवा स्वतन्त्रा स्त्री वा ते किंवा पुत्रोऽवचस्करः॥ १० ॥
सुशासितो न शिष्यो वा किं भृत्याश्चोत्तरप्रदाः। किंवा ते विमुखा लक्ष्मीः किंवा रुष्टो गुरुस्तव
गरिष्ठश्च वरिष्ठश्च शश्वत्संतुष्टमानसः। गुरुस्तव वसिष्ठश्च प्रेष्ठः श्रेष्ठः सतां महो ॥ १२॥
किंवा रुष्टोऽभीष्टदेवः किंवा रुष्टाश्च बान्धवाः। किंवा रुष्टा वैष्णवाश्च किंवा ते प्रबलो रिपुः॥
किंवा ते बन्धुविच्छेदो विग्रहो बलिना सह। किंवा पदं परग्रस्तं किंवा बन्धुधनं च वा ॥
केन ते वा कृता निन्दा खलैर्वा पापिभिर्मुने। केन वा त्वं परित्यक्तो बान्धवेन प्रियेण वा

१ क. °श्चैव शिवस्य मत्सुतस्य च। २ ख. °ज्जावनतकंधरः। ३ क. बान्धवा°।

बन्धुस्त्यक्तस्त्वया किंवा वैराग्येण कुशाऽथवा । किंवा तीर्थे नहि स्नातं न दत्तं पुण्यवासरे ॥
गुरुनिन्दा बन्धुनिन्दा खलवत्क्वाच्छ्रुताऽथवा । गुरुनिन्दा हि साधूनां मरणादतिरिच्यते ॥
असद्वंशप्रजातानां खलानां निन्दनं तथा । दौःशील्यमेवमसतां शश्वन्नारकिणामिह ॥
परप्रशंसकाः सन्तः पुण्यवन्तो हि भारते । शश्वन्मङ्गलयुक्ताश्च राजन्तेऽमलमानसाः ॥
पुत्रे यशसि तोये च समृद्धे च पराक्रमे । ऐश्वर्ये वा प्रतापे च प्रजाभूमिधनेषु च ॥२०॥
वचनेषु च बुद्धौ च स्वभावे च चरित्रतः । आचारे व्यवहारे च ज्ञायते हृदयं नृणाम् ॥
यादृग्येषां च हृदयं तादृक्तेषां च मङ्गलम् । यादृग्येषां पूर्वपुण्यं तादृक्तेषां च मानसम् ॥
इत्युक्त्वा च महादेवो विरराम स्वसंसदि । तमुवाच महावक्ता स्वयमेव बृहस्पतिः ॥

बृहस्पतिरुवाच—

अकथ्यमेव वृत्तान्तं कथयामि किमीश्वर । लोकाः कर्मवशा नित्यं नानाजन्मसु यत्कृतम् ॥
स्वकर्मणां फलं भुङ्क्ते जन्तुर्जन्मनि जन्मनि । नहि नष्टं च तत्कर्म विना भोगाच्च भारते ॥
सुखं दुःखं भयं शोको नराणां यत्कृतं प्रभो । केचिद्वदन्ति हि भवेत्स्वकृतेन च कर्मणा ॥
केचिद्वदन्ति दैवेन स्वभावेनेति केचन । त्रिविधा गतयो ह्यस्य वेदवेदाङ्गपारग ॥ २७ ॥
स्वयं च कर्मजनकः कर्म वै दैवकारणम् । स्वभावो जायते नृणां स्वात्मनः पूर्वकर्मणः ॥
स्वकर्मणा च सर्वेषां जन्तूनां प्रतिजन्मनि । सुखं दुःखं भयं शोकः स्वात्मनश्च प्रजायते ॥
स्वकर्मफलभोक्ता च जीवो हि सगुणः सदा । आत्मा भोजयिता साक्षी निर्गुणः प्रकृतेः परः ॥
स एवाऽऽत्मा सर्वसंस्थः सर्वेषां च फलप्रदः । स वै सृजति दैवं च स्वभावं कर्म चैव हि ॥
कर्मणा च नृणां लज्जा प्रशंसा च प्रफुल्लता । लज्जाबीजं च वृत्तान्तं तथाऽपि कथयामि ते ॥
इत्युक्त्वा सर्ववृत्तान्तमवोचत्तं बृहस्पतिः । श्रुत्वा बभूव नम्रास्यो गौरीशो लज्जया तदा ॥
जपमाला कराद्भ्रष्टा कोपाविष्टस्य शूलिनः । बभूव सद्यः कम्पश्च रक्तपङ्कजलोचने ॥
संहर्तुरीशो रुद्रस्य विष्णोः पातुः सखा शिवः । स्रष्टुः स्तुत्यश्च मान्यश्च स्वात्मनः परमा गतिः ॥
निर्गुणस्य च कृष्णस्य प्रकृतीशस्य नारद । कोपात्प्रवक्तुमारेभे शुष्ककण्ठौष्ठतालुकः ॥

शिव उवाच—

शिवमस्तु च साधूनां वैष्णवानां सतामिह । अवैष्णवानामसतामाशिवं च पदे पदे ॥३७॥
ददाति वैष्णवेभ्यश्च यो दुःखं सुस्थिरो जनः । श्रीकृष्णस्तस्य संहर्ता विघ्नस्तस्य पदे पदे ॥
अवैष्णवानां हृदयं नहि शुद्धं सदामलम् । श्रीकृष्णमन्त्रस्मरणं मनोनैर्मल्यकारणम् ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । विष्णुमन्त्रोपासनया क्षीयते कर्म तन्नृणाम् ॥
अहो श्रीकृष्णदासानां कः स्वभावः सुनिर्मलः । हृतभार्यं मूर्छितश्च न शशाप रिपुं गुरुः ॥

गुरुर्यस्य वसिष्ठश्च क्रोधहीनश्च धार्मिकः । शतपुत्रघ्नमप्येनं न शशाप रिपुं मुनिः ॥
निःश्वासाद्वै सुरगुरोर्भ्रातुर्मम बृहस्पतेः । भस्मीभूतो निमेषेण शतचन्द्रो भवेद्ध्रुवम् ॥
तथाऽपि तं नो शशाप धर्मभङ्गभयेन च । तपस्या हीयते शप्तुः कोपाविष्टस्य नित्यशः
अहो ह्यत्रेरसत्पुत्रः परस्त्रीलुब्धकः शठः । तपस्विनो वैष्णवस्य ब्रह्मपुत्रस्य धीमतः ॥
धर्मिष्ठा ब्रह्मणः पुत्रा वैष्णवा ब्राह्मणास्तथा । केचिद्देवा द्विजा दैत्याः पौत्राश्च त्रिविधा मताः
ये सात्त्विका ब्राह्मणास्ते देवा राजसिकास्तथा । दैत्यास्तामसिका रौद्रा बलिष्ठाश्चोद्धताःसदा
स्वधर्मनिरता विप्रा नारायणपरायणाः । शैवाः शाक्ताश्च ते देवा दैत्याः पूजाविवर्जिताः
मुमुक्षवो विष्णुभक्ता ब्राह्मणा दास्यलिप्सवः । ऐश्वर्यलिप्सवो देवाश्चासुरास्तामसास्तथा
ब्राह्मणानां स्वधर्मश्च कृष्णस्यार्चनमीप्सितम् । निष्कामानां निर्गुणस्य परस्य प्रकृतेरपि
ये ब्राह्मणा वैष्णवाश्च स्वतन्त्राः परमं पदम् । यान्त्यन्योपासकाश्चान्यैः सार्धं च प्राकृते लये
वर्णानां ब्राह्मणाः श्रेष्ठाः साधवो वैष्णवा यदि । विष्णुमन्त्रविहीनेभ्यो द्विजेभ्यः श्वपचो वरः
परिपक्वा विपक्वा वा वैष्णवाः साधवश्च ते । सततं पाति तांश्चैव विष्णुचक्रं सुदर्शनम् ॥
यथा वह्नौ शुष्कतृणं भस्मीभूतं भवेत्सदा । तथा पापं वैष्णवेषु तेजस्विषु हुताशनात् ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रवेक्ष्यति । तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥
पुंसां शतं पितृणां च शतं मातामहस्य च । स्वसोदरांश्च जननीमुद्धरन्त्येव वैष्णवाः ॥
गयायां पिण्डदानेन पिण्डदाः पिण्डभोजिनः । समुद्धरन्ति पुंसां च वैष्णवाश्च शतं शतम् ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः । यमस्तस्मान्महाभीतो वैनतेयादिवोरगः ॥१८॥
पुनन्त्येव हि तीर्थानि गङ्गादीनि च भारते । कृष्णमन्त्रोपासकाश्च स्पर्शमात्रेण वाक्पते ॥
पापानि पापिनां तीर्थे यावन्ति प्रभवन्ति च । नश्यन्ति तानि सर्वाणि वैष्णवस्पर्शमात्रतः ॥
कृष्णमन्त्रोपासकानां रजसा पादपद्मयोः । सद्यो मुक्ताः पातकेभ्यः कृत्स्ना पूता वसुंधरा
वायुश्च पवनो वह्निः सूर्यः सर्वं पुनाति च । एते पूता वैष्णवानां स्पर्शमात्रेण लीलया
अहं ब्रह्मा च शेषश्च धर्मः साक्षी च कर्मणाम् । एते दृष्टाश्च वाञ्छन्ति वैष्णवानां समागमम् ॥ ६३ ॥
फलं कर्मानुरूपेण सर्वेषां भारते भवेत् । न भवेत्तद्वैष्णवे च स्विन्नधान्ये यथाऽङ्कुरम्
हन्ति तेषां कर्म पूर्वं भक्तानां भक्तवत्सलः । कृपया स्वपदं तेभ्यो ददात्येव कृपानिधिः
तेजस्विनां च प्रवरं वैष्णवं भृगुनन्दनम् । स चन्द्रो दुर्बलो भीतः शुक्रं च शरणं ययौ

---

१ ख. सिद्धधा ।

सुदर्शनो बलिष्ठं च शुक्रं जेतुं न शक्तिमान् । तथाऽपि चोद्धरिष्यामि तारां मन्त्रेण यद्गुरोः
भज सत्यं परं ब्रह्म कृष्णमात्मानमीश्वरम् । सुप्रसन्ने भगवति पत्नीं प्राप्स्यसि लीलया
मन्त्रं तस्य प्रदास्यामि भ्रातः कल्पतरुं परम् । कोटिजन्माघनिघ्नं च सर्वमङ्गलकारणम्
ब्रह्मादिस्तम्बपर्यन्तं नश्वरं जलबिन्दुवत् । शरणं याहि गोविन्दं परमात्मानमीश्वरम् ॥
तावद्भवेच्छा भोगेच्छा स्त्रीसुखेच्छा नृणामिह । यावद्गुरुमुखाम्भोजान्न प्राप्नोति मनुं हरेः
संप्राप्य दुर्लभं मन्त्रं वितृष्णो हि भवेन्नरः । इन्द्रत्वममरत्वं च नहि वाञ्छन्ति वैष्णवाः ॥
नहि वाञ्छन्ति मोक्षं च दास्यभक्तिं विना हरेः । भक्तिनिर्मथनं भक्तो मोक्षं नो वाञ्छति प्रभोः
ज्ञानं मृत्युंजयत्वं च सर्वसिद्धिं तदीप्सितम् । वाक्सिद्धिं चैव धातृत्वं भक्तानां नहि वाञ्छितम्
भक्तिं विहाय कृष्णस्य विषयं यो हि वाञ्छति । विषमत्ति सुधां त्यक्त्वा वञ्चितो विष्णुमायया ॥ ७४ ॥
अहं ब्रह्मा च विष्णुश्च धर्मोऽनन्तश्च कश्यपः कपिलश्च कुमारश्च नरनारायणावृषी ॥
स्वायंभुवो मनुश्चैव प्रह्लादश्च पराशरः । भृगुः शुक्रश्च दुर्वासा वसिष्ठः क्रतुरङ्गिराः ॥
बलिश्च वालखिल्याश्च वरुणश्च हुताशनः । वायुः सूर्यश्च गरुडो दक्षो गणपतिः स्वयम् ॥
एते परा भक्तवराः कृष्णस्य परमात्मनः । ये च तस्य कलाः श्रेष्ठास्ते तद्भक्तिपरायणाः ॥
इत्युक्त्वा शंकरस्तस्मै ददौ कल्पतरुं मनुम् । लक्ष्मीमायाकामबीजं ङेन्तं कृष्णपदं मुने ॥
परं पूजाविधानं च स्तोत्रं च कवचं तथा । तत्पुरश्चरणं ध्यानं शुद्धे मन्दाकिनीतटे ॥
गुरुः संप्राप्य तं मन्त्रं शंकराच्च जगद्गुरोः । वितृष्णो हि भवाब्धौ च बभूव तमुवाच ह ॥

बृहस्पतिरुवाच—

आज्ञां कुरु जगन्नाथ यामि तप्तुं हरेस्तपः । तारा तिष्ठतु तत्रैव न तया मे प्रयोजनम् ॥
पश्यामि विषतुल्यं च सर्वं नश्वरमीश्वर । श्रीकृष्णं शरणं यामि सत्यं नित्यं च निर्गुणम् ॥

महादेव उवाच—

परग्रस्तां स्त्रियं त्यक्त्वा न प्रशंस्यं तपो मुने । संभावितस्य दुश्चर्चा मरणादतिरिच्यते ॥
पुरो गच्छ महाभाग तमेतं नर्मदातटम् । यत्र ब्रह्मादयो देवास्तत्राहं यामि सत्वरम् ॥
शिवस्य वचनं श्रुत्वा ययौ सुरगुरुः स्वयम् । आययौ च महाभागः शंकरो नर्मदातटम् ॥
सगणं शंकरं दृष्ट्वा प्रसन्नवदनेक्षणम् । प्रणेमुर्देवताः सर्वा मनवो मुनयस्तथा ॥ ८८ ॥
ननाम शंभुः शिरसा विष्णुं च कमलोद्भवम् । ददतुस्तौ महेशाय प्रेम्णाऽऽलिङ्गनमासनम्
एतस्मिन्नन्तरे तत्र चागमच्च बृहस्पतिः । प्रणनाम महादेवं विष्णुं च कमलोद्भवम् ॥

---

१ क. °म्णा मङ्गलमाशिषम् ।

सूर्यं धर्ममनन्तं च नरं मां च मुनीश्वरान् । स्वगुरुं पितरं भक्त्या चावसत्तत्र संसदि ॥
संचिन्त्य मनसा युक्तिमूचे तत्र च संसदि । स्वयं विष्णुश्च भगवान्ब्रह्माणं चन्द्रशेखरम् ॥

विष्णुरुवाच—

युवां च मुनयश्चैव समुद्रपुलिनं द्रुतम् । शुक्रं[1] कविं च मध्यस्थं प्रस्थापयितुमर्हथ॥ ९३ ॥
विग्रहेणैव विषमं भविष्यति न संशयः । महाशिषा सुरगुरुस्तारां प्राप्स्यति निश्चितम् ॥
सुरैः स्तुतश्च संतुष्टः शुक्राचार्यो भविष्यति । सुरैः शुक्रो हि न जितः कृष्णचक्रेण रक्षितः
युवाभ्यां प्रार्थ्यमानोऽहं युवयोः स्तवनेन च । श्वेतद्वीपादागतोऽस्मि परितुष्टः स्तवेन च ।
शुक्राश्रमसमीपं[2] तु सर्वा गच्छन्तु देवताः । रिपुर्बलिष्ठः स्तोत्रेण वशीभूत इति श्रुतिः ॥
इत्युक्त्वा जगतां नाथस्तत्रैवान्तरधीयत । स्तुतो ब्रह्मादिभिर्देवैः प्रणतैः परिपूजितः ॥
गते च जगतां नाथे श्वेतद्वीपं च नारद । चिन्तिताश्च सुराः सर्वे विषण्णमनसस्तथा ॥
मुनीन्देवांश्च संबोध्य ब्रह्मा वै तत्र संसदि । उवाच नीतिसारं तत्संमतं शंकरस्य सः ॥

ब्रह्मोवाच—

मम शंभोश्च धर्मस्य विष्णोर्वा सर्वसाक्षिणः । अस्माकं च समः स्नेहो दैत्ये देवे च पुत्रकाः
दैत्यानां च गुरुं शुक्रं प्रपन्नश्च निशाकरः । न जितश्च सुरैः शुक्रः पूजितो दितिनन्दनैः
ताराहेतोरहं यामि शुक्रस्य भवनं सुराः । सर्वे समुद्रपुलिनं यान्तु विष्णोर्निदेशतः ॥
इत्युक्त्वा जगतां धाता चागमच्छुक्रसंनिधिम् । प्रययुर्देवता विप्राः समुद्रपुलिनं मुने ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० श्रीकृष्णोपदिष्टतारोद्धरणोपाय-
ज्ञानं नाम षष्टितमोऽध्यायः ॥ ६० ॥

---

अथैकषष्टितमोऽध्यायः ।

---

नारद उवाच

ततः परं किं रहस्यं बभूवासुरदेवयोः । श्रोतुमिच्छामि भगवन्परं कौतूहलं मम ॥ २ ॥

नारायण उवाच--

ब्रह्मा जगाम निलयं शुक्रस्य च महात्मनः । नानादैत्यगणाकीर्णं रत्नमण्डपभूषितम् ॥
पञ्चाशत्कोटिभिः शिष्यैः परीतं ब्रह्मवादिभिः । सप्तभिः परिखाभिश्च वेष्टितं दुर्गमेव च ॥
रक्षितं रक्षकगणैर्दैत्यैश्च शतकोटिभिः । पद्मरागैर्विरचितैः प्राकारैः परिशोभितम् ॥
ददर्श जगतां धाता सभायां भृगुनन्दनम् । स्तुतं मुनिगणैर्दैत्यै रत्नसिंहासनस्थितम् ॥५॥

---

१ क. 'क्रं कंचिच्च म' । २ ख. 'ममसीपर्णे स० ।

जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् । कोटिसूर्यप्रभं शश्वज्ज्वलन्तं ब्रह्मतेजसा ॥९॥
दृष्ट्वा पौत्रं प्रभायुक्तं विधाता हृष्टमानसः । आत्मानं कृतिनं मेने पुत्रं पौत्रं च नारद ॥
दृष्ट्वा पितामहं शुक्रो धातारं जगतां प्रभुम् । उत्थाय सहसा भीतः प्रणनाम कृताञ्जलिः
आदाय पूजयामास चोपचारांस्तु षोडश । तुष्टाव परया भक्त्या संभ्रमेण यथागमम् ॥
विद्यामन्त्रप्रदातारं दातारं सर्वसंपदाम् । स्वकर्मणां च फलदं सर्वेषां विश्वतो वरम् ॥१०॥
शुक्रस्य स्तवनेनैव संतुष्टो जगतां पतिः । अवरुह्य रथात्तूर्णमुवास तत्र संसदि ॥ ११ ॥
शुक्रेण शिरसो दत्तरत्नसिंहासनेवरे । तेजसा ज्वलिते रम्ये निर्मिते विश्वकर्मणा ॥१२॥
शुक्रः प्रणम्य ब्रह्माणं कुमारं सनकं क्रतुम् । वसिष्ठं च मरीचिं च सनन्दं च सनातनम् ॥
कपिलं वै पञ्चशिखं वोढुमङ्गिरसं मुने । धर्मं मां च नरं भक्त्या प्रणनाम कृताञ्जलिः ॥
प्रत्येकं पूजयामास सादरं च यथोचितम् । सिंहासनेषु रम्येषु वासयामास धार्मिकः ॥
प्रहृष्टवदनाः सर्वे प्रणेमुर्दितिनन्दनाः । ऋषिसंघाश्च धातारं तुष्टुवुश्च यथागमम् ॥
सर्वान्संस्तूय स कविरवोचत्संपुटाञ्जलिः । साश्रुनेत्रः सपुलकः प्रणतो विनयान्वितः ॥

शुक्र उवाच—

अद्य मेसफलं जन्म जीवितं च सुजीवितम् । स्वयं विधाता भगवान्साक्षाद्दृष्टः स्वमन्दिरे ॥
साक्षाद्दृष्टाश्च तत्पुत्रा भगवन्तः सनातनाः । तुष्टः कृष्णोऽद्य मामेव परमात्मा परात्परः
कृतार्थं कर्तुमीशा मां युष्माकं स्वागतं शिशुम् । स्वात्मारामेषु कुशलं प्रश्नमेवं विडम्बनम्
पवित्रं कर्तुमीशा मां हेतुरागमनेऽत्र वः । अपरं ब्रूथ किंवाऽपि शास्त नः करवाणि किम्

ब्रह्मोवाच—

उद्विग्नश्चिरविच्छेदात्त्वां पौत्रं द्रष्टुमागतः । विच्छेदः पुत्रपौत्राणां मरणादतिरिच्यते ॥
कुशलं ते मुनिश्रेष्ठ पुत्रयोश्चापि धावितः । कुशलं ते स्वधर्माणां काम्यानां तपसामपि ॥
दिने दिनेऽपरिच्छिन्नं श्रीकृष्णार्चनमीप्सितम् । स्वगुरोः सेवनं नित्यमविच्छिन्नं भवेत्तव
गुर्विष्टयोः पूजनं च सर्वमङ्गलकरणम् । पापाधिरोगशोकघ्नं पुण्यहर्षप्रदं शुभम् ॥२५॥
अभीष्टदेवः संतुष्टो गुरौ तुष्टे नृणामिह । इष्टदेवे च संतुष्टे संतुष्टाः सर्वदेवताः ॥ २६ ॥
गुरुर्विप्रः सुरो रुष्टो येषां पातकिनामिह । तेषां च कुशलं नास्ति विघ्नस्तस्य पदे पदे ॥
तुष्टश्च सततं वत्स श्रीकृष्णः प्रकृतेः परः । सर्वान्तरात्मा भगवांस्तव भक्त्या च निर्गुणः
तव तुष्टो गुरुरहं विधाता जगतामपि । मयि तुष्टे हरिस्तुष्टो हरौ तुष्टे तु देवताः ॥

---

१ क. °र्णमुवास स्वात्मजैः सह ।

सांप्रतं शृणु मे धीमन्नत्राऽऽगमनकारणम् । प्रेषितस्य सुराणां च विश्वसंहर्तुरेव च ॥
शिष्यस्य गुरुपुत्रस्य साध्वीं तारां बृहस्पतेः । अपहृत्य निशानाथस्तत्रैव शरणागतः ॥
शंभुर्धर्मश्च सूर्यश्च शक्रोऽनन्तश्च पुत्रक । आदित्या वसवो रुद्रा दिक्पालाश्च दिगीश्वराः
युद्धायाऽऽयान्ति संनद्धास्तिस्रः कोट्यश्च देवताः । नागाः किंपुरुषाश्चैव यक्षराक्षसगुह्यकाः
भूताः प्रेताः पिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः । किराताश्चैव गन्धर्वाः समुद्रपुलिनेऽधुना
तारकामयसंग्रामे मध्यस्थोऽहं सुतैः सह । देहि तारां रणं किंवा त्यज चन्द्रं च कामिनम्

शुक्र उवाच—

आगच्छन्तु सुराः सर्वे संनद्धा रणदुर्मदाः । योत्स्ये विना महेशं च सर्वेषां च गुरुं परम्

दैत्या ऊचुः—

उभयेषां गुरुः शंभुर्मान्यो वन्द्यश्च सर्वदा । धर्मश्च साक्षी सर्वेषां त्वमेव च पितामह ॥
अन्यांश्च तृणतुल्यांश्च नहि मन्यामहे वयम् । आगच्छन्तु च योत्स्यामो व्रज ब्रूहि जगद्गुरो ॥
कृपया गुरुपुत्रस्य यद्यायाति महेश्वरः । आग्नेयास्त्रं प्रयोक्ष्यामः पश्चाद्योत्स्यामहे प्रभो ॥

ब्रह्मोवाच—

कालाग्निरुद्रः संहर्ता विश्वस्य बलिनां वरः । हे वत्सास्तेन सार्धं च को वा युद्धं करिष्यति॥
भद्रकाली जगन्माता खड्गखर्परधारिणी । तया दुर्धर्षया सार्धं को वा युद्धं करिष्यति ॥
सा सहस्रभुजा देवी मुण्डमालाविभूषणा । योजनायतवक्त्रा च दशयोजनविस्तृता ॥
सप्तनागप्रमाणाश्च यस्या दन्ता भयानकाः । क्रोशप्रमाणजिह्वा च महालोला भयंकरी ॥
अतीव रौद्राः संनद्धा भीमाः शंकरकिंकराः । अतिभीमा भैरवाश्च नन्दी चरणकर्कशः ॥
शिवस्य पार्षदाः सर्वे महाबलपराक्रमाः । वीरभद्रादयः शूराः कोटिसूर्यसमप्रभाः ॥४९॥
सहस्रमूर्ध्नः शेषस्य फणामण्डलभूषणम् । विश्वं सर्षपतुल्यं च को वा योद्धा च तत्समः ॥
कालाग्निरुद्रः संहर्ता यस्य शंभोश्च किंकराः । शूलिनस्त्रिपुरघ्नस्य ज्वलतो ब्रह्मतेजसा ॥
यस्य पाशुपतास्त्रेण दुर्निवार्येण पुत्रकाः । भस्मीभूतं भवेद्विश्वं दैत्यानां वश्च का कथा ॥
यस्य शूलेन भिन्नश्च शङ्खचूडः प्रतापवान् । सुदामा पार्षदवरः कृष्णस्य परमात्मनः ॥
त्रिकोटिसूर्यसदृशस्तेजस्वी परमाद्भुतः । राधाकवचकण्ठश्च सर्वदैत्यजनेश्वरः ॥ ५० ॥
मधुकैटभयोर्हन्ता हिरण्यकशिपोश्च यः । स च विष्णुः समायाति श्वेतद्वीपात्स्वयं प्रभुः ॥
इत्युक्त्वा जगतां धाता विरराम च संसदि । प्रहस्योवाच दैतेयो दानवानामधीश्वरः ॥

प्रह्लाद उवाच—

नमस्तुभ्यं जगद्धातः सर्वेषां प्राक्तनेश्वर । सर्वपूज्य सर्वनाथ किं वक्ष्यामि तवाग्रतः ॥

हिरण्यकशिपोर्हन्ता मधुकैटभयोश्च यः । सा कला यस्य कृष्णस्य परिपूर्णतमस्य च ॥१४॥
सर्वान्तरात्मनस्तस्य चक्रं नाम सुदर्शनम् । अस्माकं लोकमस्मांश्च शश्वद्रक्षयति दुःसहम् ॥
ततो न बलवाञ्छंभुर्न च पाशुपतं विधे । न च काली न शेषश्च न च रुद्रादयः सुराः ॥
यस्य लोमसु विश्वानि निखिलानि जगत्पते । सर्वाधारस्य च विभोः स्थूलात्स्थूलतरस्य च
षोडशांशो भगवतः स चैव हि महान्विराट् । अनन्तो न हि तत्स्थूलो न काली न बृहस्पतिः
आगच्छन्तु सुराः सर्वे युद्धं कुर्वन्तु सांप्रतम् । न बिभेति शरेभ्यश्च न च पाशुपताद्धरात्
नमस्तुभ्यं भगवते शिवाय शिवरूपिणे । नमोऽनन्ताय साधुभ्यो वैष्णवेभ्यः प्रजापते ॥
श्रीकृष्णस्य प्रसादेन निर्भयोऽहं निरामयः । न मे स्वात्मबलं ब्रह्मंस्तद्बलं यत्प्रभोर्बलम् ॥
स्वपापेन मृतस्तातो पुरा वै विष्णुनिन्दया । निर्बन्धाच्छङ्खचूडश्च दर्पाच्च मधुकैटभौ ॥
त्रिपुरः किंकरोऽस्माकं वीरत्वेन न गण्यते । तथाऽपि प्रेरितस्तेन सरथश्च महेश्वरः ॥
इत्युक्त्वा दानवश्रेष्ठो विरराम च संसदि । उवाच जगतां धाता पुनरेव च नारद ॥६४॥

ब्रह्मोवाच—

विना शकारणं युद्धमुभयोर्दैत्यदेवयोः । सुप्रीत्याचरणं वत्स सर्वमङ्गलकारणम् ॥६५ ॥
तारां भिक्षां देहि मह्यं भिक्षुकाय च वेधसे । विमुखे भिक्षुके राजन्गृहस्थः सर्वपापभाक् ॥

सनत्कुमार उवाच—

स्वकीर्तिं रक्ष राजेन्द्र सिंहस्त्वं सुरदैत्ययोः । यस्य भिक्षुर्जगद्धाता तस्य कीर्तेश्च का कथा

सनातन उवाच—

न जितस्त्वं सुरेन्द्रैश्च ब्रह्मेशानपुरोगमैः । रक्षितः कृष्णचक्रेण वैष्णवः पुण्यवाञ्छुचिः ॥

सनन्दन उवाच—

यस्येष्टदेवः सर्वात्मा श्रीकृष्णः प्रकृतेः परः । गुरुश्च वैष्णवः शुक्रः स च केन जितो महान्

सनक उवाच—

पुण्यवान्न जितः केन जितः पापी स्वपातकैः । पुण्यदीपो न निर्वाति पाषण्डानां वायुना ॥

ऋषय ऊचुः—

देहि तारां महाभाग चन्द्रं भागाधिकं गुरोः । स्वकीर्तिं रक्ष सुचिरं प्रार्थयामः पुनः पुनः ॥

प्रह्लाद उवाच—

स्थिते मदीश्वरे साक्षान्नहि भृत्यो विराजते । कर्तारं ब्रूहि मन्नाथं गुरुं शुक्रं सतां वरम् ॥
शिष्याणामविपत्त्ये च साधूनां गुरुरीश्वरः । गुरौ समर्पितं पूर्वं नैवैश्वर्यं मुनीश्वरे ॥७३॥

---

१ क. सुरै° । २ क. पूर्ण ।

वयं पूज्याश्च पोष्याश्च स्वगुरोः परिचारकाः । ते च शिष्याः कुशलिनो गुर्वाज्ञां पालयन्ति ये
प्रह्लादस्य वचः श्रुत्वा चकार प्रार्थनां कविम् । ददौ शुक्रश्च तारां तां चन्द्रं च मलिनं मुने ॥
दत्त्वा तारां विधुं शुक्रः प्रणनाम विधेः पदे । नमस्कृत्य मुनिभ्यश्च प्रणतः स्वपुरं ययौ ॥
प्रह्लादः सगणो भक्त्या नमस्कृत्य विधेः पदे । प्रत्येकं वै मुनिगणान्प्रणतः स्वगृहं ययौ ॥
ब्रह्मा दृष्ट्वा तारां च प्रणतां स्वपदे सतीम् । लज्जया नम्रवक्त्रां च रुदतीं गुर्विणीं मुने ॥
चन्द्रं च प्रणतं धाता क्रोडे संस्थाप्य मायया । उवाच मलिनां तारां कातरां च कृपामयः ॥
तारे त्यज भयं मत्तो भयं किं ते मयि स्थिते । सौभाग्ययुक्ता स्वपतौ भविष्यसि वरेण मे ॥
दुर्बला बलिना ग्रस्ता निष्कामा न च्युता भवेत् । प्रायश्चित्तेन शुद्धा सा न स्त्री जारेण
दुष्यति ॥ ८१ ॥
सकामा कामतो जारं भजते स्वसुखेन च । प्रायश्चित्तान्न शुद्धा सा स्वामिना परिवर्जिता ॥
कुम्भीपाके पच्यते सा यावच्चन्द्रदिवाकरौ । अन्नं विष्ठा जलं मूत्रं स्पर्शनं सर्वपापदम् ॥
पापीयस्याश्च तस्याश्च साधुभिः परिवर्जितम् ॥ ८२ ॥
कस्य गर्भं वद शुभे गच्छ वत्से गुरोर्गृहम् । त्यज लज्जां महाभागे सर्वं च प्राक्तनाद्भवेत् ॥
ब्रह्मणो वचनं श्रुत्वा तमुवाच सती तदा । चन्द्रस्य गर्भं हे तात बिभर्म्यहं स्वकर्मणा ॥
सर्वे मे साक्षिणः सन्ति दुर्बलायाः प्रजापते । यदा जग्राह चन्द्रो मां दयाहीनश्च दुर्मतिः ॥
इत्युक्त्वा तारकादेवी सुषाव कनकप्रभम् । कुमारं सुन्दरं तत्र ज्वलन्तं ब्रह्मतेजसा ॥
गृहीत्वा तनयं चन्द्रो नत्वा ब्रह्माणमीश्वरम् । जगाम स स्वभवनं ब्रह्मा सिन्धुतटं ययौ ॥
साध्वीं तारां च गुरवे देवेभ्योऽप्यभयं ददौ । आशिषं शंभुधर्माभ्यां दत्त्वा लोकं ययौ विधिः
देवा ययुः स्वभवनं स्वगृहं च बृहस्पतिः । भावानुरक्तवनितां प्राप्य संहृष्टमानसः ॥९०॥
तारकागर्भसंभूतः स एव च बुधः स्वयम् । तेजस्वी सद्ग्रहो ब्रह्मंश्चन्द्रस्य तनयो महान्
स एव नन्दनवने चित्रां संप्राप्य निर्जने । घृताच्या गर्भसंभूतां कुबेरस्य च रेतसा ॥९२॥
दृष्ट्वा च निर्जने रम्यां कन्यां कमललोचनाम् । अतीव यौवनस्थां च बालां षोडशवार्षिकीम्
गान्धर्वेण विवाहेन तां जग्राह विधोः सुतः ॥ ९४ ॥
तस्यामपत्यं रहसि वीर्याधानं चकार सः । बभूव राजा चित्रार्थो चैत्रो वै मण्डलेश्वरः ॥
सप्तद्वीपावतीं पृथ्वीं शास्ति वै धार्मिको बली । शतं नद्यो घृतानां च दध्नां नद्यः शतानि च
शतानि नद्यो दुग्धानां मधुनद्यश्च षोडश । दश नद्यश्च तैलानां शर्करासराः सदा ॥
मिष्टान्नानां स्वस्तिकानां लक्षराशयश्च नित्यशः । पञ्चकोटिगवां मांसं सापूपं स्वन्नमेव च ॥
एतेषां च नदीं राशीर्भुञ्जते ब्राह्मणा मुने । गवां लक्षं च रत्नानां मणीनां लक्षमेव च ॥

शतलक्षं सुवर्णानां लक्षं वै सूक्ष्मवाससाम् । रत्नानां भूषणं पात्रमतीव सुमनोहरम् ॥
ददौ द्विजातये राजा नित्यं वै जीवितावधि । तस्य वैश्यस्य पुत्रश्च समाधिरथ एव च ॥
तस्य पुत्रश्च सुरथश्चक्रवर्ती बृहच्छ्रवाः । महाज्ञानं च संप्राप्य मेधसो मुनिसत्तमात् ॥
क्षेत्रे पुरा विष्णुमायां पुण्यक्षेत्रे च भारते । शरत्काले महापूजां चकार स सरित्तटे ॥
वैश्येन सार्धं स महाज्ञानिनां मुनिसत्तम । राजा कलिङ्गदेशस्य विराधश्च विशां वरः ॥
तस्य पुत्रो महायोगी द्रुमिणो ज्ञानिनां वरः । द्रुमिणो वैष्णवः प्राज्ञः पुष्करे दुष्करं तपः ॥
कृत्वा समाधिं संप्राप ज्ञानिनां वैष्णवाग्रणीः । पुत्रैर्दारैर्निरस्तश्च धनलोभाद्दुरात्मभिः ॥
स च कोटिसुवर्णं च नित्यं दत्त्वा जलं पपौ । मुक्तिं संप्राप संसेव्य विष्णुमायां सनातनीम्
राजा लेभे मनुत्वं च राज्यं निष्कण्टकं मुने । उवाच मधुरं वाक्यं धाता त्रिजगतां पतिः ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० गुरोस्तारापहर-
बुधोत्पत्त्यादिवर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## अथ द्विषष्टितमोऽध्यायः ।

नारद उवाच—

कथं राजा महाज्ञानं संप्राप मुनिसत्तमात् । वैश्यो मुक्तिं मेधसश्च तन्मे व्याख्यातुमर्हसि ॥

नारायण उवाच—

ध्रुवस्य पौत्रो बलवान्नन्दिः सत्कलनन्दनः । स्वायंभुवमनोर्वंश्यः सत्यवादी जितेन्द्रियः ॥
अक्षौहिणीनां शतकं गृहीत्वा सैन्यमेव च । कोलां च वेष्टयामास सुरथस्य महात्मनः ॥
युद्धं बभूव नियतं पूर्णमब्दं च नारद । चिरंजीवी वैष्णवश्च जिगाय सुरथं नृपः ॥ ४ ॥
एकाकी सुरथो भीतो नन्दिना च बहिष्कृतः । निशायां हयमारुह्य जगाम गहनं वनम् ॥
ददर्श तत्र वैश्यं च पुष्पभद्रानदीतटे । तयोर्बभूव संप्रीतिः कृतबान्धवयोर्मुने । ६ ॥
वैश्येन सार्धं नृपतिरगच्छन्मेधसाश्रमम् । पुष्करं दुष्करं पुण्यक्षेत्रं वै भारते सताम् ॥
ददर्श तत्र नृपतिर्मुनीन्द्रं तीव्रतेजसम् । शिष्येभ्यश्च प्रवोचन्तं ब्रह्मतत्त्वं सुदुर्लभम् ॥
राजा ननाम वैश्यश्च शिरसा मुनिपुंगवम् । मुनिस्तौ पूजयामास ददौ ताभ्यां शुभाशिषम्
प्रश्नं चकार कुशलं जातिनाम पृथक्पृथक् । ददौ प्रत्युत्तरं राजा क्रमेण मुनिपुंगवम् ॥

सुरथ उवाच—

राजाऽहं सुरथो ध्रुवंशप्रभवंशसमुद्भवः । बहिष्कृतः स्वराज्याच्च नन्दिना बलिनाऽधुना ॥

---

१ क. नाम वै ।

कमुपायं करिष्यामि कथं राज्यं भवेन्मम। तन्मां ब्रूहि महाभाग त्वामेव शरणागतम् ॥
अयं वैश्यः समाधिश्च स्वगृहाच्च बहिष्कृतः। पुत्रैः कलत्रैर्दैवेन धनलोभेन धार्मिकः ॥
ब्राह्मणाय ददौ नित्यं रत्नकोटिं दिने दिने। निषिध्यमानः पुत्रैश्च कलत्रैर्बान्धवैरयम् ॥
कोपान्निराकृतस्तैश्च पुनरन्वेषितः शुचा। अयं गृहं च न ययौ विरक्तो ज्ञानवाञ्छुचिः ॥
पुत्राश्च पितृशोकेन गृहं त्यक्त्वा ययुर्वनम्। दत्त्वा धनानि विप्रेभ्यो विरक्ताः सर्वकर्मसु ॥
सुदुर्लभं हरेर्दास्यं वैश्यस्यास्य च वाञ्छितम्। कथं प्राप्नोति निष्कामस्तन्मे व्याख्यातुमर्हसि ॥ १७ ॥

मेधा उवाच—

करोति मायया छन्नं विष्णुमाया दुरत्यया। निर्गुणस्य च कृष्णस्य त्रिगुणा विश्वमाज्ञया ॥
कृपां करोति येषां सा धर्मिणां च कृपामयी। तेभ्यो ददाति कृपया कृष्णभक्तिं सुदुर्लभाम् ॥
येषां मायाविनां माया न करोति कृपां नृप। मायया तान्निबध्नाति मोहजालेन दुर्गतान् ॥
नश्वरे नित्यसंसारे भ्रामयेद्दुर्बरा सदा। कुर्वती नित्यबुद्धिं च विहाय परमेश्वरम् ॥
देवमन्यं निषेवन्ते तन्मन्त्रं च जपन्ति च। मिथ्या किंचिन्निमित्तं च कृत्वा मनसि लोभतः ॥
सप्तजन्मसु संसेव्य देवताश्च हरेः कलाः। तदा प्रकृत्याः कृपया सेवन्ते प्रकृतिं सदा ॥
सप्तजन्मसु संसेव्य विष्णुमायां कृपामयीम्। शिवे भक्तिं लभन्ते ते ज्ञानानन्दे सनातने ॥
ज्ञानाधिष्ठातृदेवं च हरेः संसेव्य शंकरम्। अचिराद्विष्णुभक्तिं च प्राप्नुवन्ति महेश्वरात् ॥
सेवन्ते सगुणं सत्त्वं विष्णुं विषयिणं तदा। सत्त्वज्ञानाच्च पश्यन्ति ज्ञानं वै निर्मलं नराः ॥
निषेव्य सगुणं विष्णुं सात्त्विका वैष्णवा नराः। लभन्ते निर्गुणे भक्तिं श्रीकृष्णे प्रकृतेः परे ॥
गृह्णन्ति सन्तस्तद्भक्ता मन्त्रं तस्य निरामयम्। निषेव्य निर्गुणं देवं ते भवन्ति च निर्गुणाः ॥
असंख्यब्रह्मणां पातं ते च पश्यन्ति वैष्णवाः। दास्यं कुर्वन्ति सततं गोलोके च निरामये ॥
कृष्णभक्तात्कृष्णमन्त्रं यो गृह्णाति नरोत्तमः। पुरुषाणां सहस्रं च स्वपितॄणां समुद्धरेत् ॥
मातामहानां साहस्रमुद्धरेन्मातरं तथा। दासादिकं समुद्धृत्य गोलोकं स प्रयाति च ॥
भवार्णवे महाघोरे कर्णधारस्वरूपिणी। दीनान्पारयते नित्यं कृष्णभक्त्या च नौकया ॥
स्वकर्मबन्धनं छेत्तुं वैष्णवानां च वैष्णवी। तीक्ष्णशस्त्रस्वरूपा सा कृष्णस्य परमात्मनः ॥
विवेचिका चाऽऽवरणी शक्तेः शक्तिर्द्विधा नृप। पूर्वं ददाति भक्ताय चेतराय परात्परा ॥
सत्यस्वरूपः श्रीकृष्णस्तस्मात्सर्वं च नश्वरम्। बुद्धिर्विवेचिकेत्येवं वैष्णवानां सतामपि ॥
नित्यरूपा ममेयं श्रीरिति चाऽऽवरणी च धीः। अवैष्णवानामसतां कर्मभोगभुजामहो ॥
अहं प्रचेतसः पुत्रः पौत्रश्च ब्रह्मणो नृप। भजामि कृष्णमात्मानं ज्ञानं संप्राप्य शंकरात् ॥

गच्छ राजन्नदीतीरं भज दुर्गां सनातनीम्। बुद्धिमावरणीं तुभ्यं देवी दास्यति कामिने ॥
निष्कामाय च वैश्याय वैष्णवाय च वैष्णवी। बुद्धिं विवेचिकां शुद्धां दास्यत्येव कृपामयी।
इत्युक्त्वा च मुनिश्रेष्ठो ददौ ताभ्यां कृपानिधिः। पूजाविधानं दुर्गायाः स्तोत्रं च कवचं मनुम्।
वैश्यो मुक्तिं च संप्राप तां निषेव्य कृपामयीम्। राजा राज्यं मनुत्वं च परमैश्वर्यमीप्सितम्॥
इत्येवं कथितं सर्वं दुर्गोपाख्यानमुत्तमम्। सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० सुरथमेधःसं० सुरथवैश्ययो-
रभिलषितसिद्धिर्नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

अथ त्रिषष्टितमोऽध्यायः।

---

नारद उवाच—

नारायण महाभाग वद वेदविदां वर। राजा केन प्रकारेण सिषेवे प्रकृतिं पराम्॥ १ ॥
समाधिर्नाम वैश्यो वा निष्कामं निर्गुणं विभुम्। भेजे केन प्रकारेण प्रकृतेरुपदेशतः ॥
किं वा पूजाविधानं च ध्यानं वा मनुमेव च। किं स्तोत्रं कवचं किं वा ददौ राज्ञे महामुनिः
वैश्याय प्रकृतिस्तस्मै किं वा ज्ञानं ददौ परम्। साक्षाद्बभूव तपसा केन वा प्रकृतिस्तयोः॥
ज्ञानं संप्राप्य वैश्यश्च किं पदं प्राप दुर्लभम्। गतिर्बभूव राज्ञश्च का वा तां च शृणोम्यहम्॥

नारायण उवाच—

राजा वैश्यश्च संप्राप्य मन्त्रं वै मेधसो मुनेः। स्तोत्रं च कवचं देव्या ध्यानं चैव पुरस्क्रियाम्
जजाप परमं मन्त्रं राजा वैश्यश्च पुष्करे। स्नात्वा त्रिकालं वर्षं च ततः सिद्धो बभूव सः
साक्षाद्बभूव तत्रैव मूलप्रकृतिरीश्वरी। राज्ञे ददौ राज्यवरं मनुत्वं वाञ्छितं सुखम् ॥
ज्ञानं निगूढं वैश्याय ददौ चातिसुदुर्लभम्। यद्दत्तं शूलिने पूर्वं कृष्णेन परमात्मना ॥ ८ ॥
निराहारमतिक्लिष्टं दृष्ट्वा वैश्यं कृपामयी। रुरोद कृत्वा क्रोडे तमचेष्टं श्वासवर्जितम् ॥
चेतनां कुरु भो वत्सेत्युच्चार्य च पुनः पुनः। चेतनां च ददौ तस्मै स्वयं चैतन्यरूपिणी
संप्राप्य चेतनां वैश्यो रुरोद प्रकृतेः पुरः। तमुवाच प्रसन्नाऽसौ कृपयाऽतिकृपामयी ॥

प्रकृतिरुवाच—

वरं वृणुष्व हे वत्स यत्ते मनसि वर्तते। ब्रह्मत्वममरत्वं वा ततो वाऽतिसुदुर्लभम्॥ ११॥
इन्द्रत्वं वा मनुत्वं वा सर्वसिद्धत्वमेव च। तुच्छं तुभ्यं न दास्यामि नश्वरं बालवञ्चनम्

---

१ ख. सहसा।

वैश्य उवाच—

अमरत्वममरत्वं वा मा तर्मे नहि वाञ्छितम् । ततोऽतिदुर्लभं किंवा न जाने तदभीप्सितम् ॥
त्वमेव शरणागतो देहि यद्वाञ्छितं तव । अनश्वरं सर्वसारं वरं मे दातुमर्हसि ॥ १६ ॥

ब्रह्मोवाच—

चेदभ्यर्हितं मे तुभ्यं दास्यामि मम वाञ्छितम् । यतो यास्यसि गोलोकं पदमेव सुदुर्लभम्
सालोक्यं च सुज्ञानं सुरर्षीणां सुदुर्लभम् । तद्गृहाण महाभाग गच्छ वत्स हरेः पदम् ॥
स्मरणं वन्दनं ध्यानमर्चनं गुणकीर्तनम् । श्रवणं भावनं सेवा कृष्णे सर्वनिवेदनम् ॥
एतदेव वैष्णवानां नवधाभक्तिलक्षणम् । जन्ममृत्युजराव्याधियमताडनखण्डनम् ॥
आयुर्हरति लोकानां रविरेव हि संततम् । नवधाभक्तिहीनानामसतां पापिनामपि ॥
भक्तास्तद्गतचित्ताश्च वैष्णवाश्चिरजीविनः । जीवन्मुक्ताश्च निष्पापा जन्मादिपरिवर्जिताः ॥
शिवः शेषश्च धर्मश्च ब्रह्मा विष्णुर्महान्विराट् । सनत्कुमारः कपिलः सनकश्च सनन्दनः ॥
वोढुः पञ्चशिखो दक्षो नारदश्च सनातनः । भृगुर्मरीचिर्दुर्वासाः कश्यपः पुलहोऽङ्गिराः ॥
मेधावी लोमशः शुक्रो वसिष्ठः क्रतुरेव च । बृहस्पतिः कर्दमश्च शक्तिरत्रिः पराशरः ॥
मार्कण्डेयो बलिश्चैव प्रह्लादश्च गणेश्वरः । यमः सूर्यश्च वरुणो वायुश्चन्द्रो हुताशनः ॥
अकूपार उलूकश्च नाडीजङ्घश्च वायुजः । नरनारायणौ कूर्म इन्द्रद्युम्नो विभीषणः ॥
नवधाभक्तियुक्ताश्च कृष्णस्य परमात्मनः । एते महान्तो धर्मिष्ठा भक्तानां प्रवरास्तथा ॥
ये भक्तास्ते तदंशा जीवन्मुक्ताश्च संततम् । पापापहारास्तीर्थानां पृथिव्याश्च विशां पते ॥
ऊर्ध्वं च सप्त स्वर्गाश्च सप्तद्वीपा वसुंधरा । अधः सप्त च पाताला एतद्ब्रह्माण्डमेव च ॥
एवंविधानां विश्वानां संख्या नास्त्येव पुत्रक । एवं च प्रतिविश्वेषु ब्रह्मविष्णुशिवादयः ॥
देवा देवर्षयश्चैव मनवो मानवादयः । सर्वाश्रमाश्च सर्वत्र सन्ति बद्धाश्च मायया ॥ १२ ॥
महाविष्णोर्लोमकूपे सन्ति विश्वानि यस्य च । स षोडशांशः कृष्णस्य चाऽऽत्मनश्च महान्वि-
राट् ॥ १३ ॥
भज सत्यं परं ब्रह्म नित्यं निर्गुणमच्युतम् । प्रकृतेः परमीशानं कृष्णमात्मानमीश्वरम् ॥
निरीहं च निराकारं निर्विकारं निरञ्जनम् । निष्कामं निर्विरोधं च नित्यानन्दं सनातनम्
स्वेच्छामयं सर्वरूपं भक्तानुग्रहविग्रहम् । तेजःस्वरूपं परमं दातारं सर्वसंपदाम् ॥
ध्यानासाध्यं दुराराध्यं शिवादीनां च योगिनाम् । सर्वेश्वरं सर्वपूज्यं सर्वेषां सर्वकामदम् ॥
सर्वाधारं च सर्वज्ञं सर्वानन्दकरं परम् । सर्वधर्मप्रदं सर्वं सर्वज्ञं प्राणरूपिणम् ॥ १८ ॥
सर्वधर्मस्वरूपं च सर्वकारणकारणम् । सुखदं मोक्षदं सारं पररूपं च भक्तिदम् ॥ १९ ॥

दास्यदं धर्मदं चैव सर्वसिद्धिप्रदं सताम् । सर्वं तदतिरिक्तं च नश्वरं कृत्रिमं सदा ॥ ४० ॥
परात्परतरं शुद्धं परिपूर्णतमं शिवम् । यथासुखं गच्छ वत्स भगवन्तमधोक्षजम् ॥ ४१ ॥
कृष्णेतिद्व्यक्षरं मन्त्रं गृहीत्वा कृष्णदास्यदम् । पुष्करं दुष्करं गत्वा दशलक्षमिमं जप ॥
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेत्तव । इत्युक्त्वा सा भगवती तत्रैवान्तरधीयत ॥ ४३ ॥
वैश्यो नत्वा च तां भक्त्या चागमत्पुष्करं मुने । पुष्करे दुस्तरं तप्त्वा स लेभे कृष्णमीश्वरम् ।
भगवत्याः प्रसादेन कृष्णदासो बभूव सः ॥ ४४ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० सुरथसमाधिमेधःसे० प्रकृतिवैश्यसंवादकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

=====

## अथ चतुःषष्टितमोऽध्यायः

नारायण उवाच—

राजा येन क्रमेणैव भेजे तां प्रकृतिं पराम् । तच्छ्रूयतां महाभाग वेदोक्तं क्रममेव च ॥
स्नात्वाऽऽचम्य महाराजः कृत्वा न्यासत्रयं तदा । स्वकराङ्गाङ्गमन्त्राणां भूतशुद्धिं चकार सः
प्राणायामं ततः कृत्वा कृत्वा च स्वाङ्गशोधनम् । ध्यात्वा देवीं च मृन्मय्यां प्रकाराऽऽवाहनं तदा ॥ ३ ॥
पुनर्ध्यात्वा च भक्त्या च पूजयामास भक्तितः । देव्याश्च दक्षिणे भागे संस्थाप्य कमलालयाम्
संपूज्य भक्तिभावेन भक्त्या परधार्मिकः । देवषट्कं समावाह्य देव्याश्च पुरतो घटे ॥ ५ ॥
भक्त्या च पूजयामास विधिपूर्वं च नारद । गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम्
देवषट्कं च संपूज्य नमस्कृत्य विचक्षणः । तदा ध्यायेन्महादेवीं ध्यानेनानेन भक्तितः ॥ ७ ॥
ध्यानं च सामवेदोक्तं परं कल्पतरुं मुने । ध्यायेन्नित्यं महादेवीं मूलप्रकृतिरीश्वरीम् ॥ ८ ॥
ब्रह्मविष्णुशिवादीनां पूज्यां वन्द्यां सनातनीम् । नारायणीं विष्णुमायां वैष्णवीं विष्णुभक्तिदाम् ॥ ९ ॥
सर्वस्वरूपां सर्वेशां सर्वाधारां परात्पराम् । सर्वविद्यासर्वमन्त्रसर्वशक्तिस्वरूपिणीम् ॥
सगुणां निर्गुणां सत्यां वरां स्वेच्छामयीं सतीम् । महाविष्णोश्च जननीं कृष्णस्यार्धाङ्गसंभवाम्
कृष्णप्रियां कृष्णशक्तिं कृष्णबुद्ध्यधिदेवताम् । कृष्णस्तुतां कृष्णपूज्यां कृष्णानन्दां कृपामयीम् ॥ ११ ॥
तप्तकाञ्चनवर्णाभां कोटिसूर्यसमप्रभाम् । ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारिकाम् ॥ १२ ॥
दुर्गां शतभुजां देवीं महद्दुर्गतिनाशिनीम् । त्रिलोचनप्रियां साध्वीं त्रिगुणां च त्रिलोचनाम्

---

१ क. °वीं भक्त्या दु° ।

त्रिलोचनप्राणरूपां शुद्धार्धचन्द्रशेखराम् । बिभ्रतीं कबरीभारं मालतीमाल्यमण्डितम् ॥
वर्तुलं वामवक्त्रं च शंभोर्मानसमोहिनीम् । रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥
नासादक्षिणभागेन बिभ्रतीं गजमौक्तिकम् । अमूल्यरत्नं बहुलं बिभ्रतीं श्रवणोपरि ॥
मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिसुशोभिताम् । पक्वबिम्बाधरोष्ठीं च सुप्रसन्नां सुमङ्गलाम्
चित्रपत्रावलीरम्यकपोलयुगलोज्ज्वलाम् । रत्नकेयूरवलयरत्नमञ्जीररञ्जिताम् ॥ १९ ॥
रत्नकङ्कणभूषाढ्यां रत्नपाशकशोभिताम् । रत्नाङ्गुलीयनिकरैः कराङ्गुलिचयोज्ज्वलाम्
पदाङ्गुलिनखासक्तालक्तरेखासुशोभनाम् । वह्निशुद्धांशुकाधानां गन्धचन्दनचर्चिताम् ॥
बिभ्रतीं स्तनयुग्मं च कस्तूरीबिन्दुशोभिताम् । सर्वरूपगुणवतीं गजेन्द्रमन्दगामिनीम् ॥
अतीव कान्तां शान्तां च नितान्तां योगसिद्धिषु । विधातुश्च विधात्रीं च सर्वधात्रीं च शंकरीम्
शरत्पार्वणचन्द्रास्यामतीव सुमनोहराम् । कस्तूरीबिन्दुभिः सार्धमधश्चन्दनबिन्दुना ॥
सिन्दूरबिन्दुना शश्वद्भालमध्यस्थलोज्ज्वलाम् । शरन्मध्याह्नकमलप्रभामोचनलोचनाम् ॥
चारुकज्जलरेखाभ्यां सर्वतश्च समुज्ज्वलाम् । कोटिकन्दर्पलावण्यलीलानिन्दितविग्रहाम् ॥
रत्नसिंहासनस्थां च सद्रत्नमुकुटोज्ज्वलाम् । सृष्टौ स्रष्टुः शिल्परूपां दयां पातुश्च पालने
संहारकाले संहर्तुः परां संहाररूपिणीम् । निशुम्भशुम्भमथिनीं महिषासुरमर्दिनीम् ॥
पुरा त्रिपुरयुद्धे च संस्तुतां त्रिपुरारिणा । मधुकैटभयोर्युद्धे विष्णुशक्तिस्वरूपिणीम् ॥
सर्वदैत्यनिहन्त्रीं च रक्तबीजविनाशिनीम् । नृसिंहशक्तिरूपां च हिरण्यकशिपोर्वधे ॥
वराहशक्तिं वाराहे हिरण्याक्षवधे तथा । परब्रह्मस्वरूपां च सर्वशक्तिं सदा भजे ॥
इति ध्यात्वा च दुर्गायै पुष्पं दत्त्वा विचक्षणः । पुनर्ध्यात्वा चैव भक्त्या कुर्यादावाहनं ततः
प्रकृतेः प्रतिमां धृत्वा मन्त्रमेवं पठेन्नरः । जीवन्यासं ततः कुर्यान्मनुनाऽनेन यत्नतः ॥
एह्येहि भगवत्यम्ब शिवलोकात्सनातनि । गृहाण मम पूजां च शारदीयां सुरेश्वरि ॥
इहाऽऽगच्छ जगत्पूज्ये तिष्ठ तिष्ठ महेश्वरि । हे मातरस्यामर्चायां सन्निरुद्धा भवाम्बिके ॥
इहाऽऽगच्छन्तु त्वत्प्राणाश्चाऽऽधिप्राणैः सहाच्युते । इहाऽऽगच्छन्तु त्वरितं तवैव सर्वश-
क्तयः ॥ २६ ॥
ॐ ह्रीं श्रीं क्लीं च दुर्गायै वह्निजायान्तमेव च । समुच्चार्योरसि प्राणाः संतिष्ठन्तु सदा शिवे
सर्वेन्द्रियाधिदेवास्त इहाऽऽगच्छन्तु चण्डिके । ते शक्तयोऽत्राऽऽगच्छन्तु इहाऽऽच्छन्तु
ईश्वराः ॥ २८ ॥
इत्यावाह्य महादेवीं परीहारं करोति च । मन्त्रेणानेन विप्रेन्द्र तच्छृणुष्व सम हितः ॥

१ ख. °त्वा स्वशिरसि पु° ।

स्वागतं भगवत्यम्ब शिवलोकाच्छिवप्रिये । प्रसादं कुरु मां भद्रे भद्रकालि नमोऽस्तु ते ॥
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम । आगताऽसि यतो दुर्गे माहेश्वरि मदालयम् ॥
अद्य मे सफलं जन्म सार्थकं जीवनं मम । पूजयामि यतो दुर्गां पुण्यक्षेत्रे च भारते ॥
भारते भवतीं पूज्यां दुर्गां यः पूजयेद्बुधः । सोऽन्ते याति च गोलोकं परमैश्वर्यवानिह ॥
कृत्वा च वैष्णवीपूजां विष्णुलोकं व्रजेत्सुधीः । माहेश्वरीं च संपूज्य शिवलोकं च गच्छति
सात्त्विकी राजसी चैव त्रिधा पूजा च तामसी । भगवत्याश्च वेदोक्ता चोत्तमा मध्यमाऽधमा
सात्त्विकी वैष्णवानां च शाक्तादीनां च राजसी । अदीक्षितानामसतामन्येषां तामसी स्मृता
जीवहत्याविहीना या वरा पूजा तु वैष्णवी । वैष्णवा यान्ति गोलोकं वैष्णवीबलिदानतः ॥
माहेश्वरी राजसी च बलिदानसमन्विता । शाक्ताद्यो राजसाश्च कैलासं यान्ति ते तथा ॥
किरातास्त्रिदिवं यान्ति तामस्या पूजया तया । त्वमेव जगतां माता चतुर्वर्गफलप्रदा ॥
सर्वशक्तिस्वरूपा च कृष्णस्य परमात्मनः ॥ ४९ ॥
जन्ममृत्युजराव्याधिहरा त्वं च परात्परा । सुखदा मोक्षदा भद्रा कृष्णभक्तिप्रदा सदा ॥
नारायणि महामाये दुर्गे दुर्गतिनाशिनि । दुर्गेतिस्मृतिमात्रेण याति दुर्गं नृणामिह ॥
इति कृत्वा परीहारं देव्या वामे च साधकः । त्रिपद्या उपरिष्टात्तु शङ्खं संस्थापयेत्तु सः ॥
तत्र दत्त्वा जलं पूर्णं दूर्वां पुष्पं च चन्दनम् । धृत्वा दक्षिणहस्तेन मन्त्रमेवं पठेन्नरः ॥
पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् । प्रभूतः शङ्खचूडात्त्वं पुराकल्पे पवित्रकः
ततोऽर्घ्यपात्रं संस्थाप्य विधिनाऽनेन पण्डितः । दत्त्वा संपूजयेद्देवीमुपचाराणि षोडश ॥
त्रिकोणमण्डलं कृत्वा सजलेन कुशेन च । कूर्मं शेषं धरित्रीं च पूजयेत्तत्र धार्मिकः ॥
त्रिपदीं स्थापयेत्तत्र त्रिपद्यां शङ्खमेव च । शङ्खे त्रिभागतोयं च दत्त्वा संपूजयेत्ततः ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि चन्द्रभागे च कौशिकि ॥
स्वर्गरेखे कनखले पारिभद्रे च गण्डकि । श्वेतगङ्गे चन्द्ररेखे पम्पे चम्पे च गोमति ॥९९॥
पद्मावति त्रिपर्णाशे विपाशे विरजे प्रभे । शतह्रदे चेलगङ्गे जलेऽस्मिन्संनिधिं कुरु ॥
वह्निं सूर्यं च चन्द्रं च विष्णुं च वरुणं शिवम् । पूजयेत्तत्र तोये च तुलस्या चन्दनेन च ॥
नैवेद्यानि च सर्वाणि प्रोक्षयेत्तज्जलेन च । प्रत्येकं वै ततो दद्यादुपचारांश्च षोडश ॥
आसनं वसनं पाद्यं स्नानीयमनुलेपनम् । मधुपर्कं गन्धमर्घ्यं पुष्पं नैवेद्यमीप्सितम् ॥१३॥
पुनराचमनीयं च ताम्बूलं रत्नभूषणम् । धूपं प्रदीपं तल्पं चेत्युपचारास्तु षोडश ॥१४॥
अमूल्यरत्नसंक्लृप्तं नानाचित्रविराजितम् । वरं सिंहासनश्रेष्ठं गृह्यतां शंकरप्रिये ॥१५॥
अनन्तसूत्रप्रभवमीश्वरेच्छाविनिर्मितम् । ज्वलदग्निविशुद्धं च वसनं गृह्यतां शिवे ॥१६॥

अमूल्यरत्नपात्रस्थं निर्मलं जाह्नवीजलम् । पादप्रक्षालनार्थाय दुर्गे देवि प्रगृह्यताम् ॥
सुगन्धामलकीस्निग्धद्रवमेतत्सुदुर्लभम् । सुपक्वं विष्णुतैलं च गृह्यतां परमेश्वरि ॥ ६८ ॥
कस्तूरीकुङ्कुमाक्तं च सुगन्धिद्रुतचन्दनम् । सुवासितं जगन्मातर्गृह्यतामनुलेपनम् ॥६९॥
माध्वीकं रत्नपात्रस्थं सुपवित्रं सुमङ्गलम् । मधुपर्कं महादेवि गृह्यतां प्रीतिपूर्वकम् ॥
सुगन्धमूलचूर्णं च सुगन्धद्रव्यसंयुतम् । सुपवित्रं मङ्गलं हि देवि गन्धं गृहाण मे ॥७१॥
पवित्रं शङ्खपात्रस्थं दूर्वापुष्पाक्षतान्वितम् । स्वर्गमन्दाकिनीतोयमर्घ्यं चण्डि गृहाण मे
सुगन्धिपुष्पश्रेष्ठं च पारिजाततरूद्भवम् । नानापुष्पादिमाल्यानि गृह्यतां जगदम्बिके ॥
दिव्यं सिद्धान्नमामान्नं पिष्टकं पायसादिकम् । मिष्टान्नं लड्डुकफलं नैवेद्यं गृह्यतां शिवे
सुवासितं शीततोयं कर्पूरादिसुसंस्कृतम् । मया निवेदितं भक्त्या गृह्यतां शैलकन्यके ॥
गुवाकपर्णचूर्णं च कर्पूरादिसुवासितम् । सर्वभोगवरं रम्यं ताम्बूलं देवि गृह्यताम् ॥७६॥
अमूल्यरत्नसारैश्च खचितं चेश्वरेच्छया । सर्वाङ्गशोभनकरं भूषणं देवि गृह्यताम् ॥७७॥
तरुनिर्यासचूर्णं च गन्धवस्तुसमन्वितम् । हुताशनशिखाशुद्धं धूपं च देवि गृह्यताम् ॥
दिव्यरत्नविशेषं च सान्द्रध्वान्तनिवारकम् । सुपवित्रं प्रदीपं च गृह्यतां परमेश्वरि ॥
रत्नसारगणाकीर्णं दिव्यं पर्यङ्कमुत्तमम् । सूक्ष्मवस्त्रैश्च संस्यूतं देवि तल्पं प्रगृह्यताम् ॥
एवं संपूज्य तां दुर्गां दद्यात्पुष्पाञ्जलिं मुने । ततोऽष्टनायिकादेवीर्यत्नतः परिपूजयेत् ॥
उग्रचण्डां प्रचण्डां च चण्डोग्रां चण्डनायिकाम् । अतिचण्डां च चामुण्डां चण्डां चण्डवतीं तथा ॥ ८२ ॥
पद्मे चाष्टदले चैताः प्रागादिक्रमतस्तथा । पञ्चोपचारैः संपूज्य भैरवान्मध्यदेशतः ॥८३॥
आदौ महाभैरवं च तथा संहारभैरवम् । असिताङ्गं भैरवं च रुरुभैरवमेव च ॥ ८४ ॥
कालभैरवमप्येवं क्रोधभैरवमेव च । ताम्रचूडं चन्द्रचूडमन्ते वै भैरवद्वयम् ॥ ८५ ॥
एतान्संपूज्य मध्ये वै नवशक्तीश्च पूजयेत् । तत्र पद्मे चाष्टदले मध्ये वै भक्तिपूर्वकम् ॥
ब्रह्माणीं वैष्णवीं चैव रौद्रीं माहेश्वरीं तथा । नारसिंहीं च वाराहीमिन्द्राणीं कार्तिकीं तथा
सर्वशक्तिस्वरूपां च प्रधानां सर्वमङ्गलाम् । नवशक्तीश्च संपूज्य घटे देवांश्च पूजयेत् ॥
शंकरं कार्तिकेयं च सूर्यं सोमं हुताशनम् । वायुं च वरुणं चैव देव्याश्चेटीं बटुं तथा ॥
चतुःषष्टिं योगिनीनां संपूज्य विधिपूर्वकम् । यथाशक्ति बलिं दत्त्वा करोति स्तवनं बुधः
कवचं च गले बध्वा पठित्वा भक्तिपूर्वकम् । ततः कृत्वा परीहारं नमस्कुर्याद्विचक्षणः ॥
बलिदानविधानं च श्रूयतां मुनिसत्तम । मायाति महिषं छागं दद्यान्मेषादिकं शुभम् ॥

---

१ क. °मापान्नं । २ क. शक्तिकीं° ।

सहस्रवर्षं सुप्रीता दुर्गा मायातिदानतः । महिषाच्छतवर्षं च दशवर्षं च च्छागलात् ॥
वर्षं मेषेण कूष्माण्डैः पक्षिभिर्हरिणैस्तथा । दशवर्षं कृष्णसारैः सहस्राब्दं च गण्डकैः ॥
कृत्रिमैः पिष्टनिर्माणैः षण्मासं पशुभिस्तथा । मासं सुपक्कादिफलैरक्षतैरिति नारद ॥
युवकं व्याधिहीनं च सशृङ्गं लक्षणान्वितम् । विशुद्धमविकाराङ्गं सुवर्णं पुष्टमेव च ॥
शिशुना बालिना दातुर्हन्ति पुत्रं च चण्डिका । वृद्धेन वै गुरुजनं कृशेनापष्टिबान्धवान्
धनं चैवाधिकाङ्गेन हीनाङ्गेन प्रजास्तथा । कामिनीं शृङ्गभङ्गेन काणेन भ्रातरं तथा ॥
त्रुटिकेन भवेन्मृत्युर्विघ्नं स्याच्छिन्नमस्तकैः । हन्ति मित्रं ताम्रपृष्ठैर्भ्रष्टश्रीः पुच्छहीनतः ॥
मायातीनां स्वरूपं च श्रूयतां मुनिसत्तम । वक्ष्याम्यथर्ववेदोक्तं फलहानिर्व्यतिक्रमे ॥
पितृमातृविहीनं च युवकं व्याधिवर्जितम् । विवाहितं दीक्षितं च परदारविहीनकम् ॥
अजारजं विशुद्धं च सच्छूद्रपरिपोषितम् । तद्बन्धुभ्यो धनं दत्त्वा क्रीतं मूल्यातिरेकतः
स्नापयित्वा च तं कर्ता पूजयेद्वस्त्रचन्दनैः । माल्यैर्धूपैश्च सिन्दूरैर्दधिगोरोचनादिभिः ॥
तं च वर्षं भ्रामयित्वा भृत्यद्वारेण यत्नतः । वर्षान्ते च समुत्सृज्य दुर्गायै तं निवेदयेत्
अष्टमीनवमीसंधौ दद्यान्मायातिमेव च । इत्येवं कथितं सर्वं बलिदानं प्रसङ्गतः ॥१०७
बलिं दत्त्वा च स्तुत्वा च धृत्वा च कवचं बुधः । प्रणम्य दण्डवद्भूमौ दद्याद्विप्राय दक्षिणाम् ॥ १०८ ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० पूजाविधिबलिपशुलक्षणविशेषो नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

अथ पञ्चषष्टितमोऽध्यायः ।

नारद उवाच—

श्रुतं सर्वं महाभाग सुधारसवरं वरम् । स्तोत्रं च कवचं पूजाफलं कालं वद प्रभो ॥

नारायण उवाच—

आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत् । उत्तरेणार्चयित्वा तां श्रवणायां विसर्जयेत् ॥
आर्द्रायुक्तनवम्यां तु कृत्वा देव्याश्च बोधनम् । पूजायाः शतवार्षिक्याः फलमाप्नोति मानवः
मूलायां तु प्रवेशे च नरमेधफलं लभेत् । उत्तरे पूजनं कृत्वा वाजपेयफलं लभेत् ॥
कृत्वा विसर्जनं देव्याः श्रवणायां च मानवः । लक्ष्मीं च पुत्रपौत्रांश्च लभते नात्र संशयः
भुवः प्रदक्षिणापुण्यं पूजायां लभते नरः । नक्षत्रयोगाभावे तु पार्वण्याश्चैव नारद ॥

१ क. सुपक्कादिफ° । २ क. पूजनम् ।

नवम्यां बोधनं कृत्वा पक्षं संपूज्य मानवः। अश्वमेधफलावाप्त्यै दशम्यां च विसर्जयेत् ॥
सप्तम्यां पूजनं कृत्वा बलिं दद्याद्विचक्षणः। अष्टम्यां पूजनं शस्तं बलिदानविवर्जितम् ॥
अष्टम्यां बलिदानेन विपत्तिर्जायते नृणाम्। दद्याद्विचक्षणो भक्त्या नवम्यां विधिवद्बलिम्
बलिदानेन विप्रेन्द्र दुर्गाप्रीतिर्भवेन्नृणाम्। हिंसाजन्यं न पापं च लभते यज्ञकर्मणि॥१०॥
उत्सर्गकर्ता दाता च च्छेत्ता पोष्टा च रक्षकः। अग्रे पश्चान्निबद्धा च सप्तैतेऽवधकारिणः ॥
यो यं हन्ति स तं हन्ति नेति वेदोक्तमेव च। कुर्वन्ति वैष्णवीं पूजां वैष्णवास्तेन हेतुना ॥
एवं संपूज्य सुरथः पूर्णं वर्षं च भक्तितः। कवचं च गले बध्वा तुष्टाव परमेश्वरीम् ॥१३॥
स्तोत्रेण परितुष्टा सा तस्य साक्षाद्बभूव ह। स ददर्श पुरो देवीं ग्रीष्मसूर्यसमप्रभाम् ॥
तेजःस्वरूपां परमां सगुणां निर्गुणां वराम्। दृष्ट्वा तां कमनीयां च तेजोमण्डलमध्यतः ॥
स्वेच्छामयीं कृपारूपां भक्तानुग्रहकारिणीम्। पुनस्तुष्टाव राजेन्द्रो भक्तिनम्रात्मकंधरः ॥
स्तवेन परितुष्टा सा सस्मिता स्नेहपूर्वकम्। उवाच सत्यं राजेन्द्रं कृपया जगदम्बिका ॥

प्रकृतिरुवाच—

साक्षात्संप्राप्य मां राजन्वृणोषि विभवं वरम्। ददामि तुभ्यं विभवं सांप्रतं वाञ्छितं तव ॥
निर्जित्य सर्वाञ्छत्रूंश्च लब्ध्वा राज्यमकण्टकम्। भविष्यसि महाराज सावर्णिर्मनुरष्टमः ॥
दास्यामि तुभ्यं ज्ञानं च परिणामे नराधिप। भक्तिं दास्यं च परमे श्रीकृष्णे परमात्मनि॥
वृणोति विभवं यो हि साक्षान्मां प्राप्य मन्दधीः। मायया वञ्चितः सोऽपि विषमत्त्यमृतं त्यजन्
ब्रह्मादिस्तम्बपर्यन्तं सर्वं नश्वरमेव च। नित्यं सत्यं परं ब्रह्म कृष्णं निर्गुणमेव च ॥२२॥
ब्रह्मविष्णुशिवादीनामहमाद्या परात्परा। सगुणा निर्गुणा चापि वरा स्वेच्छामयी सदा॥
नित्यानित्या सर्वरूपा सर्वकारणकारणम्। बीजरूपा च सर्वेषां मूलप्रकृतिरीश्वरी ॥२४॥
पुण्ये वृन्दावने रम्ये गोलोके रासमण्डले। राधा प्राणाधिकाऽहं च कृष्णस्य परमात्मनः
अहं दुर्गा विष्णुमाया बुद्ध्यधिष्ठातृदेवता। अहं लक्ष्मीश्च वैकुण्ठे स्वयं देवी सरस्वती ॥
सावित्री वेदमाताऽहं ब्रह्माणी ब्रह्मलोकतः। अहं गङ्गा च तुलसी सर्वाधारा वसुंधरा ॥
नानाविधाऽहं कलया मायया सर्वयोषितः। साऽहं कृष्णेन संसृष्टा नृप भ्रूभङ्गलीलया ॥
भ्रूभङ्गलीलया सृष्टो येन पुंसा महान्विराट्। लोम्नां कूपेषु विश्वानि यस्य सन्ति हि नित्यशः
असंख्यानि च तान्येव कृत्रिमाणि च मायया। अनित्ये नित्यबुद्धिं च सर्वे कुर्वन्ति संततम्
सप्तसागरसंयुक्ता सप्तद्वीपा वसुंधरा। तदधः सप्त पातालाः स्वर्लोकाश्चैव सप्त च ॥
एवं विश्वं बहुविधं ब्रह्माण्डं ब्रह्मणा कृतम्। प्रत्येकं सर्वविश्वाण्डे ब्रह्मविष्णुशिवादयः ॥

१ क. 'बीं कोटिंस्'। २ क. मुक्तिं।

सर्वेषामीश्वरः कृष्ण इति ज्ञानं परात्परम् । वेदानां च व्रतानां च तीर्थानां तपसां तथा ॥
देवानां चैव पुण्यानां सारः कृष्ण इति स्मृतः । तद्भक्तिहीनो यो मूढः स च जीवन्मृतो ध्रुवम्
पवित्राणि च तीर्थानि तद्भक्तस्पर्शवायुना । तन्मन्त्रोपासकश्चैव जीवन्मुक्त इति स्मृतः ॥
मन्त्रग्रहणमात्रेण नरो नारायणो भवेत् । विना जपेन तपसा विना तीर्थेन पूजया ॥
मातामहानां शतकं पितॄणां च सहस्रकम् । पुंसामेवं समुद्धृत्य गोलोकं च स गच्छति ॥
इदं ज्ञानं सारभूतं कथितं ते नराधिप ; मन्वन्तरान्ते भोगान्ते भक्तिं दास्यामि ते हरौ ॥
माऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
अहं यमनुगृह्णामि तस्मै दास्यामि निर्मलाम् । निश्चलां सुदृढां भक्तिं श्रीकृष्णे परमात्मनि ॥
करोमि वञ्चनां यं यं तेभ्यो दास्यामि संपदम् । प्रातः स्वप्नस्वरूपां च मिथ्येतिभ्रमरूपिणीम्
इति ते कथितं ज्ञानं गच्छ वत्स यथासुखम् । इत्युक्त्वा च महादेवी तत्रैवान्तरधीयत ॥४२॥
राजा संप्राप्य राज्यं च नत्वा तां प्रययौ गृहम् । इति ते कथितं वत्स दुर्गोपाख्यानमुत्तमम् ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० दुर्गासुरथसं०
ज्ञानकथनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

अथ षट्षष्टितमोऽध्यायः ।

---

**नारद उवाच—**

श्रुतं सर्वं नावशिष्टं किंचिदेव हि निश्चितम् । प्रकृतेः कवचं स्तोत्रं ब्रूहि मे मुनिसत्तम ॥१॥

**नारायण उवाच—**

पुरा स्तुता सा गोलोके कृष्णेन परमात्मना । संपूज्य मधुमासे च संप्रीते रासमण्डले ॥ २ ॥
मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा । तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसंकटे ॥ ३ ॥
चतुर्थे संस्तुता देवी भक्त्या च त्रिपुरारिणा । पुरा त्रिपुरयुद्धे च महाघोरतरे मुने ॥ ४ ॥
पञ्चमे संस्तुता देवी वृत्रासुरवधे तथा । शक्रेण सर्वदेवैश्च घोरे च प्राणसंकटे ॥ ५ ॥
तदा मुनीन्द्रैर्मनुभिर्मानवैः सुरथादिभिः । संस्तुता पूजिता सा च कल्पे कल्पे परात्परा ॥६॥
स्तोत्रं च श्रूयतां ब्रह्मन्सर्वविघ्नविनाशकम् । सुखदं मोक्षदं सारं भवसंतारकारणम् ॥ ७ ॥

**श्रीकृष्ण उवाच—**

त्वमेव सर्वजननी मूलप्रकृतिरीश्वरी । त्वमेवाऽऽद्या सृष्टिविधौ स्वेच्छया त्रिगुणात्मिका ॥
कार्यार्थे सगुणा त्वं च वस्तुतो निर्गुणा स्वयम् । परब्रह्मस्वरूपा त्वं सत्या नित्या सनातनी॥

---

१ क. °त्याऽऽनन्दस्वरूपिणी ।

तेजःस्वरूपा परमा भक्तानुग्रहविग्रहा । सर्वस्वरूपा सर्वेशा सर्वाधारा परात्परा ॥ ९ ॥
सर्वबीजस्वरूपा च सर्वपूज्या निराश्रया । सर्वज्ञा सर्वतोभद्रा सर्वमङ्गलमङ्गला ॥ १० ॥
सर्वबुद्धिस्वरूपा च सर्वशक्तिस्वरूपिणी । सर्वज्ञानप्रदा देवी सर्वज्ञा सर्वभाविनी ॥ ११ ॥
त्वं स्वाहा देवदाने च पितृदाने स्वधा स्वयम् । दक्षिणा सर्वदाने च सर्वशक्तिस्वरूपिणी ॥
निद्रा त्वं च दया त्वं च तृष्णा त्वं चाऽऽत्मनः प्रिया । क्षुत्क्षान्तिः शान्तिरीशा च कान्तिस्तुष्टिश्च शाश्वती ॥ १३ ॥
श्रद्धा पुष्टिश्च तन्द्रा च लज्जा शोभा प्रभा तथा । सतां संपत्स्वरूपा श्रीर्विपत्तिरसतामिह
प्रीतिरूपा पुण्यवतां पापिनां कलहाङ्कुरा । शश्वत्कर्ममयी शक्तिः सर्वदा सर्वजीविनाम्
देवेभ्यः स्वपदं दात्री धातुर्धात्री कृपामयी । हिताय सर्वदेवानां सर्वासुरविनाशिनी ॥
योगनिद्रा योगरूपा योगदात्री च योगिनाम् । सिद्धिस्वरूपा सिद्धानां सिद्धिदा सिद्ध-योगिनी ॥ १७ ॥
माहेश्वरी च ब्रह्माणी विष्णुमाया च वैष्णवी । भद्रदा भद्रकाली च सर्वलोकभयंकरी ॥
ग्रामे ग्रामे ग्रामदेवी गृहदेवी गृहे गृहे । सतां कीर्तिः प्रतिष्ठा च निन्दा त्वमसतां सदा ॥
महायुद्धे महामारी दुष्टसंहाररूपिणी । रक्षास्वरूपा शिष्टानां[1] मातेव हितकारिणी ॥
वन्द्या पूज्या स्तुता त्वं च ब्रह्मादीनां च सर्वदा । ब्राह्मण्यरूपा विप्राणां तपस्या च तपस्विनाम् ॥ २१ ॥
विद्या विद्यावतां त्वं च बुद्धिर्बुद्धिमतां सताम् । मेधा स्मृतिस्वरूपा च प्रतिभा प्रति-भावताम् ॥ २२ ॥
राज्ञां प्रतापरूपा च विशां वाणिज्यरूपिणी । सृष्टौ सृष्टिस्वरूपा त्वं रक्षारूपा च पालने ॥
तथाऽन्ते त्वं महामारी विश्वे विश्वैश्च पूजिते । कालरात्रिर्महारात्रिर्मोहरात्रिश्च मोहिनी
दुरत्यया मे माया त्वं यया संमोहितं जगत् । यया मुग्धो हि विद्वांश्च मोक्षमार्गं न पश्यति ॥
इत्यात्मना कृतं स्तोत्रं दुर्गाया दुर्गनाशनम् । पूजाकाले पठेद्यो हि सिद्धिर्भवति वाञ्छिता ॥
वन्ध्या च काकवन्ध्या च मृतवत्सा च दुर्भगा । श्रुत्वा स्तोत्रं वर्षमेकं सुपुत्रं लभते ध्रुवम्
कारागारे महाघोरे यो बद्धो दृढबन्धने । श्रुत्वा स्तोत्रं मासमेकं बन्धनान्मुच्यते ध्रुवम् ॥
यक्ष्मग्रस्तो गलत्कुष्ठी महाशूली महाज्वरी । श्रुत्वा स्तोत्रं वर्षमेकं सद्यो रोगात्प्रमुच्यते ॥
पुत्रभेदे प्रजाभेदे पत्नीभेदे च दुर्गतः । श्रुत्वा स्तोत्रं मासमेकं लभते नात्र संशयः ॥
राजद्वारे श्मशाने च महारण्ये रणस्थले । हिंस्रजन्तुसमीपे च श्रुत्वा स्तोत्रं प्रमुच्यते

१ क. शिष्याणां । २ स्वर्गकारणम् ।

गृहदाहे च दावाग्नौ दस्युसैन्यसमन्विते । स्तोत्रश्रवणमात्रेण लभते नात्र संशयः ॥
महादरिद्रो मूर्खश्च वर्षं स्तोत्रं पठेत्तु यः । विद्यावान्धनवांश्चैव स भवेन्नात्र संशयः ॥

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० दुर्गास्तोत्रं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

====

अथ सप्तषष्टितमोऽध्यायः ।

---

नारद उवाच—

भगवन्सर्वधर्मज्ञ सर्वज्ञानविशारद । ब्रह्माण्डमोहनं नाम प्रकृतेः कवचं वद ॥ १ ॥

नारायण उवाच—

शृणु वक्ष्यामि हे वत्स कवचं च सुदुर्लभम् । श्रीकृष्णेनैव कथितं कृपया ब्रह्मणे पुरा ॥
ब्रह्मणा कथितं पूर्वं धर्माय जाह्नवीतटे । धर्मेण दत्तं मह्यं च कृपया पुष्करे पुरा ॥
त्रिपुरारिश्च यद्धृत्वा जघान त्रिपुरं पुरा । मुमोच धाता यद्धृत्वा मधुकैटभयोर्भयम् ॥
जघान रक्तबीजं तं यद्धृत्वा भद्रकालिका । यद्धृत्वा तु महेन्द्रश्च संप्राप कमलालयाम् ॥
यद्धृत्वा च महाकालश्चिरजीवी च धार्मिकः । यद्धृत्वा च महाज्ञानी नन्दी सानन्दपूर्वकम् ॥
यद्धृत्वा च महायोद्धा रामः शत्रुभयंकरः । यद्धृत्वा शिवतुल्यश्च दुर्वासा ज्ञानिनां वरः ॥
ॐ दुर्गेति चतुर्थ्यन्तः स्वाहान्तो मे शिरोऽवतु । मन्त्रः षडक्षरोऽयं च भक्तानां कल्पपादपः ॥ ७ ॥
विचारो नास्ति वेदेषु ग्रहणेऽस्य मनोर्मुने । मन्त्रग्रहणमात्रेण विष्णुतुल्यो भवेन्नरः ॥
मम वक्त्रं सदा पातु चों दुर्गायै नमोन्ततः । ॐ दुर्गे रक्षयति च कण्ठं पातु सदा मम ॥
ॐ ह्रीं श्रीमिति मन्त्रोऽयं स्कन्धं पातु निरन्तरम् । ॐ ह्रीं श्रीं क्लीमिति पृष्ठं पातु मे सर्वतः सदा ॥ १० ॥
ह्रीं मे वक्षस्थलं पातु हस्तं श्रीमिति संततम् । ॐ श्रीं ह्रीं क्लीं पातु सर्वाङ्गं स्वप्ने जागरणे तथा ॥ ११ ॥
प्राच्यां मां प्रकृतिः पातुः पातु वह्नौ च चण्डिका । दक्षिणे भद्रकाली च नैर्ऋत्यां च महेश्वरी ॥ १२ ॥
वारुण्यां पातु वाराही वायव्यां सर्वमङ्गला । उत्तरे वैष्णवी पातु तथैशान्यां शिवप्रिया ॥
जले स्थले चान्तरिक्षे पातु मां जगदम्बिका । इति ते कथितं वत्स कवचं च सुदुर्लभ

---

१ क. बाणः । २ क. ऐं ।

यस्मै कस्मै न दातव्यं प्रवक्तव्यं न कस्यचित् । गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः
कवचं धारयेद्यस्तु सोऽपि विष्णुर्न संशयः । स्नाने च सर्वतीर्थानां पृथिव्याश्च प्रदक्षिणे
यत्फलं लभते लोकस्तदेतद्धारणान्मुने । पञ्चलक्षजपेनैव सिद्धमेतद्भवेद्ध्रुवम् ॥ १७ ॥
लोके च सिद्धकवचं नास्त्रं विध्यति संकटे । न तस्य मृत्युर्भवति जले वह्नौ विषे ज्वरे ॥
जीवन्मुक्तो भवेत्सोऽपि सर्वसिद्धेश्वरेश्वरः । यदि स्यात्सिद्धकवचो विष्णुतुल्यो भवेद्ध्रुवम् ॥
कथितं प्रकृतेः खण्डं सुधाखण्डात्परं मुने । या चैव मूलप्रकृतिर्यस्याः पुत्रो गणेश्वरः ॥
कृत्वा कृष्णव्रतं सा च लेभे गणपतिं सुतम् । स्वांशेन कृष्णो भगवान्बभूव च गणेश्वरः
श्रुत्वा च प्रकृतेः खण्डं सुश्राव्यं च सुधोपमम् । भोजयित्वा च दध्यन्नं तस्मै दद्याच्च काञ्चनम्
सवत्सां सुरभिं रम्यां दद्याद्वै भक्तिपूर्वकम् । वासोलंकाररत्नैश्च तोषयेद्वाचकं मुने ॥
पुष्पालंकारवसनैरुपहारगणैस्तथा । पुस्तकं पूजयेद्देवं भक्तिश्रद्धासमन्वितः ॥ २९ ॥
एवं कृत्वा यः शृणोति तस्य विष्णुः प्रसीदति । वर्धते पुत्रपौत्रादिर्यशस्वी तत्प्रसादतः ॥
लक्ष्मीर्वसति तद्गेहे ह्यन्ते गोलोकमाप्नुयात् । लभेत्कृष्णस्य दास्यं स भक्तिं कृष्णे सुनिश्चलाम्

इति श्रीब्रह्म० महा० प्रकृति० नारदना० दुर्गोपा० ब्रह्माण्डमोहन-
कवचं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

समाप्तमिदं श्रीमद्ब्रह्मवैवर्तपुराणस्य द्वितीयं प्रकृतिखण्डम् ॥

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं—

# ब्रह्मवैवर्तपुराणम् ।

## तत्र तृतीयं गणपतिखण्डम् ।

### अथ प्रथमोऽध्यायः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥

नारद उवाच—

श्रुतं प्रकृतिखण्डं तदमृतार्णवमुत्तमम् । सर्वोत्कृष्टमभीष्टं च मूढानां ज्ञानवर्धनम् ॥ २ ॥
अधुना श्रीगणेशस्य खण्डं श्रोतुमिहाऽऽगतः । तज्जन्मचरितं नृणां सर्वमङ्गलमङ्गलम् ॥
कथं जज्ञे सुरश्रेष्ठः पार्वत्या उदरे शुभे । देवी केन प्रकारेण चालभत्तादृशं सुतम् ॥ ४ ॥
स चांशः कस्य देवस्य कथं जन्म लभाम सः । अयोनिसंभवः किं वा किं वाऽसौ योनिसंभवः
किंवा तद्ब्रह्मतेजो वा किं ध्यानं च पराक्रमः । का तपस्या च किं ज्ञानं किं वा तन्निर्मलं यशः
कथं तस्य पुरः पूजा विश्वेषु निखिलेषु च । स्थिते नारायणे शंभौ जगद्गुरौ च धातरि ॥
पुराणेषु निगूढं च तज्जन्म परिकीर्तितम् । कथं वा गजवक्त्रोऽयमेकदन्तो महोदरः ॥
एतत्सर्वं समाचक्ष्व श्रोतुं कौतूहलं मम । सुविस्तीर्णं महाभाग तदतीव मनोहरम् ॥ ९ ॥

नारायण उवाच—

शृणु नारद वक्ष्यामि रहस्यं परमाद्भुतम् । पापसंतापहरणं सर्वविघ्नविनाशनम् ॥ १० ॥
सर्वमङ्गलदं सारं सर्वश्रुतिमनोहरम् । सुखदं मोक्षबीजं च पापमूलनिकृन्तनम् ॥ ११ ॥
दैत्यार्दितानां देवानां तेजोराशिसमुद्भवा । देवी संहत्य दैत्यौघान्दक्षकन्या बभूव ह ॥
सा च नाम्ना सती देवी स्वामिनो निन्दया पुरा । देहं संत्यज्य योगेन जाता शैलप्रियोदरे
शंकराय ददौ तां च पार्वतीं पर्वतो मुदा । तां गृहीत्वा महादेवो जगाम विजनं वनम् ॥
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम् । स रेमे नर्मदातीरे पुष्पोद्याने तया सह ॥
सहस्रवर्षपर्यन्तं दैवमानेन नारद । तयोर्बभूव शृङ्गारो विपरीतादिको महान् ॥ १६ ॥

---

१ क. °ना श्रोतुमिच्छामि गणेशं खण्डमीश्वर । ख° । २ ३ क. कर्म° ।

दुर्गाङ्गस्पर्शमात्रेण मदनान्मूर्छितः शिवः । मूर्छिता सा शिवस्पर्शाद्बुबुधे न दिवानिशम्
हंसकारण्डवाकीर्णे पुंस्कोकिलरुताकुले । नानापुष्पविकासाढ्ये भ्रमरध्वनिगुञ्जिते ॥
सुगन्धिकुसुमाश्लेषिवायुना सुरभीकृते । अतीव सुखदे रम्ये सर्वजन्तुविवर्जिते ॥१९॥
दृष्ट्वा तयोस्तच्छृङ्गारं चिन्तां प्रापुः सुराः पराम् । ब्रह्माणं च पुरस्कृत्य ययुर्नारायणान्ति कम् ॥ २० ॥
तं नत्वा कथयामास ब्रह्मा वृत्तान्तमीप्सितम् । संतस्थुर्देवताः सर्वाश्चित्रपुत्तलिका यथा ॥

ब्रह्मोवाच—

सहस्रवर्षपर्यन्तं दैवमानेन शंकरः । रतौ रतश्च निश्चेष्टो न योगी विरराम ह ॥ २२ ॥
मैथुनस्य विरामे च दम्पत्योर्जगदीश्वर । किंभूतं भविताऽपत्यं तन्नः कथितुमर्हसि॥२३॥

श्रीभगवानुवाच—

चिन्ता नास्ति जगद्धातः सर्वं भद्रं भविष्यति । मयि ये शरणापन्नास्तेषां दुःखं कुतो विधे
येनोपायेन तद्वीर्यं भूमौ पतति निश्चितम् । तत्कुरुष्व प्रयत्नेन सार्धं देवगणेन च ॥
यदा च शंभोर्वीर्यं तत्पार्वत्या उदरे पतेत् । ततोऽपत्यं च भविता सुरासुरविमर्दकम् ॥
ततः शक्रादयः सर्वे सुरा नारायणाज्ञया । प्रययुर्नर्मदातीरं ययौ ब्रह्मा निजालयम् ॥
तत्रैव पर्वतद्रोणीबहिर्देशे सुराः पराः । विषण्णवदनाः सर्वे बभूवुर्भयकातराः ॥ २८ ॥
शक्रः कुबेरमवदत्कुबेरो वरुणं तथा । समीरणं च वरुणो यमं चैव समीरणः ॥ २९ ॥
हुताशनं यमश्चैव भास्करं च हुताशनः । चन्द्रं तथा भास्करश्च त्वीशानं चन्द्र एव च ॥
एवं देवाः प्रेरयन्ति देवांश्च रतिभञ्जने । हरशृङ्गारभङ्गं च कुर्वित्युक्त्वा परस्परम् ॥
द्वारि स्थितो वक्रशिराः शक्रः प्राह महेश्वरम् ॥ ३२ ॥

इन्द्र उवाच—

किं करोषि महादेव योगीश्वर नमोऽस्तु ते । जगदीश जगद्बीज भक्तानां भयभञ्जन ॥
हरिर्जगामेत्युक्त्वा तमाजगाम च भास्करः । उवाच भीतो द्वारस्थो भयार्तो वक्रचक्षुषा ॥

सूर्य उवाच—

किं करोषि महादेव जगतां परिपालक । सुरश्रेष्ठ महाभाग पार्वतीश नमोऽस्तु ते ॥
इत्येवमुक्त्वा श्रीसूर्यः स जगाम भयात्ततः । आजगाम तथा चन्द्र अवोबद्धकंधरः ॥

चन्द्र उवाच—

किं करोषि त्रिलोकेश त्रिलोचन नमोऽस्तु ते । स्वात्माराम स्वयंपूर्ण पुण्यश्रवणकीर्तन॥

---

१ क. नम्रकंधरः ।

इत्येवमुक्त्वा भीतश्च विरराम निशापतिः । समीरणोऽपि द्वारस्थः संवीक्ष्योवाच सादरम् ॥

पवन उवाच—

किं करोषि जगन्नाथ जगद्बन्धो नमोऽस्तु ते । धर्मार्थकाममोक्षाणां बीजरूप सनातन ॥

इत्येवं स्तवनं श्रुत्वा योगज्ञानविशारदः । त्यक्तुकामो न तत्याज शृङ्गारं पार्वतीभयात् ॥

दृष्ट्वा सुरान्भयार्तांश्च पुनः स्तोतुं समुद्यतान् । विजहौ सुखसंभोगं कण्ठलग्नां च पार्वतीम् ॥

उत्तिष्ठतो महेशस्य त्रासलज्जायुतस्य च । भूमौ पपात तद्वीर्यं ततः स्कन्दो बभूव ह ॥

पश्चात्तां कथयिष्यामि कथामतिमनोहराम् । स्कन्दजन्मप्रसङ्गे च सांप्रतं वाञ्छितं शृणु ॥

इति श्रीब्रह्म० महा० गणपति० नारदना० प्रथमोऽध्यायः ॥ १ ॥

अथ द्वितीयोऽध्यायः ।

नारायण उवाच—

त्यक्त्वा रतिं महादेवो ददर्श पुरतः सुरान् । पलायध्वमिति प्राह कृपया पार्वतीभयात् ॥

देवाः पलायिता भीताः पार्वतीशापहेतुना । सर्वब्रह्माण्डसंहर्ता चकम्पे पार्वतीभयात् ॥

तल्पादुत्थाय सा दुर्गा न च दृष्ट्वा पुरः सुरान् । समुत्थितं कोपवह्निं स्तम्भयामास देहतः

अद्यप्रभृति ते देवा व्यर्थवीर्या भवन्त्विति । शशाप देवी तान्देवानतिरुष्टा बभूव ह ॥

तत शिवः शिवां दृष्ट्वा क्रोधसंरक्तलोचनाम् । रुदतीं नम्रवदनां लिखन्तीं धरणीतलम् ॥

शिवस्तां दुःखितां दृष्ट्वा क्रोधसंरक्तलोचनाम् । हस्ते गृहीत्वा देवेशो वासयामास वक्षसि

अतीव भीतः संत्रस्त उवाच मधुरं वचः ॥ ७ ॥

शंकर उवाच—

कथं रुष्टा गिरिश्रेष्ठकन्ये धन्ये मनोहरे । मम सौभाग्यरूपे च प्राणाधिष्ठातृदेवते ॥ ८ ॥

किं तेऽभीष्टं करिष्यामि वद मां जगदम्बिके । ब्रह्माण्डसंघे निखिले किमसाध्यमिहाऽऽवयोः

अहो निरपराधं मां प्रसन्ना भवसुन्दरि । दैवादज्ञातदोषस्य शान्तिं मे कर्तुमर्हसि ॥ १० ॥

त्वया युक्तः शिवोऽहं च सर्वेषां शिवदायकः । त्वया विना हश्विरश्च शवतुल्योऽशिवः सदा

प्रकृतिस्त्वं च बुद्धिस्त्वं शक्तिस्त्वं च क्षमा दया । तुष्टिस्त्वं च तथा पुष्टिः शान्तिस्त्वं क्षान्तिरेव च ॥ १२ ॥

क्षुत्त्वं छाया तथा निद्रा तन्द्रा श्रद्धा सुरेश्वरि । सर्वाधारस्वरूपा त्वं सर्वबीजस्वरूपिणी

स्मितपूर्वं वद वचः सांप्रतं सरसं शिवे । त्वत्कोपविषसंदग्धं द्रुतं जीवय मां मृतम् ॥ १४ ॥

शंकरस्य वचः श्रुत्वा स्मेराननमुखी च पार्वती । उवाच मधुरं देवी हृदयेन विदूयता॥२४॥

पार्वत्युवाच—

किं त्वाऽहं कथयिष्यामि सर्वज्ञं सर्वरूपिणम् । स्वात्मारामं पूर्णकामं सर्वदेहेष्ववस्थितम् ॥
कामिनी मानसं कामममज्ञं स्वामिनं वदेत् । सर्वेषां हृदयज्ञं च हृदीष्टं कथयामि किम्॥
गुह्यं सर्वनारीणां लज्जाजननकारणम् । अकथ्यमपि सर्वेशं महेश कथयामि ते॥२८॥
सुखेषु मध्ये स्त्रीणां च विभवेषु सुरेश्वर । सत्पुंसा सह संभोगो निर्जनेषु परं सुखम् ॥
तद्विच्छेदेन च यद्दुःखं तत्समं नास्ति च स्त्रियाः। कान्तानां कान्तविच्छेदशोकः परमदारुणः
कृष्णपक्षे यथा चन्द्रः क्षीयमाणो दिने दिने, तथा कान्तं विना कान्ता क्षीणा कान्त क्षणे क्षणे
चिन्ता ज्वरश्च सर्वेषामुपतापश्च वाससाम् । साध्वीनां कान्तविच्छेदस्तुरगानां च मैथुनम् ॥
रतिभङ्गो दुःखमेकं द्वितीयं वीर्यपातनम् । दुःखातिरेकि दुःखं च तृतीयमनपत्यता ॥
त्रैलोक्यकान्तं कान्तं त्वां लब्ध्वाऽपि न च मे सुतः। या स्त्री पुत्रविहीना च जीवनं तन्निरर्थकम्
जन्मान्तरसुखं पुण्यं तपोदानसमुद्भवम् । सद्वंशजातपुत्रश्च परत्रेह सुखप्रदः ॥ २९ ॥
सुपुत्रः स्वामिनोऽशश्च स्वामितुल्यसुखप्रदः । कुपुत्रश्च कुलाङ्गारो मनस्तापाय केवलम्॥
स्वामी स्वांशेन स्त्रीणां गर्भे जन्म लभेद्ध्रुवम् । साध्वी स्त्री मातृतुल्या च सततं हित-
कारिणी ॥ ३० ॥
असाध्वी वैरितुल्या च शश्वत्संतापदायिनी । सुखदुःखे योनिदुःखं चापाकर्णितं त्रिया त्वत्तः
कमुपायं करिष्यामि वद योगीश्वरेश्वर । उपायसिन्धो तपसां सर्वेषां च फलप्रद ॥३१॥
इत्युक्त्वा पार्वती देवी नम्रवक्त्रा बभूव ह । प्रहस्य शंकरो देवो बोधयामास पार्वतीम् ॥
सुपुत्रबीजं सुखदं तापनाशनकारणम् । मितं स्निग्धं सुरुचिरं प्रवक्तुमुपचक्रमे ॥३२॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ।

---

महादेव उवाच—

शृणु पार्वति वक्ष्यामि तव भद्रं भविष्यति । उपायतः कार्यसिद्धिर्भवत्येव जगत्त्रये ॥
सर्ववाञ्छितसिद्धेस्तु बीजरूपं सुमङ्गलम् । मनसः प्रीतिजननमुपायं कथयामि ते ॥२॥
हरेराराधनं कृत्वा व्रतं कुरु वरानने । व्रतं च पुण्यकं नाम वर्षमेकं करिष्यसि ॥ ३ ॥
महाकठोरबीजं च वाञ्छाकल्पतरुं परम् । सुखदं पुण्यदं सारं पुत्रदं सर्वसौख्यदम् ॥४॥

नदीनां च यथा गङ्गा देवानां च हरिर्यथा । वैष्णवानां यथाऽहं च देवीनां त्वं यथा प्रिये
वर्णानां च यथा विप्रस्तीर्थानां पुष्करं यथा । पुष्पाणां पारिजातं च पत्राणां तुलसी यथा
यथा पुण्यप्रदानां च तिथिरेकादशी स्मृता । रविवारश्च वाराणां यथा पुण्यप्रदः शिवे
मासानां मार्गशीर्षश्चाप्यृतूनां माधवो यथा । संवत्सरो वत्सराणां युगानां च कृतं यथा
विद्याप्रदश्च पूज्यानां गुरूणां जननी यथा । साध्वी पत्नी यथाऽऽप्तानां विश्वस्तानां मनो
यथा ॥ ८ ॥

यथा धनानां रत्नं च प्रियाणां च यथा पतिः । यथा पुत्रश्च बन्धूनां वृक्षाणां कल्पपादपः ॥
फलानां वै चूतफलं वर्षाणां भारतं यथा । वृन्दावनं वनानां च शतरूपा च योषिताम्
यथा काशी पुरीणां च सूर्यस्तेजस्विनां यथा । यथा शशी खगानां च सुन्दराणां च मन्मथः
शास्त्राणां च यथा वेदाः सिद्धानां कपिलो यथा । हनूमान्वानराणां च क्षेत्राणां ब्राह्मणाननम्
यशोदानां यथा विद्या कविता च मनोहरा । आकाशो व्यापकानां च ह्यङ्गानां लोचनं यथा
विभवानां हरिकथा सुखानां हरिचिन्तनम् । स्पर्शानां पुत्रसंस्पर्शो हिंस्राणां च यथा खलः
पापानां च यथा मिथ्या पापिनां पुंश्चली यथा । पुण्यानां च यथा सत्यं तपसां हरिसे-
वनम् ॥ १९ ॥

यथा घृतं च गव्यानां यथा ब्रह्मा तपस्विनाम् । अमृतं भक्ष्यवस्तूनां सस्यानां धान्यकं यथा
पुण्यदानां यथा तोयं शुद्धानां च हुताशनः । सुवर्णं तैजसानां च मिष्टानां प्रियभाषणम्
गरुडः पक्षिणां चैव हस्तिनामिन्द्रवाहनम् । योगिनां च कुमारश्च देवर्षीणां च नारदः
गन्धर्वाणां चित्ररथो जीवो बुद्धिमतां यथा । सुकवीनां यथा शुक्रः काव्यानां च पुराणकम्
स्रोतस्वतां समुद्रश्च यथा पृथ्वी क्षमावताम् । लाभानां च यथा मुक्तिर्हरिभक्तिश्च संपदाम्
पवित्राणां वैष्णवाश्च वर्णानां प्रणवो यथा । विष्णुमन्त्रश्च मन्त्राणां बीजानां प्रकृतिर्यथा ॥
विदुषां च यथा वाणी गायत्री छन्दसां यथा । यथा कुबेरो यक्षाणां सर्पाणां वासुकिर्यथा
यथा पिता ते शैलानां गवां च सुरभिर्यथा । वेदानां सामवेदश्च तृणानां च यथा कुशः ॥
सुखदानां यथा लक्ष्मीर्मनो वै शीघ्रगामिनाम् । अक्षराणामकारश्च यथा तातो हितैषिणाम्
शालग्रामश्च मूर्तीनां पशूनां विष्णुपञ्जरः । चतुष्पदानां पञ्चास्यो मानवो जीविनां यथा ॥
यथा स्वान्तं चेन्द्रियाणां मन्दाग्निश्च रुजां यथा । बलिनां च यथा शक्तिरहं शक्तिमतां यथा
महान्विराट् च स्थूलानां सूक्ष्माणां परमाणुकः । यथेन्द्र आदितेयानां दैत्यानां च बलिर्यथा

---

१ क. आश्रमाणां यथा भिक्षुस्ती° । २ ख. यथेन्दुः सुखदानां च । ३ क. आत्मा
काशी स्त्री° ।

यथा दधीचिर्दातॄणां प्रह्लादश्चैव साधुषु । ब्रह्मास्त्रं च यथाऽस्त्राणां चक्राणां च सुदर्शनम्
नृणां राजा रामचन्द्रो धन्विनां लक्ष्मणो यथा । सर्वाधारः सर्वसेव्यः सर्वबीजं च सर्वदः
सर्वसारो यथा कृष्णो व्रतानां पुण्यकं यथा ॥ २९ ॥
व्रतं कुरु महाभागे त्रिषु लोकेषु दुर्लभम् । सर्वश्रेष्ठश्च पुत्रस्ते व्रतादेव भविष्यति ॥३०॥
व्रताराध्यश्च वै कृष्णः सर्वेषां वाञ्छितप्रदः । जनो यत्सेवनान्मुक्तः पितृभिः कोटिभिः सह
हरिमन्त्रं गृहीत्वा च हरिसेवां करोति यः । भारते जन्म सफलं स्वात्मनः स करोति च
उद्धृत्य कोटिपुरुषान्वैकुण्ठं याति निश्चितम् । श्रीकृष्णपार्षदो भूत्वा सुखं तत्रैव मोदते
सहोदरान्स्वभृत्यांश्च स्वबन्धून्सहचारिणः। स्वस्त्रियश्च समुद्धृत्य भक्तो याति हरेः पदम्॥
तस्माद्गृहाण गिरिजे हरेर्मन्त्रं सुदुर्लभम् । जप मन्त्रं व्रते तत्र पितॄणां मुक्तिकारणम् ॥
इत्युक्त्वा शंकरो देवो गत्वा गिरिजया सह । शीघ्रं च जाह्नवीतीरं हरेर्मन्त्रं मनोहरम् ॥
तस्यै ददौ च संप्रीत्या कवचं स्तोत्रसंयुतम् । पूजाविधाननियमं कथयामास तां मुने ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ।

नारायण उवाच—

श्रुत्वा व्रतविधानं च दुर्गा संहृष्टमानसा । सर्वं व्रतविधानं च संप्रष्टुमुपचक्रमे ॥ १ ॥

पार्वत्युवाच—

सर्वं व्रतविधानं मां वद वेदविदां वर । हे नाथ करुणासिन्धो दीनबन्धो परात्पर ॥२॥
कानि व्रतोपयुक्तानि द्रव्याणि च फलानि च । समयं नियमं भक्ष्यं विधानं तत्फलं प्रभो ॥
देहि मह्यं विनीतायै नियुक्तं सत्पुरोहितम् । पुष्पोपहारान्विप्रांश्च द्रव्याहरणकिंकरान् ॥
अन्यानि चोपयुक्तानि मयाऽज्ञातानि यानि च । संनियोजय तत्सर्वं स्त्रीणां स्वामी च ॥
सर्वदः ॥ ६ ॥
पिता कौमारकाले च सदा पालनकारकः । भर्ता मध्ये सुतः शेषे त्रिधाऽवस्था सुयोषिताम्
तातोऽशोकः प्राणतुल्यां दत्त्वा सत्स्वामिने सुताम्। स्वामी निवृत्तिमाप्नोति संन्यस्य स्वसुते
प्रियाम् ॥ ७ ॥
बन्धुत्रययुता या स्त्री सा च भाग्यवती परा। किंचिद्विहीना मध्या च सर्वहीनाऽधमा भुवि
एतेषां च समीपस्था प्रशंस्या सा जगत्त्रये। निन्दिताऽन्येषु संन्यस्ता सर्वमेतच्छ्रुतौ श्रुतम्
सर्वात्मा भगवांस्त्वं च सर्वसाक्षी च सर्ववित् । देहि मह्यं पुत्रवरं स्वात्मनिर्वृतिहेतुकम् ॥

स्वात्मबोधानुमानेन महात्मनि निवेदितम् । सर्वान्तराभिप्रायज्ञं भवन्तं बोधयामि किम् ॥
इत्युक्त्वा पार्वती प्रीत्या पपात स्वामिनः पदे । कृपासिन्धुश्च भगवान्प्रवक्तुमुपचक्रमे ॥

महादेव उवाच—

शृणु देवि प्रवक्ष्यामि विधानं नियमं फलम् । फलानि चैव द्रव्याणि व्रतयोग्यानि यानि च
विप्राणां शतकं शुद्धं फलपुष्पोपहारकम् । किंकराणां च शतकं द्रव्याहरणकारकम् ॥
दासीनां शतकं लक्षं नियुक्तं च पुरोहितम् । सर्वव्रतविधानज्ञं वेदवेदाङ्गपारगम् ॥१९॥
प्रवरं हरिभक्तानां सर्वज्ञं ज्ञानिनां वरम् । सनत्कुमारं मत्तुल्यं गृहाण व्रतहेतवे ॥११॥
देवि शुद्धे च काले च परं नियमपूर्वकम् । माघशुक्लत्रयोदश्यां व्रतारम्भः शुभः प्रिये
गात्रं सुनिर्मलं कृत्वा शिरः संस्कारपूर्वकम् । उपोष्य पूर्वदिवसे वस्त्रं संशोध्य यत्नतः ॥
अरुणोदयवेलायां तल्पादुत्थाय सुव्रती । मुखप्रक्षालनं कृत्वा स्नात्वा वै निर्मले जले ॥
आचम्य यत्नपूतो हि हरिस्मरणपूर्वकम् । दत्त्वाऽर्घ्यं हरये भक्त्या गृहमागत्य सत्वरम्
धौते च वाससी धृत्वा ह्युपविश्याऽऽसने शुचौ । आचम्य तिलकं धृत्वा समाप्य स्वाह्निकं पुनः ॥ २१ ॥
घटं संस्थाप्य विधिवत्स्वस्तिवाचनपूर्वकम् । पुरोहितस्य वरणं पुरः कृत्वा प्रयत्नतः ॥
संकल्प्य वेदविहितं व्रतमेतत्समाचरेत् । व्रते द्रव्याणि नित्यानि चोपचारास्तु षोडश ॥
देयानि नित्यं देवेशि कृष्णाय परमात्मने ॥ २३ ॥
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । स्नानीयं मधुपर्कं च वस्त्राण्याभरणानि च ॥
सुगन्धिपुष्पधूपं च दीपनैवेद्यचन्दनम् । यज्ञसूत्रं च ताम्बूलं कर्पूरादिसुवासितम् ॥
द्रव्याण्येतानि पूजायाश्चाङ्गरूपाणि सुन्दरि । देवि किंचिद्विहीनेन चाङ्गहानिः प्रजायते॥
अङ्गहीनं च यत्कर्म चाङ्गहीनो यथा नरः । अङ्गहीने च कार्ये च फलहानिः प्रजायते
अष्टोत्तरशतं पुष्पं पारिजातस्य विष्णवे । देयं प्रतिदिनं दुर्गे स्वात्मनो रूपहेतवे ॥
श्वेतचम्पकपुष्पाणां लक्षमक्षतमीप्सितम् । प्रदेयं हरये भक्त्या वर्णसौन्दर्यहेतवे ॥
सहस्रपत्रपद्मानामक्षतं लक्षकं तथा । भक्त्या देयं च हरये मुखसौन्दर्यहेतवे ॥ ३० ॥
अमूल्यरत्नरचितं दर्पणानां सहस्रकम् । देयं नारायणायैव नेत्रयोर्दीप्तिहेतवे ॥ ३१ ॥
नीलोत्पलानां लक्षं च देयं कृष्णाय भक्तितः । व्रताङ्गभूतं देवेशि चक्षुषो रूपहेतवे ॥
हिमालयोद्भवं लक्षं रुचिरं श्वेतचामरम् । प्रदेयं केशवायैव केशसौन्दर्यहेतवे ॥ ३३ ॥
अमूल्यरत्नरचितं पुटकानां सहस्रकम् । प्रदेयं गोपिकेशाय नासासौन्दर्यहेतवे ॥

१ ख. 'ज्ञं बोधज्ञं बो' । २ क. 'ने कुशे । ३ क. 'व भालसौन्दर्यहे' ।

बन्धूकपुष्पलक्षं च देयं राधेश्वराय च । सौम्यौष्ठाधरयोश्चैवं वर्णसौन्दर्यहेतवे ॥ ३६ ॥
मुक्ताफलानां लक्षं च दन्तसौन्दर्यहेतवे । देयं गोलोकनाथाय शैलजे भक्तिपूर्वकम् ॥
रत्नगेन्दुकलक्षं च गण्डसौन्दर्यहेतवे । महेश्वराय दातव्यं व्रते शैलेन्द्रकन्यके ॥ ३७ ॥
रत्नपात्रलक्षं च देयं ब्रह्मेश्वराय च । ओष्ठाधःस्थलरूपाय व्रती प्राणेशि भक्तितः ॥
कर्णभूषणलक्षं च रत्नसारविनिर्मितम् । देयं सर्वेश्वरायैव कर्णसौन्दर्यहेतवे ॥ ३९ ॥
माध्वीककलशानां च लक्षं रत्नविनिर्मितम् । देयं विश्वेश्वरायैव स्वरसौन्दर्यहेतवे ॥
सुधापूर्णं च कुम्भानां सहस्रं रत्ननिर्मितम् । देयं कृष्णाय देवेशि वाक्यसौन्दर्यहेतवे ॥
रत्नप्रदीपलक्षं च गोपवेषविधायिने । देयं किशोरवेषाय दृष्टिसौन्दर्यहेतवे ॥ ४२ ॥
पद्मकुसुमाकारं रत्नपात्रसहस्रकम् । देयं गोरक्षकायैव गलसौन्दर्यहेतवे ॥ ४३ ॥
सद्रत्नसाररचितं पद्मनालसहस्रकम् । देयं चण्डकपालाय बाहुसौन्दर्यहेतवे ॥ ४४ ॥
लक्षं च रक्तपद्मानां करसौन्दर्यहेतवे । देयं गोपाङ्गनेशाय नारायणि हरिव्रते ॥ ४५ ॥
अङ्गुलीयकलक्षं च रत्नसारविनिर्मितम् । अङ्गुलीनां च रूपार्थं देयं देवेश्वराय च ॥
मणीन्द्रसारलक्षं च श्वेतवर्णं मनोहरम् । देयं मुनीन्द्रनाथाय नखसौन्दर्यहेतवे ॥ ४७ ॥
सद्रत्नसारहाराणां लक्षं चातिमनोहरम् । देयं मदनमोहाय वक्षःसौदर्यहेतवे ॥ ४८ ॥
सुपक्वश्रीफलानां च लक्षं च सुमनोहरम् । देयं सिद्धेन्द्रनाथाय स्तनसौदर्यहेतवे ॥
सद्रत्नवर्तुलाकारपत्रलक्ष मनोहरम् । देयं पद्मालयेशाय देहसौदर्यहेतवे ॥ ५० ॥
सद्रत्नसाररचितं नाभीनां च सहस्रकम् । प्रदेयं पद्मनाभाय नाभिसौन्दर्यहेतवे ॥
सद्रत्नसाररचितं रथचक्रसहस्रकम् । नितम्बसौन्दर्यार्थं च देयं वै चक्रपाणये ॥
सुवर्णरम्भास्तम्भानां लक्षं च सुमनोहरम् । प्रदेयं श्रीनिवासाय श्रोणिसौन्दर्यहेतवे ॥
आतपत्रस्थलाब्जानां लक्षमम्लानमीप्सितम् । प्रदेयं पद्मनेत्राय पादसौन्दर्यहेतवे ॥ ५४ ॥
सुवर्णरचितानां च खञ्जनानां सहस्रकम् । गतिसौन्दर्यहेत्वर्थं देयं लक्ष्मीश्वराय च ॥
राजहंससहस्रं च गजेन्द्राणां सहस्रकम् । सुवर्णरचितं देयं हरये गतिहेतवे ॥ ५६ ॥
सुवर्णच्छत्रलक्षं च देयं नारायणाय च । विचित्रं रत्नसारेण मूर्धसौन्दर्यहेतवे ॥ ५७ ॥
मालतीनां च कुसुमप्रस्तं लक्षमीश्वरि । देयं वृन्दावनेशाय हास्यसौदर्यहेतवे ॥ ५८ ॥
अमूल्यरत्नलक्षं च देयं नारायणाय वै । सुव्रते व्रतपूर्णार्थं शीलसौन्दर्यहेतवे ॥ ५९ ॥
स्वच्छस्फटिकसंकाशं मणीन्द्रश्रेष्ठलक्षकम् । देयं मुनीन्द्रनाथाय मनःसौन्दर्यहेतवे ॥ ६० ॥

---

१ क. °स्वष्ठोष्ठा° । २ क. बहुसौ° । ३ क. तन्तुक° क. °स्वर्णक° । ४ क. °सौन्दर्यैवा° ।
५ क. रत्ननाभा° । ६ क. °रत्नस्त° । ७ क. मस्तकम् ।

प्रवालसारसंकाशं मणिसारसहस्रकम् । देयं कृष्णाय भक्त्या च प्रियरागविवृद्धये ॥
माणिक्यसारलक्षं च देयं कृष्णाय यत्नतः । जन्मनः कोटिपर्यन्तं स्वामिसौभाग्यहेतवे ॥
कूष्माण्डं नारिकेलं च जम्बीरं श्रीफलं तथा । फलान्येतानि देयानि हरये पुत्रहेतवे ॥
रत्नेन्द्रसारलक्षं च देयं कृष्णाय यत्नतः । असंख्यजन्मपर्यन्तं स्वामिनो धनवृद्धये ॥
वाद्यं नानाप्रकारं च कांस्यतालादिकं परम् । व्रते संपत्तिवृद्ध्यर्थं श्रीहरिं श्रावयेद्व्रती ॥
पायसं पिष्टकं सर्पिः शर्करात्तं मनोहरम् । प्रदेयं हरये भक्त्या स्वामिनो भोगवृद्धये ॥
सुगन्धिपुष्पमालानां लक्षमक्षतमीप्सितम् । प्रदेयं हरये भक्त्या हरिभक्तिविवृद्धये ॥ ६७॥
नैवेद्यानि च देयानि स्वादूनि मधुराणि च । श्रीकृष्णप्रीतिप्राप्त्यर्थं दुर्गे नानाविधानि च
नानाविधानि पुष्पाणि तुलसीसंयुतानि च । श्रीकृष्णप्रीतये भक्त्या व्रते देयानि सुव्रते ॥
ब्राह्मणानां सहस्रं च प्रत्यहं भोजयेद्व्रती । स्वात्मनः सस्यवृद्ध्यर्थं व्रते जन्मनि जन्मनि ॥
पुष्पाञ्जलिशतं देयं नित्यं पूर्णे च पूजने । प्रणामशतकं देवि कर्तव्यं भक्तिवृद्धये ॥
षण्मासांश्च हविष्यान्नं मासान्पञ्च फलादिकम् । हविः पक्षं जलं पक्षं व्रते भक्ष्येच्च सुव्रते ॥
रत्नप्रदीपशतकं वह्निं दद्याद्दिवानिशम् । रात्रौ कुशासनं कृत्वा नित्यं जागरणं व्रते ॥
ज्ञानवृद्धिर्जागरणे सुबुद्धिर्मूलभोजने । लोभमोहकामक्रोधभयशोकविवादकम् ॥ ७२ ॥
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरित्यपि ॥
विविधं मैथुनं त्याज्यं व्रतिना व्रतशुद्धये । कलहश्च परित्याज्यो व्रते क्रीडाविवृद्धये ।
संपूर्णे च व्रते देवि प्रतिष्ठा तदनन्तरम् । त्रिशतं वै षष्ट्यधिकं रत्नकं वस्त्रसंयुतम् ॥
सभोज्यं सोपवीतं च सोपहारं ददात्वयम् । त्रिशतं वै षष्ट्यधिकसहस्रं विप्रभोजनम् ॥
त्रिशतं वै षष्ट्यधिकं सहस्रं तिलहोमकम् । त्रिशतं वै षष्ट्यधिकं सहस्रं स्वर्णमेव च ॥
देया व्रतसमाप्तौ च दक्षिणा विधिबोधिता । अन्यां समाप्तिदिवसे कथयिष्यामि दक्षिणाम्
एतद्व्रतफलं देवि दृढा भक्तिर्हरौ भवेत् । हरितुल्यो भवेत्पुत्रो विख्यातो भुवनत्रये ॥
सौन्दर्यं स्वामिसौभाग्यमैश्वर्यं विपुलं धनम् । सर्ववाञ्छितसिद्धीनां बीजं जन्मनि जन्मनि ॥
इत्येवं कथितं देवि व्रतं कुरु महेश्वरि । पुत्रस्ते भविता साध्वीत्युक्त्वा स विरराम ह ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० पुण्यकव्रतविधानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

१ क॰ यानिष्पत्तिरेव च । २ ख. स्वप्नमैथुनकं त्या॰ ।

अथ पञ्चमोऽध्यायः ।

नारायण उवाच—

श्रुत्वा व्रतविधानं च दुर्गा संहृष्टमानसा । पुनः प्रपच्छ कान्तं सा दिव्यां व्रतकथां शुभाम् ॥

पार्वत्युवाच—

किमद्भुतं व्रतं नाथ विधानं फलमस्य च । अविरं तत्कथां ब्रूहि व्रतं केन प्रकाशितम् ॥

महादेव उवाच—

शतरूपा मनोः पत्नी पुत्रदुःखेन दुःखिता । ब्रह्मणः स्थानमागत्य सा ब्रह्माणमुवाच ह ।

शतरूपोवाच—

ब्रह्मन्केन प्रकारेण वन्ध्यायाश्च सुतो भवेत् । तन्मे ब्रूहि जगद्धातः सृष्टिकारणकारण ॥

तज्जन्म निष्फलं ब्रह्मन्नैश्वर्यं धनमेव च । किंचिन्न शोभते गेहे विना पुत्रेण पुत्रिणाम् ॥

तपोदानोद्भवं पुण्यं जन्मान्तरसुखावहम् । सुखदो मोक्षदः प्रोक्तो पुत्रश्च पुत्रिणाम् ॥

पुत्री पुत्रमुखं दृष्ट्वा चाश्वमेधशतोद्भवम् । फलं पुंनामनरकत्राणहेतुं लभेद्ध्रुवम् ॥ ७ ।

पुत्रोत्पत्तेरुपायं वै वद मां तापसंयुताम् । तदा भद्रं न चेद्भर्त्रा सह यास्यामि काननम् ॥

गृहाण राज्यमैश्वर्यं धनं पृथ्वीं प्रजावहाम् । किमेतेनाऽवयोरत्र विना पुत्रैरपुत्रिणो ॥

अपुत्रिणो मुखं द्रष्टुं विद्वान्नेच्छति सहतेऽशिवम् । मुखं दर्शयितुं लज्जां समवाप्नोत्यपुत्रकः ॥

अथवा गरलं भुक्त्वा प्रवेक्ष्यामि हुताशनम् । अपुत्रपौत्रमशिवं गृहं स्यात्तद्विहीनकम् ॥

इत्येवमुक्त्वा सा साक्षाद्ब्रह्मणोऽग्रे रुरोद ह । कृपानिधिश्च तां दृष्ट्वा प्रवक्तुमुपचक्रमे ॥

ब्रह्मोवाच—

शृणु वत्से प्रवक्ष्यामि पुत्रोपायं सुखावहम् । सर्वैश्वर्यादिबीजं च सर्ववाञ्छाप्रदं शुभम् ।

माघशुक्लत्रयोदश्यां व्रतमेतत्सुपुण्यकम् । कर्तव्यं शुद्धकाले च कृष्णमाराध्य सर्वदम् ॥

संवत्सरं च कर्तव्यं सर्वविघ्नविनाशनम् । द्रव्याणि वेदेरुक्तानि व्रते देयानि सुव्रते ॥

व्रतं च काण्वशाखोक्तं सर्ववाञ्छितसिद्धिदम् । कृत्वा पुत्रं लभ शुभे विष्णुतुल्यपराक्रमम्

ब्रह्मणश्च वचः श्रुत्वा सा कृत्वा व्रतमुत्तमम् । प्रियव्रतोत्तानपादौ लेभे पुत्रौ मनोहरौ ।

व्रतं कृत्वा देवहूतिर्लेभे सिद्धेश्वरं सुतम् । नारायणांशं कपिलं पुण्यकं सिद्धिदं शुभम् ॥

अरुन्धत्यादि कृत्वा तु लेभे शक्तिसुतं शुभा शक्तिकान्ता व्रतं कृत्वा सुतं लेभे पराशरम् ॥

अदितिश्च व्रतं कृत्वा लेभे वामनकं सुतम् । शची जयन्तं पुत्रं च लेभे कृत्वेदमीश्वरी ॥

---

१ ख. पुण्यदं शु° । २ क. सिद्धेश्वरं सुतम् ।

उत्तानपादपत्नीदं कृत्वा लेभे ध्रुवं सुतम् । कुबेरजाया कृत्वेदं लेभे च नलकूबरम् ॥
सूर्यपत्नी मनुं लेभे कृत्वेदं व्रतमुत्तमम् । अत्रिपत्नी सुतं चन्द्रं लेभे कृत्वेदमुत्तमम् ॥
लेभे चाङ्गिरसः पत्नी कृत्वेदं व्रतमुत्तमम् । बृहस्पतिं सुरगुरुं पुत्रमस्य प्रभावतः ॥
भृगोर्भार्या व्रतं कृत्वा लेभे दैत्यगुरुं सुतम् । शुक्रं नारायणांशं च सर्वतेजस्विनां वरम् ॥
इत्येवं कथितं देवि व्रतानां व्रतमुत्तमम् । त्वमेवं कुरु कल्याणि हिमालयसुते शुभे ॥
साध्यं राजेन्द्रपत्नीनां देवीनां च सुखावहम् । व्रतमेतन्महासाध्वि साध्वीनां प्राणतः प्रियम् ॥
व्रतस्यास्य प्रभावेण स्वयं गोपाङ्गनेश्वरः । ईश्वरः सर्वभूतानां तव पुत्रो भविष्यति ॥
इत्युक्त्वा शंकरस्तत्र विरराम च नारद । व्रतं चकार सा देवी प्रहृष्टा शंकराज्ञया ॥
इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि । सुखदं मोक्षदं सारं गणेशजनिकारणम् ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० पुण्यव्रतकथनं
नाम पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः ।

शौनक उवाच—
नारायणवचः श्रुत्वा नारदो हृष्टमानसः । किं पप्रच्छ पुनः साधो तन्मे ब्रूहि तपोधन ॥

सूत उवाच—
नारायणवचः श्रुत्वा नारदो हृष्टमानसः । व्रतारम्भविधानं च संप्रष्टुमुपचक्रमे ॥ २ ॥

नारद उवाच—
कृतं केन प्रकारेण व्रतमेतच्छुभावहम् । तन्मे ब्रूहि मुनिश्रेष्ठ पार्वत्या भर्तुराज्ञया ॥३॥
ललाभ जन्म गोपीशः कृते सुव्रतया व्रते । ब्रह्मन्केन प्रकारेण तन्नः शंसितुमर्हसि ॥४॥

नारायण उवाच—
कथयित्वा कथां दिव्यां विधानं च व्रतस्य च । स्वयं विधाता तपसां जगाम तपसे शिवः ॥
हरेराराधनव्यग्रो मूर्तिभेदधरो हरिः । हरिभावनशीलश्च हरिध्यानपरायणः ॥ ६ ॥
परमानन्दपूर्णश्च ज्ञानानन्दः सनातनः । दिवानिशं न जानाति हरिमन्त्रं बहिः स्मरन् ॥
प्रहृष्टमनसा देवी पार्वती भर्तुराज्ञया । किंकरान्प्रेरयामास विप्रांश्च व्रतहेतवे ॥ ७ ॥
आनीय सर्वद्रव्याणि व्रते योग्यानि यानि च । व्रतं कर्तुं समारेभे शुभदा सा शुभे क्षणे ॥
सनत्कुमारो भगवानाजगाम विधेः सुतः । मूर्तिमांस्तेजसां राशिः प्रज्वलन्ब्रह्मतेजसा ॥

---

१ क. भूतेशः ।

ब्रह्मा जगाम हृष्टश्च ब्रह्मलोकात्सभार्यकः । अतित्रस्तो हि भगवानाजगाम सुरेश्वरः ॥
विष्णुः क्षीरोदशायी च सलक्ष्मीकश्चतुर्भुजः । भगवाञ्जगतां पाता शास्ता भर्ता सपार्षदः
वनमालाधरः श्यामो भूषितो रत्नभूषणैः । तथा संभृतसंभारो रत्नयानेन नारद ॥
सनकश्च सनन्दश्च कपिलश्च सनातनः । आसुरिश्च क्रतुर्हंसो वोढुः पञ्चशिखोऽरुणिः॥
यतिश्च सुमतिश्चैव वसिष्ठश्च सहानुगः । पुलहश्च पुलस्त्यश्चाप्यत्रिश्च भृगुरङ्गिराः ॥
अगस्त्यश्च प्रचेताश्च दुर्वासाश्च्यवनस्तथा । मरीचिः कश्यपः कण्वो जरत्कारुश्च गौतमः
बृहस्पतिरुतथ्यश्च संवर्तः सौभरिस्तथा । जाबालिर्जमदग्निश्च जैगीषव्यश्च देवलः ॥ १७॥
गोकामुखो वक्ररथः पारिभद्रः पराशरः विश्वामित्रो वामदेव ऋष्यशृङ्गो विभाण्डकः ॥
मार्कण्डेयो मृकण्डुश्च पुष्करो लोमशस्तथा । कौत्सो वत्सश्च दक्षश्च बालाग्निरघमर्षणः ॥
कात्यायनः कणादश्च पाणिनिः शाकटायनः । शङ्कुरापिशालिश्चैव शाकल्यः शङ्ख एव च
एते चान्ये च बहवः सशिष्या मुनयो मुने । अंशौ च धर्मपुत्रौ च नरनारायणौ समौ
दिक्पालाश्च तथा देवा यक्षगन्धर्वकिंनराः । आजग्मुः पर्वताः सर्वे सगणाः पार्वतीव्रते
हिमालयः शैलराजः सापत्यश्च सभार्यकः । सगणः सानुगश्चैव रत्नभूषणभूषितः ॥
तथा संभृतसंभारो नानाद्रव्यसमन्वितः । मणिमाणिक्यरत्नानि व्रते योग्यानि यानि च
नानाप्रकारवस्तूनि जगतां दुर्लभानि च । लक्षं च गजरत्नानामश्वरत्नं त्रिलक्षकम् ॥
दशलक्षं गवां रत्नं शतलक्षं सुवर्णकम् । रुचकानां हीरकाणां स्पर्शानां च तथैव च ॥
मुक्तानां च चतुर्लक्षं कौस्तुभानां सहस्रकम् । सुस्वादुनानाद्रव्याणां लक्षभाराणि कौतुकी
अनन्तरत्नप्रभव आजगाम सुताव्रते ॥ २७ ॥
ब्रह्मणा मनवः सिद्धा नागा विद्याधरास्तथा । संन्यासिनो भिक्षुकाश्च बन्दिनः पार्वतीव्रते
विद्याधरी नर्तकी च नर्तकाप्सरसां गणाः । नानाविधा वाद्यभाण्डा आजग्मुः शिवमन्दिरम्
कैलासराजमार्गं च चन्दनेन सुसंस्कृतम् । आम्रपल्लवसूत्राढ्यं कदलीस्तम्भशोभितम् ॥
दूर्वाधान्यफलैः पर्णलाजपुष्पैर्विभूषितम् । निर्मितं पद्मरागेण ददृशुस्ते गणा मुदा ॥
उच्चैःसिंहासनेष्वेते पूजिताः शंकरेण च । कैलासवासिनः सर्वे परमानन्दसंयुताः ॥
दानाध्यक्षः शुनाशीरः कुबेरः कोशरक्षकः । आदेष्टा च स्वयं सूर्यः परिवेष्टा जलाधिपः
दध्नां नद्यः सहस्राणि दुग्धानां च तथैव च । सहस्राणि घृतानां च गुडानां च शतानि च
माध्वीकानां सहस्राणि तैलानां च शतानि च । लक्षाणि चैव तक्राणां बभूवुः पार्वतीव्रते ॥
पीयूषाणां च कुम्भानि शतलक्षाणि नारद । मिष्टान्नानां शर्कराणां बभूवुर्लक्षराशयः ॥
यवगोधूमचूर्णानां घृताक्तानां च नारद ॥ ३१ ॥

---

१ क. °मुखश्चक्रकरः पा° २ क. प्रस्कण्वो । ३ क. काला° ।

स्वस्तिकानां च पूपानां बभूवुर्लक्षराशयः । गुडसंस्कृतलाजानां बभूवुः कोटिराशयः ॥
शालीनां पृथुकानां च राशीनां दशकोटयः । वरतण्डुलराशीनां मुने संख्या न विद्यते ॥
स्वर्णरौप्यप्रवालानां मणीनां च महामुने बभूवु पर्वतास्तत्र कैलासे पार्वतीव्रते ॥ ३९ ॥
पायसं पिष्टकं चैव शाल्यन्नं सुमनोहरम् । चकार लक्ष्मीः पाकं च व्यञ्जनं घृतसंस्कृतम्
बुभुजे देवर्षिगणैः शिवो नारायणेन च । बभूवुर्लक्षविप्राश्च परिवेषणकारकाः ॥ ४१ ॥
ताम्बूलं च ददौ तेभ्यः कर्पूरादिसुवासितम् । रत्नसिंहासनस्थेभ्यो विप्रलक्षाः सुदक्षकाः ॥
रत्नसिंहासनस्थं च विष्णुं क्षीरोदशायिनम् । सेव्यमानं पार्षदैश्च सस्मितैः श्वेतचामरैः ॥
ऋषिभिः स्तूयमानं च सिद्धैर्देवगणैस्तथा । विद्याधरीणां नृत्यानि पश्यन्तं स्मितं मुदा ॥
गन्धर्वाणां च संगीतं श्रुतवन्तं मनोहरम् । पप्रच्छ शंकरो ब्रह्मन्ब्रह्मेशं प्रीतिपूर्वकम् ॥
ब्रह्मणा प्रेरितो युक्तं व्रतं कर्तव्यमीप्सितम् । देवर्षिगणपूर्णायां सभायां संपुटाञ्जलिः ॥

महादेव उवाच--

मदीयं वचनं नाथ श्रीनिवास शृणु प्रभो । तपःस्वरूप तपसां कर्मणां च फलप्रद ॥ ४७ ॥
व्रतानां जपयज्ञानां पूजानां सर्वपूजित । सर्वेषां बीजरूपेण वाञ्छाकल्पतरो हरे ॥ ४८ ॥
सपुण्यकव्रतं कर्तुं ब्रह्मन्निच्छति पार्वती । पुत्रार्थिनी सा शोकार्ता हृदयेन विदूयता ॥
रतिभङ्गे कृते देवैर्व्यर्थवीर्येण शुचाऽर्दिता । प्रबोधिता मया साध्वी विविधैर्वचनामृतैः ॥
सत्पुत्रं स्वामिसौभाग्यं सुव्रता याचते व्रते । ताभ्यां विना न संतुष्टा स्वप्राणांस्त्यक्तुमिच्छति
पुरा त्यक्त्वा स्वदेहं च पितृयज्ञे च मानिनी । मन्निन्दया हिमगिरौ पुनर्जन्म ललाभ सा ॥
सर्वं जानासि वृत्तान्तं सर्वज्ञं त्वां वदामि किम् । काऽऽज्ञा तां वद तत्त्वज्ञ परिणामसुखदाम्
दुर्निवार्यश्च सर्वेश स्त्रीस्वभावश्च चापलः । दुस्त्याज्यं योगिभिः सिद्धैरस्माभिश्च तपस्विभिः
जितेन्द्रियैर्जितक्रोधैः स्त्रीरूपं मोहकारणम् । सर्वमायाकरण्डं च कामवर्धनकारणम् ॥
ब्रह्मास्त्रं कामदेवस्य दुर्भेद्यं जयकारणम् । सुनिर्मितं च विधिना सर्वाद्यं विधिपूर्वकम् ॥
मोक्षद्वारकपाटं च हरिभक्तिनिरोधनम् । संसारबन्धनस्तम्भरज्जुरूपमकृन्तनम् ॥ ५७ ॥
वैराग्यनाशबीजं च शश्वद्रागविवर्धनम् । पत्तनं साहसानां च दोषाणामालयं सदा ॥ ५८ ॥
अप्रत्ययानां क्षेत्रं च स्वयं कपटमूर्तिमत् । अहंकाराश्रयं शश्वद्विषकुम्भं सुधामुखम् ॥
सर्वैरसाध्यमानं च दुराराध्यं च सर्वदा । स्वकार्यसाध्याचाराढ्यं कलहाङ्कुरकारणम् ॥
सर्वं निवेदितं नाथ कर्तव्यं वक्तुमर्हसि । कार्यं सर्वं परामर्शे परिणामसुखावहम् ॥ ६१ ॥

---

१ क. 'र्वेषां स्त्री'।

नारायण उवाच—

इत्येवमुक्त्वा भगवान्निरीक्ष्य ब्रह्मणो मुखम्। विरराम सभामध्ये स्तुत्वा च कमलापतिम्
शंकरस्य वचः श्रुत्वा प्रहस्य जगदीश्वरः। हितं[1] च नीतिवचनं प्रवक्तुमुपचक्रमे ६३।

विष्णुरुवाच—

सुपुण्यकव्रतं सारं सतीसंतानहेतवे। स्वामिसौभाग्यबीजं च पत्नी ते कर्तुमिच्छति॥६४।
सर्वसाध्यं दुराराध्यं सर्वकामफलप्रदम्। सुखदं सुखसारं च मोक्षदं पार्वतीश्वर. ६५॥
सर्वेश्वरो व्रतपरो व्रताराध्यो गुणात्परः। गोलोकनाथो भगवान्पूर्णब्रह्म सनातन। ६६॥
आत्मा साक्षिस्वरूपश्च ज्योतीरूप सनातनः। निराश्रयश्च निर्लिप्तो निरुपाधिर्निरामयः
भक्तप्राणश्च भक्तेशो भक्तानुग्रहकारकः। दुराराध्यो हि योऽन्येषां भक्तानामतिसाधकः
भक्त्यधीनो हि भगवान्सर्वसिद्धो हि निष्कलः। ते यस्य च कलाः पुंसो ब्रह्मविष्णुमहेश्वराः
महान्विराड्यदंशश्च निर्लिप्तः प्रकृतेः परः। अध्येयो निग्रहश्चोग्रो भक्तानुग्रहविग्रहः॥
उग्रग्रहो ग्रहाणां च ग्रहनिग्रहकारक। त्रिकोटिजन्ममध्ये च न[2] साध्यो भवता विना॥
लब्ध्वा हि भारते जन्म हरिभक्तिं लभेन्नरः। सेवनं क्षुद्रदेवानां कृत्वा सप्तसु जन्मसु॥
सूर्यमन्त्रमवाप्नोति केवलं स तदाशिषा॥ ७१॥
सूर्यमन्त्रं समाराध्य त्रिषु जन्मसु भारते प्राप्नोति शैवं मन्त्रं च सर्वदं मानवो मुदा॥
संसेव्य परया भक्त्या त्वामेवं सप्तजन्मसु। प्राप्नोति मायामन्त्रं च त्वत्पदाब्जप्रसादतः
शतजन्मसु चाऽऽराध्य मायां नारायणीं पराम्। नारायणकलां सेव्यां समवाप्नोति मानवः
कलां निषेव्य वर्षेऽत्र पुण्यक्षेत्रे सुदुर्लभे। कृष्णभक्तिमवाप्नोति भक्तसंसर्गहैतुकीम्॥
संप्राप्य भक्तिं निष्पक्कां भ्रामंभ्रामं च भारते। प्राप्नोति परिपक्वां च भक्तिं भक्तनिषेवया
तदा भक्तप्रसादेन देवानामाशिषा शिव। श्रीकृष्णमन्त्रं प्राप्नोति निर्वाणफलदं परम्।
कृष्णव्रतं कृष्णमन्त्रं सर्वकामफलप्रदम्। कृष्णतुल्यो भवेद्भक्तश्चिरं कृष्णनिषेवया॥
महति प्रलये पातः सर्वेषां वै सुनिश्चितम्। न पातः कृष्णभक्तानां साधूनामविनाशिनाम्
अविनाशिनि गोलोके मोदन्ते कृष्णकिंकराः। हसन्ति ते सुनिश्चिन्ता देवान्ब्रह्मादिकाञ्छिव
त्वं संहर्ता च सर्वेषां न भक्तानां महेश्वर। माया मोहयते सर्वान्भक्तान्न कृपया मम॥
माया नारायणी माता सर्वेषां कृष्णभक्तिदा। न कृष्णभक्तिं प्राप्नोति विना मायानिषेवणम्
सा च नारायणी माया मूलप्रकृतिरीश्वरी। कृष्णप्रिया कृष्णभक्ता कृष्णतुल्याऽविनाशिनी
सा च तेजःस्वरूपा च स्वेच्छाविग्रहधारिणी। आविर्भूता च देवानां तेजसाऽसुरनिग्रहे॥

---

१ ख. 'तं मितं च व'। २ क. 'न्यग्रो नि'। ३ क. 'न्मसाध्यश्च न साध्यो भारते वि०।

निहत्य दैत्यसंघांश्च दक्षपत्न्यां च भारते । ललाभ दक्षतपसा जन्म चानेकजन्मनः ॥
त्यक्त्वा देहं पितुर्यज्ञे सा सती तव निन्दया । जगाम देवी गोलोकं कृष्णशक्तिः सनातनी
गृहीत्वा विग्रहं तस्या गुणरूपाश्रयं परम् । भ्रामंभ्रामं भारते त्वं विषण्णोऽभूः पुरा हर ॥
प्रबोधितो मया त्वं च श्रीशैलेषु सरित्तटे । ललाभ जन्म सा शैलकान्तायामचिरेण च ॥
करोतु पुण्यकं साध्वी सुव्रता सुव्रतं शिवा । राजसूयसहस्राणां पुण्यं शंकर पुण्यके ॥
राजसूयसहस्राणां व्रते यत्र धनव्ययः । न साम्यं सर्वसाध्वीनां व्रतमेतत्त्रिलोचन ॥९०॥
स्वयं गोलोकनाथश्च पुण्यकस्य प्रभावतः । पार्वतीगर्भजातश्च तव पुत्रो भविष्यति ॥
स्वयं देवगणानां स यस्मादीशः कृपानिधिः । गणेश इति विख्यातो भविष्यति जगत्त्रये ॥
यस्य स्मरणमात्रेण विघ्ननाशो भवेद्ध्रुवम् । जगतां हेतुनाऽनेन विघ्ननिघ्नाभिधो विभुः ॥
नानाविधानि द्रव्याणि यस्माद्देयानि पुण्यके । भुक्त्वा लम्बोदरत्वं च तेन लम्बोदरः स्मृतः
शनिदृष्ट्या शिरश्छेदाद्गजवक्त्रेण योजितः । गजाननः शिशुस्तेन सर्वेषां सर्वसिद्धिदः ॥
दन्तभङ्गः परशुना पर्शुरामस्य वै यतः । हेतुना तेन विख्यातश्चैकदन्ताभिधः शिशुः ॥
पूज्यश्च सर्वदेवानामस्माकं जगतां विभुः । सर्वाग्रे पूजनं तस्य भविता मद्वरेण वै ॥९७॥
पूजासु सर्वदेवानामग्रे संपूज्य तं जनः । पूजाफलमवाप्नोति निर्विघ्नेन वृथाऽन्यथा ॥९८॥
गणेशं च दिनेशं च विष्णुं शंभुं हुताशनम् । दुर्गामेतान्संनिषेव्य पूजयेद्देवतान्तरम् ॥
गणेशपूजने विघ्नं निर्मूलं जगतां भवेत् । निर्व्याधिः सूर्यपूजायां शुचिः श्रीविष्णुपूजने ॥
मोक्षश्च पापनाशश्च यशश्चैश्वर्यमुत्तमम् । तत्त्वज्ञानं सुतत्त्वानां बीजं शंकरपूजनात् ॥
सुबुद्धिसुखीसद्भूमि तत्पूजाबन्धुकारणम् । निवने संस्तुनाऽतीव ज्ञानमृत्युं लभेन्नरः १०१
स्वबुद्धिशुद्धिजननं कीर्तितं वह्निपूजनम् । विधिसंस्कृतवह्नेस्तु पूजातो ज्ञानतो मृतिः ॥
दाता भोक्ता च भवति शंकराग्निनिषेवणात् । हरिभक्तिप्रदं चैव परं दुर्गार्चनं शिवम् ॥
विपरीतं त्रिजगतामेतेषां पूजनं विना । एवं क्रमो महादेव कल्पे कल्पेऽस्ति निश्चितम् ॥
एते शश्वद्विद्यमाना नित्याः सृष्टिपरायणाः । आविर्भावतिरोभावौ चैतेषामीश्वरेच्छया ॥
इत्युक्त्वा श्रीहरिस्तत्र विरराम सभातले । प्रहृष्टा देवता विप्राः पार्वत्या सह शंकरः ॥

इति श्रीब्रह्म० महा० गणेशख० नारदना० पुण्यकव्रताज्ञाग्रहणं
नाम षष्ठोऽध्यायः ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

---

१ ख. सुतुसीनां ।

नारायण उवाच—

हरेराज्ञां समादाय हरः संहृष्टमानसः । उवाच पार्वतीं प्रीत्या हरिसंलापमङ्गलम् ॥ १ ॥
शिवाज्ञां च समादाय शिवा संहृष्टमानसा । वाद्यं च वादयामास मङ्गलं मङ्गलव्रते ॥ २ ॥
सुस्नाता सुदती शुद्धा बिभ्रती धौतवाससी । संस्थाप्य रत्नकलशं शुक्लधान्योपरि स्थिरम्
आम्रपल्लवसंयुक्तं फलाक्षतसुशोभितम् । चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितम् ॥ ४ ॥
रत्नासनस्था रत्नाढ्या रत्ने द्रवसुता सती । रत्नसिंहासनस्थांश्च संपूज्य मुनिपुंगवान् ॥
रत्नसिंहासनस्थं च संपूज्य सुपुरोहितम् । चन्दनागुरुकस्तूरीरत्नभूषणभूषितम् ॥ ६ ॥
संस्थाप्य पुरतो भक्त्या दिक्पालान्रत्नभूषितान् । देवान्सर्वांश्च नागांश्च समर्च्य विधिबोधितम्
समर्च्य परया भक्त्या ब्रह्मविष्णुमहेश्वरान् । चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितान् ॥
वह्निशुद्धैः सुवस्त्रैश्च सद्रत्नैर्भूषणैस्तथा । पूजाद्रव्यैश्च विविधैः पूजिताः पुण्यके मुने ॥
समारेभे व्रतं देवी स्वस्तिवाचनपूर्वकम् । आवाह्याभीष्टदेवं तं श्रीकृष्णं मङ्गले घटे ॥ १० ॥
भक्त्या ददौ क्रमेणैव चोपचारांस्तु षोडश । यानि व्रते विधेयानि देयानि विविधानि च
प्रददौ तानि सर्वाणि प्रत्येकं फलदानि च । व्रतोक्तमुचितं च दुर्लभं भुवनत्रये ॥ १२ ॥
तच्च सर्वं ददौ भक्त्या सुव्रते सुव्रता सती । दत्त्वा द्रव्याणि सर्वाणि वेदमन्त्रेण सा सती
होमं च कारयामास त्रिलक्षं तिलसर्पिषा । ब्राह्मणान्भोजयामास पूजयित्वाऽतिथींस्तथा ॥
भोजयामास सा देवी सुव्रते सुव्रता सती । प्रत्यहं सविधानं च चक्रे सा पूर्णवत्सरम्
समाप्तिदिवसे विप्रस्तामुवाच पुरोहितः । सुव्रते सुव्रते मह्यं देहि त्वं पतिदक्षिणाम् ॥
इति तद्वचनं श्रुत्वा विलप्य सुरसंसदि । मूर्छां प्राप महामाया मायामोहितचेतसा ॥
तां च ते मूर्छितां दृष्ट्वा प्रहस्य मुनिपुंगवाः । शंकरं प्रेषयामासुर्ब्रह्मा विष्णुश्च नारद ॥
संप्रार्थितः सभामध्ये शिवां बोधयितुं तदा । शिवः समुद्यमं चक्रे प्रवक्तुं वदतां वरः

महादेव उवाच—

उत्तिष्ठ भद्रे भद्रं ते भविष्यति न संशयः । सांप्रतं चेतनं कृत्वा मदीयं वचनं शृणु ॥
शिवः शिवां तामित्युक्त्वा शुष्ककण्ठौष्ठतालुकाम् । वक्षसि स्थापयामास कारयामास चेतनाम् ॥ २० ॥
हितं सत्यं मितं सर्वं परिणामसुखावहम् । यशस्करं च फलदं प्रवक्तुमुपचक्रमे ॥ २१ ॥
शृणु देवि प्रवक्ष्यामि यद्वेदेन निरूपितम् । सर्वसंमतमिष्टं च धर्मार्थं धर्मसंसदि ॥ २२ ॥
सर्वेषां कर्मणां देवि सारभूता च दक्षिणा । यशोदा फलदा नित्यं धर्मिष्ठे धर्मकर्मणि ॥
दैवं वा पैतृकं वाऽपि नित्यं नैमित्तिकं प्रिये । यत्कर्म दक्षिणाहीनं तत्सर्वं निष्फलं भवेत्

दाता च कर्मणा तेन कालसूत्रं व्रजेद्ध्रुवम् । देहान्ते दैन्यमाप्नोति शत्रुणा परिपीडितः
दक्षिणा विप्रमुद्दिश्य तत्काले तु न दीयते । तन्मुहूर्ते व्यतीते तु दक्षिणा द्विगुणा भवेत्
चतुर्गुणा दिनातीते पक्षे शतगुणा भवेत् । मासे पञ्चशतघ्ना स्यात्षण्मासे तच्चतुर्गुणा ॥
संवत्सरे व्यतीते तु कर्म तन्निष्फलं भवेत् । दाता च नरकं याति यावद्वर्षसहस्रकम् ॥
पुत्रपौत्रधनैश्वर्यं क्षयमाप्नोति पातकात् । धर्मो नष्टो भवेत्तस्य धर्महीने च कर्मणि ॥

विष्णुरुवाच—

रक्षस्व धर्मं धर्मिष्ठे धर्मज्ञे धर्मकर्मणि । सर्वेषां च भवेद्रक्षा स्वधर्मपरिपालने ॥ २९ ॥

ब्रह्मोवाच—

यश्च केन निमित्तेन न धर्मं परिरक्षति । धर्मे नष्टे च धर्मज्ञे तस्य कर्ता विनश्यति ॥

धर्म उवाच—

मां रक्ष यत्नतः साध्वि प्रदाय पतिदक्षिणाम् । मयि स्थिते महासाध्वि सर्वं भद्रं भविष्यति

देवा ऊचुः—

धर्मं रक्ष महासाध्वि कुरु पूर्णं व्रतं सति । वयं तव व्रते पूर्णे कुर्मस्त्वां पूर्णमानसाम् ॥

मुनय ऊचुः—

कृत्वा साध्वि पूर्णहोमं देहि विप्राय दक्षिणाम् । स्थितेऽस्मासु भुवि ते किमभद्रं भविष्यति

सनत्कुमार उवाच—

शिवे शिवं देहि मह्यं न चेद्व्रतफलं त्यज । सुचिरं संचितस्यापि स्वात्मनस्तपसः फलम्
कर्मण्यदक्षिणे साध्वि यागस्याहं तु तत्फलम् । प्राप्स्यामि यजमानस्य संपूर्णं कर्मणः फलम्

पार्वत्युवाच—

किं कर्मणा मे देवेशाः किं मे दक्षिणया मुने किं पुत्रेण च धर्मेण यत्र भर्ता च दक्षिणा
वृक्षार्चने फलं किं वै यदि भूमिर्न चार्च्यते । गते च कारणे कार्यं कुतः सस्यं कुतः फलम्
प्राणास्त्यक्ताः स्वेच्छया चेद्देहैः स्यात्किं प्रयोजनम् । दृष्टिशक्तिविहीनेन चक्षुषा किं प्रयो-
जनम् ॥ १८ ॥

शतपुत्रसमः स्वामी साध्वीनां च सुरेश्वराः । यदि भर्ता व्रते देयः किं व्रतेन सुतेन वा
भर्तुरंशश्च तनयः केवलं भर्तृमूलकः । यत्र मूलं भवेद्भ्रष्टं तद्वाणिज्यं च निष्फलम् ॥

विष्णुरुवाच—

पुत्रादपि परः स्वामी धर्मश्च स्वामिनः परः । नष्टे धर्मे च धर्मिष्ठे स्वामिना किं सुतेन वा

१ क. 'र्मशतं शुभे । २ क. 'स्य सर्वं वि' । ३ ख. धर्मज्ञे कि' ।

ब्रह्मोवाच—

स्वामिनश्च परो धर्मो धर्मात्सत्यं च सुव्रते । सत्यं संकल्पितं कर्म न तु भ्रष्टं कुरु व्रतम् ॥

पार्वत्युवाच—

निरूपितश्च वेदेषु स्वशब्दो धनवाचकः । तद्यस्यास्तीति स स्वामी वेदज्ञ शृणु मद्वचः

तस्य दाता सदा स्वामी न च स्वं स्वामितां लभेत् । अहोऽव्यवस्था भवतां वेदज्ञानाप्रबोधतः

धर्म उवाच—

पत्नी विनाऽन्यं स्वं साध्वि स्वामिनं दातुमक्षमा । दम्पती ध्रुवमेकाङ्गौ द्वयोर्दाने द्वकौ समौ

पार्वत्युवाच—

पिता ददाति जामात्रे स च गृह्णाति तत्सुताम् । न श्रुतं विपरीतं च श्रुतौ श्रुतिपरायणाः ॥

देवा ऊचुः—

बुद्धिस्वरूपा त्वं दुर्गे बुद्धिमन्तो वयं त्वया । वेदज्ञे वेदवादेषु के वा त्वां जेतुमीश्वराः ॥

निरूपिता पुण्यके तु व्रते स्वामी च दक्षिणा श्रुतौ श्रुतो यः स धर्मो विपरीतो ह्यधर्मकः

पार्वत्युवाच —

केवलं वेदमाश्रित्य कः करोति विनिर्णयम् । बलवाँल्लौकिको वेदाल्लोकाचारं च कस्त्यजेत्

वेदे प्रकृतिपुंसोश्च गरीयान्पुरुषो ध्रुवम् । निबोधत सुराः प्राज्ञा बलाऽहं कथयामि किम्

बृहस्पतिरुवाच—

न पुमांसं विना सृष्टिर्न साध्वि प्रकृतिं विना । श्रीकृष्णश्च द्वयोः स्रष्टा समौ प्रकृतिपूरुषौ

पार्वत्युवाच—

सर्वस्रष्टा च यः कृष्णः सोंऽशेन सगुणः पुमान् । पुमान्गरीयान्प्रकृतेस्तस्यैव न ततश्च सा

एतस्मिन्नन्तरे देवा मुनयस्तत्र संसदि । रत्नेन्द्रसारग्चितमाकाशे ददृशू रथम् ॥ १३ ॥

पार्षदैः संपरिवृतं सर्वैः श्यामैश्चतुर्भुजैः । वनमालापरिवृतै रत्नभूषणभूषितैः ॥ १४ ॥

अवरुह्य ततो यानादाजगाम सभातलम् । तुष्टुवुस्तं सुरेन्द्रास्ते देवं वैकुण्ठवासिनम् ॥

शङ्खचक्रगदापद्मधरमीशं चतुर्भुजम् । लक्ष्मीसरस्वतीकान्तं शान्तं तं सुमनोहरम् ॥

सुखदृश्यमभक्तानामदृश्यं कोटिजन्मभिः । कोटिकन्दर्पलावण्यं कोटिचन्द्रसमप्रभम् ॥

अमूल्यरत्नरचितचारुभूषणभूषितम् । सेव्यं ब्रह्मादिदेवैश्च सेवकैः सततं स्तुतम् ॥

तद्धाता संपरिच्छन्नैर्वेष्टितं च सुरर्षिभिः । वासयामासुस्तं ते च रत्नसिंहासने वरे ॥

---

१ क. ॰ज्ञानमबोधताम् । २ क. ग. कृष्ण. प्रकृते. स्रष्टा सों॰ । ३ ख. मुदा ।

तं प्रणम्य च शिरसा ब्रह्मशक्तिशिवादयः । संपुटाञ्जलयः सर्वे पुलकाङ्काश्रुलोचनाः ॥
सस्मितस्तांश्च पप्रच्छ सर्वं मधुरया गिरा । प्रबोधितः सुबोधज्ञः प्रवक्तुमुपचक्रमे ॥६१॥

**नारायण उवाच—**

सह बुद्धया बुद्धिमन्तो न वक्तुमुचितं सुरा । सर्वे शक्त्या यया विश्वे शक्तिमन्तो हि जीविनः ॥ ६२ ॥

ब्रह्मादितृणपर्यन्तं सर्वं प्राकृतिकं जगत् । सत्यं सत्यं विना मां च मया शक्तिः प्रकाशिता
आविर्भूता च सा मत्तः सृष्टौ देवी मदिच्छया । तिरोहिता च साऽशेषे सृष्टिसंहरणे मयि
प्रकृतिः सृष्टिकर्त्री च सर्वेषां जननी परा । मम तुल्या च मन्माया तेन नारायणी स्मृता
सुचिरं तपसा तप्तं शंभुना ध्यायता च माम् । तेन तस्मै मया दत्ता तपसां फलरूपिणी
व्रतं च लोकशिक्षार्थमस्या न स्वार्थमेव च । स्वयं व्रतानां तपसां फलदात्री जगत्त्रये ॥
मायया मोहिताः सर्वे किमस्या वास्तवं व्रतम् । साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः
सुरेश्वरा मदंशाश्च ब्रह्मशक्तिमहेश्वराः । कलाः कलांशरूपाश्च जीविनश्च सुरादयः ॥
मृदा विना घटं कर्तुं कुलालश्च यथाऽक्षमः । विना स्वर्णं स्वर्णकारः कुण्डलं कर्तुमक्षमः
विना शक्त्या तथाऽहं च स्वसृष्टिं कर्तुमक्षमः । शक्तिप्रधाना सृष्टिश्च सर्वदर्शनसंमता ॥
अहमात्मा हि निर्लिप्तोऽदृश्यः साक्षी च देहिनाम् । देहाः प्राकृतिकाः सर्वे नश्वराः पाञ्चभौतिकाः ॥ ७२ ॥

अहं नित्यः शरीरी च भानुविग्रहविग्रहः । सर्वाधारा सा प्रकृतिः सर्वात्माऽहं जगत्सु च ॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः । पञ्चप्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी ॥
मेधानिद्रादयश्चैताः सर्वाश्च प्रकृतेः कलाः । सा च शैलेन्द्रकन्यैषा त्विति वेदे निरूपितम् ॥
अहं गोलोकनाथश्च वैकुण्ठेशः सनातनः । गोपीगोपैः परिवृतस्तत्रैव द्विभुजः स्वयम् ॥
चतुर्भुजोऽत्र देवेशो लक्ष्मीशः पार्षदैर्वृतः ॥ ७६ ॥

ऊर्ध्वं परश्च वैकुण्ठात्पञ्चाशत्कोटियोजनात् । ममाऽऽश्रयश्च गोलोको यत्राहं गोपिकापतिः
व्रतसाध्यः स द्विभुजः स च तत्फलदायकः । यद्रूपं चिन्तयेद्यो हि तच्च तत्फलदायकः
व्रतं पूर्णं कुरु शिवे शिवं दत्त्वा च दक्षिणाम् । पुनः समुचितं मूल्यं दत्त्वा नाथं ग्रहीष्यसि
विष्णुदेहा यथा गावो विष्णुदेहस्तथा शिवः । द्विजाय दत्त्वा गोमूल्यं गृहाण स्वामिनं शुभे
यज्ञपत्नीं यथा दातुं क्षमः स्वामी सदैव तु । तथा सा स्वामिनं दातुमीश्वरीति श्रुतेर्मतम्
इत्युक्त्वा स सभामध्ये तत्रैवान्तरधीयत । दृष्ट्वा ते सा च संहृष्टा दक्षिणां ८०

१ क. शक्ति॰ । २ क. कमलाप॰ ।

कृत्वा शिवा पूर्णहोमं सा शिवं दक्षिणां ददौ । स्वस्तीत्युक्त्वा च जग्राह कुमारो देवसंसदि ॥
उवाच दुर्गा संत्रस्ता शुष्ककण्ठौष्ठतालुका । कृताञ्जलिपुटा विप्रं हृदयेन विदूयता ॥८४॥

पार्वत्युवाच—

गोमूल्यं मत्पतिसममिति वेदे निरूपितम् । गवां लक्षं प्रयच्छामि देहि मत्स्वामिनं द्विज ॥
तदा दास्यामि विप्रेभ्यो दानानि विविधानि च । आत्महीनो हि देहश्च कर्म किं कर्तुमीश्वरः

सनत्कुमार उवाच—

गवां लक्षेण मे देवि विप्रस्य किं प्रयोजनम् । दत्तस्यामूल्यरत्नस्य गवां प्रत्यर्पणेन च ॥
स्वस्य स्वस्य स्वयं दाता लोकः सर्वो जगत्रये । कर्तुरेवेप्सितं कर्म भवेत्किं वा परेच्छया ॥
दिगम्बरं पुरः कृत्वा भ्रमिष्यामि जगत्रयम् । बालकानां बालिकानां समूहास्मितकारणम् ॥
इत्युक्त्वा ब्रह्मणः पुत्रो गृहीत्वा शंकरं मुने । संनिधौ वासयामास तेजस्वी देवसंसदि ॥
दृष्ट्वा शिवं गृह्यमाणं कुमारेण च पार्वती । समुद्यता तनुं त्यक्तुं शुष्ककण्ठौष्ठतालुका ॥९१॥
विचिन्त्य मनसा साध्वीत्येवमेव दुरत्ययम् । न दृष्टोऽभीष्टदेवश्च न च प्राप्तं फलं व्रते ॥
एतस्मिन्नन्तरे देवाः पार्वतीसहितास्तदा । सद्यो ददृशुराकाशे तेजसां निकरं परम् ९३॥
कोटिसूर्यप्रभोर्ध्वं च प्रज्वलन्तं दिशो दश । कैलासशैलं पुरतः सर्वदेवादिभिर्युतम् ॥९४॥
सर्वाश्रयं गगनाच्छन्नं विस्तीर्णं मण्डलाकृतिम् । तच्च दृष्ट्वा भगवतस्तुष्टुवुस्ते क्रमेण च ।

विष्णुरुवाच—

ब्रह्माण्डानि च सर्वाणि यल्लोमविवरेषु च । सोऽयं ते षोडशांशश्च के वयं यो महाविराट् ॥

ब्रह्मोवाच—

वेदोपयुक्तं दृश्यं यत्प्रत्यक्षं द्रष्टुमीश्वर । स्तोतुं तद्वर्णितुमहं शक्तः किं स्तौमि तत्परः ॥

महादेव उवाच—

ज्ञानाधिष्ठातृदेवोऽहं स्तौमि ज्ञानपरं च किम् । सर्वानिर्वचनीयं तं त्वां च स्वेच्छामयं विभुम्

धर्म उवाच—

अदृश्यमवतारेषु यद्दृश्यं सर्वजन्तुभिः । किं स्तौमि तेजोरूपं तद्भक्तानुग्रहविग्रहम् ॥

देवा ऊचुः—

के वयं त्वत्कलांशाश्च किं वा त्वां स्तोतुमीश्वराः । स्तोतुं न शक्ता वेदा यं न च शक्ता सरस्वती ॥ १०० ॥

मुनय ऊचुः—

---

१ ख. वल्गुना । २ क. ददाति विप्रोऽमूल्यं च गवां प्रत्यर्पणेन कः ।

वेदान्पठित्वा विद्वांसो वयं किं वेदकारणम्। स्तोतुमीशा न वाणी च त्वां वाङ्मनसयोः परम्॥ १०१॥

सरस्वत्युवाच—

वागधिष्ठातृदेवीं मां वदन्ते वेदवादिनः। किंचिन्न शक्ता त्वां स्तोतुमहो वाङ्मनसोः परम्

सावित्र्युवाच—

वेदप्रसूरहं नाथ सृष्टा त्वत्कलया पुरा। किं स्तौमि स्त्रीस्वभावेन सर्वकारणकारणम्॥

लक्ष्मीरुवाच —

त्वदंशविष्णुकान्ताऽहं जगत्पोषणकारिणी। किं स्तौमि त्वत्कलासृष्टा जगतां बीजकारणम्

हिमालय उवाच—

हसन्ति सन्तो मां नाथ कर्मणा स्थावरं परम्। स्तोतुं समुद्यतं क्षुद्रः किं स्तौमि स्तोतुमक्षमः

क्रमेण सर्वे तं स्तुत्वा देवा विरेमुर्मुने। देव्यश्च मुनयः सर्वे पार्वती स्तोतुमुद्यता॥

धौतवस्त्रा जटाभारं बिभ्रती सुव्रता व्रते। प्रेरिता परमात्मानं व्रताराध्यं शिवेन च॥

ज्वलदग्निशिखारूपा तेजोमूर्तिमती सती। तपसां फलदा माता जगतां सर्वकर्मणाम्॥

पार्वत्युवाच—

कृष्ण जानासि मां भद्र नाहं त्वां ज्ञातुमीश्वरी। के वा जानन्ति वेदज्ञा वेदा वा वेदकारकाः॥ १०९॥

त्वदंशास्त्वां न जानन्ति कथं ज्ञास्यन्ति ते कलाः। त्वं चापि तत्त्वं जानासि किमन्ये ज्ञातुमीश्वराः॥ ११०॥

सूक्ष्मात्सूक्ष्मतमोऽव्यक्तः स्थूलात्स्थूलतमो महान्। विश्वस्त्वं विश्वरूपश्च विश्वबीजं सनातनः॥ १११॥

कार्यं त्वं कारणं त्वं च कारणानां च कारणम्। तेजःस्वरूपो भगवान्निर्विकारो निराश्रयः

निर्लिप्तो निर्गुणः साक्षी स्वात्मारामः परात्परः। प्रकृतीशो विराड्बीजं विराड्रूपस्त्वमेव च॥ ११३॥

सगुणस्त्वं प्राकृतिकः कलया सृष्टिहेतवे। प्रकृतिस्त्वं पुमांस्त्वं च त्वदन्यो न कश्चिद्भवेत्

जीवस्त्वं साक्षिणो भोगी स्वात्मनः प्रतिबिम्बकम्। कर्म त्वं कर्मबीजं त्वं कर्मणां फलदायकः

ध्यायन्ति योगिनस्तेजस्त्वदीयमशरीरि यत्। केचिच्चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम्

वैष्णवाश्चैव साकारं कमनीयं मनोहरम्। शङ्खचक्रगदापद्मधरं पीताम्बरं परम्॥ ११७॥

द्विभुजं कमनीयं च किशोरं श्यामसुन्दरम्। शान्तं गोपाङ्गनाकान्तं रत्नभूषणभूषितम्॥

---

१ क. काम॰।

एवं तेजस्विनं भक्ताः सेवन्ते संततं मुदा। ध्यायन्ति योगिनो यत्त्वत्कुतस्तेजस्विनं विना।
तत्तेजो बिभ्रतां देव देवानां तेजसा पुरा। आविर्भूताऽसुराणां च वधाय ब्रह्मणा स्तुता॥
नित्या तेजःस्वरूपाऽहं धृत्वा वै विग्रहं विभो। स्त्रीरूपं कमनीयं च विधाय समुपस्थिता
मायया तव मायाऽहं मोहयित्वाऽसुरान्पुरा। निहत्य सर्वाञ्छैलेन्द्रमगमं तं हिमालयम्॥
ततोऽहं संस्तुता देवैस्तारकाक्षेण पीडितैः। अभवं दक्षजायायां शिवस्त्री पूर्वजन्मनि॥
त्यक्त्वा देहं दक्षयज्ञे शिवाऽहं शिवनिन्दया। अभवं शैलजायायां शैलाधीशस्य कर्मणा
अनेकतपसा प्राप्तः शिवश्चात्रापि जन्मनि। पाणिं जग्राह मे योगी प्रार्थितो ब्रह्मणा विभुः॥
शृङ्गारजं च तत्तेजो नालभं देवमायया। स्तौमि त्वामेव तेनेश पुत्रदुःखेन दुःखिता॥
व्रते भवद्विधं पुत्रं लब्धुमिच्छामि सांप्रतम्। देवेन विहिता वेदे साङ्गे स्वस्वामिदक्षिणा॥
श्रुत्वा सर्वं कृपासिन्धो कृपां मे कर्तुमर्हसि। इत्युक्त्वा पार्वती तत्र विरराम च नारद॥
भारते पार्वतीस्तोत्रं यः शृणोति सुसंयतः। सत्पुत्रं लभते नूनं विष्णुतुल्यपराक्रमम्॥
संवत्सरं हविष्याशी हरिमभ्यर्च्य भक्तितः। सुपुण्यकव्रतफलं लभते नात्र संशयः॥
कृष्णस्तोत्रमिदं ब्रह्मन्सर्वसंपत्तिवर्धनम्। सुखदं मोक्षदं सारं स्वामिसौभाग्यवर्धनम्॥
सर्वसौन्दर्यबीजं च यशोराशिविवर्धनम्। हरिभक्तिप्रदं तत्त्वज्ञानबुद्धिसुखप्रदम्॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० पुण्यकव्रते पतिदाने पार्वतीकृतं श्रीकृष्णस्तोत्रकथनं नाम सप्तमोऽध्यायः॥७॥

=====

## अथाष्टमोऽध्यायः।

---

नारायण उवाच--

पार्वत्याः स्तवनं श्रुत्वा श्रीकृष्णः करुणानिधिः। स्वरूपं दर्शयामास सर्वादृश्यं सुदुर्लभम्
स्तुत्वा देवी ध्यानपरा कृष्णसंलग्नमानसा। ददर्श तेजसां मध्ये स्वरूपं सर्वमोहनम्॥
सद्रत्नसाररचिते हीरकेण परिष्कृते। युक्ते माणिक्यमालाभी रत्नपूर्णे मनोरमे॥ ३॥
पीतांशुकं वह्निशुद्धं वरं वंशकरं परम्। वनमालागलं श्यामं रत्नभूषणभूषितम्॥ ४॥
किशोरवयसं चित्रवेषं वै चन्दनाङ्कितम्। चारुस्मितास्यमीड्यं तच्छारदेन्दुविनिन्दकम्॥
मालतीमाल्यसंयुक्तं केकिपिच्छावचूडकम्। गोपाङ्गनापरिवृतं राधावक्षःस्थलोज्ज्वलम्॥
कोटिकन्दर्पलावण्यलीलाधाममनोहरम्। अतीव हृष्टं सर्वेष्टं भक्तानुग्रहकारकम्॥ ७॥

---

१ क. शैलजा च स्वक°।

दृष्ट्वा रूपं रूपवती पुत्रं तदनुरूपकम् । मनसा वरयामास वरं संप्राप्य तत्क्षणम् ॥८॥
वरं दत्त्वा वरेशस्तु यद्यन्मनसि वाञ्छितम् । दत्त्वाऽभीष्टं सुरेभ्यश्च तत्तेजोऽन्तरधीयत
कुमारं बोधयित्वा तु देवा देव्यै दिगम्बरम् दर्दुर्निरुपमं तत्र प्रहृष्टायै कृपान्विताः ॥
ब्राह्मणेभ्यो ददौ दुर्गा रत्नानि विविधानि च सुवर्णानि च भिक्षुभ्यो बन्दिभ्यो विश्व-
वन्दिता ॥ ११ ॥
ब्राह्मणान्भोजयामास देवान्वै पर्वतांस्तथा । शंकरं पूजयामास चोपहारैरनुत्तमैः ॥१२॥
दुन्दुभिं वादयामास कारयामास मङ्गलम् । संगीतं गापयामास हरिसंबन्धि सुन्दरम् ॥
व्रतं समाप्य सा दुर्गा दत्त्वा दानानि सस्मिता । सर्वांश्च भोजयित्वा तु बुभुजे स्वामिना सह
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् । क्रमात्प्रदाय सर्वेभ्यो बुभुजे तेन कौतुकात् ॥
पयःफेननिभां शय्यां रम्यां सद्रत्नमञ्चके । पुष्पचन्दनसंयुक्तां कस्तूरीकुङ्कुमान्विताम् ॥
रहसि स्वामिना सार्धं सुष्वाप परमेश्वरी ॥ १६ ॥
कैलासस्यैकदेशे च रम्ये चन्दनकानने । सुगन्धिकुसुमाढ्येन वायुना सुरभीकृते॥१७॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुताश्रये । व्यहार्षीत्सा सुरपिका तत्र तेन सहाम्बिका ॥
रेतःपतनकाले च स विष्णुर्विष्णुमायया । विधाय विप्ररूपं तदाजगाम रतेर्गृहम् ।१९॥
जटावन्तं विना तैलं कुचेलं भिक्षुकं मुने । अतीव शुक्लदशनं तृष्णया परिपीडितम्॥२०॥
अतीव कृशगात्रं च बिभ्रत्तिलकमुज्ज्वलम् । बहुकाकुस्वरं दीनं दैन्यात्कुत्सितमूर्तिमत् ॥
आजुहाव महादेवमतिवृद्धोऽन्नयाचकः । दण्डावलम्बनं कृत्वा रतिद्वारेऽतिदुर्बलः ॥

ब्राह्मण उवाच—

किं करोषि महादेव रक्ष मां शरणागतम् । सप्तरात्रिव्रतेऽतीते पारणाकाङ्क्षिणं क्षुधा ॥
किं करोषि महादेव हे तात करुणानिधे । पश्य वृद्धं जराग्रस्तं तृषया परिपीडितम् ॥
मातरुत्तिष्ठ मेऽन्नं त्वं प्रयच्छाद्य शिवं जलम् । अनन्तरत्नोद्भवजे रक्ष मां शरणागतम् ॥
मातर्मातर्जगन्मातरोहि नाहं जगद्बहिः । सीदामि तृषया कस्मात्स्थितायामात्ममातरि ॥
इति काकुस्वरं श्रुत्वा शिवस्योत्तिष्ठतो मुने । पपात वीर्यं शय्यायां न योनौ प्रकृतेस्तदा
उत्तस्थौ पार्वती त्रस्ता सूक्ष्मवस्त्रं विधाय च । आजगाम बहिर्द्वारं पार्वत्या सह शंकरः ॥
ददर्श ब्राह्मणं दीनं जरया परिपीडितम् । वृद्धं लुलितगात्रं च बिभ्रतं दण्डमानतम् ॥
तपस्विनमशान्तं च शुष्ककण्ठोष्ठतालुकम् । कुर्वन्तं परया भक्त्या प्रणामं स्तवनं तयोः ॥
श्रुत्वा तद्वचनं तत्र नीलकण्ठः सुधोपमम् । उवाच परया प्रीत्या प्रसन्नस्तं प्रहस्य च ॥

१ क. रत्ननिर्मिताम् । २ क. °रोमि । ३ क. रोमि ४ क. रतिद्वा° । ५ क. भक्त्या प्र° ।

शंकर उवाच—

गृहं ते कुत्र विप्रर्षे वद वेदाविदां वर । किं नाम भवतः क्षिप्रं ज्ञातुमिच्छामि सांप्रतम् ॥

पार्वत्युवाच—

आगतोऽसि कुतो विप्र मम भाग्यादुपस्थितः । अद्य मे सफलं जन्म ब्राह्मणो मद्गृहेऽतिथिः

अतिथिः पूजितो येन त्रिजगतेन पूजितम् । तत्रैवाधिष्ठिता देवा ब्राह्मणा गुरवो द्विज ॥

तीर्थान्यतिथिपादेषु शश्वत्तिष्ठन्ति निश्चितम् । तत्पादधौततोयेन मिश्रितानि लभेद्गृही ॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । अतिथिः पूजितो येन स्वात्मशक्त्या यथोचितम्

महादानानि सर्वाणि कृतानि तेन भूतले । अतिथिः पूजितो येन भारते भक्तिपूर्वकम् ॥

नानाप्रकारपुण्यानि वेदोक्तानि च यानि वै । तानि वैऽतिथिसेवायाः कलां नार्हन्ति षोडशीं

अपूजितोऽतिथिर्यस्य भवनाद्विनिवर्तते । पितृदेवाग्नयः पश्चाद्गुरवो यान्त्यपूजिताः ॥

यानि कानि च पापानि ब्रह्महत्यादिकानि च तानि सर्वाणि लभते नाभ्यर्च्यातिथिमी-

प्सितम् ॥ ४० ॥

ब्राह्मण उवाच—

जानासि वेदान्वेदज्ञे वेदोक्तं कुरु पूजनम् । क्षुत्तृड्भ्यां पीडितो मातर्वचनं च श्रुतौ श्रुतम् ॥

व्याधियुक्तो निराहारो यदा वाऽनशनव्रती । मनोरथेनोपहारं भोक्तुमिच्छति मानवः ॥

पार्वत्युवाच—

भोक्तुमिच्छसि किं विप्र त्रैलोक्ये यत्सुदुर्लभम् । दास्यामि भोक्तुं त्वामद्य मज्जन्म सफलं

कुरु ॥ ४२ ॥

ब्राह्मण उवाच—

व्रते सुव्रतया सर्वमुपहारं समाहृतम् । नानाविधं मिष्टमिष्टं भोक्तुं श्रुत्वा समागतः ॥

सुव्रते तव पुत्रोऽहमग्रे मां पूजयिष्यसि । दत्त्वा मिष्टानि वस्तूनि त्रैलोक्ये दुर्लभानि च ॥

ताताः पञ्चविधाः प्रोक्ता मातरो विविधाः स्मृताः । पुत्रः पञ्चविधः साध्वि कथितो वेदवादिभिः

विद्यादाताऽन्नदाता च भयत्राता च जन्मदः । कन्यादाता च वेदोक्ता नराणां पितरः स्मृताः

गुरुपत्नी गर्भधात्री स्तनदात्री पितुःस्वसा । स्वसा मातुः सपत्नी च पुत्रभार्याऽन्नदायिका

भृत्यः शिष्यश्च पोष्यश्च वीर्यजः शरणागतः । धर्मपुत्राश्च चत्वारो वीर्यजो धनभागिति ॥

क्षुत्तृड्भ्यां पीडितो मातर्वृद्धोऽहं शरणागतः । सांप्रतं तव वन्ध्याया अनाथः पुत्र एव च ॥

पिष्टकं परमान्नं च सुपक्वानि फलानि च । नानाविधानि पिष्टानि कालदेशोद्भवानि च ॥

---

१ क. °णि नश्यन्ते नाभ्यर्च्याऽतिथिपूजनात् ।

पक्वान्नं स्वस्तिकं क्षीरमिक्षुमिक्षुविकारजम्। घृतं दधि च शाल्यन्नं घृतपक्वं च व्यञ्जनम्॥
लड्डुकानि तिलानां च मिष्टान्नैः सगुडानि च। समाज्ञातानि वस्तूनि सुधया तुल्यकानि च
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम्। जलं सुनिर्मलं स्वादु द्रव्याण्येतानि वासिनम्॥
द्रव्याणि यानि भुक्त्वा मे चारु लम्बोदरं भवेत्। अनन्तरत्नोद्भवजे तानि मह्यं प्रदास्यसि॥
स्वामी ते त्रिजगत्कर्ता प्रदाता सर्वसंपदाम्। महालक्ष्मीस्वरूपा त्वं सर्वैश्वर्यप्रदायिनी॥
रत्नसिंहासनं रम्यममूल्यं रत्नभूषणम्। वह्निशुद्धांशुकं चारु प्रदास्यसि सुदुर्लभम्॥
सुदुर्लभं हरेर्मन्त्रं हरौ भक्तिं दृढां सति। हरिप्रिया हरेः शक्तिस्त्वमेव सर्वदा स्थिता॥
ज्ञानं मृत्युंजयं नाम दातृशक्तिं सुखप्रदाम्। सर्वसिद्धिं च किं मातर्देयं स्वसुताय च॥
मनः सुनिर्मलं कृत्वा धर्मे तपसि संततम्। श्रेष्ठे सर्वं करिष्यामि न कामे जन्महेतुके॥
स्वत्रामात्कुरुते कर्म कर्मणो भोग एव च। भोगौ शुभाशुभौ ज्ञेयौ तौ हेतू सुखदुःखयोः॥
दुःखं न कस्माद्भवति सुखं वा जगदम्बिके। सर्वं स्वकर्मणो भोगस्तेन तद्विरतो बुधः॥
कर्मनिर्मूलयन्त्येव सन्तो हि सततं मुदा। हरिभावनबुद्ध्या च तपसा भक्तसङ्गतः॥
इन्द्रियद्रव्यसंयोगसुखं विध्वंसनावधि। हरिसंलापरूपं च सुखं तत्सार्वकालिकम्॥
हरिस्मरणशीलानां नाऽऽयुर्याति सतां सति। न तेषामीश्वरः कालो न च मृत्युंजयो ध्रुवम्
चिरं जीवन्ति ते भक्ता भारते चिरजीविनः। सर्वसिद्धिं च विज्ञाय स्वच्छन्दं सर्वगामिनः॥
जातिस्मरा हरेर्भक्ता जानते कोटिजन्मनः। कथयन्ति कथां जन्म लभन्ते स्वेच्छया मुदा॥
परं पुनन्ति ते पूतास्तीर्थानि स्वीयलीलया। पुण्यक्षेत्रेऽत्र सेवायै परार्थं च भ्रमन्ति ते॥
वैष्णवानां पदस्पर्शात्सद्यः पूता वसुंधरा। कालं गोदोहमात्रं तु तीर्थे यत्र वसन्ति ते॥
गुरोरास्याद्विष्णुमन्त्रः श्रुतौ यस्य प्रविशन्ति। तं वैष्णवं तीर्थपूतं प्रवदन्ति पुराविदः॥
पुरुषाणां शतं पूर्वमुद्धरन्ति शतं परम्। लीलया भारते भक्त्या सोदरान्मातरं तथा॥
मातामहानां पुरुषान्दश पूर्वान्दशापरान्। मातुः प्रसूमुद्धरन्ति दारुणाद्यमताडनात्॥
भक्तदर्शनमाश्लेषं मानवाः प्राप्नुवन्ति ये। ते स्नाताः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षिताः॥
न लिप्ताः पातकैर्भक्ताः संततं हरिमानसाः। यथाऽग्नयः सर्वभक्ष्या यथा द्रव्येषु वायवः॥
त्रिकोटिजन्मनामन्ते प्राप्नोति जन्म मानवम्। प्राप्नोति भक्तसङ्गं स मानुषे कोटिजन्मतः॥
भक्तपङ्क्त्या भवेद्भक्तेरङ्कुरो जीविनः सति। अभक्तदर्शनादेव स च प्राप्नोति शुष्कताम्॥
पुनः प्रफुल्लतां याति वैष्णवालापमात्रतः। अङ्कुरश्चाविनाशी च वर्धते प्रतिजन्मनि॥
तत्तरोर्वर्धमानस्य हरिदास्यं फलं सति। परिणामे भक्तिपाके पार्षदश्च भवेद्धरेः॥७८॥
महति प्रलये नाशो न भवेत्तस्य निश्चितम्। सर्वसृष्टेश्च संहारे ब्रह्मलोकस्य वेधसः॥

तस्मान्नारायणे भक्तिं देहि मामम्बिके सदा। न भवेद्विष्णुभक्तिश्च विष्णुमाये त्वया विना
तद्व्रतं लोकशिक्षार्थं तत्तपस्तव पूजनम्। सर्वेषां फलदात्री त्वं नित्यरूपा सनातनी॥
गणेशरूपः श्रीकृष्णः कल्पे कल्पे तवाऽऽत्मजः। त्वत्क्रोडमागतः क्षिप्रमित्युक्त्वाऽन्त-
र्धीयत॥ ८२॥
कृत्वाऽन्तर्धानमीशश्च बालरूपं विधाय सः। जगाम पार्वतीतल्पं मन्दिराभ्यन्तरस्थितम्॥
तल्पस्थे शिववीर्ये च मिश्रितः स बभूव ह। ददर्श गेहशिखरं प्रसूते बालको यथा॥
शुद्धचम्पकवर्णाभः कोटिचन्द्रसमप्रभः। सुखदृश्यः सर्वजनैश्चक्षूरश्मिविवर्धकः॥८५॥
अतीव सुन्दरतनुः कामदेवविमोहनः। मुखं निरुपमं बिभ्रच्छारदेन्दुविनिन्दकम्॥
सुन्दरे लोचने बिभ्रच्चारुपद्मविनिन्दके। ओष्ठाधरपुटं बिभ्रत्पक्वबिम्बविनिन्दकम्॥
कपालं च कपोलं च परमं सुमनोहरम्। नासाग्रं रुचिरं बिभ्रद्खगेन्द्रचञ्चुविनिन्दकम्॥
त्रैलोक्ये वै निरुपमं सर्वाङ्गं बिभ्रदुत्तमम्। शयानः शयने रम्ये प्रेरयन्हस्तपादकम्॥
इति श्रीब्रह्म० महा० गणेशख० नारदना० गणेशोत्पत्तिवर्णनं नामाष्टमोऽध्यायः॥८॥

====

अथ नवमोऽध्यायः।

---

**नारायण उवाच—**

द्विजे तिरोहिते शर्वाणी दुर्गा शंकरस्तदा। ब्राह्मणान्वेषणं कृत्वा बभ्राम परितो मुने॥

**पार्वत्युवाच—**

अये विप्रेन्द्रातिवृद्ध क्व गतोऽसि क्षुधातुरः। हे तात दर्शनं देहि प्राणान्वै रक्ष मे विभो
शिव शीघ्रं समुत्तिष्ठ ब्राह्मणान्वेषणं कुरु। क्षणमुन्मनसोरेव गतः प्रत्यक्षमावयोः॥
अगृहीत्वा गृहात्पूजां गृहिणोऽतिथिरीश्वर। यदि याति क्षुधार्तश्च तस्य किं जीवनं वृथा
पितरस्तस्य गृह्णन्ति पिण्डदानं च तर्पणम्। तस्याऽऽहुतिं न गृह्णाति वह्निः पुष्पं जलं सुराः
हव्यं पुष्पं जलं द्रव्यमशुचेश्च सुरापमम्। अमेध्यसदृशः पिण्डः स्नानं पुण्यनाशनम्॥
एतस्मिन्नन्तरे तत्र वागभूदाशरीरिणी। कैवल्ययुक्ता सा दुर्गा तां शुश्राव शुचाऽऽतुरा॥
शान्ता भव जगन्मातः स्वसुतं पश्य मन्दिरे। कृष्णं गोलोकनाथं तं परिपूर्णतमं परम्॥
सुपुण्यकव्रततरोः फलरूपं सनातनम्। यत्तेजो योगिनः शश्वद्ध्यायन्ति संततं मुदा॥
ध्यायन्ति वैष्णवा देवा ब्रह्मविष्णुशिवादयः। यस्य पूज्यस्य सर्वाग्रे कल्पे कल्पे च पूजनम्
यस्य स्मरणमात्रेण सर्वविघ्नो विनश्यति। पुण्यराशिस्वरूपं च तं सुतं पश्य मन्दिरे॥

कल्पे कल्पे ध्यायसि यं ज्योतीरूपं सनातनम् । पश्य त्वं मुक्तिदं पुत्रं भक्तानुग्रहविग्रहम् ॥
तव वाञ्छापूर्णबीजं तपःकल्पतरोः फलम् । सुन्दरं स्वसुतं पश्य कोटिकन्दर्पनिन्दकम् ॥
नायं विप्रः क्षुधार्तश्च विप्ररूपी जनार्दनः । किंवा विलापं कुरुषे क वा वृद्धः क चातिथिः
सरस्वती त्वेवमुक्त्वा विरराम च नारद ॥ १४ ॥
अन्तर्धानं चकाराऽऽशु श्रुत्वा शर्वाणी जगाम स्वालयं सती । ददर्श बालं पर्यङ्के शयानं सस्मितं मुदा ॥
पश्यन्तं गेहशिखरं शतचन्द्रसमप्रभम् । स्वप्रभापटलेनैव द्योतयन्तं महीतलम् ॥ १६ ॥
कुर्वन्तं भ्रमणं तल्पे पश्यन्तं स्वेच्छया मुदा । उमेति शब्दं कुर्वन्तं रुदन्तं तं स्तनार्थिनम् ॥
दृष्ट्वा तदद्भुतं रूपं त्रस्ता शंकरसंनिधिम् । गत्वा सोवाच गिरिशं सर्वमङ्गलमङ्गला ॥

पार्वत्युवाच —

गृहमागच्छ सर्वेश तपसां फलदायकम् । कल्पे कल्पे ध्यायसि यं तं पश्याऽऽगत्य मन्दिरे ॥
शीघ्रं पुत्रमुखं पश्य पुण्यबीजं महोत्सवम् । पुंनामनरकत्राणं कारणं भवतारणम् ॥
स्नानं च सर्वतीर्थेषु सर्वयज्ञेषु दीक्षणम् । पुत्रसंदर्शनस्यास्य कलां नार्हति षोडशीम् ॥
सर्वदानेन यत्पुण्यं क्ष्मावदक्षिणतश्च यत् । पुत्रदर्शनपुण्यस्य कलां० ॥ ११ ॥
सर्वैस्तपोभिर्यत्पुण्यं यदेवानशनैर्व्रतैः । सत्पुत्रोद्भवपुण्यस्य कलां० ॥ १२ ॥
यद्विप्रभोजनैः पुण्यं यदेव सुरसेवनैः । सत्पुत्रप्राप्तिपुण्यस्य कलां० ॥ १३ ॥
पार्वत्या वचनं श्रुत्वा शिवः संहृष्टमानसः । आजगाम स्वभवनं शीघ्रं वै कान्तया सह ॥
ददर्श तल्पे स्वसुतं तप्तकाञ्चनसंनिभम् । हृदयस्थं च यद्रूपं तदेवातिमनोहरम् ॥ २६ ॥
दुर्गा तल्पात्समादाय कृत्वा वक्षसि तं सुतम् । चुचुम्बाऽऽनन्दजलधौ निमग्ना सेत्युवाच तम् ॥
संप्राप्यामूल्यरत्नं त्वां पूर्णमेव सनातनम् । यथा मनो दरिद्रस्य सहसा प्राप्य सद्धनम् ॥
कान्ते सुचिरमायाते प्रोषिते योषितो यथा । मानसं परिपूर्णं च बभूव च तथा मम ॥ २८ ॥
सुचिरं गतमागन्तमेकपुत्रा यथा सुतम् । दृष्ट्वा तुष्टा यथा वत्स तथाऽहमपि सांप्रतम् ॥
सद्रत्नं सुचिरं भ्रष्टं प्राप्य हृष्टो यथा जनः । अनावृष्टौ सुवृष्टिं च संप्राप्याहं तथा सुतम् ॥
यथा सुचिरमन्धानां स्थितानां च निराश्रये । चक्षुः सुनिर्मलं प्राप्य मनः पूर्णं तथैव मे ॥
दुस्तरे सागरे घोरे पतितस्य च संकटे । अनौकस्य प्राप्य नौकां मनः पूर्णं तथा मम ॥
तृष्णया शुष्ककण्ठानां सुचिराच्च सुशीतलम् । सुवासितं जलं प्राप्य मनः० ॥ ३३ ॥
दावाग्निपतितानां च स्थितानां च निराश्रये । निरग्निमाश्रयं प्राप्य मनः० ॥ ३४ ॥
चिरं बुभुक्षितानां च व्रतोपोषणकारिणाम् । सदन्नं पुरतो दृष्ट्वा मनः० ॥ ३५ ॥
इत्युक्त्वा पार्वती तत्र क्रोडे कृत्वा स्वबालकम् । प्रीत्या स्तनं ददौ तस्मै परमानन्दमानसा

क्रोडे चकार भगवान्बालकं हृष्टमानसः । चुचुम्ब गण्डे वेदोक्तं युयुजे चाऽऽशिषं मुदा॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० बालगणेशदर्शनं नाम नवमोऽध्यायः ॥ ९ ॥

अथ दशमोऽध्यायः ।

नारायण उवाच—

तौ दम्पती बहिर्गत्वा पुत्रमङ्गलहेतवे । विविधानि च रत्नानि द्विजेभ्यो ददतुर्मुदा ॥
बन्दिभ्यो भिक्षुकेभ्यश्च दानानि विविधानि च । नानाविधानि वाद्यानि वादयामास शंकरः
हिमालयश्च रत्नानां ददौ लक्षं द्विजातये । सहस्रं च गजेन्द्राणामश्वानां च त्रिलक्षकम् ॥
दशलक्षं गवां चैव पञ्चलक्षं सुवर्णकम् । मुक्तामाणिक्यरत्नानि मणिश्रेष्ठानि यानि च ॥
अन्यान्यपि च दानानि वस्त्राण्याभरणानि च । सर्वाण्यमूल्यरत्नानि क्षीरोदोत्पत्तिकानि च
ब्राह्मणेभ्यो ददौ विष्णुः कौस्तुभं कौतुकान्वितः । ब्रह्मा विशिष्टदानानि विप्राणां वाञ्छितानि च । सुदुर्लभानि सृष्टौ च ब्राह्मणेभ्यो ददौ मुदा ॥ ६ ॥
धर्मः सूर्यश्च शक्रश्च देवाश्च मुनयस्तथा । गन्धर्वाः पर्वता देव्यो ददुर्दानं क्रमेण च॥७॥
तापसानां सहस्राणि रुचकानां शतानि च । शतानि गन्धसाराणां मणीन्द्राणां च नारद
माणिक्यानां सहस्राणि रत्नानां च शतानि च । शतानि कौस्तुभानां च हीरकाणां शतानि च
हरिद्वर्णमणीन्द्राणां सहस्राणि मुदाऽन्विताः ॥ ९ ॥
गवां रत्नानि लक्षाणि गजरत्नसहस्रकम् । अमूल्यान्यश्वरत्नानि श्वेतवर्णानि कौतुकात् ॥
शतलक्षं सुवर्णानां वह्निशुद्धांशुकानि च । ब्राह्मणेभ्यो ददौ ब्रह्मा तत्र क्षीरोदधिर्मुदा ॥
हारं चामूल्यरत्नानां त्रिषु लोकेषु दुर्लभम् । अतीव निर्मलं सारं सूर्यभानुविनिन्दकम् ॥
परिष्कृतं च माणिक्यैर्हीरकैश्च विराजितम् रम्यं कौस्तुभमध्यस्थं ददौ देवी सरस्वती ॥
त्रैलोक्यसारं हारं च सद्रत्नगणनिर्मितम् । भूषणानि च सर्वाणि सावित्री च ददौ मुदा ॥
लक्षं सुवर्णलोष्टानां धनानि विविधानि च । शतान्यमूल्यरत्नानां कुबेरश्च ददौ मुदा ॥ १५॥
दानानि दत्त्वा विप्रेभ्यस्ते सर्वे ददृशुः शिशुम् । परमानन्दसंयुक्ताः शिवपुत्रोत्सवे मुने ॥
भारं वोढुमशक्ताश्च ब्राह्मणा बन्दिनस्तथा । स्थायंस्थायं च गच्छन्तो धनानि पथि कातराः
कथयन्ति कथाः सर्वे विश्रान्ताः पूर्वदायिनाम् । वृद्धाः शृण्वन्ति मुदिता युवानो भिक्षुका मुने
विष्णुः प्रमुदितस्तत्र वादयामास दुन्दुभिम् । संगीतं गापयामास कारयामास नर्तनम् ॥
वेदांश्च पाठयामास पुराणानि च नारद । मुनीन्द्रानानयामास पूजयामास तान्मुदा ॥१९॥

आशिषं दापयामास कारयामास मङ्गलम् । सार्धं देवैश्च देवीभिर्ददौ तस्मै शुभाशिषः ॥

विष्णुरुवाच—

शिवेन तुल्यं ज्ञानं ते परमायुश्च बालक । पराक्रमे मया तुल्यः सर्वसिद्धीश्वरो भव ॥ २१ ॥

ब्रह्मोवाच—

यशसा ते जगत्पूर्णं सर्वपूज्यो भवाचिरम् । सर्वेषां पुरतः पूजा भवत्वतिसुदुर्लभा ॥ २२ ॥

धर्म उवाच—

मया तुल्यः सुधर्मिष्ठो भवान्भवतु दुर्लभः । सर्वज्ञश्च दयायुक्तो हरिभक्तो हरेः समः ॥

महादेव उवाच—

दाता भव मया तुल्यो हरिभक्तश्च बुद्धिमान् । विद्यावान्पुण्यवाञ्छान्तो दान्तश्च प्राणवल्लभ ॥

लक्ष्मीरुवाच—

मम स्थितिश्च गेहे ते देहे भवतु शाश्वती । पतिव्रता मया तुल्या शान्ता कान्ता मनोहरा ॥

सरस्वत्युवाच—

मया तुल्या सुकविता धारणाशक्तिरेव च । स्मृतिर्विवेचनाशक्तिर्भवत्वतितरां सुत ॥ २६ ॥

सावित्र्युवाच—

वत्साहं वेदजननी वेदज्ञानी भवाचिरम् । मन्मन्त्रजपशीलश्च प्रवरो वेदवादिनाम् ॥ २७ ॥

हिमालय उवाच—

श्रीकृष्णे ते मतिः शश्वद्भक्तिर्भवतु शाश्वती । श्रीकृष्णतुल्यो गुणवान्भव कृष्णपरायणः ॥

मेनकोवाच—

समुद्रतुल्यो गाम्भीर्ये कामतुल्यश्च रूपवान् । श्रीयुक्तः श्रीपतिसमो धर्मे धर्मसमो भव ॥ २९ ॥

वसुंधरोवाच—

क्षमाशीलो मया तुल्यः शरण्यः सर्वरत्नवान् । निर्विघ्नो विघ्ननिघ्नश्च भव वत्स शुभाश्रयः ॥

पार्वत्युवाच—

ताततुल्यो महायोगी सिद्धः सिद्धिप्रदः शुभः । मृत्युंजयश्च भगवान्भव त्वतिविशारदः ॥

ऋषयो मुनयः सिद्धाः सर्वे युयुजुराशिषः । ब्राह्मणा बन्दिनश्चैव युयुजुः सर्वमङ्गलम् ॥

सर्वं ते कथितं वत्स सर्वमङ्गलमङ्गलम् । गणेशजन्मकथनं सर्वविघ्नविनाशनम् ॥ ३३ ॥

इमं सुमङ्गलाध्यायं यः शृणोति सुसंयतः । सर्वमङ्गलसंयुक्तः स भवेन्मङ्गलालयः ॥ ३४ ॥

अपुत्रो लभते पुत्रमधनो लभते धनम् । कृपणो लभते सत्त्वं शश्वत्संपत्प्रदायि च ॥ ३५ ॥

भार्यार्थी लभते भार्यां प्रजार्थी लभते प्रजाम् । आरोग्यं लभते रोगी सौभाग्यं दुर्भगा लभेत्

भ्रष्टपुत्रं नष्टधनं प्रोषितं च प्रियं लभेत्। शोकाविष्टः सदाऽऽनन्दं लभते नात्र संशयः ॥
यत्पुण्यं लभते मर्त्यो गणेशाख्यानकश्रुतौ । तत्फलं लभते नूनमध्यायश्रवणान्मुने ।
अयं च मङ्गलाध्यायो यस्य गेहे च तिष्ठति। सदा मङ्गलसंयुक्तः स भवेन्नात्र संशयः॥३९॥
यात्राकाले च पुण्याहे यः शृणोति समाहितः। सर्वाभीष्टं स लभते श्रीगणेशप्रसादतः ॥

इति श्रीब्रह्म० महा० गणेशख० नारदना० गणेशोद्भवमङ्गलं
नाम दशमोऽध्यायः ॥ १० ॥

---

अथैकादशोऽध्यायः ।

---

नारायण उवाच—

हरिस्तामाशिषं कृत्वा रत्नसिंहासने वरे। देवैश्च मुनिभिः सार्धमवसत्तत्र संसदि ॥ १ ॥
दक्षिणे शंकरस्तस्य वामे ब्रह्मा प्रजापतिः। पुरतो जगतां साक्षी धर्मो धर्मवतां वरः ॥२॥
तथा धर्मसमीपे च सूर्यः शक्रः कलानिधिः। देवाश्च मुनयो ब्रह्मन्नूषुः शैलाः सुखासने ॥
ननर्त नर्तकश्रेणी जगुर्गन्धर्वकिंनराः। श्रुतिसारं श्रुतिसुखं तुष्टुवुः श्रुतयो हरिम् ॥४॥
एतस्मिन्नन्तरे तत्र द्रष्टुं शंकरनन्दनम्। आजगाम महायोगी सूर्यपुत्रः शनैश्चरः ॥ ५ ॥
अत्यन्तनम्रवदन ईषन्मुद्रितलोचनः। अन्तर्बहिः स्मरन्कृष्णं कृष्णैकतानमानसः ॥६॥
तपःफलाशी तेजस्वी ज्वलदग्निशिखोपमः। अतीव सुन्दरः श्यामः पीताम्बरधरो वरः ॥
प्रणम्य विष्णुं ब्रह्माणं शिवं धर्मं रविं सुरान्। मुनीन्द्रान्बालकं द्रष्टुं जगाम तदनुज्ञया ॥
प्रधानद्वारमासाद्य शिवतुल्यपराक्रमम्। द्वास्थं वै शूलहस्तं च विशालाक्षमुवाच ह ॥

शनैश्चर उवाच—

शिवाज्ञया शिशुं द्रष्टुं यामि शंकरकिंकर। विष्णुप्रमुखदेवानां मुनीनामनुगोऽभवतः ॥१०॥
आज्ञां देहि च मां गन्तुं पार्वतीसंनिधिं बुध। पुनर्यामि शिशुं दृष्ट्वा विषयासक्तमानसः ॥

विशालाक्ष उवाच—

आज्ञावहो न देवानां नाहं शंकरकिंकरः। मार्गं दातुं न शक्तोऽहं विना मन्मातुराज्ञया
इत्युक्त्वाऽभ्यन्तरभ्येत्य प्रेरितः स शिवाज्ञया। ददौ मार्गं ग्रहेशाय विशालाक्षो मुदा ततः
शनिरभ्यन्तरं गत्वा चानमन्नम्रकंधरः। रत्नसिंहासनस्थां च पार्वतीं सस्मितां मुदा ॥
सखिभिः पञ्चभिः शश्वत्सेवितां श्वेतचामरैः। सखिदत्तं च ताम्बूलमुपभुज्य मुवासितम् ॥

---

१ क 'लानि संयम्य उव'।

वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् । पश्यन्तीं नर्तकीनृत्यं पुत्रं धृत्वा च वक्षसि ॥
नतं सूर्यसुतं दृष्ट्वा दुर्गा संभाष्य सत्वरम् । शुभाशिषं ददौ तस्मै पृष्ट्वा तन्मङ्गलं शुभम् ॥

पार्वत्युवाच—

कथमानम्रवक्त्रस्त्वं श्रोतुमिच्छामि सांप्रतम् । किं न पश्यसि मां साध्वो बालकं वा ग्रहेश्वर

शनिरुवाच—

सर्वे स्वकर्मणा साध्वि भुञ्जते तपसः फलम् । शुभाशुभं च यत्कर्म कोटिकल्पैर्न लुप्यते
कर्मणा जायते जन्तुर्ब्रह्मेन्द्रार्यममन्दिरे । कर्मणा नरगेहेषु पश्वादिषु च कर्मणा ॥२०॥
कर्मणा नरकं याति वैकुण्ठं याति कर्मणा । स्वकर्मणा च राजेन्द्रो भृत्यश्चापि स्वकर्मणा
कर्मणा सुन्दरः शश्वद्व्याधियुक्तः स्वकर्मणा । कर्मणा विषयी मातर्निर्लिप्तश्च स्वकर्मणा
कर्मणा धनवाँल्लोको दैन्ययुक्तः स्वकर्मणा । कर्मणा सत्कुटुम्बी च कर्मणा बन्धुकण्टकः ॥
सुभार्यश्च सुपुत्रश्च सुखी शश्वत्स्वकर्मणा । अपुत्रकश्च कुस्त्रीको निस्त्रीकश्च स्वकर्मणा ॥
इतिहासं चातिगोप्यं शृणु शंकरवल्लभे । अकथ्यं जननीपार्श्वे लज्जाजननकारणम् ॥२९॥
आबाल्यात्कृष्णभक्तोऽहं कृष्णध्यानैकमानसः । तपस्यासु रतः शश्वद्विषयेऽपि रतः सदा
पिता ददौ विवाहे तु कन्यां चित्ररथस्य च । अतितेजस्विनी शश्वत्तपस्यासु रता सती ॥
एकदा सा त्वृतुस्नाता सुवेषं स्वं विधाय च । रत्नालंकारसंयुक्त मुनिमानसमोहिनी ॥
हरेः पादं ध्यायमानं मां मां पश्येत्युवाच ह । मत्समीपं समागत्य सस्मिता लोललोचना
शशाप मामपश्यन्तमृतुनाशाच्च कोपतः । बाह्यज्ञानविहीनं च ध्यानसंलग्नमानसम् ॥३०॥
न दृष्टाऽहं त्वया येन न कृतं ह्यृतुरक्षणम् । त्वया दृष्टं च यद्वस्तु मूढ सर्वं विनश्यति ॥
अहं च विरतो ध्यानात्तोषयंस्तां तदा सतीम् । शापं मोक्तुं न शक्ता सा पश्चात्तापमवाप ह
तेन मातर्न पश्यामि किंचिद्वस्तु स्वचक्षुषा । ततः प्रकृतिनम्रास्यः प्राणिहिंसाभयादहम्
शनैश्चरवचः श्रुत्वा चाहसत्पार्वती मुने । उच्चैः प्रजहसुः सर्वा नर्तकीकिंनरीगणाः ॥३४॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० शनिपार्वतीसं० शनेरधोदृष्टेः कारणकथनं नामैकादशोऽध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ।

---

नारायण उवाच—

---

१ ख. पश्यन्ती मदमोहिता । २ क. ैतःप्रभृति ।

दुर्गा तद्वचनं श्रुत्वा सस्मार हरिमीश्वरम् । ईश्वरेच्छावशीभूतं जगदेवेत्युवाच ह ॥ १ ॥
सा च देवी दैववशा शनिं प्रोवाच कौतुकात् । पश्य मां मच्छिशुमिति निषेकः केन वार्यते
पार्वत्या वचनं श्रुत्वा शनिर्मेने हृदा स्वयम् । पश्यामि किं न पश्यामि पार्वतीसुतमित्यहो
यदि बालो मया दृष्टस्तस्य विघ्नो भवेद्ध्रुवम् । अन्यथा सुप्रशस्तं च पुरतः स्वात्मरक्षणम् ॥
इत्येवमुक्त्वा धर्मिष्ठो धर्मं कृत्वा तु साक्षिणम् बालं द्रष्टुं मनश्चक्रे न तु तन्मातरं शनिः ॥
विषण्णमानसः पूर्वं शुष्ककण्ठौष्ठतालुकः । सव्यलोचनकोणेन ददर्श च शिशोर्मुखम् ॥ ६ ।
शनेश्च दृष्टिमात्रेण चिच्छिदे मस्तकं मुने । चक्षुर्निमीलयामास तस्थौ नम्राननः शनिः ॥ ७ ॥
तस्थौ च पार्वतीक्रोडे तत्सर्वाङ्गं सलोहितम् विवेश मस्तकं कृष्णे गत्वा गोलोकमीप्सितम्
मूर्च्छां संप्राप सा देवी विलप्य च भृशं मुहुः । मृतेव च पृथिव्यां तु कृत्वा वक्षसि बालकम् ॥
विस्मितास्ते सुराः सर्वे चित्रपुत्तलिका यथा । देव्यश्च शैला गन्धर्वाः सर्वे कैलासवासिनः ॥
तान्सर्वान्मूर्छितान्दृष्ट्वाऽऽरुह्य गरुडं हरिः । जगाम पुष्पभद्रां स चोत्तरस्यां दिशि स्थिताम्
पुष्पभद्रनदीतीरे ह्यपश्यत्कानने स्थितम् । गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् ॥
तथोदक्शिरसं रम्यं मूर्छितं सुरतश्रमात् । परितः शावकान्कृत्वा परमानन्दमानसम् ॥
शीघ्रं सुदर्शनेनैव चिच्छिदे तच्छिरो मुदा । स्थापयामास गरुडे रुधिराक्तं मनोहरम् ॥ १३ ॥
गजच्छिन्नाङ्गविक्षेपात्प्रबोधं प्राप्य हस्तिनी । शावकान्बोधयामास चाशुभं वदती तदा ।
रुरोद शावकैः सार्धं सा विलप्य शुचाऽऽतुरा । तुष्टाव कमलाकान्तं शान्तं सस्मितमीश्वरम्
शङ्खचक्रगदापद्मधरं पीताम्बरं परम् । गरुडस्थं जगत्कान्तं भ्रामयन्तं सुदर्शनम् ॥ १७ ॥
निषेकं खण्डितुं शक्तं निषेकजनकं विभुम् । निषेकभोगदातारं भोगनिस्तारकारणम् ॥
प्रभुस्तत्स्तवनात्तुष्टस्तस्यै विप्र वरं ददौ । मुण्डात्तुण्डं पृथक्कृत्य युयुजेऽन्यगजस्य च ॥
जीवयामास तं तत्र ब्रह्मज्ञानेन सर्ववित् । दूर्वाङ्गे योजयामास गजस्य चरणाम्बुजम् ॥
त्वं जीवाऽऽकल्पपर्यन्तं परिवारैः समं गज । इत्युक्त्वा च मनोयायी कैलासं ह्याजगाम सः
आहृत्य पार्वतीहस्ताद्बालं कृत्वा स्ववक्षसि । रुचिरं तच्छिरः सम्यग्योजयामास बालके
ब्रह्मस्वरूपो भगवान्ब्रह्मज्ञानेन लीलया । जीवयामास तं शीघ्रं हुंकारोच्चारणेन च ॥
पार्वतीं बोधयित्वा तु कृत्वा क्रोडे च तं शिशुम् । बोधयामास तां कृष्ण आध्यात्मिकवि-
बोधनैः ॥ २३ ॥

विष्णुरुवाच—

ब्रह्मादिकीटपर्यन्तं फलं भुङ्क्ते स्वकर्मणः । जगद्बुद्धिस्वरूपाऽसि त्वं न जानासि किं शिवे

१ क. आगत्य पार्वतीस्थानं बोधयित्वा तु तं शिशुम् । बो°।

कल्पकोटिशतं भोगो जीविनां तत्स्वकर्मणा । उपस्थितो भवेन्नित्यं प्रतियोनौ शुभाशुभः ॥
इन्द्रः स्वकर्मणा कीटयोनौ जन्म लभेत्साति । कीटश्चापि भवेदिन्द्रः पूर्वकर्मफलेन वै ॥२६॥
सिंहोऽपि मक्षिकां हन्तुमक्षमः प्राक्तनं विना । मशको हस्तिनं हन्तुं क्षमः स्वप्राक्तनेन च ॥
सुखं दुःखं भयं शोकमानन्दं कर्मणः फलम् । सुकर्मणः सुखं हर्षमितरे पापकर्मण ॥२७॥
इहैव कर्मणो भोगः परत्र च शुभाशुभः । कर्मोपार्जनयोग्यं च पुण्यक्षेत्रं च भारतम् ॥
कर्मणः फलदाता च विधाता च विधेरपि । मृत्योर्मृत्युः कालकालो निषेकस्य निषेककृत् ॥
संहर्तुरपि संहर्ता पातुः पाता परात्परः । गोलोकनाथः श्रीकृष्णः परिपूर्णतमः स्वयम् ॥
वयं यस्य कलाः पुंसो ब्रह्मविष्णुमहेश्वराः । महाविराडयदंशश्च यल्लोमविवरे जगत् ॥
कलांशाः केऽपि तद्दुर्गे कलांशांशाश्च केचन । चराचरं जगत्सर्वं तत्र तस्थौ विनायकः ॥
श्रीविष्णोर्वचनं श्रुत्वा परितुष्टा च पार्वती । स्तनं ददौ च शिशवे तं प्रणम्य गदाधरम् ॥
तुष्टाव पार्वती तुष्टा प्रेरिता शंकरेण च कृताञ्जलिपुटा भक्त्या विष्णुं तं कमलापतिम् ॥
आशिषं युयुजे विष्णुः शिशुं च शिशुमातरम् । ददौ गले बालकस्य कौस्तुभं च स्वभूषणम् ॥
ब्रह्मा ददौ स्वमुकुटं धर्मो वै रत्नभूषणम् । क्रमेण देवो रत्नानि ददुः सर्वे यथोचितम् ॥
तुष्टाव तं महादेवश्चात्यन्तं हृष्टमानसः । देवाश्च मुनयः शैला गन्धर्वाः सर्वयोषितः ॥
दृष्ट्वा शिवः शिवा चैव बालकं मृतजीवितम् । ब्राह्मणेभ्यो ददौ तत्र कोटिरत्नानि नारद ॥
अश्वानां च गजानां च सहस्राणि शतानि च । बन्दिभ्यः प्रददौ तत्र बालके मृतजीविते ॥
हिमालयश्च संहृष्टो हृष्टा देवाश्च तत्र वै । ददुर्दानानि विप्रेभ्यो बन्दिभ्यः सर्वयोषितः॥४०॥
ब्राह्मणान्भोजयामास कारयामास मङ्गलम् । वेदांश्च पाठयामास पुराणानि रमापतिः ॥
शनिं संलज्जितं दृष्ट्वा पार्वती कोपशालिनी । शशाप च सभामध्येऽप्यङ्गहीनो भवेति च ॥
दृष्ट्वा शप्तं शनिं सूर्यः कश्यपश्च यमस्तथा । तेऽतिरुष्टाः समुत्तस्थुर्गोमुकाः शंकरालयात्॥
रक्ताक्षास्ते रक्तमुखाः कोपप्रस्फुरिताधराः । तां धर्मं साक्षिणं कृत्वा विष्णुं संशप्तुमुद्यताः ॥
ब्रह्मा तान्बोधयामास विष्णुना प्रेरितः सुरैः रक्तास्यां पार्वतीं चैव कोपप्रस्फुरिताधराम् ॥
ब्रह्माणमूचुस्ते तत्र क्रमेण समयोचितम् । भीरवो देवताः सर्वे मुनयः पर्वतास्तथा ॥४६॥

कश्यप उवाच—

दुर्दृष्टोऽयं प्राक्तनेन पत्नीशापेन सर्वदा । बालं ददर्श यत्नेन तस्य वै मातुराज्ञया ॥४७॥

सूर्य उवाच—

तं धर्मं साक्षिणं कृत्वा सूनोर्वै मातुराज्ञया । मत्पुत्रोऽतिप्रयत्नेन ह्यपश्यत्पार्वतीसुतम् ॥
यथा निरपराधेन मत्पुत्रं सा शशाप ह । तत्पुत्रस्याङ्गभङ्गश्च भविष्यति न संशयः॥४९॥

यम उवाच—

प्रदाय स्वयमाज्ञां च शशापेयं स्वयं कथम् । वयं शपामः कोऽधर्मो जिघांसोश्च विहिंसने ॥

ब्रह्मोवाच—

शशाप पार्वती रुष्टा स्त्रीस्वभावाच्च चापलात् । सर्वेषां वचनेनैव क्षन्तुमर्हन्तु साधवः॥९१॥

दुर्गे दत्त्वा स्वमाज्ञां च पुत्रदर्शनहेतवे । कथं शपसि निर्दोषमतिथिं त्वद्गृहागतम् ॥

इत्युक्त्वा शनिमादाय बोधयित्वा च पार्वतीम् । तां तं समर्पणं चक्रे शापमोचनहेतवे ॥

बभूव पार्वती तुष्टा ब्रह्मणो वचनान्मुने । शान्ता बभूवुस्ते तत्र दिनेशयमकश्यपाः ॥९४॥

उवाच पार्वती तत्र संतुष्टा तं शनैश्चरम् । प्रसादिता शिवेनैव ब्रह्मणा परिसेविता ॥

पार्वत्युवाच—

ग्रहराजो भव शने मद्वरेण हरिप्रियः । चिरजीवी च योगीन्द्रो हरिभक्तस्य का विपत् ॥

अद्यप्रभृति निर्विघ्ना हरौ भक्तिर्दृढाऽस्तु ते । शापोऽमोघस्ततो मेऽद्य किंचित्खञ्जो भविष्यसि

इत्युक्त्वा पार्वती तुष्टा बालं धृत्वा च वक्षसि । उवास योषितां मध्ये तस्मै दत्त्वा सुभाशिषः ॥ ९८ ॥

शनिर्जगाम देवानां समीपं हृष्टमानसः । प्रणम्य भक्त्या तां ब्रह्मन्नम्बिकाजगदम्बिकाम् ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० शनिकृतगणेशदर्शनतज्जातगणेशशिरःपतनविष्णुकृतगणेशशिरोयोजनशनिशापादिकथनं नाम द्वादशोऽध्यायः ॥१२ ॥

=====

अथ त्रयोदशोऽध्यायः ।

———

नारायण उवाच—

अथ विष्णुः शुभे काले देवैश्च मुनिभिः सह । पूजयामास तं बालमुपहारैरनुत्तमैः ॥१॥

सर्वाग्रे तव पूजा च मया दत्ता सुरोत्तम । सर्वपूज्यश्च योगीन्द्रो भव वत्सेत्युवाच तम् ॥

वनमालां ददौ तस्मै ब्रह्मज्ञानं च मुक्तिदम् । सर्वसिद्धिं प्रदायैव चकाराऽऽत्मसमं हरिः ॥

ददौ द्रव्याणि चारूणि चोपचारांश्च षोडश । नामभिः स्तवनं चक्रे मुनिभिश्च समं सुरैः ॥

विघ्नेशश्च गणेशश्च हेरम्बश्च गजाननः । लम्बोदरश्चैकदन्तः शूर्पकर्णो विनायकः ॥५ ॥

एतान्यष्टौ च नामानि सर्वसिद्धिप्रदानि च । आशिषं दापयामास चाऽऽनयामास तान्मुनीन् ॥ ६ ॥

---

१ क. °तुष्टं तं । २ क. कृत्वा । ३ क तन्नामकरणं च० ।

सिद्धासनं ददौ धर्मस्तस्मै ब्रह्मा कमण्डलुम्। शंकरो योगपट्टं च तत्त्वज्ञानं सुदुर्लभम्॥
रत्नसिंहासनं शक्रः सूर्यश्च मणिकुण्डले। माणिक्यमालां चन्द्रश्च कुबेरश्च किरीटकम्॥
वह्निशुद्धं च वसनं ददौ तस्मै हुताशनः। रत्नच्छत्रं च वरुणो वायू रत्नाङ्गुलीयकम्॥
क्षीरोदोद्भवसद्रत्नरचितं वलयं वरम्। मञ्जीरं चापि केयूरं ददौ पद्मालया मुने ॥१०॥
कण्ठभूषां च सावित्री भारती हारमुज्ज्वलम्। क्रमेण सर्वदेवाश्च देव्यश्च यौतकं ददु ॥
मुनयः पर्वताश्चैव रत्नानि विविधानि च। वसुंधरा ददौ तस्मै वाहनाय च मूषकम्॥
क्रमेण देवा देव्यश्च मुनयः पर्वतादयः। गन्धर्वाः किन्नरा यक्षा मनवो मानवास्तथा।
नानाविधानि द्रव्याणि स्वादूनि मधुराणि च। पूजां चक्रुश्च ते सर्वे क्रमाद्वै भक्तिपूर्वकम्॥
पार्वती जगतां माता स्मेराननसरोरुहा। रत्नसिंहासने पुत्रं वासयामास नारद ॥१६।
सर्वतीर्थोदकै रत्नकलशावर्जितैस्तु तैः। स्नापयामास वेदोक्तमन्त्रेण मुनिभिः सह॥
अग्निशुद्धे च वसने ददौ तस्मै सती मुदा। गोदावर्युदकैः पाद्यमर्घ्यं गङ्गोदकेन च॥
दूर्वाभिरक्षतापुष्पैश्चन्दनेन समन्वितम्। पुष्करोदकमानीय पुनराचमनीयकम्॥१८॥
मधुपर्कं रत्नपात्रैरासवं शर्करान्वितम्। स्नानीयं विष्णुतैलं च स्ववैद्याभ्यां विनिर्मितम्॥
अमूल्यरत्नरचितचारुभूषाकदम्बकम्। पारिजातप्रसूनानामन्येषां शतकानि च ॥२०॥
मालतीचम्पकादीनां पुष्पाणि विविधानि च। पूजार्हाणि च पत्राणि तुलसीसंहितानि च॥
चन्दनागुरुकस्तूरीकुङ्कुमानि च सादरम्। रत्नप्रदीपनिकरं धूपं च परितो ददौ॥२२॥
नैवेद्यं तत्प्रियं चैव तिललड्डुकपर्वतान्। यवगोधूमचूर्णानां लड्डुकानां च पर्वतान् ॥
पक्वान्नानां पर्वतांश्च सुस्वादुसुमनोहरान्। पर्वतान्स्वस्तिकानां च सुस्वादुशर्करान्वितान्॥
गुडाक्तानां च लाजानां पृथुकानां च पर्वतान्। शाल्यन्नानां पिष्टकानां पर्वतान्व्यञ्जनैः सह
पयोभृत्कलशानां च लक्षाणि प्रददौ मुदा। लक्षाणि दधिपूर्णानां कलशानां च पूजने॥
मधुभृत्कलशानां च त्रिलक्षाणि च सुन्दरी। सर्पिःसुवर्णकुम्भानां पञ्च लक्षाणि सादरम्
दाडिमानां श्रीफलानामसंख्यानि फलानि च। खर्जूराणां कपित्थानां जम्बूनां विविधानि च
आम्राणां पनसानां च कदलीनां च नारद। फलानि नारिकेलानामसंख्यानि ददौ मुदा
अन्यानि परिपक्वानि कालदेशोद्भवानि च। ददौ तानि महाभाग स्वादूनि मधुराणि च॥
स्वच्छं सुनिर्मलं चैव कर्पूरादिसुवासितम्। गङ्गाजलं च पानार्थं पुनराचमनीयकम्॥
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम्। सुवर्णपात्रशतकं भक्ष्यपूर्णं च नारद॥ ३०॥
शैलेश्वरी शैलराजः शैलजः शैलराजजः। शैलराजप्रियामात्याः पुपूजुः शैलजात्मजम्॥

१ क. "वर्जिता"।

ॐ श्रीं ह्रीं क्लीं गणेशाय ब्रह्मरूपाय चारवे। सर्वसिद्धिप्रदेशाय विघ्नेशाय नमो नमः॥
इत्यनेनैव मन्त्रेण दत्त्वा द्रव्याणि भक्तितः। सर्वे प्रमुदितास्तत्र ब्रह्मविष्णुशिवादयः॥
द्वात्रिंशदक्षरो मालामन्त्रोऽयं सर्वकामदः। धर्मार्थकाममोक्षाणां फलदः सर्वसिद्धिदः॥
पञ्चलक्षजपेनैव मन्त्रसिद्धिस्तु मन्त्रिणः। मन्त्रसिद्धिर्भवेद्यस्य स च विष्णुश्च भारते॥
विघ्नानि च पलायन्ते तन्नामस्मरणेन च। महावाग्मी महासिद्धिः सर्वसिद्धिसमन्वितः॥
वाक्पतिर्गुरुतां याति तस्य साक्षात्सुनिश्चितम्। महाकवीन्द्रो गुणवान्विदुषां च गुरोर्गुरुः॥
संपूज्यानेन मन्त्रेण देवा आनदसंप्लुताः। नानाविधानि वाद्यानि वादयामासुरुत्सवे॥ ३८॥
ब्राह्मणान्भोजयामासुः कारयामासुरुत्सवम्। ददुर्दानानि तेभ्यश्च बन्दिभ्यश्च विशेषतः॥

नारायण उवाच—

अथ विष्णुः सभामध्ये तं संपूज्य गणेश्वरम्। तुष्टाव परया भक्त्या सर्वविघ्नविनाशकम्॥

विष्णुरुवाच—

ईश त्वां स्तोतुमिच्छामि ब्रह्मज्योतिः सनातम्। नैव वर्णयितुं शक्तोऽस्म्यनुरूपमनीहकम्॥
प्रवरं सर्वदेवानां सिद्धानां योगिनां गुरुम्। सर्वस्वरूपं सर्वेशं ज्ञानराशिस्वरूपिणम्॥
अव्यक्तमक्षरं नित्यं सत्यमात्मस्वरूपिणम्। वायुतुल्यं च निर्लिप्तं चाक्षतं सर्वसाक्षिणम्॥
संसारार्णवपारे च मायापोते सुदुर्लभे। कर्णधारस्वरूपं च भक्तानुग्रहकारकम्॥ ४४॥
वरं वरेण्यं वरदं वरदानामपीश्वरम्। सिद्धं सिद्धिस्वरूपं च सिद्धिदं सिद्धिसाधनम्॥
ध्यानातिरिक्तं ध्येयं च ध्यानासाध्यं च धार्मिकम्। धर्मस्वरूपं धर्मज्ञं धर्माधर्मफलप्रदम्
बीजं संसारवृक्षाणामङ्कुरं च तदाश्रयम्। स्त्रीपुंनपुंसकानां च रूपमेतदतीन्द्रियम्॥
सर्वाद्यमग्रपूज्यं च सर्वपूज्यं गुणार्णवम्। स्वेच्छया सगुणं ब्रह्म निर्गुणं स्वेच्छया पुनः॥
स्वयं प्रकृतिरूपं च प्राकृतं प्रकृतेः परम्। त्वां स्तोतुमक्षमोऽनन्तः सहस्रवदनैरपि॥
न क्षमः पञ्चवक्त्रश्च न क्षमश्चतुराननः। सरस्वती न शक्ता च न शक्तोऽहं तव स्तुतौ॥
न शक्ताश्च चतुर्वेदाः के वा ते वेदवादिनः॥ ५०॥
इत्येवं स्तवनं कृत्वा मुनीशसुरसंसदि। सुरेशश्च सुरैः सार्धं विरराम रमापतिः॥५१॥
इदं विष्णुकृतं स्तोत्रं गणेशस्य च यः पठेत्। सायं प्रातश्च मध्याह्ने भक्तियुक्तः समाहितः
तद्विघ्ननाशं कुरुते विघ्नेशः सततं मुने। वर्धते सर्वकल्याणं कल्याणजनकः सदा॥५३॥
यात्राकाले पठित्वा यो याति तद्भक्तिपूर्वकम्। तस्य सर्वाभीष्टसिद्धिर्भवत्येव न संशयः॥
तेन दृष्टं च दुःस्वप्नं सुस्वप्नमुपजायते। कदाऽपि न भवेत्तस्य ग्रहपीडा च दारुणा॥

१ क. 'वै संपत्स'।

भवेद्विनाशः शत्रूणां बन्धूनां च विवर्धनम् । शश्वद्विघ्नविनाशश्च शश्वत्सम्पद्विवर्धनम् ॥
स्थिरा भवेद्गृहे लक्ष्मीः पुत्रपौत्रविवर्धनम् । सर्वैश्वर्यमिह प्राप्य ह्यन्ते विष्णुपदं लभेत् ॥
फलं चापि च तीर्थानां यज्ञानां यद्भवेद्ध्रुवम् । महतां सर्वदानानां तद्गणेशप्रसादतः ॥

नारद उवाच—

श्रुतं स्तोत्रं गणेशस्य पूजनं च मनोहरम् । कवचं श्रोतुमिच्छामि सांप्रतं भवतारणम् ॥

नारायण उवाच—

पूजायां सुनिवृत्तायां सभामध्ये शनैश्चरः । उवाच विष्णुं सर्वेषां तारकं जगतां गुरुम् ॥

शनैश्चर उवाच—

सर्वदुःखविनाशाय पापप्रशमनाय च । कवचं विघ्ननिघ्नस्य वद वेदविदां वर ॥ ११ ॥
बभूव नो विवादश्च शक्त्या वै मायया सह । तद्विघ्नप्रशमार्थं च कवचं धारयाम्यहम् ॥

विष्णुरुवाच—

विनायकस्य कवचं त्रिषु लोकेषु दुर्लभम् । सुगोप्यं च पुराणेषु दुर्लभं चाऽऽगमेषु च ॥
उक्तं कौथुमशाखायां सामवेदे मनोहरम् । कवचं विघ्ननाथस्य सर्वविघ्नहरं परम् ॥
राज्यं देयं शिरो देयं प्राणा देयाश्च सूर्यज । एवंभूतं च कवचं न देयं प्राणसंकटे ॥
आविर्भावस्तिरोभावः स्वेच्छया यस्य मायया । नित्योऽयमेकदन्तश्च कवचं चास्य वत्सक
पूजाऽस्य नित्या स्तोत्रं च कल्पे कल्पेऽस्ति संततम् । अस्य वै जन्मनः पूर्वं मुनयश्च सिषेविरे ॥ १७ ॥
यथा मदवतारेषु जन्म विग्रहधारणम् । तथा गणेश्वरस्यापि जन्म शैलसुतोदरे ॥ १८ ॥
यद्धृत्वा मुनयः सर्वे जीवन्मुक्ताश्च भारते । निःशङ्काश्च सुराः सर्वे शत्रुपक्षविमर्दकाः ॥
कवचं बिभ्रतां मृत्युर्न भिया याति संनिधिम् । नाऽऽयुर्व्ययो नाशुभं च ब्रह्माण्डे न पराजयः
दशलक्षजपेनैव सिद्धं तु कवचं भवेत् । यो भवेत्सिद्धकवचो मृत्युं जेतुं स च क्षमः ॥
सुसिद्धकवचो वाग्मी चिरंजीवी महीतले । सर्वत्र विजयी पूज्यो भवेद्ग्रहणमात्रतः ॥
मालामन्त्रमिमं पुण्यं कवचं मङ्गलं शुभम् बिभ्रतां सर्वपापानि प्रणश्यन्ति सुनिश्चितम्
भूतप्रेतपिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः । डाकिनीयोगिनीयक्षवेताला भैरवादयः ॥
बालग्रहा ग्रहाश्चैव क्षेत्रपालादयस्तथा । वर्मणः शब्दमात्रेण पलायन्ते च भीरवः ॥
आधयो व्याधयश्चैव शोकाश्चैव भयावहाः । न यान्ति संनिधिं तेषां गरुडस्य यथोरगाः

---

१ क. °र्वविघ्नवि° । २ क. °यस्यास्य च° ।

मज्जवे गुरुभक्ताय स्वशिष्याय प्रकाशयेत् । खलाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्
संसारमोहनस्याऽस्य कवचस्य प्रजापतिः । ऋषिश्छन्दश्च गायत्री देवो लम्बोदरः स्वयम् ॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः । सर्वेषां कवचानां च सारभूतमिदं मुने ॥७९॥
ॐ गं हुं श्री गणेशाय स्वाहा मे पातु मस्तकम् । द्वात्रिंशदक्षरो मन्त्रो ललाटं मे सदाऽवतु
ॐ ह्रीं क्लीं श्रीं गमिति वै सततं पातु लोचनम् । तारकां पातु विघ्नेशः सततं धरणीतले
ॐ ह्रीं श्रीं क्लीमिति परं संततं पातु नासिकाम् । ओं गौं गं शूर्पकर्णाय स्वाहा पात्वधरं मम
दन्तांश्च तालुकां जिह्वां पातु मे षोडशाक्षरः । ॐ लं श्रीं लम्बोदरायेति स्वाहा गण्डं
सदाऽवतु ॥ ८१ ॥
ॐ क्लीं ह्रीं विघ्ननाशाय स्वाहा कर्णं सदाऽवतु । ॐ श्रीं गं गजाननायेति स्वाहा स्कन्धं
सदाऽवतु ॥ ८२ ॥
ॐ ह्रीं विनायकायेति स्वाहा पृष्ठं सदाऽवतु । ॐ क्लीं ह्रीमिति कङ्कालं पातु वक्षःस्थलं परम्
करौ पादौ सदा पातु सर्वाङ्गं विघ्ननाशकृत् । प्राच्यां लम्बोदरः पातु चाऽऽग्नेय्यां विघ्न-
नायकः ॥ ८४ ॥
दक्षिणे पातु विघ्नेशो नैर्ऋत्यां तु गजाननः । पश्चिमे पार्वतीपुत्रो वायव्यां शंकरात्मजः ।
कृष्णस्यांशश्चोत्तरे च परिपूर्णतमस्य च । ऐशान्यामेकदन्तश्च हेरम्बः पातु चोर्ध्वतः ॥
अधो गणाधिपः पातु सर्वपूज्यश्च सर्वतः । स्वप्ने जागरणे चैव पातु मां योगिनां गुरुः ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् । संसारमोहनं नाम कवचं परमाद्भुतम् ॥८८॥
श्रीकृष्णेन पुरा दत्तं गोलोके रासमण्डले । वृन्दावने विनीताय मह्यं दिनकरात्मज ॥
मया दत्तं च तुभ्यं च यस्मै कस्मै न दास्यसि । परं वरं सर्वपूज्यं सर्वसंकटतारणम् ॥
गुरुमभ्यर्च्य विधिवत्कवचं धारयेत्तु यः । कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः
अश्वमेधसहस्राणि वाजपेयशतानि च । ग्रहेन्द्र कवचस्यास्य कलां नार्हन्ति षोडशीम् ॥
इदं कवचमज्ञात्वा यो भजेच्छंकरात्मजम् । शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः
दत्त्वेदं सूर्यपुत्राय विरराम सुरेश्वरः । परमानन्दसंयुक्ता देवास्तस्थुः समीपतः ॥ ९४॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० गणेशपूजास्तवकवचकथनं नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

---

१ ख. बृहती । २ क. ॐ गों गं श्रीं ।

अथ चतुर्दशोऽध्यायः ।

नारायण उवाच—
देवास्तस्यां सभायां ते सर्वे संहृष्टमानसाः । गन्धर्वा मुनयः शैलाः पश्यन्तः सुमहोत्सवम् ॥
एतस्मिन्नन्तरे दुर्गा स्मेराननसरोरुहा । उवाच विष्णुं प्रणता देवेशं तत्र संसदि ॥२॥
पार्वत्युवाच—
त्वं पाता सर्वजगतां नाथ नाहं जगद्बहिः । कथं मत्स्वामिनो वीर्यममोघं रक्षितं प्रभो ॥
रतिभङ्गे कृते देवैर्ब्रह्मणा प्रेरितैस्त्वया । भूमौ निपतितं वीर्यं केन देवेन वै हृतम् ॥ ४ ॥
सर्वे देवास्त्वत्पुरतस्तदन्विष्यन्तु सादरम् । अराजकं कथं युक्तं तिष्ठति त्वयि राजनि ॥
पार्वतीवचनं श्रुत्वा प्रहस्य जगदीश्वरः । उवाच देववर्गे च मुनिवर्गे च तिष्ठति ॥ ६ ॥
विष्णुरुवाच—
देवाः शृणुत मद्वाक्यं पार्वतीवचनं श्रुतम् । शिवस्यामोघवीर्यं यत्तत्पुरा केन निर्हृतम् ॥
सभामानयत क्षिप्रं न चेद्दण्डमिहार्हथ । स किंराजा न शास्ता यः प्रजाबाध्यश्च पाक्षिकः
विष्णोस्तद्वचनं श्रुत्वा समालोच्य परस्परम् । ऊचुः सर्वे शिवावाक्यैस्त्रासिताः पुरतो हरेः
ब्रह्मोवाच—
तद्वीर्यं निर्हृतं येन पुण्यभूमौ च भारते । स वञ्चितो भवत्वत्र पुण्याहे पुण्यकर्मणि ॥
महादेव उवाच
मद्वीर्यं निर्हृतं येन पुण्यभूमौ च भारते । स वञ्चितो भवत्वत्र सेवने पूजने तव ॥ ११ ॥
यम उवाच—
स वञ्चितो भवत्वत्र शरणागतरक्षणे । एकादशीव्रते चैव तद्वीर्यं येन निर्हृतम् ॥ १२ ॥
इन्द्र उवाच—
तद्वीर्यं निर्हृतं येन पापिनां पापमोचने । भवत्वत्र यशो लुप्तं तत्पुण्यं कर्म संततम् ॥१३॥
वरुण उवाच
भवत्वत्र कलौ जन्म वर्षे स्याद्भारते हरे । शूद्रयाजकपत्न्याश्च गर्भे तद्येन निर्हृतम् ॥
कुबेर उवाच—
न्यासहारी स भवतु विश्वासघ्नश्च मित्रहा । सत्यघ्नश्च कृतघ्नश्च तद्वीर्यं येन निर्हृतम् ॥
ईशान उवाच—
परद्रव्यापहारी च स भवत्वत्र भारते । नरघाती गुरुद्रोही तद्वीर्यं येन निर्हृतम् ॥१६॥

---

१ क. °न्म संन्यासो वा भवान्तरे ।

रुद्रा ऊचुः—

ते मिथ्यावादिनः सन्तु भारते पारदारिकाः। गुरुनिन्दारताः शश्वत्तद्वीर्यं यैश्च निर्हृतम् ॥

कामदेव उवाच—

कृत्वा प्रतिज्ञां यो मूढो न संपालयते भ्रमात्। भाजनं तस्य पापस्य स भवेद्येन तद्धृतम्

स्वर्वैद्यावूचतुः—

मातुः पितुर्गुरोश्चैव स्त्रीपुत्राणां च पोषणे। भवेतां वञ्चितौ तौ च याभ्यां वीर्यं च तद्धृतम्

सर्वे देवा ऊचुः—

मिथ्यासाक्ष्यप्रदातारो भवन्त्वत्र च भारते। अपुत्रिणो दरिद्राश्च यैश्च वीर्यं हि तद्धृतम्

देवपत्न्य ऊचुः—

ता निन्दन्तु स्वभर्तारं गच्छन्तु परपूरुषम्। सन्तु बुद्धिविहीनाश्च याभिर्वीर्यं हि तद्धृतम् ॥

देवानां वचनं श्रुत्वा देवीनां च हरिः स्वयम्। कर्मणां साक्षिणं धर्मं सूर्यं चन्द्रं हुताशनम् ॥

पवनं पृथिवीं तोयं संध्ये रात्रिंदिवं मुने। उवाच जगतां कर्ता पाता शास्ता जगत्त्रये ।२३॥

विष्णुरुवाच—

देवैर्न निर्हृतं वीर्यं तदेतत्केन निर्हृतम्। तदमोघं भगवतो महेशस्य जगद्गुरोः ॥ २४ ॥

यूयं च साक्षिणो विश्वे सततं सर्वकर्मणाम्। युष्माभिर्निर्हृतं किंवा किं भूतं वक्तुमर्हथ ॥

ईश्वरस्य वचः श्रुत्वा सभायां कम्पिताश्च ते। परस्परं समालोच्य क्रमेणोचुः पुरो हरेः ॥

धर्म उवाच—

रतेरुत्तिष्ठतो वीर्यं पपात वसुधातले। मया ज्ञातममोघं तच्छंकरस्य प्रकोपतः ॥२७॥

क्षितिरुवाच—

वीर्यं वोढुमशक्ताऽहं तद्वह्नौ न्यक्षिपं पुरा। अतीव दुर्वहं ब्रह्मन्नबलां क्षन्तुमर्हसि॥२८॥

अग्निरुवाच—

वीर्यं वोढुमशक्तोऽहं न्यक्षिपं शरकानने। दुर्बलस्य जगन्नाथ किं यशः किं च पौरुषम् ॥

वायुरुवाच—

शरेषु पतितं वीर्यं सद्यो बालो बभूव ह। अतीव सुन्दरो विष्णो स्वर्णरेखानदीतटे ॥

सूर्य उवाच—

रुदन्तं बालकं दृष्ट्वाऽगममस्ताचलं प्रति। प्रेरितः कालचक्रेण निशि संस्थातुमक्षमः ॥

चन्द्र उवाच—

रुदन्तं बालकं प्राप्य गृहीत्वा कृत्तिकागणः। जगाम स्वालयं विष्णो गच्छन्बदरिकाश्रमात्

जलमुवाच—

अयं रुदन्तमानीय स्तनं दत्त्वा स्तनार्थिने। वर्धयामासुरीशस्य तं ताः सूर्याधिकप्रभम्॥

संध्ये ऊचतुः—

अधुना कृत्तिकानां च षण्णां तत्पोष्यपुत्रकः। तन्नाम चक्रुस्ताः प्रेम्णा कार्तिकेय इति स्वयम्॥

रात्रिरुवाच—

न चक्रुर्बालकं ताश्च लोचनानामगोचरम्। प्राणेभ्योऽपि प्रेमपात्रं यः पोष्टा तस्य पुत्रकः॥

दिनमुवाच—

यानि यानि च वस्तूनि त्रैलोक्ये दुर्लभानि च। प्रशंसितानि स्वादूनि भोजयामासुरेव तम्॥

तेषां तद्वचनं श्रुत्वा संतुष्टो मधुसूदनः। ते सर्वे हरिमित्यूचुः सभायां हृष्टमानसाः॥ ३७॥

पुत्रस्य वार्तां संप्राप्य पार्वती हृष्टमानसा। कोटिरत्नानि विप्रेभ्यो ददौ बहुधनानि च॥

ददौ सर्वाणि विप्रेभ्यो वासांसि विविधानि च॥ ३८॥

लक्ष्मीः सरस्वती मेना सावित्री सर्वयोषितः। विष्णुश्च सर्वदेवाश्च ब्राह्मणेभ्यो ददुर्धनम्॥

इति श्रीब्रह्म० महा० गणेशख० नारदना० कार्तिकेयजन्मकथनं नाम चतुर्दशोऽध्यायः॥ १४॥

=====

अथ पञ्चदशोऽध्यायः।

---

नारायण उवाच—

पुत्रस्य वार्तां संप्राप्य पार्वत्या सह शंकरः। प्रेरितो विष्णुना देवैर्मुनिभिः पर्वतैर्मुने॥

दूतान्प्रस्थापयामास महाबलपराक्रमान्। वीरभद्रं विशालाक्षं शङ्कुकर्णं कबन्धकम्॥

नन्दीश्वरं महाकालं वज्रदन्तं भगन्दरम्। गोधामुखं दधिमुखं ज्वलदग्निशिखोपमम्॥

लक्षं च क्षेत्रपालानां भूतानां च त्रिलक्षकम्। वेतालानां चतुर्लक्षं यक्षाणां पञ्चलक्षकम्॥ ४॥

कूष्माण्डानां चतुर्लक्षं त्रिलक्षं ब्रह्मरक्षसाम्। डाकिनीनां चतुर्लक्षं योगिनीनां त्रिलक्षकम्॥

रुद्रांश्च भैरवांश्चैव शिवतुल्यपराक्रमान्। अन्यांश्च विकृताकारानसंख्यानपि नारद॥

ते सर्वे शिवदूताश्च नानाशस्त्रास्त्रपाणयः। कृत्तिकानां च भवनं वेष्टयामासुरुज्ज्वलम्॥

दृष्ट्वा तान्कृत्तिकाः सर्वा भयविह्वलमानसाः। कार्तिकं कथयामासुर्ज्वलन्तं ब्रह्मतेजसा॥

कृत्तिका ऊचुः—

---

१ क. करक्रमम्। २ क °कायं व°। ३ क. भलन्दनम्। ४ क. भूतानां च पिशाचानामथ°। ५ क. °वान्भ°।

वत्स सैन्यान्यसंख्यानि वेष्टयामासुरालयम् । न जानीमो वयं कस्य करालानि च बालक
कार्तिकेय उवाच—
भयं त्यजत कल्याण्यो भयं किं वो मयि स्थिते दुर्निवार्यः कर्मपाको मातरः केन वार्यते ॥
एतस्मिन्नन्तरे तत्र सेनानीर्नन्दिकेश्वरः । पुरतः कार्तिकेयस्य तिष्ठंस्तानुवाच ह ॥
नन्दिकेश्वर उवाच—
भ्रातः प्रवृत्तिं शृणु मे मातुश्चापि शुभावहाम् । प्रेषितस्य सुरेन्द्रस्य संहर्तुः शंकरस्य च
कैलासे सर्वदेवाश्च ब्रह्मविष्णुशिवादयः । सभायां ते वसन्तश्च गणेशोत्सवमङ्गले ॥
शैलेन्द्रकन्या तं विष्णुं जगतां परिपालकम् । संबोध्य कथयामास तवान्वेषणकारणम् ॥
पप्रच्छ देव न्विष्णुस्तान्क्रमेणाऽऽवाप्तिहेतवे । प्रत्युत्तरं ददुस्ते तु प्रत्येकं च यथोचितम् ॥
त्वमत्र कृत्तिकास्थाने कथयामासुरीश्वरम् । सर्वे धर्मादयो देवा धर्माधर्मस्य साक्षिणः ॥
या बभूव रहःक्रीडा पार्वतीशिवयोः पुरा । दृष्टस्य च सुरैः शंभोर्वीर्यं भूमौ पपात ह ॥
भूमिस्तदक्षिपद्वह्नौ वह्निश्च शरकानने । ततो लब्धः कृत्तिकाभिरमूभिर्गच्छ सांप्रतम् ॥
तवाभिषेकं विष्णुश्च करिष्यति सुरैः सह । शस्त्रं लब्ध्वाऽखिलं देव तारकं संहनिष्यसि
पुत्रस्त्वं विश्वसंहर्तुस्त्वां गोप्तुं न क्षमा इमाः । नाग्निं गोप्तुं यथा शक्तः शुष्कवृक्षः स्वकोटरे
दीप्तिमांस्त्वं च विश्वेषु तासां गेहे न शोभसे । यथा पतन्महाकूपे द्विजराजो न राजते ॥
करोषि जगदालोकं नाच्छन्नोऽस्यङ्गतेजसा । यथा सूर्यः कराच्छन्नो न भवेत्पूरुषस्य च ॥
विष्णुस्त्वं च जगद्व्यापी नाऽऽसां व्याप्योऽसि शांभव । यथा न केषां व्याप्यं च तत्सर्वं व्यापकं नभः ॥ २१ ॥
योगीन्द्रो नानुलिप्तस्त्वं भोगी च परिपोषणे । नैव लिप्तो यथाऽऽत्मा च कर्मभोगेषु जीविनाम्
विश्वाधारस्त्वमीशश्च नामूते संभवेत्स्थितिः । सागरस्य यथा नद्यां सरितामाश्रयस्य च ॥
नहि सर्वेश्वरावासः संभवेत्कृत्तिकालये । गरुडस्य यथा वासः क्षुद्रे च चटकोदरे ॥
त्वां च देवा न जानन्ति भक्तानुग्रहविग्रहम् । गुणानां तेजसां राशिं यथाऽऽत्मानमयोगिनः ॥
त्वामनिर्वचनीयं च कथं जानन्ति कृत्तिकाः । यथा परां हरेर्भक्तिमभक्ता मूढचेतसः ॥
भ्रातर्ये यं न जानन्ति ते तं कुर्वन्त्यनादरम् । नाऽऽद्रियन्ते यथा भेकाः स्वेकावासं च पङ्कजम्
कार्तिकेय उवाच—
भ्रातः सर्वं विजानामि ज्ञानं त्रैकालिकं च यत् । ज्ञानी त्वं वा प्रशंसा ते यतो मृत्युंजयाश्रितः ॥ २८ ॥

---

१ क निषेदश्च ।

कर्मणा जन्म येषां वा यासु यासु च योनिषु । तासु ते निर्वृतिं भ्रातर्नोऽऽप्नुवन्ति च संततम् ॥ २२ ॥

ये यत्र सन्ति सन्तो वा मूढा वा कर्मभोगतः । तेऽपि तं बहु मन्यन्ते मोहिता विष्णुमायया

सांप्रतं जगतां माता विष्णुमाया सनातनी । सर्वाद्या सर्वरूपा च सर्वदा सर्वमङ्गला ॥

शैलेन्द्रपत्नी गर्भे सा चालभज्जन्म भारते । दारुणं च तपस्तप्त्वा संप्राप च्छंकरं पतिम् ॥

ब्रह्मादितृणपर्यन्तं सर्वं मिथ्यैव कृत्रिमम् । सर्वे कृष्णोद्भवाः काले विलीनास्तत्र केवलम् ॥

कल्पे कल्पे जगन्माता माता मे प्रतिजन्मनि । यज्जन्ममायया बद्धो नित्यः सृष्टिविधावहम्

प्रकृतेरुद्भवाः सर्वा जगत्यां सर्वयोषितः । काश्चिदंशाः कलाः काश्चित्कलांशांशेन काश्चन ॥

कृत्तिका ज्ञानवत्यश्च योगिन्यः प्रकृतेः कला । स्तन्येनाऽऽभिर्वर्धितोऽहमुपहारेण संततम्

तासामहं पोष्यपुत्रो मदम्बाः पोषणादिमाः । तस्याश्च प्रकृतेः पुत्रो गतस्त्वन्स्वामिनीर्यतः ॥

न गर्भजोऽहं शैलेन्द्रकन्याया नन्दिकेश्वर । सा च मे धर्मतो माता तथेमा सर्वसंमताः ॥

स्तनदात्री गर्भधात्री भक्ष्यदात्री गुरुप्रिया । अभीष्टदेवपत्नी च पितुः पत्नी च कन्यकाः ॥

सगर्भकन्या भगिनी पुत्रपत्नी प्रियाप्रसूः । मातुर्माता पितुर्माता सोदरस्य प्रिया तथा ॥

मातुः पितुश्च भगिनी मातुलानी तथैव च । जनानां वेदविहिता मातरः षोडश स्मृताः ॥

इमाश्च सर्वसिद्धिज्ञाः परमैश्वर्यसंयुताः । न क्षुद्रा ब्रह्मणः कन्यास्त्रिषु लोकेषु पूजिताः ॥

विष्णुना प्रेरितस्त्वं च शंभोः पुत्रसमो महान् । गच्छ यामि त्वया सार्धं द्रक्ष्यामि सुरसंचयम्

इति श्रीब्रह्म० महा० गणेशख० नारदना० नन्दिकार्तिकेयसंवादो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

अथ षोडशोऽध्यायः ।

---

**नारायण उवाच—**

इत्येवमुक्त्वा तं शीघ्रं बोधयित्वा च कृत्तिकाः । उवाच नीतियुक्तं च वचनं शंकरात्मजः ॥

**कार्तिकेय उवाच—**

यास्यामि शंकरस्थानं द्रक्ष्यामि सुरसंचयम् । मातरं बन्धुवर्गांश्चाप्याऽऽज्ञां मे दत्त मातरः ॥

दैवाधीनं जगत्सर्वं जन्म कर्म शुभाशुभम् । संयोगश्च वियोगश्च न च दैवात्परं बलम् ॥

कृष्णायत्तं च तद्दैवं स च दैवात्परस्ततः । भजन्ति सततं सन्तः परमात्मनमीश्वरम् ॥

दैवं वर्धयितुं शक्तः क्षयं कर्तुं स्वलीलया । न दैवबद्धस्तद्भक्तश्चाविनाशीति निर्णयः ॥

तस्माद्भजत गोविन्दं मोहं त्यजत दुःखदम् । सुखदं मोक्षदं सारं जन्ममृत्युभयापहम् ॥
परमानन्दजनकं मोहजालनिकृन्तनम् । शश्वद्भजन्ति यत्सर्वे ब्रह्मविष्णुशिवादयः ॥
कोऽहं भवाब्धौ युष्माकं का वा यूयं ममाम्बिकाः । तत्कर्मस्रोतसां सर्वं पुञ्जीभूतं च फेनवत् ॥ ८ ॥
संश्लेषं वा वियोगं वा सर्वमीश्वरचिन्तया । ब्रह्माण्डमीश्वराधीनं न स्वतन्त्रं विदुर्बुधाः ॥
जलबुद्बुदवत्सर्वमनित्यं च जगत्त्रयम् । मायामनित्ये कुर्वन्ति मायया मूढचेतसः ॥
सन्तस्तत्र न लिप्यन्ते वायुवत्कृष्णचेतसः । तस्मान्मोहं परित्यज्य चाऽऽज्ञां मे दत्त मातरः
इत्येवमुक्त्वा ता नत्वा सार्धं शंकरपार्षदैः । यात्रां चकार भगवान्मनसा श्रीहरिं स्मरन् ॥
एतस्मिन्नन्तरे तत्र ददर्श रथमुत्तमम् । विश्वकर्मकृतं रम्यं हीरकेण विराजितम् ॥
सद्रत्नसाररचितं माणिक्येन विराजितम् । पारिजातप्रसूनानां मालाजालैश्च शोभितम् ।
मणीन्द्रदर्पणैः श्वेतचामरैरतिदीपितम् । क्रीडार्हमन्दिरै रम्यैश्चित्रितैश्चित्रितं वरम् ॥
शतचक्रं सुविस्तीर्णं मनोयायि मनोहरम् । प्रस्थापितं च पार्वत्या वेष्टितं पार्षदैर्वरैः ॥
तमारुहन्तं यानं ता हृदये न विदूयता । सहसा चेतनां प्राप्य मुक्तकेश्यः शुचाऽऽतुराः
दृष्ट्वा च स्वपुरः स्कन्दं स्तम्भिताश्चातिशोकतः । उन्मत्ता इव तत्रैव वक्तुमारेभिरे भिया

कृत्तिका ऊचुः—

किं कुर्मः क्व च यास्यामो वयं वत्स त्वदाश्रयाः । विहायास्मान्क्व यासि त्वं नायं धर्म स्तवाधुना ॥ १९ ॥
स्नेहेन वर्धितोऽस्माभिः पुत्रोऽस्माकं स्वधर्मतः । नायं धर्मो मातृवर्गाननुरक्तः सुतस्त्यजेत्
इत्युक्त्वा कृत्तिकाः सर्वाः कृत्वा वक्षसि तं सुतम् । पुनर्मूर्छामवापुस्ताः सुतविच्छेददारुणम् ॥ २१ ॥
कुमारो बोधयित्वा ता अध्यात्मवचनेन वै । ताभिश्च पार्षदैः सार्धमारुरोह रथं मुने ॥
पूर्णकुम्भं द्विजं वेश्यां शुक्लधान्यानि दर्पणम् दध्याज्यं मधु लाजांश्च पुष्पं दुर्वाक्षतान्सितान् ॥ २३ ॥
वृषं गजेन्द्रं तुरगं ज्वलदग्निं सुवर्णकम् । पणं च परिपक्वानि फलानि विविधानि च ॥ २४ ॥
पतिपुत्रवतीं नारीं प्रदीपं मणिमुत्तमम् । मुक्तां प्रसूनमालां च सद्योमांसं च चन्दनम् ॥
ददर्शैतानि वस्तूनि मङ्गलानि पुरो मुने । शृगालं नकुलं कुम्भं शवं वामे शुभावहम् ॥
राजहंसं मयूरं च खञ्जनं च शुकं पिकम् । पारावतं शङ्खचिल्लं चक्रवाकं च मङ्गलम् ॥
कृष्णसारं च सुरभिं चमरीं श्वेतचामरम् । धेनुं च वत्ससंयुक्तां पताकां दक्षिणे शुभाम् ॥

नानाप्रकारवाद्यं च ाद्यशोभनमङ्गलध्वनिम् । मनोहरं च संगीतं घण्टाशङ्खध्वनिं तथा ॥
दृष्ट्वा श्रुत्वा मङ्गलं स ह्यगमत्तातमन्दिरम् । क्षणेनाऽऽनन्दयुक्तश्च मनोयायिरथेन च ॥
कुमारः प्राप्य कैलासं न्यग्रोधाक्षयमूलके । क्षणं तस्थौ कृत्तिकाभिः पार्षदप्रवरैः सह ॥
पार्वती मङ्गलं कृत्वा राजमार्गं मनोहरम् । पद्मरागैरिन्द्रनीलैः संस्कृतं परितः पुरम् ॥
रम्भास्तम्भसमूहैश्च पट्टसूत्रांशुकैस्तथा । श्रीखण्डपल्लवैर्युक्तं पूर्णकुम्भैः सुशोभितम् ॥
पूर्णकुम्भजलैर्यत्र सिक्तं चन्दनवारिभिः । असंख्यरत्नदीपैश्च मणिराजैर्विराजितम् ॥
नटनर्तकवेश्यानामुत्सवैः संकुलं सदा । बन्दिभिर्विप्रवर्गैश्च दूर्वापुष्पकरैर्युतम् ॥ ३६ ॥
पतिपुत्रवतीभिश्च साध्वीभिश्च समन्वितम् । लक्ष्मीं सरस्वतीं गङ्गां सावित्रीं तुलसीं रतिम् ॥
अरुन्धतीमहल्यां च दितिं तारां मनोरमाम् । अदितिं शतरूपां च शचीं संध्यां च रोहिणीम् ॥ ३७ ॥
अनसूयां तथा स्वाहां संज्ञां वरुणकामिनीम् । आकूतिं च प्रसूतिं च देवहूतिं च मेनकाम् ॥
तामेकपाटलामेकपर्णां मैनाककामिनीम् । वसुंधरां च मनसां पुरस्कृत्य समाययौ ॥ ३९ ॥
रम्भा तिलोत्तमा मेना घृताची मोहिनी शुभा । उर्वशी रत्नमाला च सुशीला ललिता कला ॥
कदम्बमाला सुरसा वनमाला च सुन्दरी । एताश्चान्याश्च बहवो विप्रेन्द्राप्सरसां गणाः ॥
संगीतनर्तनपराः सस्मिता वेषसंयुताः । करतालकराः सर्वा जग्मुरानन्दपूर्वकम् ॥ ४२ ॥
देवाश्च मुनयः शैला गन्धर्वाः किन्नरास्तथा । सर्वे ययुः प्रमुदिताः कुमारस्यानुवर्तने ॥
नानाप्रकारवाद्यैश्च रुद्रैर्वा पार्षदैः सह । भैरवैः क्षेत्रपालैश्च ययौ सार्धं महेश्वरः ॥ ४४ ॥
अथ शक्तिधरो हृष्टो दृष्ट्वाऽऽरात्पार्वतीं तदा । अवरुह्य रथात्तूर्णं शिरसा प्रणनाम ह ॥
तं पद्माप्रमुखं देवीगणं च मुनिकामिनीः । शिवं च परया भक्त्या सर्वान्संभाष्य यत्नतः ॥
कार्तिकेयं शिवा दृष्ट्वा क्रोडे कृत्वा चुचुम्ब च । शंकरश्च सुराः शैला देव्यो वै शैलयोषितः ॥
पार्वतीमुखा देव्यस्तथा देवश्च शंकरः । शैलाश्च मुनयः सर्वे ददुस्तस्मै शुभाशिषः ॥
कुमारः सगणैः सार्धमागत्य च शिवालयम् । ददर्श तं सभामध्ये विष्णुं क्षीरोदशायिनम् ॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । धर्मब्रह्मेन्द्रचन्द्रार्कवह्निवाय्वादिभिर्युतम् ॥ ५० ॥
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम् । स्तुतं मुनीन्द्रैर्देवेन्द्रैः सेवितं श्वेतचामरैः ॥
तं दृष्ट्वा जगतां नाथं भक्तिनम्रात्मकंधरः । पुलकान्वितसर्वाङ्गः शिरसा प्रणनाम ह ॥
विधिं धर्मं च देवांश्च मुनीन्द्रांश्च मुदाऽन्वितान् । प्रणनाम पृथक्तत्र प्राप तेभ्यः शुभाशिषः

---

१ क हरिशब्दस्य सं° । २ क °हविमहम् ।

पृथक्संभाष्य सर्वांश्चाप्युवास कनकासने। ददौ धनानि विप्रेभ्यः पार्वत्या सह शंकरः ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० कार्तिकेयागमनं नाम षोडशोऽध्यायः ॥ १६ ॥

====

अथ सप्तदशोऽध्यायः।

---

नारायण उवाच—

अथ विष्णुर्जगत्कान्तो हृष्टः कृत्वा शुभेक्षणम्। रत्नसिंहासने रम्ये वासयामास षण्मुखम्
नानाविधानि वाद्यानि कांस्यतालादिकानि च। नानाविधानि यन्त्राणि वादयामास कौतु-
कात् ॥ २ ॥
वेदमन्त्राभिषिक्तैश्च सर्वतीर्थोदपूर्णकैः। सद्रत्नकुम्भशतकैः स्नापयामास तं मुदा ॥ ३ ॥
सद्रत्नसारखचितं किरीटं मङ्गलाङ्गदे। अमूल्यरत्नखचितभूषणानि बहूनि च ॥ ४ ॥
वह्निशुद्धांशुके दिव्ये क्षीरोदार्णवसंभवम्। कौस्तुभं वनमालां च तस्मै चक्रं ददौ मुदा ॥
ब्रह्मा ददौ यज्ञसूत्रं वेदां वै वेदमातरम्। संध्यामन्त्रं कृष्णमन्त्रं स्तोत्रं च कवचं हरेः ॥
कमण्डलुं च ब्रह्मास्त्रं विद्यां वै वैरिमर्दिनीम्। धर्मो धर्ममतिं दिव्यां सर्वजीवे दयां ददौ ॥
परं मृत्युंजयं ज्ञानं सर्वशास्त्रावबोधनम्। शश्वत्सुखप्रदं तत्त्वज्ञानं च सुमनोहरम् ॥ ८ ॥
योगतत्त्वं सिद्धितत्त्वं ब्रह्मज्ञानं सुदुर्लभम्। शूलं पिनाकं परशुं शक्तिं पाशुपतं धनुः ॥
संहारास्त्रविनिक्षेपं तत्संहारं ददौ शिवः। श्वेतच्छत्रं रत्नमालां ददौ तस्मै जलेश्वरः ॥
गजेन्द्रं च हयेन्द्रं च सुधाकुम्भं सुधानिधिः। मनोयायिरथं सूर्यः संनाहं च मनोरमम् ॥
यमदण्डं यमश्चैव महाशक्तिं हुताशनः। नानाशस्त्राण्युपायानि सर्वे देवा ददुर्मुदा ॥
कामशास्त्रं कामदेवो ददौ तस्मै मुदाऽन्वितः। क्षीरोदोऽमूल्यरत्नानि विशिष्टे रत्ननूपुरे ॥
सावित्री सिद्धिविद्यां च सर्वास्ताः कौतुकाद्ददुः। हिमालयो मयूरं च वाहनार्थं च मुकुटम् ॥
लक्ष्मीश्च परमैश्वर्यं भारती हारमुत्तमम्। पार्वती सस्मिता हृष्टा परमानन्दमानसा ॥ १५ ॥
महाविद्यां सुशीलां च विद्यां मेधां दयां स्मृतिम्। बुद्धिं सुनिर्मलां शान्तिं तुष्टिं पुष्टिं क्षमां
धृतिम् ॥ १६ ॥
सुदृढां च हरौ भक्तिं हरिदास्यं ददौ मुदा। प्रजापतिर्देवसेनां रत्नभूषणभूषिताम् ॥
सुविनीतां सुशीलां च सुन्दरीं सुमनोहराम्। ददौ तस्मै वेदमन्त्रैर्विवाहविधिना स्वयम्
यां वदन्ति महाषष्ठीं पण्डिताः शिशुपालिकाम्। अभिषिच्य कुमारं च सर्वे देवा ययुर्गृहम्
मुनयश्चैव गन्धर्वाः प्रणम्य जगदीश्वरान्। नारायणं च ब्रह्माणं धर्मं तुष्टाव शंकरः ॥

प्रणनाम हरिं तातं धर्ममालिङ्ग्य नारद । प्रीत्या ययौ च शैलेन्द्रः सगणः शंकरार्चितः
ये ये तत्राऽऽगताः सर्वे ययुरानन्दपूर्वकम् । परमानन्दसंयुक्तो देव्या सह महेश्वरः ॥
कालान्तरे च तान्सर्वान्पुनरानीय शंकरः । पुष्टिं ददौ विवाहेन गणेशाय महात्मने ॥
सुताभ्यां सगणैः सार्धं पार्वती हृष्टमानसा । सिषेवे स्वामिनः पादपद्मं सा सर्वकामदम्
इत्येवं कथितं सर्वं कुमारस्याभिषेचनम् । विवाहः पूजनं तस्य गणेशस्य विवाहकम् ॥
पार्वतीपुत्रलाभश्च देवानां च समागमः । का ते मनसि वाञ्छाऽस्ति किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्म० महा० गणपतिख० नारदना० कुमारगणेशविवाहकुमाराभिषेककथनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

=====

अथाष्टादशोऽध्यायः ।

——

नारद उवाच—

नारायण महाभाग वेदवेदाङ्गपारग । पृच्छामि त्वामहं किंचिदतिसंदेहवान्यतः ॥ १ ॥
सुतस्य त्रिदशेशस्य शंकरस्य महात्मनः । विघ्ननिघ्नस्य यद्विघ्नमीश्वरस्य कथं प्रभो ॥
परिपूर्णतमः श्रीमान्परमात्मा परात्परः । गोलोकनाथः स्वांशेन पार्वतीतनयः स्वयम् ।
अहो भगवतस्तस्य मस्तकच्छेदनं विभो । ग्रहदृष्ट्या ग्रहेशस्य कथं मे वक्तुमर्हसि ॥

नारायण उवाच—

सावधानं शृणु ब्रह्मन्नितिहासं पुरातनम् । विघ्नेशस्य बभूवेदं विघ्नं येन च नारद ॥
एकदा शंकरः सूर्यं जघान परमक्रुधा । सुमालिमालिहन्तारं शूलेन भक्तवत्सलः ॥ ५ ॥
श्रीसूर्योऽमोघशूलेनाशनितुल्येन तेजसा । जहौ स चेतनां सद्यो रथाच्च निपपात ह ॥
ददर्श कश्यपः पुत्रं मृतमुत्तानलोचनम् । कृत्वा वक्षसि तं शोकाद्विललाप भृशं मुहुः ॥
हाहाकारं सुराश्चक्रुर्विलेपुर्भयकातराः । अन्धीभूतं जगत्सर्वं बभूव तमसाऽऽवृतम् ॥
निष्प्रभं तनयं दृष्ट्वा चाशपत्कश्यपः शिवम् । तपस्वी ब्रह्मणः पौत्रः प्रज्वलन्ब्रह्मतेजसा
मत्पुत्रस्य यथा वक्षश्छिन्नं शूलेन तेऽद्य वै । त्वत्पुत्रस्य शिरश्छिन्नं भविष्यति न संशयः
शिवश्च गलितक्रोधः क्षणेनैवाऽऽशुतोषकः । ब्रह्मज्ञानेन तं सूर्यं जीवयामास तत्क्षणात् ॥
ब्रह्मविष्णुमहेशानामंशश्च त्रिगुणात्मकः । सूर्यश्च चेतनां प्राप्य समुत्तस्थौ पितुः पुरः
ननाम पितरं भक्त्या शंकरं भक्तवत्सलम् । विज्ञाय शंभोः शापं च कश्यपं स चुकोप ह
विषयान्नैव जग्राह कोपेनैवमुवाच ह । विषयांश्च परित्यज्य भजे श्रीकृष्णमीश्वरम् ॥

सर्वं दुःखमनित्यं च नश्वरं चेश्वरं विना । विहाय मङ्गलं सत्यं विद्वान्नेच्छेदमङ्गलम् ॥
देवैश्च प्रेरितो ब्रह्मा समागत्य ससंभ्रमः । बोधयित्वा रविं तत्र युयोज विषयेऽब्जजः ॥
तस्मै दत्त्वाऽऽशिषः शंभुर्ब्रह्मा च स्वालयं मुदा । जगाम कश्यपश्चैव स्वराशिं रविरेव च
अथ माली सुमाली च व्याधिग्रस्तौ बभूवतुः । श्वित्रौ गलितसर्वाङ्गौ शक्तिहीनौ हतप्रभौ
तावुवाच स्वयं ब्रह्मा युवां च भजतां रविम् । सूर्यकोपेन गलितौ युवामेवं हतप्रभौ ॥
सूर्यस्य कवचं स्तोत्रं सर्वं पूजाविधिं विधिः । जगाम कथयित्वा तौ ब्रह्मलोकं स्वं ततः ॥
ततस्तौ पुष्करं गत्वा सिषेवाते रविं मुने । स्नात्वा त्रिकालं भक्त्या च जपन्तौ मन्त्रमुत्तमम्
ततः सूर्याद्वरं प्राप्य निजरूपौ बभूवतुः । इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० विघ्नेशाविघ्नकथनं
नामाष्टादशोऽध्यायः ॥ १८ ॥

====

अथैकोनविंशोऽध्यायः ।

———

नारद उवाच—

किं स्तोत्रं कवचं नाथ ब्रह्मणा लोकसाक्षिणा । दानवाभ्यां पुरा दत्तं सूर्यस्य परमात्मनः॥
किं वा पूजाविधानं वा कं मन्त्रं व्याधिनाशनम् । सर्वं चास्य महाभाग तन्मे त्वं वक्तुमर्हसि

सूत उवाच—

नारदस्य वचः श्रुत्वा भगवान्करुणानिधिः । स्तोत्रं च कवचं मन्त्रमूचे तत्पूजनक्रमम् ॥

नारायण उवाच—

शृणु नारद वक्ष्यामि सूर्यपूजाविधेः क्रमम् । स्तोत्रं च कवचं सर्वं पापव्याधिविमोचकम्॥
सुमालिमालिनौ दैत्यौ व्याधिग्रस्तौ बभूवतुः विधिं सस्मरतुः स्तोतुं शिवमन्त्रप्रदायकम्॥
ब्रह्मा गत्वा च वैकुण्ठं पप्रच्छ कमलापतिम् । शिवं तत्रैव संपश्यन्वसन्तं हरिसंनिधौ ॥

ब्रह्मोवाच—

सुमालिमालिनौ दैत्यौ व्याधिग्रस्तौ बभूवतुः । क उपायो वद हरे तयोर्व्याधिविनाशने ॥

विष्णुरुवाच—

कृत्वा सूर्यस्य सेवां च पुष्करे पूर्णवत्सरम् । व्याधिहन्तुर्मदंशस्य तौ च मुक्तौ भविष्यतः

शंकर उवाच—

सूर्यस्तोत्रं च कवचं मन्त्रं कल्पतरुं परम् । देहि ताभ्यां जगत्कान्त व्याधिहन्तुर्महात्मनः ॥
आवां संपत्प्रदातारौ सर्वदाता हरिः स्वयम् । व्याधिहन्ता दिनकरो यस्य यो विषयो विधे

तयोरनुमतिं प्राप्य ययौ दैत्यगृहं विधिः । तदा प्रणम्य तं दृष्ट्वा तस्मै ददतुरासनम् ॥
तावुवाच स्वयं ब्रह्मा रोगग्रस्तौ दयानिधिः । स्तब्धावाहाररहितौ पूयदुर्गन्धसंयुतौ ॥

ब्रह्मोवाच—

गृहीत्वा कवचं स्तोत्रं मन्त्रं पूजाविधिक्रमम् । गत्वा हि पुष्करं वत्सौ भजथः प्रणतौ रविम् ॥

तावूचतुः—

भजावः केन विधिना केन मन्त्रेण वा विधे । किं स्तोत्रं कवचं किं वा तदावाभ्यां वदाधुना

ब्रह्मोवाच—

कृत्वा त्रिकालं स्नानं च मन्त्रेणानेन भास्करम् । संसेव्य भास्करं भक्त्या नीरुजौ च भविष्यथ
ॐ ह्रीं नमो भगवते सूर्याय परमात्मने । स्वाहात्यनेन मन्त्रेण सावधानं दिवाकरम् ॥१६॥
संपूज्य दत्त्वा भक्त्या वै चोपहारांस्तु षोडश । एवं संवत्सरं यावद्ध्रुवं मुक्तौ भविष्यथः ॥
अपूर्वं कवचं तस्य युवाभ्यां प्रददाम्यहम् । यद्दत्तं गुरुणा पूर्वमिन्द्राय प्रीतिपूर्वकम् ॥१८॥
तत्सहस्रभगाङ्गाय शापेन गौतमस्य च । अहल्याहरणेनैव पापयुक्ताय संकटे ॥ १९ ॥

बृहस्पतिरुवाच—

इंद्र शृणु प्रवक्ष्यामि कवचं परमाद्भुतम् । यद्धृत्वा मुनयः पूता जीवन्मुक्ताश्च भारते ॥
कवचं बिभ्रतो व्याधिर्न भियाऽऽयाति संनिधिम् । यथा दृष्ट्वा वैनतेयं पलायन्ते भुजंगमाः
शुद्धाय गुरुभक्ताय स्वशिष्याय प्रकाशयेत् । खलाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्
जगद्विलक्षणस्यास्य कवचस्य प्रजापतिः । ऋषिश्छन्दश्च गायत्री देवो दिनकरः स्वयम् ॥
व्याधिप्रणाशे सौन्दर्ये विनियोगः प्रकीर्तितः । सद्यो रोगहरं सारं सर्वपापप्रणाशनम् ॥
ॐ क्लीं ह्रीं श्रीं श्रीसूर्याय स्वाहा मे पातु मस्तकम् । अष्टादशाक्षरो मन्त्रः कपालं मे सदाऽवतु
ॐ ह्रीं ह्रीं[1] श्रीं श्रीं सूर्याय स्वाहा मे पातु नासिकाम् । चक्षुर्मे पातु सूर्यश्च तारकां च विकर्तनः
भास्करो मेऽधरं पातु दन्तान्दिनकरः सदा । प्रचण्डः पातु गण्डं मे मार्तण्डः कर्णमेव च
मिहिरश्च सदा स्कन्धे जङ्घे पूषा सदाऽवतु ॥ २६ ॥
वक्षः पातु रविः शश्वन्नाभिं सूर्यः स्वयं सदा । कङ्कालं मे सदा पातु सर्वदेवनमस्कृतः ॥
करौ पातु सदा ब्रध्नः पातु पादौ प्रभाकरः । विभाकरो मे सर्वाङ्गं पातु संततमीश्वरः ॥
इति ते कथितं वत्स कवचं सुमनोहरम् । जगद्विलक्षणं नाम त्रिजगत्सु सुदुर्लभम् ॥२९॥
पुरा दत्तं च मनवे पुलस्त्येन तु पुष्करे । मया दत्तं च तुभ्यं तद्यस्मै कस्मै न देहि भोः
व्याधितो मुच्यसे त्वं च कवचस्य प्रसादतः । भवानरोगी श्रीमांश्च भविष्यति न संशयः ॥

---

1 क. ह्रीं क्लीं श्रीं सूं ।

लक्षवर्षं हविष्येण यत्फलं लभते नरः। तत्फलं लभते नूनं कवचस्यास्य धारणात्॥ ३२॥
इदं कवचमज्ञात्वा यो मूढो भास्करं यजेत्। दशलक्षप्रजप्तो ऽपि मन्त्रसिद्धिर्न जायते॥

ब्रह्मोवाच—

धृत्वेदं कवचं वत्सौ कृत्वा चस्तवनं रवेः। युवां व्याधिविनिर्मुक्तौ निश्चितं तु भविष्यथः॥
स्तवनं सामवेदोक्तं सूर्यस्य व्याधिमोचनम्। सर्वपापहरं सारं धनारोग्यकरं परम्॥

ब्रह्मोवाच—

तं ब्रह्म परमं धाम ज्योतीरूपं सनातनम्। त्वामहं स्तोतुमिच्छामि भक्तानुग्रहकारकम्॥
त्रैलोक्यलोचनं लोकनाथं पापविमोचनम्। तपसां फलदातारं दुःखदं पापिनां सदा॥
कर्मानुरूपफलदं कर्मबीजं दयानिधिम्। कर्मरूपं क्रियारूपमरूपं कर्मबीजकम्॥ ३८॥
ब्रह्मविष्णुमहेशानामंशं च त्रिगुणात्मकम्। व्याधिदं व्याधिहन्तारं शोकमोहभयापहम्॥
सुखदं मोक्षदं सारं भक्तिदं सर्वकामदम्॥ ३९॥
सर्वेश्वरं सर्वरूपं साक्षिणं सर्वकर्मणाम्। प्रत्यक्षं सर्वलोकानामप्रत्यक्षं मनोहरम्॥ ४०॥
शश्वद्रसहरं पश्चाद्रसदं सर्वसिद्धिदम्। सिद्धिस्वरूपं सिद्धेशं सिद्धानां परमं गुरुम्।
स्तवराजमिमं प्रोक्तं गुह्याद्गुह्यतरं परम्। त्रिसंध्यं यः पठेन्नित्यं व्याधिभ्यः स प्रमुच्यते
आन्ध्यं कुष्ठं च दारिद्र्यं रोगः शोको भयं कलिः तस्य नश्यन्ति विश्वेश श्रीसूर्यकृपया ध्रुवम्
महाकुष्ठी च गलितो चक्षुर्हीनो महाव्रणी। यक्ष्मग्रस्तो महाशूली नानाव्याधियुतोऽपि वा
मासं कृत्वा हविष्यान्नं श्रुत्वाऽतो मुच्यते ध्रुवम्. स्नानं च सर्वतीर्थानां लभते नात्र संशयः
पुष्करं गच्छतं शीघ्रं भास्करं भजतं सुतौ। इत्येवमुक्त्वा स विधिर्जगाम स्वालयं मुदा॥
तौ निषेव्य दिनेशं तं नीरुजौ संबभूवतुः। इत्येवं कथितं वत्स किं भूयः श्रोतुमिच्छसि॥
सर्वविघ्नहरं सारं विघ्नेशं विघ्ननाशनम्। स्तोत्रेणानेन तं स्तुत्वा मुच्यते नात्र संशयः॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० विघ्नकारणकथनं नवैकोनविंशोऽध्यायः॥ १९॥

====

अथ विंशोऽध्यायः।

---

नारद उवाच—

हरेरंशसमुत्पन्नो हरितुल्यो भवान्प्रियः। तेजसा विक्रमेणैव मत्प्रश्नं श्रोतुमर्हसि॥ १॥
विघ्ननिघ्नस्य यद्विघ्नं श्रुतं तत्परमाद्भुतम्। तद्विघ्नकारिणं चैव शिवकारणवक्त्रकृतः॥ २॥
अधुना श्रोतुमिच्छामि स्वात्मसंदेहभञ्जनम्। त्रैलोक्यनाथतनये गजास्ययोजनार्थकम्॥

स्थितेष्वन्येषु बहुषु जन्तुष्वब्जभुवः पते । सुप्राणिनां सुरूपेषु नानारूपेषु रूपिणाम् ॥

नारायण उवाच—

गजास्ययोजनायाश्च कारणं शृणु नारद । गोप्यं सर्वपुराणेषु वेदेषु च सुदुर्लभम् ॥५॥

कारणं सर्वदुःखानां कारणं सर्वसंपदाम् । हारणं विपदां चैव रहस्यं पापमोचनम् ॥६॥

महालक्ष्म्याश्च चरितं सर्वमङ्गलमङ्गलम् । सुखदं मोक्षदं चैव चतुर्वर्गफलप्रदम् ॥ ७ ॥

शृणु तात प्रवक्ष्येऽहमितिहासं पुरातनम् । रहस्यं पाद्मकल्पस्य पुरा तातमुखाच्छ्रुतम् ॥

एकदैव महेन्द्रश्च पुष्पभद्रां नदीं ययौ । महासंपन्मदोन्मत्तः कामी राजश्रियाऽन्वितः ॥

तत्तीरेऽतिरहःस्थाने पुष्पोद्याने मनोहरे । अतीव दुर्गमेऽरण्ये सर्वजन्तुविवर्जिते ॥ १० ॥

भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रवे । सुगन्धिपुष्पसंश्लिष्टवायुना सुरभीकृते ॥ ११ ॥

ददर्श रम्भां तत्रैव चन्द्रलोकात्समागताम् । सुरतश्रमविश्रान्तिकामुकीं कामकामुकीम् ॥

इच्छन्तीमीप्सितां क्रीडां गच्छन्तीं मदनाश्रमम् । एकाकिनीमुन्मनस्कां मन्मथोद्धतमानसाम्

सुश्रोणीं सुदतीं श्यामां बिम्बाधरसरोरुहाम् । बृहन्नितम्बभारार्तां मत्तवारणगामिनीम् ॥

सस्मितास्यशरच्चन्द्रां सुकटाक्षं च बिभ्रतीम् । बिभ्रतीं कबरीं रम्यां मालतीमाल्यशोभिताम्

वह्निशुद्धांशुकधरां रत्नभूषणभूषिताम् । कस्तूरीबिन्दुना सार्धं सिन्दूरं बिभ्रतीं मुदा ॥

नीलोत्पलदलश्यामकज्जलोज्ज्वललोचनाम् । मणिकुण्डलयुग्माढ्यगण्डस्थलविराजिताम्

अत्युन्नतं सुकठिनं पत्त्रराजिविराजितम् । सुखदं रसिकानां च स्तनयुग्मं च बिभ्रतीम् ॥

सर्वसौभाग्यवेषाढ्यां सुभगां सुरतोत्सुकाम् । प्राणाधिकां च देवानां स्वच्छां स्वच्छन्दगा-
मिनीम् ॥ १९ ॥

वरामप्सरसां रम्यामतीव स्थिरयौवनाम् । गुणरूपवतीं शान्तां मुनिमानसमोहिनीम् ॥

दृष्ट्वा तामतिवेषाढ्यां तत्कटाक्षेण पीडितः । इन्द्रोऽतीन्द्रियचापल्यात्प्रवक्तुमुपचक्रमे ॥

इन्द्र उवाच—

क्व गच्छसि वरारोहे क्व गताऽसि मनोहरे । मया दृष्टा हि सुचिरात्कल्याणि सुपर्वेऽधुना

तवान्वेषणकर्ताऽहं श्रुत्वा वाचिकवक्त्रतः । त्वय्यासक्तमनाश्चास्मि नान्यां वै गणयामि च

सुधापानजलार्थी यः किमिच्छेत्पाङ्किलं जलम् । पङ्कं नेच्छेच्चन्दनार्थी पङ्कजार्थी न चोत्पलम्

सुधार्थी न सुरामिच्छेद्दुग्धार्थी नाऽऽविलं जलम् । सुगन्धिपुष्पशायी यो वस्त्रान्तरं न
चेच्छति । २५ ॥

स्वर्गी च नरकं नेच्छेत्सुभोगी दुष्टभोजनम् । पण्डितैः सह संवासी नेच्छेत्स्त्रीसंनिधिं नरः ॥

विहाय रत्नाभरणं कोऽपीच्छेल्लोहभूषणम् ॥ २६ ॥

त्वां नाऽऽश्लिष्य महाविज्ञां को मूढो गन्तुमिच्छति। विहाय गङ्गां को विज्ञो नदीमन्यां च वाञ्छति ॥ २७ ॥
इन्द्रियैश्चेन्द्रियरतिं वर्धयन्तीं पदे पदे। वरं प्रार्थयितारश्च प्राणिनश्च सुखार्थिनः ॥ २८ ॥
इत्येवमुक्त्वा मघवानवरुह्य गजेश्वरात्। कामयुक्तश्च पुरतस्तस्थौ तस्याश्च नारद ॥ २९ ॥
श्रुत्वा तद्वचनं रम्भा महाशृंगारलोलुपा जहासाऽऽनम्रवदना पुलकाञ्चितविग्रहा। ३०॥
स्मेराननकटाक्षेण स्तनोर्वोर्दर्शनेन च। नर्मोक्तिगर्भवाक्येन चाहरत्तस्य चेतनाम्॥३१॥
मितं सारं सुमधुरं सुस्निग्धं कोमलं प्रियम्। पुरुषायत्तबीजं च प्रवक्तुमुपचक्रमे। ३२॥

रम्भोवाच—

यास्यामि वाञ्छितं यत्र प्रश्नेन तव किं फलम्। नाहं संतोषजननी धूर्तानां दुष्टमित्रता ॥
यथा मधुकरो लोभात्सर्वपुष्पासवं लभेत्। स्वादु यत्रातिरिक्तं स तत्र तिष्ठति संततम्
तथैव कामुकी लोके भ्रमेद्भ्रमरवत्तदा। चाञ्चल्यात्स हि कास्वेव वायुवद्रसमाहरेत् ॥
सुपुमानङ्कवत्स्त्रीणां यथा शाखाश्च शाखिषु। कामुकी काकवल्लोलः फलं भुक्त्वा प्रयाति च ॥ ३६ ॥
स्वकार्यमुद्धरेद्यावत्तावद्वासप्रयोजनम्। स्थितिः कार्यानुरोधेन यथा काष्ठे हुताशनः ॥
यावत्तडागे तोयानि तावद्धंसास्तेषु च। शोषारम्भे च तोयानि(नां) यान्ति स्थानान्तरं पुनः
त्वं देवानामीश्वरोऽसि कामिनीनां च वाञ्छितः। पुमांसं रसिकं शश्वद्वाञ्छन्ति रसिकाः सुखात् ॥ ३९ ॥
युवानं रसिकं शान्तं सुवेषं सुन्दरं प्रियम्। गुणिनं धनिनं स्वच्छं कान्तमिच्छति कामिनी ॥
दुःशीलं रोगिणं वृद्धं रतिशक्तिवियोजितम्। अदातारमविज्ञं च नैव वाञ्छन्ति योषितः ॥
का मूढा न च वाञ्छन्ति त्वामेवं गुणसागरम्। तवाऽऽज्ञाकारिणीं दासीं गृहाणात्र यथा सुखम् ॥ ४२ ॥
इत्युक्त्वा सस्मिता सा च तं पपौ वक्रचक्षुषा। कामाग्निदग्धा विगलल्लज्जा तस्थौ समीपतः
ज्ञात्वा भावं स्मरार्तायाः स्मरशास्त्रविशारदः। गृहीत्वा तां पुष्पतल्पे विजहार तया सह ॥
चुचुम्ब रहसि प्रौढां नग्नां च सुभगां वराम्। पक्वबिम्बाधरौष्ठीं च सुदत्या चुम्बितस्तया ॥
नानाप्रकारशृङ्गारान्विपरीतादिकान्मुने। चकार कामी तत्रैव शृङ्गारो मूर्तिमानिव ॥
तौ कामाहितचित्तौ नो बुबुधाते दिवानिशम्। अन्योन्यगतचित्तौ च कामार्तौ ज्ञानवर्जितौ
स च कृत्वा स्थले क्रीडां तया सह सुरेश्वरः। ययौ जलविहारार्थं पुष्पभद्रानदीजलम् ॥

---

१ क. कामाग्न्याहुतिवा°

स चकार जलक्रीडां तया सह मुदा क्षणम् । जलात्स्थले स्थलात्तोये विजहार पुनः
एतस्मिन्नन्तरे तेन वर्त्मना मुनिपुंगवः । सशिष्यो याति दुर्वासा वैकुण्ठाच्छंकरालय
तं च दृष्ट्वा मुनीन्द्रं च देवेन्द्रः स्तब्धमानसः । ननामाऽऽगत्य सहसा ददौ तस्मै स चाऽऽ ः
पारिजातप्रसूनं यद्दत्तं नारायणेन वै । तच्च दत्तं महेन्द्राय मुनीन्द्रेण महात्मना ॥१२॥
दत्त्वा पुष्पं महाभागस्तमुवाच कृपानिधिः । माहात्म्यं तस्य यत्किंचिदपूर्वं मुनिसत्तमः ॥

दुर्वासा उवाच--

सर्वविघ्नहरं पुष्पं नारायणनिवेदितम् । मूर्ध्नीदं यस्य देवेन्द्र जयस्तस्यैव सर्वतः ॥१४॥
पुरः पूजा च सर्वेषां देवानामग्रणीर्भवेत् । तच्छायेव महालक्ष्मीर्न जहाति कदाऽपि तम् ॥
ज्ञानेन तेजसा बुद्ध्या विक्रमेण बलेन च । सर्वदेवाधिकः श्रीमान्हरितुल्यपराक्रमः ॥
भक्त्या मूर्ध्नि न गृह्णाति योऽहंकारेण पामरः । नैवेद्यं च हरेरेव स भ्रष्टश्रीः स्वजातिभिः
इत्युक्त्वा शंकरांशश्च ह्यगमच्छंकरालयम् । तत्स रम्भान्तिके तिष्ठन्निक्षेप गजमस्तके ॥
तेन भ्रष्टश्रियं दृष्ट्वा सा जगाम सुरालयम् । पुंश्चली योग्यमिच्छन्ती नापरं चञ्चलाऽधमा
देवराजं परित्यज्य गजराजो महाबली । प्रविवेश महारण्यं तं निक्षिप्य स्वतेजसा ॥१०॥
तत्रैव करिणीं प्राप्य मत्तः संबुभुजे बलात् । साऽतो बभूव वशगा योषिज्जातिः सुखार्थिनी
तयोर्बभूवापत्यानां निवहस्तत्र कानने । हरिस्तन्मस्तकं छित्त्वा योजयाम स बालके ॥
इत्येवं कथितं वत्स किं भूयः श्रोतुमिच्छसि । गजास्ययोजनायाश्च कारणं पापनाशनम् ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० गणपतेर्गजास्ययोजना-
हेतुकथनं नाम विंशोऽध्यायः ॥ २० ॥

=====

## अथैकविंशोऽध्यायः ।

---

नारद उवाच—

ते देवा ब्रह्मशापेन निःश्रीकाः केन वा प्रभो । बभूवुस्तद्रहस्यं च गोपनीयं सुदुर्लभम् ॥
कथं वा प्रापुरेते तां कमलां जगतां प्रसूम् । किं चकार महेन्द्रश्च तद्भवान्वक्तुमर्हसि ॥

नारायण उवाच--

गजेन्द्रेण पराभूतो रम्भया च सुमन्दधीः । भ्रष्टश्रीर्दैन्ययुक्तश्च स जगामामरावतीम् ॥
तां ददर्श निरानन्दो निरानन्दां पुरीं मुने । दैन्यग्रस्तां बन्धुहीनां वैरिवर्गैः समाकुलाम् ॥
इति श्रुत्वा दूतमुखाज्जगाम गुरुमन्दिरम् । तेन देवगणैः सार्धं जगाम ब्रह्मणः सभाम् ॥
गत्वा ननाम तं शक्रः सुरैः सार्धं तथा गुरुः । तुष्टाव वेदवाक्यैश्च स्तोत्रेणापि च संयतः ॥

प्रवृत्तिं कथयामास वाक्पतिस्तं प्रजापतिम् । श्रुत्वा ब्रह्मा नम्रवक्त्रः प्रवक्तुमुपचक्रमे ॥

ब्रह्मोवाच—

मत्प्रपौत्रोऽसि देवेन्द्र शश्वद्राजश्रिया ज्वलन् । लक्ष्मीसमः शचीभर्ता परस्त्रीलोलुपः सदा
गौतमस्याभिशापेन भगाङ्कः सुरसंसदि । पुनर्लज्जाविहीनस्त्वं परस्त्रीरतिलोलुपः ॥ ९ ॥
यः परस्त्रीषु निरतस्तस्य श्रीर्वा कुतो यशः । स च निन्द्यः पापयुक्तः शश्वत्सर्वसभासु च
नैवेद्यं श्रीहरेरेव दत्तं दुर्वाससा च ते । गजमूर्ध्नि त्वया न्यस्तं रम्भयाऽऽहृतचेतसा ॥
क्व सा रम्भा सर्वभोग्या क्वाधुना त्वं श्रिया हतः । सर्वसौख्यप्रदात्री त्वां गता त्यक्त्वा
क्षणेन सा ॥ १२ ॥
वेश्या सश्रीकमिच्छन्ती निःश्रीकं न च चञ्चला । नवं नवं प्रार्थयन्ती परिनिन्द्य पुरातनम् ॥
यद्भुतं तद्भुतं वत्स निष्पन्नं न निवर्तते । भज नारायणं भक्त्या पद्मायाः प्राप्तिहेतवे ॥
इत्युक्त्वा तं जगत्स्रष्टा स्तोत्रं च कवचं ददौ । नारायणस्य मन्त्रं च नारायणपरायणः ॥
स तैः सार्धं च गुरुणा ह्यजपन्मन्त्रमीप्सितम् । गृहीत्वा कवचं तेन पर्यष्टौ पुष्करे हरिम् ॥
वर्षमेकं निराहारो भारते पुण्यदे शुभे । सिषेवे कमलाकान्तं कमलाप्राप्तिहेतवे ॥ १२॥
आविर्भूय हरिस्तस्मै वाञ्छितं च वरं ददौ । लक्ष्मीस्तोत्रं च कवचं मन्त्रमैश्वर्यवर्धनम् ॥
दत्त्वा जगाम वैकुण्ठमिन्द्रः क्षीरोदमेव च । गृहीत्वा कवचं स्तुत्वा प्राप पद्मालयां मुने ॥
सुरेश्वरोऽरिं जित्वा वै ह्यलभच्चामरावतीम् । प्रत्येकं च सुराः सर्वे स्वालयं प्रापुरीप्सितम् ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० शक्रलक्ष्मीप्राप्तिर्नामैक-
विंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोऽध्यायः ।

---

नारद उवाच—

आविर्भूय हरिस्तस्मै किं स्तोत्रं कवचं ददौ । महालक्ष्म्याश्च लक्ष्मीशस्तन्मे ब्रूहि तपोधन ॥

नारायण उवाच--

पुष्करे च तपस्तप्त्वा विरराम सुरेश्वरः । आविर्बभूव तत्रैव क्लिष्टं दृष्ट्वा हरिः स्वयम् ॥
तमुवाच हृषीकेशो वरं वृणु यथेप्सितम् । स च वव्रे वरं लक्ष्मीमीशस्तस्मै ददौ मुदा ॥
वरं दत्त्वा हृषीकेशः प्रवक्तुमुपचक्रमे । हितं सत्यं च सारं च परिणामसुखावहम् ॥

मधुसूदन उवाच—

गृहाण कवचं शक्र सर्वदुःखविनाशनम् । परमैश्वर्यजनकं सर्वशत्रुविमर्दनम् ॥ १ ॥

ब्रह्मणे च पुरा दत्तं विष्टपे च जलप्लुते। यद्धृत्वा जगतां श्रेष्ठः सर्वैश्वर्ययुतो विधिः ॥
बभूवुर्मनवः सर्वे सर्वैश्वर्ययुता यतः। सर्वैश्वर्यप्रदस्यास्य कवचस्य ऋषिर्विधिः ॥७॥
पङ्क्तिश्छन्दश्च सा देवी स्वयं पद्मालया वरा। सिद्ध्यैश्वर्यसुखेष्वेव विनियोगः प्रकीर्तितः
यद्धृत्वा कवचं लोकः सर्वत्र विजयी भवेत्। मस्तकं पातु मे पद्मा कण्ठं पातु हरिप्रिया ॥
नासिकां पातु मे लक्ष्मीः कमला पातु लोचने। केशान्केशवकान्ता च कपालं कमलालया ॥
जगत्प्रसूर्गण्डयुग्मं स्कन्धं संपत्प्रदा सदा। ॐ श्रीं कमलवासिन्यै स्वाहा पृष्ठं सदाऽवतु ॥
ॐ ह्रीं श्रीं पद्मालयायै स्वाहा वक्षः सदाऽवतु। पातु श्रीर्मम कङ्कालं बाहुयुग्मं च ते नमः ॥
ॐ ह्रीं श्रीं लक्ष्म्यै नमः पादौ पातु मे संततं चिरम्। ॐ ह्रीं श्रीं नमः पद्मायै स्वाहा पातु
नितम्बकम् ॥ १४ ॥
ॐ श्रीं महालक्ष्म्यै स्वाहा सर्वाङ्गं पातु मे सदा। ॐ ह्रीं श्रीं क्लीं महालक्ष्म्यै स्वाहा मां
पातु सर्वतः ॥ १५ ॥
इति ते कथितं वत्स सर्वसंपत्करं परम्। सर्वैश्वर्यप्रदं नाम कवचं परमाद्भुतम् ॥ १६ ॥
गुरुमभ्यर्च्य विधिवत्कवचं धारयेत्तु यः। कण्ठे वा दक्षिणे बाहौ स सर्वविजयी भवेत् १७
महालक्ष्मीर्गृहं तस्य न जहाति कदाचन। तस्य छायेव सततं सा च जन्मनि जन्मनि ॥
इदं कवचमज्ञात्वा भजेल्लक्ष्मीं स मन्दधीः। शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥

नारायण उवाच—

दत्त्वा तस्मै च कवचं मन्त्रं वै षोडशाक्षरम्। संतुष्टश्च जगन्नाथो जगतां हितकारणम् ॥
ॐ ह्रीं श्रीं क्लीं नमो महालक्ष्म्यै स्वाहा। ददौ तस्मै च कृपया चेन्द्राय च महामुने ॥
ध्यानं च सामवेदोक्तं गोपनीयं सुदुर्लभम्। सिद्धैर्मुनीन्द्रैर्दुष्प्राप्यं ध्रुवं सिद्धिप्रदं शुभम् ॥
श्वेतचम्पकवर्णाभां शतचन्द्रसमप्रभाम्। वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारिकाम्। कस्तूरीबिन्दुमध्यस्थं सिन्दूरं भूषणं तथा ॥
अमूल्यरत्नरचितकुण्डलोज्ज्वलभूषणम्। बिभ्रती कबरीभारं मालतीमाल्यशोभितम् ॥
सहस्रदलपद्मस्थां स्वस्थां च सुमनोहराम्। शान्तां च श्रीहरेः कान्तां तां भजेज्जगतां प्रसूम्
ध्यानेनानेन देवेन्द्र ध्यात्वा लक्ष्मीं मनोहराम्। भक्त्या संपूज्य तस्यै च चोपचारांस्तु षोडश
स्तुत्वाऽनेन स्तवेनैव वक्ष्यमाणेन वासव। नत्वा वरं गृहीत्वा च लभिष्यसि च निर्वृतिम् ॥
स्तवनं शृणु देवेन्द्र महालक्ष्म्याः सुखप्रदम्। कथयामि सुगोप्यं च त्रिषु लोकेषु दुर्लभम् ॥

---

१ क. सुखो। २ क. च श्रीं न°। २ क. ह्रीं। ३ क. श्रीं महालक्ष्म्यै हरिप्रियायै स्वा°।

नारायण उवाच—
देवि त्वां स्तोतुमिच्छामि न क्षमाः स्तोतुमीश्वराः। बुद्धेरगोचरां सूक्ष्मां तेजोरूपां सनातनीम्
अत्यनिर्वचनीयां च को वा निर्वक्तुमीश्वरः॥ २७॥
स्वेच्छामयीं निराकारां भक्तानुग्रहविग्रहाम्। स्तौमि वाङ्मनसोः पारां किंवाऽहं जगदम्बिके
परां चतुर्णां वेदानां पारबीजं भवार्णवे। सर्वसस्याधिदेवीं च सर्वासामपि संपदाम्॥२९॥
योगिनां चैव योगानां ज्ञानानां ज्ञानिनां तथा। वेदानां वै वेदविदां जननीं वर्णयामि किम्
यया विना जगत्सर्वमबीजं निष्फलं ध्रुवम्। यथा स्तनंधयानां च विना मात्रा सुखं भवेत्
प्रसीद जगतां मातः रक्षास्मानतिकातरान्। वयं त्वच्चरणाम्भोजे प्रपन्नाः शरणं गताः॥
नमः शक्तिस्वरूपायै जगन्मात्रे नमो नमः। ज्ञानदायै बुद्धिदायै सर्वदायै न०॥ ३३॥
हरिभक्तिप्रदायिन्यै मुक्तिदायै न०। सर्वज्ञायै सर्वदायै महालक्ष्म्यै न० ॥ ३४॥
कुपुत्राः कुत्रचित्सन्ति न कुत्रापि कुमातरः। कुत्र माता पुत्रदोषं तं विहाय च गच्छति॥
स्तनंधयेभ्य इव मे हे मातर्देहि दर्शनम्। कृपां कुरु कृपासिन्धो त्वमस्मान्भक्तवत्सले॥
इत्येवं कथितं वत्स पद्मायाश्च शुभावहम्। सुखदं मोक्षदं सारं शुभदं संपदः प्रदम्॥
इदं स्तोत्रं महापुण्यं पूजाकाले च यः पठेत्। महालक्ष्मीर्गृहं तस्य न जहाति कदाचन॥
इत्युक्त्वा श्रीहरिस्तं च तत्रैवान्तरधीयत। देवो जगाम क्षीरोदं सुरैः सार्धं तदाज्ञया

इति श्रीब्रह्म० महा० गणपतिख० नारदना० लक्ष्मीस्तवकवचपूजाकथनं नाम द्वाविंशोऽध्यायः॥ २२॥

अथ त्रयोविंशोऽध्यायः।

नारायण उवाच—
इन्द्रश्च गुरुणा सार्धं सुरैः संहृष्टमानसः। जगाम शीघ्रं पद्मायै तीरं क्षीरपयोनिधेः॥
कवचं च गले बद्ध्वा सद्रत्नगुटिकान्वितम्। मनसा स्तवनं दिव्यं स्मारंस्मारं पुनः पुनः
ते सर्वे भक्तियुक्ताश्च तुष्टुवुः कमलालयाम्। साश्रुनेत्राश्च दीनाश्च भक्तिनम्रा मकंधराः
सा तेषां स्तवनं श्रुत्वा सद्यः साक्षाद्बभूव ह। सहस्रदलपद्मस्था शरच्चन्द्रसमप्रभा॥
जगद्व्याप्तं सुप्रभया जगन्मात्रा यया मुने। तानुवाच जगद्धात्री हितं सारं यथोचितम्॥

१ क. क्षमः स्तोतुमिश्वरीम्। २ क. सर्वेशस्या॰। ३ क. गोपीनां चैव गोपानां ज्ञा॰। ४ क. भवस्तु।

महालक्ष्मीरुवाच —

वत्सा नेच्छामि वो गेहान्गन्तुं नैवं क्षमाऽधुना । भ्रष्टान्दृष्ट्वा ब्रह्मशापा द्बिभेमि ब्रह्मशापतः
प्राणा मे ब्राह्मणाः सर्वे शश्वत्पुत्राधिकं प्रियाः । विप्रदत्तं च यत्किंचिदुपजीव्यं सदैव च
विप्रा ब्रुवन्तु मां तुष्टा यास्यामि भवदाज्ञया । न मे पूजा ध्रुवं कर्तुं क्षमास्ते च तपस्विनः
गुरुभिर्ब्राह्मणैर्देवैर्भिक्षुभिर्वैष्णवैस्तथा । यद्भाव्यं भवेद्दैवात्ते शप्ताः सन्ति तैः सदा ॥८॥
नारायणश्च भगवान्बिभेति ब्रह्मशापतः । सर्वबीजं च भगवान्सर्वेशश्च सनातनः ॥९॥
एतस्मिन्नन्तरे ब्रह्मन्ब्राह्मणा हृष्टमानसाः । आजग्मुः सस्मिताः सर्वे ज्वलन्तो ब्रह्मतेजसा
अङ्गिराश्च प्रचेताश्च क्रतुश्च भृगुरेव च । पुलहश्च पुलस्त्यश्च मरीचिश्चात्रिरेव च ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो भगवान्साक्षान्नारायणात्मकः ॥
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा । दुर्वासाः कश्यपोऽगस्त्यो गौतमः कण्व एव च
और्वः कात्यायनश्चैव कणादः पाणिनिस्तथा । मार्कण्डेयो लोमशश्च वसिष्ठो भगवान्स्वयम्
ब्राह्मणा विविधैर्द्रव्यैः पूजयामासुरीश्वरीम् । देवाश्चारण्यनैवेद्यैरुपहारेण भक्तितः ॥१९॥
स्तुत्वा मुनीन्द्रास्तां भक्त्या चक्रुराराधनं मुदा । आगच्छ देवभवनं मर्त्यं च जगदम्बिके॥
तेषां तद्वचनं श्रुत्वा तानुवाच जगत्प्रसूः । परितुष्टा गामुकी च निर्भया ब्राह्मणाज्ञया ॥

महालक्ष्मीरुवाच—

गृहान्यास्यामि देवानां युष्माकं चाऽऽज्ञया द्विजाः । येषां गेहं न गच्छामि शृणुध्वं मारतेषु च
स्थिरा पुण्यवतां गेहे सुनीतिपथवेदिनाम् । गृहस्थानां नृपाणां वा पुत्रवत्पालयामि तान्
यं यं रुष्टो गुरुर्देवो माता तातश्च बान्धवाः । अतिथिः पितृलोकश्च यामि तस्य न मन्दिरम्
मिथ्यावादी च यः शश्वदनध्यायी च यः सदा । सत्त्वहीनश्च दुःशीलो न गेहं तस्य याम्यहम्
सत्यहीनः स्थाप्यहारी मिथ्यासाक्ष्यप्रदायकः । विश्वासघ्नः कृतघ्नो यो यामि० ॥ २२ ॥
चिन्ताग्रस्तो भयग्रस्तः शत्रुग्रस्तोऽतिपातकी । ऋणग्रस्तोऽतिकृपणो न गेहं यामि पापिनाम्
दीक्षाहीनश्च शोकार्तो मन्दधीः स्त्रीजितः सदा । न याम्यपि कदा गेहं पुंश्चल्याः पतिपुत्रयोः
पुंश्चल्यन्नमवीरान्नं यो भुङ्क्ते कामतः सदा । शूद्रान्नभोजी तद्याजी तद्गेहं नैव याम्यहम् ॥
यो दुर्वाक्कलहाविष्टः कलिः शश्वद्यदालये । स्त्री प्रधाना गृहे यस्य यामि ॥ २५ ॥
यत्र नास्ति हरेः पूजा तदीयगुणकीर्तनम् । नोत्सुकस्तत्प्रशंसायां यामि० ॥ २६ ॥
कन्यान्नवेदविक्रेता नरघाती च हिंसकः । नरकागारसदृशं यामि० ॥ २७ ॥

---

१ ख. यद्भाव्यं । २ क. °गुनन्दनः । ३ क. °श्वन्नास्तीतिवाचकः सदा । ४ क. °न्यात्मवे° ।

मातरं पितरं भार्यां गुरुपत्नीं गुरोः सुताम् । अनाथां भगिनीं कन्यामनन्याश्रयबान्धवान् ॥
कार्पण्याद्यो न पुष्णाति संचयं कुरुते सदा । तद्गृहान्नरकागारान्यामि तान्मुनिसत्तम ॥ १९ ॥
दर्शनं यस्य सकलं क्षमस्तकम् । विकृतौ हासहासौ च यामि० ॥ २० ॥
मूत्रं पुरीषमुत्सृज्य यस्तत्पश्यति मन्दधीः । यः शेते शिक्यपादेन यामि० ॥ २१ ॥
अधोत्पादशायी यो नग्नः शेतेऽतिनिद्रितः । संध्याशायी दिवाशायी यामि० ॥ २२ ॥
मूर्ध्नि तैलं पुरो दत्त्वा योऽन्यदङ्गमुपस्पृशेत् । ददाति पश्चाद्गात्रे वा यामि० ॥ २३ ॥
दत्त्वा तैलं मूर्ध्नि गात्रे किमूत्रं यः समुत्सृजेत् । प्रणमेदाहरेत्पुष्पं य नि० ॥ २४ ॥
तृणं छिनत्ति नखैर्नखैर्विलिखेन्महीम् । गात्रे पादे मलो यस्य यामि० ॥ २५ ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं सुरस्य च । यो हरेज्ज्ञानशीलश्च यामि० ॥ २६ ॥
यत्कर्म दक्षिणाहीनं कुरुते मूढधीः शठः । स पापी पुण्यहीनश्च यामि० ॥ २७ ॥
मन्त्रविद्योपजीवी च ग्रामयाजी चिकित्सकः । सूपकृद्देवलश्चैव यामि० ॥ २८ ॥
विवाहं धर्मकार्यं वा यो निहन्ति च कोपतः । दिवा मैथुनकारी यो यामि० ॥ २९ ॥
इत्युक्त्वा सा महालक्ष्मीरन्तर्धानं जगाम ह । ददौ दृष्टिं च देवानां गृहे मर्त्ये च नारद ॥
तां प्रणम्य सुराः सर्वे मुनयश्च मुदाऽन्विताः । प्रजग्मुः स्वालयं शीघ्रं शत्रुत्यक्तं सुदुर्लभम् ॥
नेदुर्दुन्दुभयः स्वर्गे बभूवुः पुष्पवृष्टयः । प्रापुर्देवाः स्वराज्यं च निश्चलां कमलां मुने ॥ ४२ ॥
इत्येवं कथितं वत्स लक्ष्मीचरितमुत्तमम् । सुखदं मोक्षदं सारं किं पुनः श्रोतुमिच्छसि ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० गणपतेर्गजास्यत्वकारणलक्ष्मी-
ब्राह्मणविरोधादिलक्ष्मीचरित्रकथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

अथ चतुर्विंशोऽध्यायः ।

---

**नारद उवाच—**

नारायण महाभाग हरेरंशसमुद्भव । सर्वं श्रुतं त्वत्प्रसादाद्गणेशचरितं शुभम् ॥ १ ॥
दन्तद्वययुतं वक्त्रं गजराजस्य बालके । विष्णुना योजितं ब्रह्मन्नेकदन्तः कथं शिशुः ॥
कुतो गतोऽस्य दन्तोऽन्यस्तद्भवान्वक्तुमर्हति । सर्वेश्वरस्त्वं सर्वज्ञः कृपावान्भक्तवत्सलः

**सूत उवाच—**

नारदस्य वचः श्रुत्वा स्मेराननसरोरुहः । एकदन्तस्य चरितं प्रवक्तुमुपचक्रमे ॥ ४ ॥

---

१ ख गुरुं सुतम । २ क ज्ञान' । ३ क. 'नहीनश्च ।

नारायण उवाच—

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् । एकदन्तस्य चरितं सर्वमङ्गलमङ्गलम् ॥ १ ॥
एकदा कार्तवीर्यश्च जगाम मृगयां मुने । मृगान्निहत्य बहुलान्परिश्रान्तो बभूव सः ॥
निशामुखे दिनेऽतीते तत्र तस्थौ वने नृपः । जमदग्न्याश्रमाभ्याशे चोपोष्यानीकसंयुतः ॥
प्रातः सरोवरे राजा स्नातः शुचिरलंकृतः । दत्तात्रेयेण दत्तं च जजाप परमं मनुम् ॥
मुनिर्ददर्श राजानं शुष्ककण्ठोष्ठतालुकम् । प्रीत्याऽऽश्वास्य मृदुलं पप्रच्छ कुशलं मुनिः ॥
नत्वा संभ्रमाद्राजा मुनिं सूर्यसमप्रभम् । स च तस्मै ददौ प्रीत्या प्रणताय शुभाशिषः ॥
वृत्तान्तं कथयामास राजा चानशनादिकम् । संभ्रमेणैव मुनिना कृतो राजा निमन्त्रितः ॥
विसृज्य तं मुनिश्रेष्ठः प्रययौ स्वालयं मुदा । एतद्वृत्तं कामधेनुं कथयामास भीतवत् ॥
उवाच सा मुनिं भीतं भयं किं ते मयि स्थिते । जमदग्नेऽर्चयितुं शक्तस्त्वं मया को नृपो मुने ॥
राजभोजनयोग्याहं यद्यद्द्रव्यं प्रयाचसे । सर्वं तुभ्यं प्रदास्यामि त्रिषु लोकेषु दुर्लभम् ॥
सौवर्णानि च रौप्याणि पात्राणि विविधानि च । भोजनाहार्णसंख्यानि पाकपात्राणि यानि च ॥
कुङ्कुमाक्तानि पानपात्राणि यानि च । पात्राणि स्वादुपूर्णानि प्रददौ मुनये च सा ॥
नानाविधानि स्वादूनि परिपक्कफलानि च । पनसाम्रश्रीफलानि नारिकेलादिकानि च ॥
राशीभूतान्यसंख्यानि स्वादुलड्डुकराशयः । यवगोधूमचूर्णानां भक्ष्याणि विविधानि च ॥
पक्वान्नानां पर्वतांश्च परमान्नस्य कन्दरान् । दुग्धानां च घृतानां च नदीर्दध्नां ददौ मुदा ॥
शर्कराणां तथा राशिं मोदकानां च पर्वतान् । पृथुकानां सुशालीनां पर्वतान्प्रददौ मुदा ॥
ताम्बूलं च ददौ पूर्णं कर्पूरादिसुवासितम् । नृपयोग्यं कौतुकाच्च सुन्दरं वस्त्रभूषणम् ॥
मुनिः संभृतसंभारो दत्त्वा द्रव्यं मनोहरम् । भोजयामास राजानं ससैन्यमपि लीलया ॥
यद्वस्तु दुर्लभं वस्तु परिपूर्णं नृपेश्वरः । जगाम विस्मयं राजा दृष्ट्वा पात्रमुवाच ह ॥

राजोवाच—

द्रव्याण्येतानि सचिव दुर्लभान्यश्रुतानि च । ममासाध्यानि सहसा कऽऽगतान्यवलोकय
नृपाज्ञया च सचिवः सर्वं दृष्ट्वा मुनेर्गृहम् । राजानं कथयामास वृत्तान्तं महदद्भुतम् ॥

सचिव उवाच—

दृष्टं सर्वं महाराज निबोध मुनिमन्दिरम् । बहुनिकुञ्जं यज्ञकाष्ठकुशपुष्पफलान्वितम् ॥
कृष्णाजिनैर्वस्तुभिः शिष्यसंघैश्च संकुलम् । तेजसा भास्करसमादिसमस्तं संपरिवर्जितम् ॥
वृक्षचर्मपरीधाना दृष्टाः सर्वे जटाधराः । गृहैकदेशे दृष्टा सा कपिलैका मनोहरा ॥
कामधेनुः पद्मवर्णाभा रक्तपङ्कजलोचना ॥ २८ ॥

---

१ क. लक्ष्मीसमां ।

ज्वलन्ती तेजसा तत्र पूर्णचन्द्रसमप्रभा । सर्वसंपद्गुणाधारा साक्षादिव हरिप्रिया ॥२९॥
इत्येवं बोधितो राजा दुर्बुद्धिः सचिवाज्ञया । मुनिं ययाचे तां धेनुं निबद्धः कालपाशतः
किं वा पुण्यं च का बुद्धिः कः कालः सर्वतो बली । पुण्यवान्बुद्धिमान्दैवाद्राजेन्द्रोऽया-
चत द्विजम् ॥ ३१ ॥
पुण्यात्प्रजायते कर्म पुण्यरूपं च भारते । पापात्प्रजायते कर्म पापरूपं भयावहम् ॥३२॥
पुण्यात्कृत्वा स्वर्गभोगं जन्म पुण्यस्थले नृणाम् । पापाद्भुक्त्वा च नरकं कुत्सिते जन्म
जीविनाम् । ३३ ॥
जीविनां निष्कृतिर्नास्ति स्थिते कर्मणि नारद । तेन कुर्वन्ति सन्तश्च संततं कर्मणः क्षयम्
सा विद्या तत्तपो ज्ञानं स गुरुः स च बान्धवः । सा माता स पिता पुत्रस्तत्क्षयं कारयेत्तु यः
जीविनां दारुणो रोगः कर्मभोगः शुभाशुभः । भक्तिवैद्यस्तं निहन्ति कृष्णभक्तिरसायनात्
माया ददाति तां भक्तिं प्रतिजन्मनि सेविता । परितुष्टा जगद्धात्री भक्तेभ्यो बुद्धिदायिनी
परा परमभक्ताय माया यस्मै ददाति च । मायां तस्मै मोहयितुं न विवेकं कदाचन ॥
मायाविमोहितो राजा मुनिमानीय यत्नतः । उवाच विनयाद्भक्त्या कृताञ्जलिपुटो मुदा

राजोवाच—

देहि भिक्षां कल्पतरो कामधेनुं च कामदाम् । मह्यं भक्ताय भक्तेश भक्तानुग्रहकारक ॥
युष्मद्विधानां दातृणामदेयं नास्ति भारते । दधीचिर्देवताभ्यश्च ददौ स्वास्थि पुरा श्रुतम्
भ्रूभङ्गलीलामात्रेण तपोराशे तपोधन । समूहं कामधेनूनां स्रष्टुं शक्तोऽसि भारते ॥

मुनिरुवाच—

अहो ह्यतिक्रमं राजन्ब्रवीषि शठ वञ्चक । दानं दास्यामि विप्रोऽहं क्षत्रियाय कथं नृप
कृष्णेन दत्ता गोलोके ब्रह्मणे परमात्मना । कामधेनुरियं यज्ञे न देया प्राणतः प्रिया ॥
ब्रह्मणा भृगवे दत्ता प्रियपुत्राय भूमिप । मह्यं दत्ता च भृगुणा कपिला पैतृकी मम ॥ ४६ ॥
गोलोकजा कामधेनुर्दुर्लभा भुवनत्रये । लीलामात्रात्कथमहं कपिलां स्रष्टुमीश्वरः ॥४६॥
नाहं रे हालिको मूढ स्तुत्या नोत्थापितोऽबुधः । क्षणेन भस्मसात्कर्तुं क्षमोऽहमतिथिं विना
गृहं गच्छ गृहं गच्छ मे कोपं नैव वर्धय । पुत्रदारादिकं पश्य दैवबाधित पामर ॥ ४८ ॥
मुनेस्तद्वचनं श्रुत्वा चुकोप स नराधिपः । नत्वा मुनिं सैन्यमध्यं प्रययौ विधिबाधितः ॥
गत्वा सैन्यसकाशं स कोपप्रस्फुरिताधरः । किंकरान्प्रेषयामास धेनुमानयितुं बलात् ॥
कपिलासंनिधिं गत्वा रुरोद मुनिपुंगवः । कथयामास वृत्तान्तं शोकेन हतचेतनः ॥५१॥

---

१ क. °म नृपाधम ।

रुदन्तं ब्राह्मणं दृष्ट्वा सुरभिस्तमुवाच ह । साक्षाल्लक्ष्मीस्वरूपा सा भक्तानुग्रहकारिका ॥

सुरभिरुवाच—

इन्द्रो वा हालिको वाऽपि वस्तु स्वं दातुमीश्वरः । शास्ता पालयिता दाता स्ववस्तूनां च संततम् ॥ ९३ ॥

स्वेच्छया चेन्नृपेन्द्राय मां ददासि तपोधन । तेन सार्धं गमिष्यामि स्वेच्छया च तवाऽऽज्ञया

अथवा न ददासि त्वं न गमिष्यामि ते गृहात् । मत्तो दत्तेन सैन्येन दूरी कुरु नृपं द्विषम्

कथं रोदिषि सर्वज्ञ मायामोहितचेतनः । संयोगश्च वियोगश्च कालसाध्यो न चाऽऽत्मनः

त्वं वा को मे तवाहं का संबन्धः कालयोजितः । यावदेव हि संबन्धो ममत्वं तावदेव हि

मनो जानाति यद्द्रव्यमात्मीयं चेति केवलम् । दुःखं च तस्य विच्छेदाद्यावत्स्वत्वं च तत्र वै

इत्युक्त्वा कामधेनुश्च सुषाव विविधानि च । शस्त्राण्यस्त्राणि सैन्यानि सूर्यतुल्यप्रभाणि च

निर्गताः कपिलावक्त्रात्त्रिकोटचः खड्गधारिणाम् । विनिःसृता नासिकायाः शूलिनः पञ्चकोटयः ॥ १० ॥

विनिःसृता लोचनाभ्यां शतकोटिधनुर्धराः । कपालान्निःसृता वीरास्त्रिकोटचो दण्डधारिणाम् ॥ ११ ॥

वक्षःस्थलान्निःसृताश्च त्रिकोटचः शक्तिधारिणाम् । शतकोटचो गदाहस्ताः पृष्ठदेशाद्विनिर्गताः ॥ १२ ॥

विनिःसृताः पादतलाद्वाद्यभाण्डाः सहस्रशः । जङ्घादेशान्निःसृताश्च त्रिकोटचो राजपुत्रकाः

विनिर्गता गुह्यदेशात्त्रिकोटिम्लेच्छजातयः । दत्त्वा सैन्यानि कपिला मुनये चाभयं ददौ ॥

युद्धं कुर्वन्तु सैन्यानि त्वं न याहीत्युवाच ह । मुनिः संभृतसंभारैर्हर्षयुक्तो बभूव ह ॥

नृपेण प्रेरितो भृत्यो नृपं सर्वमुवाच ह । कपिलासैन्यवृत्तान्तमात्मवर्गपराजयम् ॥ १३ ॥

तच्छ्रुत्वा नृपशार्दूलस्त्रस्तः कातरमानसः । दूतान्संप्रेष्य सैन्यानि चाऽऽजहार स्वदेशतः

इति श्रीब्रह्म० महा० गणपतिख० नारदना० एकदन्तत्वहेतुप्रश्नप्रसङ्गे जमदग्निकार्तवीर्ययुद्धारम्भवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

अथ पञ्चविंशोऽध्यायः ।

नारायण उवाच—

हरिं स्मरन्कार्तवीर्यो हृदयेन विदूयता । दूतं प्रस्थापयामास कुपितो मुनिसंनिधिम् ॥ १ ॥

युद्धं देहि मुनिश्रेष्ठ किंवा धेनुं च वाञ्छिताम् । मह्यं भृत्यायातिथये सुविचार्य यथोचितम्

दूतस्य वचनं श्रुत्वा जहास मुनिपुंगवः । हितं सत्यं नीतिसारं सर्वं दूतमुवाच ह ॥ ३ ॥

मुनिरुवाच—

दृष्टो नृपो निराहारः समानीतो मया गृहम् । विविधं च यथाशक्त्या भोजितश्च यथोचितम् ॥ ४ ॥

कपिलां याचते राजा मम प्राणाधिकां बलात् । तां दातुमक्षमो दूत युद्धं दास्यामि निश्चितम्
मुनेर्वचनकं श्रुत्वा दूतः सर्वमुवाच ह । नृपेन्द्रं च सभामध्ये संनाहैः संयुतं भिया ॥ ६ ॥
मुनिश्च कपिलां माता साम्प्रतं किं करोम्यहम् । कर्णधारं विना नौका तथा सैन्यं विना कथम्
कपिलोवाच दत्तो तात सैन्यास्त्राणि विविधानि च । युद्धशास्त्रोपदेशं च संधानं चोपयोगिकम्
नाथो भयं ते किं युद्धे जेष्यसि निश्चितम् । तव मृत्युर्न भविता सत्यमन्त्रं विना मुने ॥
नृपस्य सर्वं ते क्रुद्धमयुक्तं ब्राह्मणस्य च । दत्तात्रेयस्य शिष्येण कार्यं वै शक्तिधारिणा
दत्तशूलया कपिला ब्रह्मन्निश्चरस्य मनस्विनी ॥ १० ॥
मुनिर्मनस्वी सैन्यं च सज्जीकृत्य ततो मुने । गृहीत्वा सर्वसैन्यं च स जगाम रणाजिरम् ॥
राजा जगाम युद्धाय ननाम मुनिपुंगवम् । उभयोः सैन्ययोर्युद्धं बभूव बहुदुष्करम् ॥
नृपसैन्यं जितं सर्वं कपिलासेनया बलात् । विचित्रं च रथं राज्ञो बभञ्जे लीलया रणे ॥
मुनिसंप्रोद संनाहं सा सेना कापिली मुदा । नृपेन्द्रः कापिलेयानि जेतुं सैन्यानि चाक्षमः
सैन्यानि तं शस्त्रवृष्ट्या न्यस्तशस्त्रं चकार सा । शरवृष्ट्या शस्त्रवृष्ट्या राजा मूर्छामवाप ह
निश्चिच्छिद्य बलं राज्ञः किंचिदेव पलायितम् । मुनीन्द्रो मूर्च्छितं दृष्ट्वा नृपेन्द्रमतिथिं मुनी
क्षमानिधिश्च कृपया तत्सैन्यं संजहार च । गत्वा सैन्यं विलीनं च कपिलायां च काश्रमम् ॥
नृपस्य मुनिना शीघ्रं दत्ताश्चरणोरणवः । आशीर्वादं प्रदत्तं च जयोऽस्त्विति कृपालुना ॥
कमण्डलुमकं प्रोक्ष्य जीवयामास तं नृपम् । स राजा चेतनां प्राप्य समुत्थाय रणाजिरात्
मूर्ध्ना ननाम भक्त्या च मुनिश्रेष्ठं कृताञ्जलिः । मुनिः शुभाशिषं दत्त्वा राजानं समालि-
ङ्ग सः ॥ १९ ॥

पुनस्तं स्नापयित्वा च भोजयामास यत्नतः । नवनीतं हि हृदयं ब्राह्मणानां तु संततम् ॥
अन्येषां क्षुरधारासमसाध्यं दारुणं सदा । उवाच तं मुनिश्रेष्ठो गृहं गच्छ धराधिप ॥

राजोवाच—

रणं देहि महाबाहो धेनुं किंवा ममेप्सिताम् ॥ २२ ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० जमदग्निकार्तवीर्यार्जुनयुद्ध-
वर्णनं नाम पञ्चविंशोऽध्यायः ।



## अथ षड्विंशोऽध्यायः

**नारायण उवाच—**

हरिं स्मरन्मुनिश्रेष्ठो वाक्यं श्रुत्वा च भूभृतः । हितं सत्यं नीतिसारं प्रवक्तुमुपचक्रमे ॥ १ ॥

**मुनिरुवाच—**

गृहं गच्छ महाभाग रक्ष धर्मं सनातनम् । सर्वसंपत्स्थिरा शश्वत्स्थिते धर्मे सुनिश्चितम् ॥

त्वां च दृष्ट्वा निराहारं समानीय गृहं नृप । तव पूजामकरवं यथाशक्ति विधानतः ॥ ३ ॥

सांप्रतं मूर्छितं दृष्ट्वा पादरेणुं शुभाशिषम् । अददां चेन्नयांचक्रे वक्तुमेवोचितं न च ॥

नृपस्तद्वचनं श्रुत्वा प्रणम्य मुनिपुंगवम् । रथमन्यं समारुरोह युद्धं देहीत्युवाच ह ॥ ५ ॥

मुनिः कृत्वा च संनाहं तं योद्धुमुपचक्रमे । राजा तं युयुधे तत्र कोपेन हन्तुमुद्यतः ॥

कपिलदत्तशस्त्रेण न्यस्तशस्त्रं चकार तम् । कपिलाज्ञया शक्त्या पुनर्मूर्छामवाप च ॥

पुनश्च चेतनां प्राप्य राजा राजीवलोचनः । मुनिना युयुधे तत्र कोपेन पुनरेव च ॥

आग्नेयं योजयामास समरे नृपपुंगवः । मुनिर्निर्वापयामास वारुणेन च लीलया ॥ ९ ॥

नृपेन्द्रो वारुणास्त्रं च चिक्षेप समरे मुनौ । वायव्यास्त्रेण स मुनिः शमयामास लीलया ॥

वायव्यास्त्रं नृपश्रेष्ठश्चिक्षेप समरे तदा । गान्धर्वेण मुनिश्रेष्ठः शमयामास तत्क्षणम् ॥

नागास्त्रं च नृपश्रेष्ठश्चिक्षेप रणमूर्धनि । गारुडेन मुनिश्रेष्ठो निजघान क्षणान्मुने ॥

माहेश्वरं महास्त्रं च शतसूर्यसमप्रभम् । चिक्षेप नृपतिश्रेष्ठो द्योतयन्तं दिशो दश ॥ १३ ॥

वैष्णवास्त्रेण दिव्येन त्रिलोकव्यापकेन च । मुनिर्निर्वापयामास बहुयत्नेन नारद ॥ १४ ॥

मुनिर्नारायणास्त्रं च चिक्षिपे मन्त्रपूर्वकम् । शस्त्रं त्यक्त्वा महाराजो ननाम शरणं ययौ ॥

ऊर्ध्वं च भ्रमणं कृत्वा क्षणं दीप्त्वा दिशो दश । प्रलयाग्निसमं तत्र स्वयमन्तरधीयत ॥

जृम्भणास्त्रं च स मुनिश्चिक्षेप रणमूर्धनि । निद्रां प्राप्तेन राजा सुष्वाप च मृतो यथा ॥

दृष्ट्वा नृपं निद्रितं तं चार्धचन्द्रेण तत्क्षणम् । चिच्छेद सारथिं यानं धनुर्बाणं मुनिस्तदा ॥

मुकुटं च क्षुरप्रेण छत्रं संनाहमेव च । अस्त्रं तूणं वाजिगणं चिच्छिदे च भूभृतः ॥ १९ ॥

मुनिस्तत्सचिवान्सर्वान्नागास्त्रेणैव लीलया । निबध्य स्थापयामास प्रहस्य समरस्थले ॥ २० ॥

मुनिस्तं बोधयामास सुमन्त्रेणैव लीलया । निबद्धसर्वामात्यानां दर्शयामास भूमिपम् ॥

दर्शयित्वा नृपं तांश्च मोचयामास तत्क्षणम् । नृपेन्द्रमाशिषं कृत्वा गृहं गच्छेत्युवाच ह ॥

राजा कोपात्समुत्थाय शूलमुद्यम्य यत्नतः । चिक्षेप तं मुनिश्रेष्ठं मुनिः शस्त्रं जघान तम् ॥

एतस्मिन्नन्तरे ब्रह्मा समागत्य रणस्थलम् । सुप्रीतिं जनयामास सुनीत्या च परस्परम् ॥

---

१ ख. दृष्ट्वा ।

मुनिर्नेनम ब्रह्माणं तुष्टाव च रणस्थले । राजा नत्वा विधिं चर्षिं स्वपुरं प्रययौ तदा ॥
मुनिर्ययौ स्वाश्रमं च स्वलोकं कमलोद्भवः । इत्येवं कथितं किंचिदपरं कथयामि ते ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० जमदग्निकार्तवीर्ययुद्धोपशमवर्णनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

## अथ सप्तविंशोऽध्यायः ।

---

नारायण उवाच—

हरिं स्मृत्वा गृहं गत्वा राजा विस्मितमानसः । आजगाम महारण्ये जमदग्न्याश्रमं पुनः ॥
रथानां च चतुर्लक्षं रथिनां दशलक्षकम् । अश्वेन्द्राणां गजेन्द्राणां पदातीनामसंख्यकम् ॥
राजेन्द्राणां सहस्रं च महाबलपराक्रमम् । महासमृद्धियुक्तश्च त्रैलोक्यं जेतुमीश्वरः ॥
सर्वतो वेष्टयामास जमदग्न्याश्रमं मुने । रथस्थो वर्मयुक्तश्च कार्तवीर्यार्जुनः स्वयम् ॥
सैन्यशब्दैर्वाद्यशब्दैर्महाकोलाहलैर्मुने । जमदग्न्याश्रमस्थाश्च मूर्छामापुर्भयेन च ॥ ५ ॥
कुटीं प्रविश्य बलवान्गृहीत्वा कपिलां शुभाम् । पुरं गन्तुं मनश्चक्रे दुर्बुद्धिरसदाशयः ॥
समुत्तस्थौ मुनिश्रेष्ठो गृहीत्वा सशरं धनुः । एकाकी मुक्तगात्रश्च धेनुं नत्वा हरिं स्मरन् ॥
आश्रमस्थाञ्जनान्सर्वान्समाश्वास्य च यत्नतः । आजगाम रणस्थानं निःशङ्को नृपतेः पुरः ॥
निर्ममे शरजालं च स मुनिर्मन्त्रपूर्वकम् । आच्छादयत्स्वाश्रमं तैर्मानवं वर्मणा यथा ॥
अपरं शरजालं च निर्ममे मुनिपुंगवः । तैरेवाऽऽवरणं चक्रे सर्वसैन्यं यथ क्रमम् ॥
मुनिना शरजालेन सर्वसैन्यं समावृतम् । तानि सर्वाणि गुप्तानि यथा पत्राणि पञ्जरे ॥
राजा दृष्ट्वा मुनिश्रेष्ठमवरुह्य रथात्पुरः । सार्धं नृपेन्द्रैर्भक्त्या च प्रणनाम कृताञ्जलिः ॥
नत्वाऽऽरुरोह यानं स मुनेः प्राप्य शुभाशिषः । आरुह्य च नृपश्रेष्ठः स्वयानं हृष्टमानसः ॥
नृपैः सार्धं नृपश्रेष्ठश्चिक्षेप मुनिपुंगवे । अस्त्रं शस्त्रं गदां शक्तिं जघान क्रीडया मुनिः ॥ १४ ॥
मुनिश्चिक्षेप दिव्यास्त्रं चिच्छिदे लीलया नृपः । शूलं चिक्षेप नृपतिस्तं जघान तदा मुनिः ॥
अपरं शरजालं च निर्ममे मुनिपुंगवः । शस्त्रौघैर्दुर्निवारैश्च खण्डं खण्डं चकार सः ॥
निबद्धाः शरजालेन न च शक्ताः पलायितुम् । जृम्भणास्त्रेण मुनिना ते च सर्वे विजृम्भिताः ॥
हस्त्यश्वरथपादातसहितं सर्वसैन्यकम् । राजानं निद्रितं दृष्ट्वा न जघान मुनीश्वरः ॥
गृहीत्वा कपिलां हृष्टो रुदन्तीं शोकमूर्छिताम् । बोधयित्वा पुरः कृत्वा स्वाश्रमं गन्तुमुद्यतः ॥
एतस्मिन्नन्तरे राजा चेतनां प्राप्य नारद । निवारयामास मुनिं गृहीत्वा सशरं धनुः ॥
जगाम कपिला त्रस्ता स्वस्थानं च रणाजिरात् । मुनिश्च तस्थौ निःशङ्को गृहीत्वा सशरं धनुः ॥

ब्रह्मास्त्रं च नृपश्रेष्ठः स चिक्षेप मुनौ तदा । ब्रह्मास्त्रेण मुनीन्द्रस्य सद्यो निर्वाणतां गतम् ॥
दिव्यास्त्रेण मुनिश्रेष्ठे नृपस्य सशरं धनुः । रथं च सारथिं चैव चिच्छेद वर्म दुर्वहम् ॥२२॥
अथ राजा महाक्रुद्धो ददर्श स्वसमीपतः । दत्तेन दत्तां शक्तिं तामेकपूरुषघातिनीम् ॥
जग्राह नत्वा दत्तं तं स नत्वा शक्तिमुल्बणाम् । चूर्णयामास तत्रैव शतसूर्यसमप्रभाम् ॥
यत्तेजः सर्वदेवानां तेजो नारायणस्य च । शंभोश्च ब्रह्मणश्चैव मायायाश्चैव नारद ॥
तत्रैवाऽऽवाहयामास स योगी मन्त्रपूर्वकम् । तेजसा द्योतयामास गगनं च दिशो दश ॥
दृष्ट्वा क्षिपन्तीं तां देवा हाहाकारेण चुक्रुशुः । आकाशस्थाश्च समरं पश्यन्तो दुःखिता हृदा
चिक्षेप तां चूर्णयित्वा कार्तवीर्यार्जुनः स्वयम् । सद्यः पपात सा शक्तिर्ज्वलन्ती मुनिवक्षसि ॥
विदार्याङ्गे मुनेः शक्तिर्जगाम हरिसंनिधिम् । दत्ताय हरिणा दत्तां शस्त्रास्त्रनिचये तदा ॥
मूर्छां संप्राप्य स मुनिः प्राणांस्तत्याज तत्क्षणम् । तेजोऽम्बरे भ्रमित्वा च ब्रह्मलोकं जगाम ह
युद्धे मुनिं मृतं दृष्ट्वा रुरोद कपिला मुहुः । हे तात तातेत्युच्चार्य गोलोकं सा जगाम ह ॥
सर्वं सा कथयामास गोलोके कृष्णमीश्वरम् । रत्नसिंहासनस्थं तं गोपैर्गोपीभिरावृतम् ॥
कृष्णेन ब्रह्मणे दत्ता ब्रह्मणा भृगवे पुरा । सा प्रीत्या पुष्करे ब्रह्मन्भृगुणा जमदग्नये ॥३३॥
नत्वा च कामधेनूनां समूहं सा जगाम ह । तदश्रुबिन्दुना मर्त्ये रत्नसंघो बभूव ह ॥३४॥
अथ राजा तं निहत्य बोधयित्वा स्वसैन्यकम् । प्रायश्चित्तं विनिर्वर्त्य जगाम स्वपुरं मुदा ॥
प्राणनाथं मृतं श्रुत्वा जगाम रेणुका सती । मुनिं वक्षसि संस्थाप्य क्षणं मूर्छामवाप सा ॥
ततः सा चेतनां प्राप्य न रुरोद पतिव्रता । एहि वत्स भृगो राम राम रामेत्युवाच ह ॥
आजगाम भृगुस्तूर्णं क्षणार्द्धे पुष्करात्सहो । ननाम मातरं भक्त्या मनोयायी च योगवित् ॥
दृष्ट्वा रामो मृतं तातं शोकार्तां जननीं सतीम् । आकर्ण्य रणवृत्तान्तं प्रयान्तीं कालिकां शुचा
विललाप भृशं तत्र हे तात जननीति च । चितां चकार योगीन्द्रश्चन्दनैरज्यसंयुताम् ॥
रेणुका राममादाय तूर्णं कृत्वा स्ववक्षसि । चुचुम्ब गण्डे शिरसि रुरोदोच्चैर्भृशं मुने ॥४१॥
राम राम महाबाहो क्व यामि त्वां विहाय च । वत्स वत्सेति कृत्वैवं विललाप भृशं मुहुः
मत्प्राणाधिक हे वत्स मदीयं वचनं शृणु । पित्रोः[3] शेषक्रियां कृत्वा याया युद्धं न पुत्रक ॥
गृहे तिष्ठ सुखं वत्स तपस्यां कुरु शाश्वतीम् । समरं नैव सुखदं दारुणैः क्षत्रियैः सह ॥
मातुर्वचनमश्रुत्वा प्रतिज्ञां तां चकार ह । त्रिःसप्तकृत्वो निर्भूपां करिष्यामि ध्रुवं महीम्
कार्तवीर्यं हनिष्यामि लीलया क्षत्रियाधमम् । पितॄंश्च तर्पयिष्यामि क्षत्रियक्षतजैस्तथा ॥
इत्युदीर्य पुरो मातुर्विललाप मुहुर्मुहुः । हितं तथ्यं नीतिसारं बोधयामास मातरम् ॥

१ "सा दत्तेनैव नृपाय सा । २ क. शुभाम् । ३ एतं ते नैव शुभ्रं दा" ।

राम उवाच--

पितुः शासनहन्तारं पितुर्वधविधायकम् । यो न हन्ति महामूढो रौरवं स व्रजेद्ध्रुवम् ॥
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च पितृबन्धुविहिंसकः ॥४९॥
सततं मन्दकारी च निन्दकः कटुजल्पकः । एकादशैते पापिष्ठा वधार्हा वेदसंमताः ॥
द्विजानां द्रविणादानं स्थानान्निर्वासनं सति । वपनं ताडनं चैव वधमाहुर्मनीषिणः ॥
एतस्मिन्नन्तरे तत्र चाऽऽजगाम भृगुः स्वयम् । अतिक्रान्तो मनस्वी च हृदयेन विदूयता ॥
दृष्ट्वा तं रेणुकारामौ विनतौ संबभूवतुः । स तावुवाच वेदोक्तं परलोकहिताय च ॥

भृगुरुवाच—

मद्वंशजातो ज्ञानी त्वं कथं विलपसे सुत । जलबुद्बुदवत्सर्वं संसारे च चराचरम् ॥५४॥
सत्यसारं सत्यबीजं कृष्णं चिन्तय पुत्रक । यद्गतं तद्गतं वत्स गतं नैवाऽऽगमिष्यति ॥
यद्भवेत्तद्भवत्येव भविता यद्भविष्यति । पूर्वार्जितं स्वीयकर्मफलं केन निवार्यते ॥५६॥
भूतं भव्यं भविष्यं च यत्कृष्णेन निरूपितम् । निरूपितं यत्तत्कर्म केन वत्स निवार्यते
मायाबीजं मायिनां च शरीरं पाञ्चभौतिकम् । संकेतपूर्वकं नाम प्रातःस्वप्नसमं सुत ॥
क्षुधा निद्रा दया शान्तिः क्षमा कान्त्यादयस्तथा । यान्ति प्राणा मनो ज्ञानं प्रयाते परमात्मनि
बुद्धिश्च शक्तयः सर्वा राजेन्द्रमिव किंकराः । सर्वे तमनुगच्छन्ति तं कृष्णं भज यत्नतः ॥
के वा केषां च पितरः के वा केषां सुता सुत । कर्मोर्मिप्रेरिताः सर्वे भवाब्धौ दुस्तरे परम् ॥
ज्ञानिनो मा रुदन्त्येव मा रोदीः पुत्र सांप्रतम् । रोदनाश्रुप्रपतनान्मृतो याति नरकं ध्रुवम् ॥
संकेताख्योच्चारणेन यद्रुदन्ति च बान्धवाः । शतवर्षं रुदित्वा तं प्राप्नुवन्ति न निश्चितम्
पार्थिवांशं च पृथिवी गृह्णात्यस्थिरत्वच दिकम् । तोयांशं च तथा तोयं शून्यांशं गगनं तथा॥
वाय्वंशं च तदा वायुस्तेजस्तेजांशकं तथा । सर्वे विलीनाः सर्वेषु को वाऽऽयास्यति रोदनात्
नामश्रुतिर्यशः कर्मकथामात्रावशेषितः । वेदोक्तं चैव यत्कर्म कुरु तत्पारलौकिकम् ॥६६॥
स च बन्धुः सुपुत्रश्च परलोकहिताय यः । भृगोर्वचनं श्रुत्वा शोकं तत्याज तत्क्षणम् ॥
रेणुका च महासाध्वी तं वक्तुमुपचक्रमे ॥ ६८ ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० जमदग्निसंहारपरशुरामविज्ञादि-
वर्णनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

=====

१ क क्षुन्निद्रा तद्वं ।

अष्टाविंशोऽध्याय ।

रेणुकोवाच--

ब्रह्मन्ननुगमिष्यामि प्राणनाथस्य सांप्रतम् । ऋतोश्चतुर्थदिवसे मृतोऽयं चाद्य मानदः ॥
कर्तव्या का व्यवस्थाऽत्र वद वेदविदां वर । त्वमागतो मे सहसा पुण्येन कारिजन्मनाम् ॥

भृगुरुवाच--

अहो पुण्यवतो भर्तुरनुगच्छ महामाने । चतुर्थदिवसं शुद्धं स्वामिनः सर्वकर्मसु ॥ १ ॥
शुद्धा भर्तुश्चतुर्थेऽहूनि न शुद्धा दैवपित्र्ययोः । दैवे कर्मणि पित्रे च पञ्चमेऽहनि विशुध्यति॥
व्य लग्राही यथा व्यालं बिलादुद्धरते बलात् । तद्वत्स्वामिनमादाय साध्वी स्वर्गं प्रयाति च ॥
मोदते स्वामिना सार्धं यावदिन्द्राश्चतुर्दश । अत ऊर्ध्वं कर्मभोगं भुङ्क्ष्व स शिव शुभाशुभम्॥
स पुत्रो भक्तिदाता यः सा च स्त्री याऽनुगच्छति । स बन्धुर्ज्ञानदाता यः स शिष्यो गुरुपर्चयेत्
सोऽभीष्टदेवो यो रक्षेत्स राजा पालयेत्प्रजाः । स च स्वामी प्रियां धर्ममतिं नाम महेश्वरः ॥
स गुरुर्धर्मदाता यो हरिभक्तिप्रदायकः । एते प्रशंस्या वेदेषु पुराणेषु च निश्चितम् ॥९॥

रेणुकोवाच —

गन्तुं स्वस्वामिना सार्धं का शक्ता भारते मुने । का वाऽप्यशक्ता नारीषु तन्मे ब्रूहि तपोधन॥

भृगुरुवाच--

बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा । रजस्वला च कुलटा गलित्क व्याधिसंयुता ॥ ११ ॥
पतिसेवाविहीना या ह्यभक्ता कटुभाषिणी । एता गच्छन्ति चेद्दैवान्न कान्तं प्राप्नुवन्ति ताः
संस्कृताग्निं पुरो दत्वा चितासु शयितं पतिम् । कान्तास्तमनुगच्छन्ति कान्तांश्चेत्प्राप्नुवन्ति ताः ॥ १२ ॥
अनुगच्छन्ति याः कान्तं तमेव प्राप्नुवन्ति ताः । सार्धं कृत्वा पुण्यभोगं दिवि जन्मनि जन्मनि
इयं ते कथिता साध्वि व्यवस्था गृहिणां ध्रुवम् । तीर्थे ज्ञानमृतानां च वैष्णवानां गतिं शृणु
या साध्वी वैष्णवं कान्तं यत्र यत्रानुगच्छति । प्रयाति स्वामिना सार्धं वैकुण्ठे हरिसंनिधिम्
विशेषो नास्ति भक्तानां तीर्थे वाऽन्यत्र नारद । मरणेन फलं तुल्यं मुक्तानां कृष्णभाविनाम्
तयोः पातो नास्ति तस्मान्महति प्रलये सति । नारायणं तं भजन्त पुमांस्त्री कमलालयम् ॥
तीर्थे ज्ञानमृतश्चापि वैकुण्ठं याति निश्चितम् । सभार्यो मोदते तत्र यावद्वै ब्रह्मणः शतम् ॥
इत्युक्त्वा रेणुकां तत्र जामदग्न्यमुवाच ह । वेदोक्तं वचनं सर्वं स भृगुः समयोचितम् ॥

१ क सर्व ।

एहि वत्स महाभाग त्यज शोकममङ्गलम् । उत्तानं कुरु तातं च दक्षिणाशिरसं भृगो ॥
वस्त्रं यज्ञोपवीतं च नूतनं परिधापय । अनश्रुनयनो भूत्वा संतिष्ठन्दक्षिणामुखः॥३२॥
अरणीमंभवाग्निं च गृहाण प्रीतिपूर्वकम् । पृथिव्यां यानि तीर्थानि सर्वेषां स्मरणं कुरु ॥
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः । कुरुक्षेत्रं च गङ्गां च यमुनां च सरिद्वराम्
कौशिकीं चन्द्रभागां च सर्वपापप्रणाशिनीम् । गण्डकीमथ काशीं च पनसां सरयूं तथा ॥
पुष्पभद्रां च भद्रां च नर्मदां च सरस्वतीम् । गोदावरीं च कावेरीं स्वर्णरेखां च पुष्करम्॥
रैवतं च वराहं च श्रीशैलं गन्धमादनम् । हिमालयं च कैलासं सुमेरुं रत्नपर्वतम् ॥
वाराणसीं प्रयागं च पुण्यं वृन्दावनं वनम् । हरिद्वारं च बदरीं स्मारंस्मारं पुनः पुनः
चन्दनागुरुकस्तूरीसुगन्धिकुसुमं तथा । प्रदाय वाससाऽऽच्छाद्य स्थापयैनं चितोपरि ॥
कर्णाक्षिनासिकास्थे त्वं शलाकां च हिरण्मयीम् । कृत्वा निर्मन्थनं तात विप्रेभ्यो देहि सादरम्
सतिलं ताम्रपात्रं च धेनुं च रजतं तथा । सदक्षिणं सुवर्णं च दत्वाऽग्निं देह्यकातरः॥३१॥
ॐ कृत्वा दुष्कृतं कर्म जानता वाऽप्यजानता । मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्
धर्माधर्मसमायुक्तं लोभमोहसमावृतम् । दह सर्वाणि गात्राणि दिव्यांल्लोकान्स गच्छतु॥
इमं मन्त्रं पठित्वा तु तातं कृत्वा प्रदक्षिणम् । मन्त्रेणानेन देह्यग्निं जनकाय हरिं स्मरन् ।
ॐ अस्मत्कुले त्वं जातोऽसि त्वदीयो जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति वद साम्प्रतम् ॥ ३९ ॥
अग्निं देहि शिरःस्थाने हे भृगो भ्रातृभिः सह । तच्चकार भृगुः सर्वं सगोत्रैराज्ञया भृगोः ॥
अथ पुत्रं रेणुका सा कृत्वा तत्र स्ववक्षसि । उवाच किंचिद्वचनं परिणामसुखावहम् ॥
अविरोधो भवाब्धौ च सर्वमङ्गलमङ्गलम् । विरोधो नाशबीजं च सर्वोपद्रवकारणम् ॥ ३८॥
अकर्तव्यो विरोधो वै दारुणैः क्षत्रियैः सह । प्रतिज्ञा चैषा कर्तव्या मदीयं वचनं शृणु ॥
आलोच्य ब्रह्मणा सार्धं भृगुणा दिव्यमन्त्रिणा । यथोचितं च कर्तव्यं सद्भिरालोचनं शुभम्
इत्युक्त्वा तं परित्यज्य कान्तं कृत्वा स्ववक्षसि । सा सुप्वाप चितायां च पश्यन्ती तं हरिस्मृतिः ॥ ४१ ॥
वह्निं ददौ चितायां च स रामो भ्रातृभिः सह । भ्रातृभिः पितृशिष्यैश्च सार्धं स विललाप च
राम रामेति रामेति वाक्यमुच्चार्य सा सती । पुरस्ताज्जामदग्न्यस्य भस्मीभूता बभूव सा ॥
भर्तुर्नाम समाकर्ण्य तत्राऽऽजग्मुर्हरेश्चराः । रथस्थाः श्यामवर्णाश्च सर्वे चारुचतुर्भुजाः ॥
शङ्खचक्रगदापद्मधारिणो वनमालिनः । किरीटिनः कुण्डलिनः पीतकौशेयवाससः ॥ ४९॥
रथे कृत्वा रेणुकां तां गत्वा ते ब्रह्मणः पदम् । जमदग्निं समादाय प्रजग्मुर्हरिसंनिधिम्॥

तौ दम्पती च वैकुण्ठे तस्थतुर्हरिसंनिधौ । कृत्वा दास्यं हरेः शश्वत्सर्वमङ्गलमङ्गलम् ॥
अथ रामो ब्राह्मणैश्च भृगुणा सह नारद । पित्रोः शेषक्रियां कृत्वा ब्राह्मणेभ्यो धनं ददौ ।
गोभूहिरण्यवासांसि दिव्यशय्यां मनोरमाम् । सुवर्णाधारसहितां जलमन्नं च चन्दनम् ।
रत्नदीपं रौप्यशैलं सुवर्णासनमुत्तमम् । सुवर्णासारसहितं ताम्बूलं च सुवासितम् ॥
छत्रं च पादुके चैव फलं माल्यं मनोहरम् । फलं मूलादिकं चैव मिष्टान्नं च मनोहरम् ॥
ब्राह्मणेभ्यो धनं दत्त्वा ब्रह्मलोकं जगाम स ॥ ५२ ॥
ददर्श ब्रह्मलोकं स शातकुम्भविनिर्मितम् । स्वर्णप्राकारसंयुक्तं स्वर्णस्तम्भैर्विभूषितम् ॥
ददर्श तत्र ब्रह्माणं ज्वलन्तं ब्रह्मतेजसा । रत्नसिंहासनस्थं च रत्नभूषणभूषितम् ॥५४॥
सिद्धेन्द्रैश्च मुनीन्द्रैश्च ऋषीन्द्रैः परिवेष्टितम् । विद्याधरीणां नृत्यं च पश्यन्तं सस्मितं मुदा
संगीतमुपशृण्वन्तं गीयमानं च गायकैः । चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितम् ।
तपसां फलदातारं दातारं सर्वसंपदाम् । धातारं सर्वजगतां कर्तारं चेश्वरं परम् । ५६ ।
परिपूर्णतमं ब्रह्म जपन्तं कृष्णमीश्वरम् । गुह्ययोगं प्रवोचन्तं पृच्छन्तं शिष्यमण्डलम् ॥
दृष्ट्वा तमव्ययं भक्त्या प्रणनाम भृगुः पुरः । उच्चैश्च रोदनं कृत्वा स्ववृत्तान्तमुवाच ह

भृगुरुवाच—

ब्रह्मंस्त्वद्वंशजोऽहं जमदग्निसुतो विधे । पितामहस्त्वमस्माकं सर्वज्ञं कथयामि किम् ॥
मृगयामागतं भूपं पिता मे चोपवासिनम् । पारणां कारयामास कपिलादत्तवस्तुभिः ॥
स राजा कपिलां लोभात्कार्तवीर्यार्जुनः स्वयम् । घातयामास मत्तातमित्युक्त्वोच्चै रुरोद सः
निरुध्य बाष्पं स पुनरुवाच करुणानिधिम् । माता मेऽनुगता साध्वी मां विहाय जगद्गुरो
अधुनाऽहमनाथश्च त्वं मे माता पिता गुरुः । कर्ता पालयिता दाता पाहि मां शरणागतम्
आगतोऽहं तव सभां प्रमातुर्मातुराज्ञया । उपायेन जगन्नाथ मद्वैरिहननं कुरु ॥ ६४ ॥
स राजा स च धर्मिष्ठः स दयालुर्यशस्करः । स पूज्यः स स्थिरश्रीश्च यो दीनं परिपालयेत्
धनिर्दीनौ समं दृष्ट्वा यः प्रजां न च पालयेत् । तद्गेहाद्याति रुष्टा श्रीः स भवेद्भ्रष्टराज्यकः
श्रुत्वा विप्रबटोर्वाक्यं करुणासागरो विधिः । दत्त्वा शुभाशिषं तस्मै वासयामास वक्षसि
श्रुत्वा भृगोः प्रतिज्ञां च विस्मितश्चतुराननः । अतीव दुष्करां घोरां बहुजीवविघातिनीम्
कर्मणा तद्भवेत्सर्वमिति कृत्वा तु मानसे । उवाच जामदग्न्यं तं परिणामसुखावहम् ॥

ब्रह्मोवाच—

प्रतिज्ञा दुष्करा वत्स बहुजीवविघातिनी । सृष्टिरेषा भगवतः संभवेदीश्वरेच्छया ॥७०॥

---

१ क. मोहा° । २ ख. तद्देहा° ।

सृष्टिः सृष्टा मया पुत्र क्लेशेनैवेश्वराज्ञया । सृष्टिलुप्तौ प्रतिज्ञा ते दारुणाऽकरुणा परा ।७१॥
त्रिःसप्तकृत्वो निर्भूपां कर्तुमिच्छसि मेदिनीम् । एकक्षत्रियदोषेण तज्जातिं हन्तुमिच्छसि
ब्रह्मक्षत्रियविट्छूद्रैर्नित्या सृष्टिश्चतुर्विधा । आविर्भूता तिरोभूता हरेरेव पुनः पुनः ।७३॥
अन्यथा त्वत्प्रतिज्ञा च भविता शक्तनेन ते । बह्वायासेन ते कार्यसिद्धिर्भवितुमर्हति॥७४॥
शिवलोकं गच्छ वत्स शंकरं शरणं व्रज । पृथिव्यां बहवो भूपाः सन्ति शंकरकिंकराः॥७५॥
विनाऽऽज्ञया महेशस्य को वा तान्हन्तुमीश्वरः । बिभ्रतः कवचं दिव्यं शक्तेर्वै शंकरस्य च ॥
उपायं कुरु यत्नेन जयबीजं शुभावहम् । उपायतः समारब्धाः सर्वे सिध्यन्त्युपक्रमाः ॥
श्रीकृष्णमन्त्रकवचग्रहणं कुरु शंकरात् । दुर्लभं वैष्णवं तेजः शैवं शाक्तं विजेष्यति ॥ ७८॥
गुरुस्ते जगतां नाथः शिवो जन्मनि जन्मनि । मन्त्रो मत्तो न युक्तस्ते यो युक्तः स भवेद्विधिः
कर्मणा लभ्यते मन्त्रः कर्मणा लभ्यते गुरुः । निर्वेकाल्लभ्यते मन्त्रः काले काले गुरुस्तथा
स्वयमेवोपतिष्ठन्ते ये येषां तेषु ते ध्रुवम् ॥ ८० ॥
त्रैलोक्यविजयं नाम गृहीत्वा कवचं वरम् । त्रिःसप्तकृत्वो निर्भूपां करिष्यसि महीं भृगो ॥
दिव्यं पाशुपतं तुभ्यं दाता दास्यति शंकरः । तेन दत्तेन शस्त्रेण क्षत्रसंघं विजेष्यसि॥८२॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० भृगोर्ब्रह्मलोकगमने ब्रह्मो-
क्तोपायवर्णनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

अथैकोनत्रिंशोऽध्यायः ।

---

**नारायण उवाच—**

ब्रह्मणो वचनं श्रुत्वा प्रणम्य च जगद्गुरुम् । स्फीतस्तस्माद्दूरं प्राप्य शिवलोकं जगाम सः ॥
लक्षयोजनमूर्ध्वं च ब्रह्मलोकाद्विलक्षणम् । अनिर्वाच्यसुशोभाढ्यं वायवाधारं मनोहरम् ॥
वैकुण्ठं दक्षिणे यस्य गौरीलोकश्च वामतः । यदधो ध्रुवलोकश्च सर्वलोकात्परः स्मृतः ॥३॥
तेषामूर्ध्वं च गोलोकः पञ्चाशत्कोटियोजनः । अत ऊर्ध्वं न लोकश्च सर्वोपरि च स स्मृतः ॥
मनोयायी स योगीन्द्रः शिवलोकं ददर्श ह । उपमानोपमेयाभ्यां रहितं महदद्भुतम् ॥५॥
योगीन्द्राणां वरेण्यैश्च सिद्धविद्याविशारदैः । कोटिकल्पतपःपूतैः पुण्यवद्भिर्निषेवितम्॥६॥
वेष्टितं कल्पवृक्षाणां समूहैर्वाञ्छितप्रदैः । समूहैः कामधेनूनामसंख्यानां विराजितम् ॥७॥
पारिजाततरूणां च वनराजिविराजितम् । मधुलुब्धमधुव्रतानां मधुरध्वनिमोहितम्॥ ८ ॥

---

१ क. °र्भवतु शाश्वती । २ ख. मन्त्रेण । क. °व्यैरभ्यन्तरविभू° ।

नवपल्लवसंयुक्तं पुंस्कोकिलरुतश्रुतम् । योगेन योगिनां सृष्टं स्वेच्छया शंकरेण च ॥ ९ ॥
शिल्पिनां गुरुणा स्वप्ने न दृष्टं विश्वकर्मणा । जन्तुभिर्वेष्टितं ब्रह्मन्योगदुष्टैर्निरामयैः ॥ १० ॥
सरोवरशतैर्दिव्यैः पद्मराजीविराजितैः । पुष्पोद्यानायुतैर्युक्तं सदा चातिसुशोभितम् ॥ ११ ॥
मणीन्द्रसाररचितैः शोभितैर्मणिवेदिभिः । राजमार्गशतैर्दिव्यैः सर्वतः परिभूषितम् ॥ १२ ॥
मणीन्द्रसारनिर्माणशतकोटिगृहैर्युतम् । नानाचित्रविचित्राढ्यैर्मणीन्द्रकलशोज्ज्वलैः ॥
रत्नमध्यदेशे रम्ये च ददर्श शंकरालयम् । मणीन्द्रसाररचितप्राकारं सुमनोहरम् ॥ १४ ॥
अत्यूर्ध्वमम्बरस्पर्शि क्षीरनीरनिभं परम् । षोडशद्वारसंयुक्तं शोभितं शतमन्दिरैः ॥ १५ ॥
अमूल्यरत्नरचितै रत्नसोपानभूषितैः । रत्नस्तम्भकपाटैश्च हीरकेण परिष्कृतैः ॥ १६ ॥
माणिक्यजालमालाभिः सद्रत्नकलशोज्ज्वलैः । नानाविचित्रचित्रेण चित्रितैः सुमनोहरैः ॥
आलयस्य पुरस्तत्र सिंहद्वारं ददर्श सः । रत्नेन्द्रसारखचितकपाटैश्च विराजितम् ॥ १८ ॥
शोभितं वेदिकाभिश्च बाह्याभ्यन्तरतः सदा । रचिताभिः पद्मरागैर्महामरकतैर्गृहम् ॥ १९ ॥
नानाप्रकारचित्रेण चित्रितं सुमनोहरम् । करालरूपावद्राक्षीद्द्वारपालौ भयंकरौ ॥ २० ॥
महाकरालदन्तास्यौ विकृतौ रक्तलोचनौ । दग्धशैलप्रतीकाशौ महाबलपराक्रमौ ॥ २१ ॥
विभूतिभूषिताङ्गौ च व्याघ्रचर्माम्बरौ वरौ । पिङ्गलाक्षौ विशालाक्षौ जटिलौ च त्रिलोचनौ ॥
त्रिशूलपट्टिशधरौ ज्वलन्तौ ब्रह्मतेजसा । तौ दृष्ट्वा मनसा भीतस्त्रस्तः किंचिदुवाच ह ॥
विनयेन विनीतश्च दुर्विनीतौ महाबलौ । आत्मनः सर्ववृत्तान्तं कथयामास तत्पुरः ॥ २४ ॥
विप्रस्य वचनं श्रुत्वा कृपायुक्तौ बभूवतुः । गृहीत्वाऽऽज्ञां च द्वारा शंकरस्य महात्मनः ॥
प्रवेष्टुमाज्ञां ददतुरीश्वरानुचरौ वरौ । भृगुस्तदाज्ञामादाय प्रविवेश हरिं स्मरन् ॥ २६ ॥
प्रत्येकं षोडश द्वारो ददर्श सुमनोहराः । द्वारपालैर्नियुक्ताश्च नानाचित्रविचित्रिताः ॥ २७ ॥
दृष्ट्वा तां महदाश्चर्यां प्रज्वलच्छूलिनः सभाम् । नानासिद्धगणाकीर्णां महर्षिगणसेविताम् ॥
पारिजातसुगन्धाढ्यवायुना सुरभीकृताम् । ददर्श तत्र देवेशं शंकरं चन्द्रशेखरम् ॥ २९ ॥
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं परम् । विभूतिभूषिताङ्गं तं नागयज्ञोपवीतिनम् ॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् ॥ ३० ॥
महाशिवं शिवकरं शिवबीजं शिवाश्रयम् । आत्मारामं पूर्णकामं सूर्यकोटिसमप्रभम् ॥
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम् । शश्वज्ज्योतिःस्वरूपं च लोकानुग्रहविग्रहम् ।
धृतवन्तं जटाजालं दक्षकन्यासमन्वितम् । तपसां फलदातारं दातारं सर्वसंपदाम् ॥ ३२ ॥
शुद्धस्फटिकसंकाशं पञ्चवक्त्रं त्रिलोचनम् । गुह्यं ब्रह्म प्रवोचन्तं शिष्येभ्यस्तत्त्वमुद्रया ॥

१ क. "मालाभि" ।

स्तूयमानं च योगीन्द्रैः सिद्धेन्द्रैः परिसेवितम्। पार्षदप्रवरैः शश्वत्सेवितं श्वेतचामरैः ॥ ३५॥
ध्यायमानं परं ब्रह्म परिपूर्णतमं परम्। स्वेच्छामयं गुणातीतं जरामृत्युहरं परम् ॥ ३६॥
ज्योतीरूपं च सर्वाद्यं श्रीकृष्णं प्रकृतेः परम्। ध्यायन्तं परमानन्दं पुलकाञ्चितविग्रहम् ॥
सुस्वरं साश्रुनेत्रं च समुद्गायन्तं गुणार्णवम्। भूतेन्द्रैर्वै रुद्रगणैः क्षेत्रपालैश्च वेष्टितम् ॥ ३८॥
मूर्ध्ना ननाम परशुरामो दृष्ट्वा तमादरात्। तद्वामे कार्तिकेयं च दक्षिणे च गणेश्वरम्॥
नन्दीश्वरं महाकालं वीरभद्रं च तत्पुरः। अङ्के ददर्श कान्तां तां गौरीं शैलेन्द्रकन्यकाम् ॥
ननाम सर्वान्मूर्ध्ना च भक्त्या च परया मुदा। दृष्ट्वा हरं परं तोषात्स्तोतुं समुपचक्रमे ॥
सगद्गदपदं दीनः साश्रुनेत्रोऽतिकातरः। कृताञ्जलिपुटः शान्तः शोकार्तः शोकनाशनम्॥

परशुराम उवाच—

ईश त्वां स्तोतुमिच्छामि सर्वथा स्तोतुमक्षमः। अक्षराक्षरबीजं च किंवा स्तौमि निरीहकम्॥
न योजनां कर्तुमीशो देवेशं स्तौमि मूढधीः। वेदा न शक्ता यं स्तोतुं कस्त्वां स्तोतुमिहेश्वरः ॥ ४४ ॥
वाग्बुद्धिमनसां दूरं सारात्सारं परात्परम्। ज्ञानमात्रेण साध्यं च सिद्धं सिद्धैर्निषेवितम् ॥
यमाकाशमिवाऽऽद्यन्तमध्यहीनं तथाऽव्ययम्। विश्वतन्त्रमतन्त्रं च स्वतन्त्रं तन्त्रबीजकम्।
ध्यानासाध्यं दुराराध्यमतिसाध्यं कृपानिधिम्। त्राहि मां करुणासिन्धो दीनबन्धोऽतिदीनकम् ॥ ४७ ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम्। स्वप्नेऽप्यदृष्टं भक्तैश्चाधुना पश्यामि चक्षुषा ॥
शक्रादयः सुरगणाः कलया यस्य संभवाः। चराचराः कलांशेन तं नमामि महेश्वरम् ॥
स्त्रीरूपं क्लीबरूपं च पौरुषं च बिभर्ति यः। सर्वाधारं सर्वरूपं तं न० ॥ ५० ॥
यं भास्करस्वरूपं च शशिरूपं हुताशनम्। जलरूपं वायुरूपं तं न० ॥ ५१ ॥
सर्वेषां कल्पवृक्षश्च वाञ्छाधिकफलप्रदः। आशुतोषं भक्तबन्धुं तं न० ॥ ५२ ॥
अनन्तविश्वसृष्टीनां संहर्तारं भयंकरम्। क्षणेन लीलामात्रेण तं न० ॥ ५३ ॥
यः कालः कालकालश्च कालबीजं च कालजः। अजः प्रजश्च यः सर्वस्तं न० ॥ ५४ ॥
इत्येवमुक्त्वा स भृगुः पपात चरणाम्बुजे। आशिषं च ददौ तस्मै सुप्रसन्नो बभूव सः ॥
जामदग्न्यकृतं स्तोत्रं यः पठेद्भक्तिसंयुतः। सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति ।

इति श्रीब्रह्म० महा० गणपतिख० नारदना० परशुरामस्य कैलासगमनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

१ क. 'क्षरक्षरबी'। २ क. देवा। ३ क. 'नबुद्धवचसा'।

## अथ त्रिंशोऽध्यायः ।

---

**शंकर उवाच—**

कस्त्वं बटो कस्य पुत्रः क्व वासः स्तवनं कथम् । किं वा तेऽहं करिष्यामि वाञ्छितं वद सांप्रतम् ॥ १ ॥

**पार्वत्युवाच—**

शोकाकुलं त्वां पश्यामि विमनस्कं सुविस्मितम् । वयसाऽतिशिशुं शान्तं गुणेन गुणिनां वरम् ॥ २ ॥

**भृगुरुवाच—**

जमदग्निसुतोऽहं च भृगुवंशसमुद्भवः । रेणुकाऽम्बा मे परशुरामोऽहं नामतः प्रभो ॥
प्रीणीहि मां दयासिन्धो विद्यापण्येन किंकरम् । त्वामीश शरणापन्नं रक्ष मां दीनवत्सल ॥
मृगयामागतं भूपं पिता मे चोपवासिनम् । चकाराऽऽतिथ्यमानीय कपिलाकल्पवस्तुभिः ॥
राजा तं कपिलालोभाद्धातयामास मन्दधीः । कपिला तं मृतं दृष्ट्वा गोलोकं च जगाम सा
माताऽनुगमनं चक्रे ह्यनाथोऽहं च सांप्रतम् । त्वं मे पिता शिवा माता रक्ष मां पुत्रवत्प्रभो
मया कृता प्रतिज्ञा च शोकेनैवातिदुष्करा । त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति ॥
कार्तवीर्यं हनिष्यामि समरे तातघातकम् । इत्येतत्परिपूर्णं मे भगवान्कर्तुमर्हति ॥ ९ ॥
ब्राह्मणस्य वचः श्रुत्वा दृष्ट्वा दुर्गामुखं हरः । बभूवाऽऽनम्रवक्त्रश्च सा च शुष्कौष्ठतालुका

**पार्वत्युवाच—**

तपस्विन्विप्रपुत्र क्ष्मां निर्भूपां कर्तुमिच्छसि । त्रिःसप्तकृत्वः कोपेन साहसस्ते महान्बटो ॥
हन्तुमिच्छसि निःशस्त्रः सहस्रार्जुनमीश्वरम् । भ्रूभङ्गलीलया यस्य रावणस्य पराजयः ॥
तस्मै प्रदत्तं दत्तेन श्रीहरेः कवचं बटो । शक्तिश्चाव्यर्थरूपा च यया ते हिंसितः पिता ॥
हरेर्मन्त्रं संस्तवनं ध्यायते च दिवानिशम् । को वा शक्नोति तं हन्तुं न पश्यामीह भूतले ॥
अये विप्र गृहं गच्छ किं करिष्यति शंकरः । अन्ये भूपाश्च मद्भृत्याः का भीस्तेषां मयि स्थिते

**भद्रकाल्युवाच —**

अये विप्रबटो जाल्म निर्भूपां कर्तुमिच्छसि । यथा हि वामनश्चन्द्रं करेणाऽऽहर्तुमिच्छसि ॥
कृतयज्ञान्महापुण्यान्महाबलपराक्रमान् । दिगम्बरसहायेन मद्भृत्यान्हन्तुमिच्छसि ॥
स तयोर्वचनं श्रुत्वा रुरोदोच्चैश्च शोकतः । सहसा पुरतस्तेषां प्राणांस्त्यक्तुं समुद्यतः ॥

---

४ क. शान्तं ।

विप्रस्य रोदनं श्रुत्वा शंकरः करुणानिधिः । पश्यन्दुर्गां च कालीं च ज्ञात्वाऽऽशयमप्रो
विभुः ॥ १९ ॥
तयोरनुमतिं प्राप्य सर्वेशो भक्तवत्सलः । जमदग्निसुतं सद्यः प्रवक्तुमुपचक्रमे ॥ २० ॥

शंकर उवाच—

अद्यप्रभृति हे वत्स त्वं मे पुत्रसमो महान् । दास्यामि मन्त्रं गुह्यं ते त्रिषु लोकेषु दुर्लभम्
एवंभूतं च कवचं दास्यामि परमाद्भुतम् । लीलया मत्प्रसादेन कार्तवीर्यं हनिष्यसि ॥
त्रिःसप्तकृत्वो निर्भूपां करिष्यसि महीं द्विज । जगत्ते यशसा पूर्णं भविष्यति न संशयः ॥
इत्युक्त्वा शंकरस्तस्मै ददौ मन्त्रं सुदुर्लभम् । त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ॥
स्तवं पूजाविधानं च पुरश्चरणपूर्वकम् । मन्त्रसिद्धेरनुष्ठानं यथावन्नियमक्रमम् । २१ ॥
सिद्धिस्थानं कालसंख्यां कथयामास नारद । वेदवेदाङ्गादिकं च पाठयामास तत्क्षणम् ॥
नागपाशं पाशुपतं ब्रह्मास्त्रं च सुदुर्लभम् नारायणास्त्रमाग्नेयं वायव्यं वारुणं तथा ॥
गान्धर्वं गारुडं चैव जृम्भणास्त्रं तथैव च । गदां शक्तिं च परशुं शूलमव्यर्थमुत्तमम् ॥
नानाप्रकारशस्त्रास्त्रं मन्त्रं च विधिपूर्वकम् । शस्त्रास्त्राणां च संहारं तूणी चाक्षयसायकौ ॥
आत्मरक्षणसंधानं संग्रामविजयक्रमम् । मायायुद्धं च विविधं हुंकारं मन्त्रपूर्वकम् ॥
रक्षणं च स्वसैन्यानां परसैन्यविमर्दनम् । नानाप्रकारमतुलमुपायं रणसंकटे ॥
संहारमोहिनीं विद्यां ददौ मृत्युहरां हरः ॥ २२ ॥
स्थित्वा चिरं गुरोर्वासे सर्वविद्यां विबोध्य सः । तीर्थे कृत्वा मन्त्रसिद्धिं तांश्च नत्वा जगाम सः

इति श्रीब्रह्म० महा० गणपति० नारदना० परशुरामस्य शिवदत्तास्त्र-
शस्त्रादिप्राप्तिवर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

=====

अथैकत्रिंशोऽध्यायः ।

---

नारद उवाच—

भगवञ्छ्रोतुमिच्छामि कं मन्त्रं भगवान्हरः । कृपया परशुरामाय किं स्तोत्रं कवचं ददौ ॥
को वाऽस्य मन्त्रस्याऽऽराध्यः किं फलं कवचस्य च । स्तवनस्य फलं किं वा तद्भवान्वक्तुमर्हति

नारायण उवाच—

मन्त्राराध्यो हि भगवान्परिपूर्णतमः स्वयम् । गोलोकनाथः श्रीकृष्णो गोपगोपीश्वरः प्रभुः

---

त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् । स्तवराजं महापुण्यं भूतियोगसमुद्भवम् ॥४॥
मन्त्रकल्पतरुं नाम सर्वकामफलप्रदम् । ददौ परशुरामाय रत्नपर्वतसंनिधौ ॥ ५ ॥
स्वयंप्रभानदीतीरे पारिजातवनान्तरे । आश्रमे देवलोकस्य माधवस्य च संनिधौ ॥ ६ ॥

महादेव उवाच—

वत्साऽऽगच्छ महाभाग भृगुवंशसमुद्भव । पुत्राधिकोऽसि प्रेम्णा मे कवचग्रहणं कुरु ॥
शृणु राम प्रवक्ष्यामि ब्रह्माण्डे परमाद्भुतम् । त्रैलोक्यविजयं नाम श्रीकृष्णस्य जयावहम्
श्रीकृष्णेन पुरा दत्तं गोलोके राधिकाश्रमे । रासमण्डलमध्ये च मह्यं वृन्दावने वने ॥
अतिगुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् पुण्यात्पुण्यतरं चैव परं स्नेहाद्ददामि ते ॥१०॥
यद्धृत्वा पठनाद्देवी मूलप्रकृतिरीश्वरी । शुम्भं निशुम्भं महिषं रक्तबीजं जघान ह ॥
यद्धृत्वाहं च जगतां संहर्ता सर्वतत्त्ववित् । अवध्यं त्रिपुरं पूर्वं दुरन्तमपि लीलया ॥
यद्धृत्वा पठनाद्ब्रह्मा ससृजे सृष्टिमुत्तमाम् । यद्धृत्वा भगवाञ्छेषो विधत्ते विश्वमेव च ॥
यद्धृत्वा कूर्मराजश्च शेषं धत्ते हि लीलया । यद्धृत्वा भगवान्वायुर्विश्वाधारो विभुः स्वयम्
यद्धृत्वा वरुणः सिद्धः कुबेरश्च धनेश्वरः । यद्धृत्वा पठनादिन्द्रो देवानामधिपः स्वयम् ॥
यद्धृत्वा भाति भुवने तेजोराशिः स्वयं रविः । यद्धृत्वा पठनाच्चन्द्रो महाबलपराक्रमः ॥
अगस्त्यः सागरान्सप्त यद्धृत्वा पठनात्पपौ । चकार तेजसा जीर्णं दैत्यं वातापिसंज्ञकम् ।
यद्धृत्वा पठनाद्देवी सर्वाधारा वसुंधरा । यद्धृत्वा पठनात्पूता गङ्गा भुवनपावनी ॥१८॥
यद्धृत्वा जगतां साक्षी धर्मो धर्मभृतां वरः । सर्वविद्याधिदेवी सा यच्च धृत्वा सरस्वती
यद्धृत्वा जगतां लक्ष्मीरन्नदात्री परात्परा । यद्धृत्वा पठनाद्वेदान्सावित्री सा सुषाव च ॥२०॥
वेदाश्च धर्मवक्तारो यद्धृत्वा पठनाद्भृगो । यद्धृत्वा पठनाच्छुद्धस्तेजस्वी हव्यवाहनः ॥
सनत्कुमारो भगवान्यद्धृत्वा ज्ञानिनां वरः ॥ २१ ॥
दातव्यं कृष्णभक्ताय साधवे च महात्मने । शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्
त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः । ऋषिश्छन्दश्च गायत्री देवो रासेश्वरः स्वयम्
त्रैलोक्यविजयप्राप्तौ विनियोगः प्रकीर्तितः । परात्परं च कवचं त्रिषु लोकेषु दुर्लभम्॥
प्रणवो मे शिरः पातु श्रीकृष्णाय नमः सदा । पायात्कपालं कृष्णाय स्वाहा पञ्चाक्षरः स्मृतः
कृष्णेति पातु नेत्रे च कृष्ण स्वाहेति तारकम् । हरये नम इत्येवं भ्रूलतां पातु मे सदा ॥
ॐ गोविन्दाय स्वाहेति नासिकां पातु संततम् । गोपालाय नमो गण्डौ पातु मे सर्वतः सदा
ॐ नमो गोपाङ्गनेशाय कर्णौ पातु सदा मम । ॐ कृष्णाय नमः शश्वत्पातु मेऽधरयुग्मकम्
ॐ गोविन्दाय स्वाहेति दन्तौघं मे सदाऽवतु पातु कृष्णाय दन्ताधो दन्तोर्ध्वं क्लीं सदाऽवतु

ॐ श्रीकृष्णाय स्वाहेति जिह्विकां पातु मे सदा । रासेश्वराय स्वाहेति तालुकं पातु मे सदा ॥
राधिकेशाय स्वाहेति कण्ठं पातु सदा मम । नमो गोपाङ्गनेशाय वक्षः पातु सदा मम ॥
ॐ गोपेशाय स्वाहेति स्कन्धं पातु सदा मम । नमः किशोरवेषाय स्वाहा पृष्ठं सदाऽवतु ॥
उदरं पातु मे नित्यं मुकुन्दाय नमः सदा ॐ ह्रीं क्लीं कृष्णाय स्वाहेति करौ पातु सदा मम
ॐ विष्णवे नमो बाहुयुग्मं पातु सदा मम । ॐ ह्रीं भगवते स्वाहा नखरं पातु मे सदा ॥
ॐ नमो नारायणायेति नखरन्ध्रं सदाऽवतु । ॐ ह्रीं क्लीं पद्मनाभाय नाभिं पातु सदा मम
ॐ सर्वेशाय स्वाहेति कङ्कालं पातु मे सदा । ॐ गोपीरमणाय स्वाहा नितम्बं पातु मे सदा
ॐ गोपीप्राणनाथाय पादौ पातु सदा मम ॥ ३७ ॥
ॐ केशवाय स्वाहेति मम केशान्सदाऽवतु । नमः कृष्णाय स्वाहेति ब्रह्मरन्ध्रं सदाऽवतु
ॐ माधवाय स्वाहेति मे लोमानि सदाऽवतु । ॐ ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदाऽवतु
परिपूर्णतमः कृष्णः प्राच्यां मां सर्वदाऽवतु । स्वयं गोलोकनाथो मामाग्नेय्यां दिशि रक्षतु ॥
पूर्णब्रह्मस्वरूपश्च दक्षिणे मां सदाऽवतु । नैर्ऋत्यां पातु मां कृष्णः पश्चिमे पातु मां हरिः ॥
गोविन्दः पातु मां शश्वद्वायव्यां दिशि नित्यशः । उत्तरे मां सदा पातु रसिकानां शिरोमणिः
ऐशान्यां मां सदा पातु वृन्दावनविहारकृत् । वृन्दावनीप्राणनाथः पातु मामूर्ध्वदेशतः ॥ ४२
सदैव माधवः पातु बलिहारी महाबलः । जले स्थले चान्तरिक्षे नृसिंहः पातु मां सदा ॥
स्वप्ने जागरणे शश्वत्पातु मां माधवः सदा । सर्वान्तरात्मा निर्लिप्तः पातु मां सर्वतो विभुः ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् । त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ॥ ४६ ॥
मया श्रुतं कृष्णवक्त्रात्प्रवक्तव्यं न कस्यचित् । गुरुमभ्यर्च्य विधिवत्कवचं धारयेत्तु यः ।
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः । स च भक्तो वसेद्यत्र लक्ष्मीर्वाणी वसेत्ततः
यदि स्यात्सिद्धकवचो जीवन्मुक्तो भवेत्तु सः । निश्चितं कोटिवर्षाणां पूजायाः फलमाप्नुयात्
राजसूयसहस्राणि वाजपेयशतानि च । अश्वमेधायुतान्येव नरमेधायुतानि च ॥ ५० ॥
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा । त्रैलोक्यविजयस्यास्य कलां नार्हन्ति षोडशीम्
व्रतोपवासनियमं स्वाध्यायाध्ययनं तपः । स्नानं च सर्वतीर्थेषु नास्यार्हन्ति कलामपि ॥ ५२ ॥
सिद्धत्वममरत्वं च दासत्वं श्रीहरेरपि । यदि स्यात्सिद्धकवचः सर्वं प्राप्नोति निश्चितम् ॥
स भवेत्सिद्धकवचो दशलक्षं जपेत्तु यः । यो भवेत्सिद्धकवचः सर्वज्ञः स भवेद्ध्रुवम् ॥
इदं कवचमज्ञात्वा भजेत्कृष्णं सुमन्दधीः । कोटिकल्पं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः
गृहीत्वा कवचं वत्स महीं निःक्षत्रियां कुरु । त्रिःसप्तकृत्वो निःशङ्कः सदानन्दो हि लीलया

---

१ क. मुक्तिदाय-नमो नमः. २ ख. ह्रीं ह्रीं ।

राज्यं देयं शिरो देयं प्राणा देयाश्च पुत्रक । एवंभूतं च कवचं न देयं प्राणसंकटे ॥३०॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० परशुरामाय श्रीकृष्णकवच-
प्रदानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

अथ द्वात्रिंशोऽध्यायः ।

भृगुरुवाच—

संप्राप्तं कवचं नाथ शश्वत्सर्वाङ्गरक्षणम् । सुखदं मोक्षदं सारं शत्रुसंहारकारणम् ॥ १ ॥

अधुना भगवन्मन्त्रं स्तोत्रं पूजाविधिं प्रभो । देहि मह्यमनाथाय शरणागतपालक ॥२॥

महादेव उवाच--

ॐ श्रीं नमः श्रीकृष्णाय परिपूर्णतमाय च । स्वाहेत्यनेन मन्त्रेण भज गोपीश्वरं प्रभुम् ॥

मन्त्रेषु च प्रधानोऽयं महान्सप्तदशाक्षरः । सिद्धोऽयं पञ्चलक्षेण जपेन मुनिपुंगव ॥४॥

तद्दशांशं च हवनं तद्दशांशाभिषेचनम् । तर्पणं तद्दशांशं च तद्दशांशं च मार्जनम् ॥५॥

सुवर्णानां च शतकं पुरश्चरणदक्षिणा । मन्त्रसिद्धस्य पुंसश्च विश्वं करतले मुने ॥६॥

शक्तः पातुं समुद्रांश्च विश्वं संहर्तुमीश्वरः । पाञ्चभौतिकदेहेन वैकुण्ठं गन्तुमीश्वरः ॥७॥

तस्य संस्पर्शमात्रेण पदपङ्कजरेणुना । पूतानि सर्वतीर्थानि सद्यः पूता वसुंधरा ॥ ८ ॥

ध्यानं च सामवेदोक्तं शृणु मन्मुखतो मुने । सर्वेश्वरस्य कृष्णस्य भक्तिमुक्तिप्रदं च ॥

नवीनजलदश्यामं नीलेन्दीवरलोचनम् । शरत्पार्वणचन्द्रास्यमीषद्धास्यं मनोहरम् ॥१०॥

कोटिकन्दर्पलावण्यं लीलाधाममनोहरम् । रत्नसिंहासनस्थं तं रत्नभूषणभूषितम् ॥११॥

चन्दनोक्षितसर्वाङ्गं पीताम्बरधरं वरम् । वीक्ष्यमाणं च गोपीभिः सस्मिताभिश्च संततम् ॥

प्रफुल्लमालतीमालावनमालाविभूषितम् । दधतं कुन्दपुष्पाढ्यां चूडां चन्द्रकचर्चिताम् ॥

प्रभां क्षिपन्तीं नभसश्चन्द्रताराग्वितस्य च । रत्नभूषितसर्वाङ्गं राधावक्षःस्थलस्थितम् ॥

सिद्धेन्द्रैश्च मुनीन्द्रैश्च देवेन्द्रैः परिसेवितम् । ब्रह्मविष्णुमहेशैश्च श्रुतिभिश्च स्तुतं भजे ॥

ध्यानेनानेन तं ध्यात्वा चोपचारांस्तु षोडश । दत्त्वा भक्त्या च संपूज्य सर्वज्ञत्वं लभेद्ध्रुवम् ॥

अर्घ्यं पाद्यं चाऽऽसनं च वसनं भूषणं तथा । गन्धमर्घ्यं मधुपर्कं यज्ञसूत्रमनुत्तमम् ॥१७॥

धूपदीपौ च नैवेद्यं पुनराचमनीयकम् । नानाप्रकारपुष्पाणि ताम्बूलं च सुवासितम् ॥

मनोहरं दिव्यतल्पं कस्तूर्यगुरुचन्दनैः । भक्त्या भगवते देयं माल्यं पुष्पाञ्जलित्रयम् ॥

ततः षडङ्गं संपूज्य पश्चात्संपूजयेद्गणम् । श्रीदामानं सुदामानं वसुदामानमेव च ॥२०॥

१ क. भोजनम् ।

हरिभानुं चन्द्रभानुं सूर्यभानुं सुभानुकम्। षड्देवानेतान्प्रपूज्य भक्तिभावतः॥ २१ ॥
गोपीश्वरीं राधिकां च मूलप्रकृतिमीश्वरीम्। कृष्णशक्तिं कृष्णपूज्यां पूजयेद्भक्तिपूर्वकम्
गोपगोपीगणं शान्तं मां ब्रह्माणं च पार्वतीम् लक्ष्मीं सरस्वतीं पृथ्वीं सर्वदेवं सपार्षदम्
देवषट्कं समभ्यर्च्य पुनः पञ्चोपचारतः। पश्चादेवंक्रमेणैव श्रीकृष्णं पूजयेत्सुधीः ॥ २४॥
गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम्। देवषट्कं समभ्यर्च्य चेष्टदेवं च पूजयेत्॥
गणेशं विघ्ननाशाय व्याधिनाशाय भास्करम्। आत्मनः शुद्धये वह्निं श्रीविष्णुं मुक्तिहेतवे
ज्ञानाय शंकरं दुर्गां परमैश्वर्यहेतवे। संपूजने फलमिदं विपरीतमपूजने ॥ २७ ॥
ततः कृत्वा परीहारमिष्टदेवं च भक्तितः। स्तोत्रं च सामवेदोक्तं पठेद्भक्त्या च तच्छृणु॥

महादेव उवाच—

परं ब्रह्म परं धाम परं ज्योतिः सनातनम्। निर्लिप्तं परमात्मानं नमाम्यखिलकारणम् ॥
स्थूलात्स्थूलतमं देवं सूक्ष्मात्सूक्ष्मतमं परम्। सर्वदृश्यमदृश्यं च स्वेच्छाचारं नमाम्यहम्॥
साकारं च निराकारं सगुणं निर्गुणं प्रभुम्। सर्वाधारं च सर्वं च स्वेच्छारूपं न० ॥३१॥
अतीव कमनीयं च रूपं निरुपमं विभुम्। करालरूपमत्यन्तं बिभ्रतं प्रण० ॥ ३२ ॥
कर्मणः कर्मरूपं तं साक्षिणं सर्वकर्मणाम्। फलं च फलदातारं सर्वरूपं न० ॥ ३३ ॥
स्रष्टा पाता च संहर्ता कलया मूर्तिभेदतः। नानामूर्तिः कलांशेन यः पुमांस्तं न०॥३४॥
स्वयं प्रकृतिरूपश्च मायया च स्वयं पुमान्। तयोः परः स्वयं शश्वत्तं नमामि परात्परम्॥
स्त्रीपुंनपुंसकं रूपं यो बिभर्ति स्वमायया। स्वयं माया स्वयं मायी यो देवस्तं न० ॥
तारकं सर्वदुःखानां सर्वकारणकारणम्। धारकं सर्वविश्वानां सर्वबीजं न० ॥ ३९ ॥
तेजस्विनां रविर्यो हि सर्वजातिषु वाडवः। नक्षत्राणां च यश्चन्द्रस्तं नमामि जगत्प्रभुम्॥
रुद्राणां वैष्णवानां च ज्ञानिनां यो हि शंकरः। नागानां यो हि शेषश्च तं नमामि जग-
त्पतिम्॥ ३७ ॥
प्रजापतीनां यो ब्रह्मा सिद्धानां कपिलः स्वयम्। सनत्कुमारो मुनिषु तं नमामि जगद्गुरुम्॥
देवानां यो हि विष्णुश्च देवीनां प्रकृतिः स्वयम्। स्वायंभुवो मनूनां यो मानवेषु च वैष्णवः॥
नारीणां शतरूपा च बहुरूपं न० ॥ ४१ ॥
ऋतूनां यो वसन्तश्च मासानां मार्गशीर्षकः। एकादशी तिथीनां च नमाम्यखिलरूपिणम्
सागरः सरितां यश्च पर्वतानां हिमालयः। वसुंधरा सहिष्णूनां तं सर्वं प्रण० ॥ ४३ ॥
पत्राणां तुलसीपत्रं दारुरूपेषु चन्दनम्। वृक्षाणां कल्पवृक्षो यस्तं नमामि जगत्पतिम्

१ क. परम्। २ क. °र्णं सर्वबीजानां सर्वरूपं न°।

पुष्पाणां पारिजातश्च सस्यानां धान्यमेव च । अमृतं भक्ष्यवस्तूनां नानारूपं न० । ४५॥
ऐरावतो गजेन्द्राणां वैनतेयश्च पक्षिणाम् कामधेनुश्च धेनूनां सर्वरूपं न० ॥ ४६ ॥
तैजसानां सुवर्णं च धान्यानां यव एव च । यः केसरी पशूनां च वररूपं न०॥ ४७ ॥
यक्षाणां च कुबेरो यो ग्रहाणां च बृहस्पतिः । दिक्पालानां महेन्द्रश्च तं नमामि परं वरम्
वेदसंघश्च शास्त्राणां पण्डितानां सरस्वती । अक्षराणामकारो यस्तं प्रधानं न० । ४९॥
मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जाह्नवी स्वयम् । इन्द्रियाणां मनो यो हि सर्वश्रेष्ठं न०॥
सुदर्शनं च शस्त्राणां व्याधीनां वैष्णवो ज्वरः । तेजसां ब्रह्मतेजश्च वरेण्यं तं न० ॥
बलं यो वै बलवतां मनो वै शीघ्रगामिनाम् । कालः कलयतां यो हि तं नमामि विलक्षणम्
ज्ञानदाता गुरूणां च मातृरूपश्च बन्धुषु । मित्रेषु जन्मदाता यस्तं सारं प्रण० ।९३॥
शिल्पिनां विश्वकर्मा यः कामदेवश्च रूपिणाम् । पतिव्रता च पत्नीनां नमस्यं तं न० ॥
प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च । शालग्रामश्च यन्त्राणां तं विशिष्टं न० ॥९९॥
धर्मः कल्याणबीजानां वेदानां सामवेदकः । धर्माणां सत्यरूपो यो विशिष्टं तं न० ॥
जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु । शब्दरूपश्च गगने तं प्रणम्यं न० ॥९७॥
क्रतूनां राजसूयो यो गायत्री छन्दसां च यः । गन्धर्वाणां चित्ररथस्तं गरिष्ठं न० ॥
क्षीररत्नरूपो गव्यानां पवित्राणां च पावकः । पुण्यदानां च यः स्तोत्रं[1] तं नमामि शुभप्रदम्
तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम् गुणानां शान्तरूपो यश्चित्ररूपं न० ॥
तेजोरूपो ज्ञानरूपः सर्वरूपश्च यो महान् । सर्वानिर्वचनीयं च तं नमामि स्वयं विभुम् ॥
सर्वाधारेषु यो वायुर्यथाऽऽत्मा नित्यरूपिणाम् । आकाशो व्यापकानां यो व्यापकं तं न०
वेदानिर्वचनीयं यं न स्तोतुं पण्डितः क्षमः । यदनिर्वचनीयं च को वा तत्स्तोतुमीश्वरः ॥
वेदा न शक्ता यं स्तोतुं जडीभूता सरस्वती । तं च वाङ्मनसोः पारं को विद्वान्स्तोतुमीश्वरः ॥
शुद्धतेजःस्वरूपं च भक्तानुग्रहविग्रहम् । अतीव कमनीयं च श्यामरूपं न० ॥ ६५ ॥
द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा । शश्वद्गोपाङ्गनाभिश्च वीक्ष्यमाणं न०॥६६॥
राधया दत्तताम्बूलं भुक्तवन्तं मनोहरम् । रत्नसिंहासनस्थं च तमीशं प्रण० ॥६७॥
रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः । पार्षदप्रवरैर्गोपकुमारैस्तं[2] न० ॥ ६८ ॥
वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम् । रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥
शतशृङ्गे महाशैले गोलोके रत्नपर्वते । विरजापुलिने रम्ये प्रणमामि विहारिणम् ॥ ७० ॥
परिपूर्णतमं शान्तं राधाकान्तं मनोहरम् । सत्यं ब्रह्मस्वरूपं च नित्यं कृष्णं न० ॥७१॥

---

१ क. स्तोयस्तं २ क. °स्तं ।

श्रीकृष्णस्य स्तोत्रमिदं त्रिसंध्यं यः पठेन्नरः । धर्मार्थकाममोक्षाणां स दाता भारते भवेत् ॥
हरिदास्यं हरौ भक्तिं लभेत्स्तोत्रप्रसादतः । इह लोके जगत्पूज्यो विष्णुतुल्यो भवेद्ध्रुवम्
सर्वसिद्धेश्वरः शान्तोऽप्यन्ते याति हरेः पदम् । तेजसा यशसा भाति यथा सूर्यो महीतले
जीवन्मुक्तः कृष्णभक्तः स भवेन्नात्र संशयः । अरोगी गुणवान्विद्वान्पुत्रवान्धनवान्सदा
षडभिज्ञो दशबलो मनोयायी भवेद्ध्रुवम् । सर्वज्ञः सर्वदश्चैव स दाता सर्वसंपदाम् ॥
कल्पवृक्षसमः शश्वद्भवेत्कृष्णप्रसादतः । इत्येवं कथितं स्तोत्रं वत्स त्वं गच्छ पुष्करम्
तत्र कृत्वा मन्त्रसिद्धिं पश्चात्प्राप्स्यसि वाञ्छितम् ॥ ७७ ॥ त्रिःसप्तकृत्वो निर्भूपां
कुरु सृष्टिं कृपासुखम् । मयाऽऽशिषा मुनिश्रेष्ठ श्रीकृष्णस्य प्रसादतः ॥ ७८ ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० स्तवप्रदानं नाम द्वात्रिंशोऽध्यायः ॥३२॥

=====

## अथ त्रयस्त्रिंशोऽध्यायः ।

---

नारायण उवाच—

शिवं प्रणम्य सम्पूज्य दुर्गां कालीं मुदाऽन्वितः । गत्वा पुष्करतीर्थं च मन्त्रसिद्धिं चकार ह ॥
स बभूव निराहारो मासं भक्तिसमन्वितः । ध्यायन्कृष्णपदाम्भोजं वायुरोधं चकार सः ॥
ददर्श चक्षुरुन्मील्य गगनं तेजसाऽऽवृतम् । दिशो दश द्योतयन्तं समाच्छन्नदिवाकरम्
तेजोमण्डलमध्यस्थं रत्नयानं ददर्श ह । ददर्श तत्र पुरुषमत्यन्तं सुन्दरं वरम् ॥ ४ ॥
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् । प्रणम्य दण्डवन्मूर्ध्ना वरं वव्रे तमीश्वरम् ॥ ६ ॥
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति । पादारविन्दे सुदृढां तां भक्तिमनपायिनीम् ॥
दास्यं सुदुर्लभं शश्वत्त्वत्पादाब्जे च देहि मे । कृष्णस्तस्मै वरं दत्त्वा तत्रैवान्तरधीयत ॥७॥
भृगुः प्रणम्य भक्त्या तं जगाम परात्परम् । पस्पन्द दक्षिणाङ्गं च परं मङ्गलसूचकम् ॥ ८॥
वामाङ्गमतीतिरमनं सुस्वप्नं च ददर्श ह । मनः प्रसन्नं स्फीतं च तद्बभूव दिवानिशम् ॥
संप्राप्य स्वजनं सर्वं गृहे तस्थौ मुदाऽन्वितः ॥ ९ ॥

स्वशिष्यान्पितृशिष्यांश्च भ्रातृवर्गांश्च बान्धवान् । आनीयाऽऽनीय विविधान्मन्त्रांश्च स चकार ह ॥ १० ॥

पौर्णमास्यां स्वकृत्यान्ते तानेवं कृत्वा शुभक्षणे । तैरेव सार्धं बलवान्बभूव गमनोन्मुखः ॥ ११ ॥
ददर्श मङ्गलं रामः शुश्राव जयसूचकम् । बुबुधे मनसा सर्वं स्वभयं वैरिसंक्षयम् ॥ १२ ॥
यात्राकाले च पुरतः शुश्राव सहसा मुनिः । हरिशब्दं शङ्खरवं घण्टादुन्दुभिवादनम् ॥

आकाशवाणीसंगीतं जयस्ते भवितेति च । नवेङ्गितं च कल्याणं मेघशब्दं जयावहम्
चकार यात्रां भगवाञ्छ्रुत्वैवं विविधं शुभम् । ददर्श पुरतो विप्रबन्दिदैवज्ञभिक्षुकान् ॥
ज्वलत्प्रदीपं दधतीं पतिपुत्रवतीं सतीम् । पुरो ददर्श स्मेरास्यां नानाभूषणभूषिताम् ॥
शवं शिवां पूर्णकुम्भं चाषं च नकुलं तथा । गच्छन्ददर्श रामश्च यात्रामङ्गलसूचकम् ॥
कृष्णसारं गजं सिंहं तुरङ्गं गण्डकं द्विपम् । चमरीं राजहंसं च चक्रवाकं शुकं पिकम् ॥
मयूरं खञ्जनं चैव शङ्खचिल्लं चकोरकम् । पारावतं बलाकं च कारण्डं चातकं चटम् ॥
सौदामनीं चक्रचापं सूर्यं सूर्यप्रभां शुभाम् । सद्योमांसं सजीवं च मत्स्यं शङ्खं सुवर्णकम्
माणिक्यं रजतं मुक्तां मणीन्द्रं च प्रवालकम् । दधि लाजाञ्छुक्लधान्यं शुक्लपुष्पं च कुङ्कुमम्
पर्णं पताकां छत्रं च दर्पणं श्वेतचामरम् । धेनुं वत्सप्रयुक्तां च रथस्थं भूमिपं तथा ॥२२॥
दुग्धं गव्यं तथा पूगममृतं पायसं तथा । शालग्रामं पक्वफलं स्वस्तिकं शर्करां मधु ॥२३॥
मार्जारं च वृषेन्द्रं च मेषं पर्वतमूषिकम् । मेघाच्छन्नस्य च रवेरुदयं चन्द्रमण्डलम् ॥२४॥
कस्तूरीं व्यंजनं तोयं हरिद्रां तीर्थमृत्तिकाम् । सिद्धार्थं सर्षपं दूर्वां विप्रबालं च बालिकाम्
मृगं वेश्यां षट्पदं च कर्पूरं पीतवाससम् । गोमूत्रं गोपुरीषं च गोधूलिं गोपदाङ्कितम् ॥
गोष्ठं गवां वर्त्म रम्यां गोशालां गोगतिं शुभाम् । भूषणं देवमूर्तिं च ज्वलदग्निं महोत्सवम्
ताम्रं च स्फटिकं वैन्ध्यं सिन्दूरं माल्यचन्दनम् । गन्धं च हीरकं रत्नं ददर्श दक्षिणे शुभम्
सुगन्धिवायोराघ्राणं प्राप विप्राशिषं शुभाम् ॥ २९ ॥
इत्येवं मङ्गलं ज्ञात्वा प्रययौ स मुदाऽन्वितः । अस्तं गते दिनकरे नर्मदातीरसंनिधौ ॥
तत्राक्षयवटं दिव्यं ददर्श सुमनोहरम् । अत्यूर्ध्वं विस्तृतमतिपुण्याश्रमपदं परम् ॥ ३१ ॥
पौलस्त्यतपसः स्थानं सुगन्धिमरुदान्वितम् । कार्तवीर्यार्जुनाभ्याशे तत्र तस्थौ गणैः सह
सुष्वाप पुष्पशय्यायां किंकरैः परिसेवितः । निद्रां ययौ परिश्रान्तः परमानन्दसंयुतः
निशातीते च स भृगुश्चारुस्वप्नं ददर्श ह । न चिन्तितं यन्मनसा वायुपित्तकफं विना॥
गजाश्वशैलप्रासादगोवृक्षफलितेषु च । आरुह्यमाणमात्मानं रुदन्तं कृमिभक्षितम् ॥३६॥
आरुह्यमाणमात्मानं नौकायां चन्दनोक्षितम् । धृतवन्तं पुष्पमाल्यं शोभितं पीतवाससा॥
विण्मूत्रोक्षितसर्वाङ्गं वसापूयसमन्वितम् । वीणां वरां वादयन्तमात्मानं च ददर्श ह । ३७॥
विस्तीर्णपद्मपत्रैश्च स्वं ददर्श सरित्तटे । दध्याज्यमधुसंयुक्तं भुक्तवन्तं च पायसम् ॥३८॥
भुक्तवन्तं च ताम्बूलं लभन्तं ब्राह्मणाशिषम् । फलपुष्पप्रदीपं च पश्यन्तं स्वं ददर्श ह॥

१ क. 'र्धं च रोचनामाल्यम' । २ क. 'कङ्कफ' । ३ क. 'कैराम्वितम् । ४ क कज्जलं' । ५ क. 'द्यान्नं । ६ क. रैश्च वि' ।

पिष्टकफलं[1] क्षीरमुष्णान्नं शर्करान्वितम्। स्वस्तिकं भुक्तवन्तं स्वं ददर्श च पुनः पुनः॥
जलौकसा वृश्चिकेन मीनेन भुजगेन च। भक्षितं भीतमात्मानं पलायन्तं ददर्श सः॥
ततो ददर्श चाऽऽत्मानं मण्डलं चन्द्रसूर्ययोः। पतिपुत्रवतीं नारीं पश्यन्तं सस्मितं द्विजम्॥
सुवेषया कन्यकया सस्मितेन द्विजेन च। ददर्श श्लिष्टमात्मानं तुष्टेन परितुष्टया॥
फलितं पुष्पितं वृक्षं देवताप्रतिमां नृपम्। गजस्थं च रथस्थं च पश्यन्तं स्वं द०॥४४॥
पीतवस्त्रपरिधानां रत्नालंकारभूषिताम्। विशन्तीं ब्राह्मणीं गेहं पश्यन्तं स्वं द०॥४५॥
शङ्खं च स्फटिकं श्वेतं मालां मुक्तां च चन्दनम्। सुवर्णं रजतं रत्नं पश्यन्तं स्वं द०॥
गजं वृषं च सर्पं च श्वेनं च श्वेतचामरम्। नलिनोत्पलं दर्पणं च भार्गवो वै द०॥
रथस्थं नवरत्नाढ्यं मालतीमाल्यभूषितम्। रत्नसिंहासनस्थं स्वं भृगुः स्वप्ने द०॥
पद्मश्रेणीं पूर्णकुम्भं दधिलाजान्घृतं मधु। पर्णच्छत्रं छत्रिणं च भृगुः स्वप्ने द०॥
बकपङ्क्तिं हंसपङ्क्तिं कन्यापङ्क्तिं व्रतान्विताम्। पूजयन्तीं घटं शुभ्रं भृगुः स्वप्ने द०
मण्डपस्थं द्विजगणं पूजयन्तं हरं हरिम्। जयोऽस्त्वित्युक्तवन्तं तं भृगुः स्वप्ने द०॥
सुधावृष्टिं पर्णवृष्टिं फलवृष्टिं च शाश्वतीम्। पुष्पचन्दनवृष्टिं च भृगुः स्वप्ने द०॥
सद्योमांसं जीवमत्स्यं मयूरं श्वेतखञ्जनम्। सरोवरं च तीर्थानि भृगुः स्वप्ने द०॥
पारावतं शुकं चाषं शङ्खचिल्लं च चातकम्। व्याघ्रं सिंहं च सुरभीं भृगुः स्वप्ने द०॥
गोरोचनां हरिद्रां च शुक्लधान्याचलं वरम्। ज्वलदग्निं तथा दूर्वां भृगुः स्वप्ने द०॥
देवालयसमूहं च शिवलिङ्गं च पूजितम्। अर्चितां मृन्मयीं शैवां भृगुः स्वप्ने द०॥
यवगोधूमचूर्णानां भक्ष्याणि विविधानि च। भृगुर्ददर्श स्वप्ने च बुभुजे च पुनः पुनः॥
दिव्यवस्त्रपरिधानो रत्नभूषणभूषितः। अगम्यागमनं स्वप्ने चकार भृगुनन्दनः॥
ददर्श नर्तकीं वेश्यां रुधिरं च सुरां पपौ। रुधिरोक्षितसर्वाङ्गः स्वप्ने च भृगुनन्दनः॥
पक्षिणां पीतवर्णानां मानुषाणां च नारद मांसानि बुभुजे रामो हृष्टः स्वप्नेऽरुणोदये॥
अकस्मान्निगडैर्बद्धं क्षतं शस्त्रेण स्वं पुनः। दृष्ट्वा च बुबुधे प्रातः समुत्तस्थौ हरिं स्मरन्॥
अतीव हृष्टः स्वप्नेन प्रातःकृत्यं चकार सः। मनसा बुबुधे सर्वं विजेष्यामि रिपुं ध्रुवम्॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० त्रयस्त्रिंशोऽध्यायः॥ ३३॥

अथ चतुस्त्रिंशोऽध्यायः।

नारायण उवाच—

स आह्निकं कृत्वा समालोच्य च तैः सह। दूतं प्रस्थापयामास कार्तवीर्याश्रमं भृगुः

1 क. पिष्टानि लड्डुकानि च।

स दूतः शीघ्रमागत्य वसन्तं राजसंसदि । वेष्टितं सचिवैः सार्धमुवाच नृपतीश्वरम् ॥

रामदूत उवाच—

नर्मदातीरसांनिध्ये न्यग्रोधाक्षयमूलके । स भृगुर्भ्रातृभिः सार्धं त्वं तत्र च गन्तुमर्हसि ॥
युद्धं कुरु महाराज ज्ञातिभिर्ज्ञातिभिः सह । त्रिःसप्तकृत्वो निर्भूपां करिष्यति महीमिति
इत्युक्त्वा रामदूतश्चाप्यगच्छद्रामसंनिधिम् । राजा विधाय संनाहं समरं गन्तुमुद्यतः ॥
गच्छन्तं समरं दृष्ट्वा प्राणेशं सा मनोरमा । तमेव वारयामास वासयामास संनिधौ ॥
राजा मनोरमां दृष्ट्वा प्रसन्नवदनेक्षणः । तामुवाच सभामध्ये वाक्यं मानसिकं मुने ॥

कार्तवीर्यार्जुन उवाच—

ममेवां[1]ह्वयते कान्ते जमदग्निसुतो महान् । स तिष्ठन्नर्मदातीरे रणाय भ्रातृभिः सह ॥
संप्राप्य शंकराच्छस्त्रं मन्त्रं च कवचं हरेः । त्रिःसप्तकृत्वो निर्भूपां कर्तुमिच्छति मेदिनीम्
आन्दोलयन्ति मे प्राणा मनः संक्षुभितं मुहुः । शश्वत्स्फुरति वामाङ्गं दृष्टं स्वप्नं शृणु प्रिये
तैलाभ्यक्तमात्मानमपश्यं गर्दभोपरि । ओण्ड्रपुष्पस्य माल्यं च बिभ्रतं रक्तचन्दनम् ॥
रक्तवस्त्रपरीधानं लोहालंकारभूषितम् । क्रीडन्तं च हसन्तं च निर्वाणाङ्गारराशिना ॥१२ ।
भस्माच्छन्नां च पृथिवीं जपापुष्पान्वितां सति । रहितं चन्द्रसूर्याभ्यां रक्तसंध्यान्वितं नभः
मुक्तकेशां च नृत्यन्तीं विधवां छिन्ननासिकाम् । रक्तवस्त्रपरीधानामपश्यं चाट्टहासिनीम् ।
सशवामग्निरहितां चितां भस्मसमन्विताम् । भस्मवृष्टिमसृग्वृष्टिमग्निवृष्टिमपीश्वरि ॥१५॥
पक्वतालफलाकीर्णां पृथिवीमस्थिसंयुताम् । अपश्यं कर्परौघं च च्छिन्नकेशनखान्वितम् ॥
पर्वतं लवणानां च राशीभूतं कपर्दकम् । चूर्णानां चैव तैलानामदर्शं कन्दरं निशि ॥
अदर्शं पुष्पितं वृक्षमशोककरवीरयोः । तालवृक्षं च फलितं तत्र चैव पतत्फलम् ॥१८॥
स्वकरात्पूर्णकलशः पपात च बभञ्ज च । इत्यपश्यं च गगनात्संपतच्चन्द्रमण्डलम् ॥
अपश्यमम्बरात्सूर्यमण्डलं संपतद्भुवि । उल्कापातं धूमकेतुं ग्रहणं चन्द्रसूर्ययोः ॥ २० ॥
विकृताकारपुरुषं विकटास्यं दिगम्बरम् । आगच्छन्तं चाग्रतस्तमपश्यं च भयानकम् ॥
बाला द्वादशवर्षीया वस्त्रभूषणभूषिता । संरुष्टा याति मद्गेहादित्यपश्यमहं निशि ॥२२॥
आज्ञां त्वं देहि राजेन्द्र त्वद्गेहाद्यामि काननम् । वदसि त्वं मामिति च निश्यपश्यमहं शुचा
रुष्टो विप्रो मां शपते संन्यासी च तथा गुरुः । भित्तौ पुत्तलिकाश्चित्रा नृत्यन्तीश्च ददर्श ह
[illegible]कानां च गृध्राणां काकानां निकरैः सदा । पीडितं महिषाणां च स्वपश्यमहं निशि ।
पीडितं तैलयन्त्रेण भ्रामितं तैलकारिणा । दिगम्बरान्पाशहस्तानपश्यमहमीश्वरि ॥२५॥

---

१ क. °वांऽऽह्वयते वीर्याज्ज° ।

नृत्यन्ति गायकाः सर्वे गानं गायन्ति मे गृहे। विवाहं परमानन्दमित्यपश्यमहं निशि १७
रमणं कुर्वतो लोकान्केशाकेशि च कुर्वतः। अदृशं समरं रात्रौ काकानां च शुनामपि ॥
मोटकानि च पिण्डानि श्मशानं शवसंयुतम्। रक्तवस्त्रं शुक्लवस्त्रमपश्यं निशि कामिनि ॥
कृष्णाम्बरा कृष्णवर्णा नग्ना वै मुक्तकेशिनी। विधवा श्लिष्यति च मामपश्यं निशि शोभने
नापितो मुण्डते मुण्डं श्मश्रुश्रेणीं च मे प्रिये। वक्षःस्थलं च नखरमित्यपश्यमहं निशि॥
पादुकाचर्मरज्जूनामपश्यं राशिमुल्बणम्। चक्रं भ्रमन्तं भूमौ च कुलालस्येति सुन्दरि ॥
वात्यया घूर्णमानं च शुष्कवृक्षं तमुत्थितम्। घूर्णमानं कबन्धं वै चापश्यं निशि सुव्रते॥
ग्रथितां मुण्डमालां च चू(घू)र्णमानां च वात्यया। अतीव घोरदशनामप्यपश्यमहं वरे
भूतप्रेता मुक्तकेशा वमन्तश्च हुताशनम्। मां भीषयन्ति सततमित्यपश्यमहं निशि ॥
दग्धजीवं दग्धवृक्षं व्याधिग्रस्तं नरं परम्। अङ्गहीनं च वृषलमप्यपश्यमहं निशि ॥
गेहपर्वतवृक्षाणां सहसा पततं परम्। मुहुर्मुहुर्वज्रपातमप्यपश्यमहं निशि ॥ १७ ॥
कुक्कुराणां सृगालानां रोदनं च मुहुर्मुहुः। गृहे गृहे च निपतमपश्यं सर्वतो निशि ॥
अधःशिरस्तूर्ध्वपादं मुक्तकेशं दिगम्बरम्। भूमौ भ्रमन्तं गच्छन्तं चाप्यपश्यमहं नरम्॥
विकृताकारशब्दं च ग्रामाधिदेवरोदनम्। प्रातः श्रुत्वैवावबुद्धः क उपायो वदाधुना ॥
नृपतेर्वचनं श्रुत्वा हृदयेन विदूयता। सगद्गदं च रुदती तमुवाच नृपेश्वरम् ॥ ४१ ॥

मनोरमोवाच—

हे नाथ रमणश्रेष्ठ श्रेष्ठ सर्वमहीभृताम्। प्राणातिरेक प्राणेश शृणु वाक्यं शुभावहम् ॥
नारायणांशो भगवाञ्जामदग्न्यो महाबली। सृष्टिसंहर्तुरीशस्य शिष्योऽयं जगतः प्रभोः॥
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति। प्रतिज्ञा यस्य रामस्य तेन सार्धं रणं त्यज॥
पापेन रावणं जित्वा शूरं त्वमपि मन्यसे। स त्वया न जितो नाथ स्वपापेन पराजितः॥
यो न रक्षति धर्मं च तस्य को रक्षिता भुवि। स नश्यति स्वयं मूढो जीवन्नपि मृतो हि सः
शुभाशुभस्य सततं साक्षी धर्मस्य कर्मणः। आत्मारामः स्थितः स्वान्ते मूढस्त्वं नहि पश्यसि
पुत्रदारादिकं यद्यत्सर्वैश्वर्यं सुधर्मिणाम्। जलबुद्बुदवत्सर्वमनित्यं नश्वरं नृप ॥ ४८ ॥
संसारं स्वप्नसदृशं मत्वा सन्तोऽत्र भारते। ध्यायन्ति सततं धर्मं तपः कुर्वन्ति भक्तितः॥
दत्तेन दत्तं यज्ज्ञानं तत्सर्वं विस्मृतं त्वया। अस्ति चोद्विप्रहिंसायां कुबुद्धे त्वन्मनः कथम्।
सुखार्थे मृगयां गत्वा तत्रोपोष्य द्विजाश्रमे। भुक्त्वा मिष्टमपूर्वं च हतो विप्रो निरर्थकम्॥
गुरुविप्रसुराणां च यः करोति पराभवम्। अभीष्टदेवस्तं रुष्टा विपत्तिस्तस्य संनिधौ ॥
स्मरणं कुरु राजेन्द्र दत्तात्रेयपदाम्बुजम्। गुरौ भक्तिश्च सर्वेषां सर्वविघ्नविनाशिनी ॥

गुरुदेवं समभ्यर्च्य तं भृगुं शरणं व्रज । विप्रे देवे प्रसन्ने च क्षत्त्रियाणां नहि क्षतिः ॥
विप्रस्य किंकरो भूपो वैश्यो भूपस्य भूमिप । सर्वेषां किंकराः शूद्रा ब्राह्मणस्य विशेषतः ॥
अयशः शरणं शश्वत्क्षात्त्रियस्य च क्षात्त्रिये । महद्यशस्तच्छरणं गुरुदेवद्विजेषु च ॥९९॥
ब्राह्मणं भज राजेन्द्र गरीयांसं सुरादपि । ब्राह्मणे परितुष्टे च संतुष्टाः सर्वदेवताः ॥
इत्येवमुक्त्वा राजेन्द्रं क्रोडे कृत्वा महासती । मुहुर्मुहुर्मुखं दृष्ट्वा विललाप रुरोद च ॥
क्षणं तिष्ठ महाराज पुनरेवमुवाच सा । स्नानं कुरु महाराज भोजयिष्यामि वाञ्छितम्
चन्दनागुरुकस्तूरीकर्पूरैः कुङ्कुमैर्युतम् । अनुलेपं करिष्यामि सर्वाङ्गे तव सुन्दर ॥१००॥
क्षणं सिंहासने तिष्ठ क्षणं वक्षसि मे प्रभो । सभायां पुष्पराचिते तल्पे पश्यामि शोभनम्[1]
शतपुत्राधिकः प्रेम्णा सतीनां वै पतिर्नृप । निरूपितो भगवता वेदेषु हरिणा स्वयम् ॥
मनोरमावचः श्रुत्वा राजा परमपण्डितः । बोधयामास तां राज्ञीं ददौ प्रत्युत्तरं पुनः ॥

कार्तवीर्यार्जुन उवाच—

शृणु कान्ते प्रवक्ष्यामि श्रुतं सर्वं त्वयेरितम् । शोकार्तानां च वचनं न प्रशंस्यं सभासु च ॥
सुखं दुःखं भयं शोकः कलहः प्रीतिरेव च । कर्मभोगार्हकालेन सर्वं भवति सुन्दरि ॥
कालो ददाति राजत्वं कालो मृत्युं पुनर्भवम् । कालः सृजति संसारं कालः संहरते पुनः ॥
करोति पालनं कालः कालरूपी जनार्दनः । कालस्य कालः श्रीकृष्णो विधातुर्विधिरेव च ॥
संहर्तुर्वाऽपि संहर्ता पातुः पाता च कर्मकृत् । स कर्मणां कर्मरूपी ददाति तपसां फलम् ॥
कः केन हन्यते जन्तुः कर्मणा वै विना सति । स्रष्टा सृजति सृष्टिं च संहर्ता संहरेत्पुनः ॥
पाता पाति च भूतानि यस्याऽऽज्ञां परिपालयेत् । यस्याऽऽज्ञया वाति वातः संततं भयविह्वलः
शश्वत्संचरते मृत्युः सूर्यस्तपति संततम् । वर्षतीन्द्रो दहत्यग्निः कालो भ्रमति भीतवत् ॥
तिष्ठन्ति स्थावराः सर्वे चरन्ति सततं चराः । वृक्षाश्च पुष्पिताः काले फलिताः पल्लवान्विताः
शुष्यन्ति कालतः काले वर्धन्ते च तदाज्ञया । आविर्भूता तिरोभूता सृष्टिरेव यदाज्ञया ॥
तस्याऽज्ञया भवेत्सर्वं न किंचित्स्वेच्छया नृणाम् ॥
नारायणांशो भगवाञ्जामदग्न्यो महाबलः । त्रिःसप्तकृत्वो निर्भूपां करिष्यति महीमिति ॥
प्रतिज्ञा विफला तस्य न भवेत्तु कदाचन । निश्चितं तस्य वध्योऽहमिति जानामि सुव्रते ॥
ज्ञात्वा सर्वं भविष्यं च शरणं यामि तत्कथम् । प्रतिष्ठितानां चाकीर्तिर्मरणादतिरिच्यते
इत्येवमुक्त्वा राजेन्द्रः समरं गन्तुमुद्यतः । वाद्यं च वादयामास कारयामास मङ्गलम् ॥
शतकोटिर्नृपाणां च राजेन्द्राणां त्रिलक्षकम् । अक्षौहिणीनां शतकं महाबलपराक्रमम् ॥

---

[1] क. रतितल्पे च पश्यामि जन्म शो° ।

अश्वानां च गजानां च पदातीनां तथैव च । असंख्यकं रथानां च गृहीत्वा यत्तुमुद्यतः ॥
बभूव क्षितिपतिता साध्वी दृष्ट्वा तं गमनोन्मुखम् धृतवन्तं च संनाहमक्षयं सशरं धनुः ॥
क्रीडागारे क्षणं तस्थौ कृत्वा कान्तं स्ववक्षसि । पश्यन्ती तन्मुखाम्भोजं चुचुम्ब च मुहुर्मुहुः

इति श्रीब्रह्म० महा० गणेशख० नारदना० चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

=====

अथ पञ्चत्रिंशोऽध्यायः ।

———

नारायण उवाच—

क्षणेनेमा प्राणनाथं क्षणं कृत्वा स्ववक्षसि । भविष्यं मनसा चक्रे यद्यत्स्वाभिमुखाच्छ्रुतम् ॥
पुत्रांश्च पुरतः कृत्वा बान्धवांश्च स्वकिंकरान् सस्मार सा हरिपदं मेने सत्यं भवेन्मुने ॥
योगेन भित्त्वा षट्चक्रं वायुं संस्थाप्य मूर्धनि । ब्रह्मरन्ध्रस्थकमले सहस्रदलसंयुते ॥
स्वान्तमाकृष्य विषयाज्जलबुद्बुदसंनिभं तु । संस्थाप्य बध्वा ज्ञानेन लोलं ब्रह्मणि निष्कले
त्रिविधं कर्मसंन्यस्य निर्मूलमपुनर्भवम् । तत्र प्राणांश्च तत्याज न च प्रागाधिकं प्रियम् ॥
स राजा तां मृतां दृष्ट्वा विललाप रुरोद च । संनाहं संपरित्यज्य कृत्वा वक्षस्युवाच ताम्

राजोवाच—

उत्तिष्ठ रमे समुत्तिष्ठ न यास्यामि रणाजिरम् । सचेतना मां पश्येति विलपन्तं मुहुर्मुहुः ॥
उत्तिष्ठ रमे समुत्तिष्ठ मया सार्धं गृहं व्रज । न करिष्यामि समरं भृगुणा सह मामिनि ॥ ८ ॥
मनोरमे समुत्तिष्ठ श्रीशैलं व्रज सुन्दरि तत्र क्रीडां करिष्यामि त्वया सार्धं यथा पुरा ॥
मनोरमे समुत्तिष्ठ व्रज गोदावरीं प्रिये । जलक्रीडां करिष्यामि त्वया सार्धं यथा पुरा ॥
मनोरमे समुत्तिष्ठ नन्दनं व्रज सुन्दरि । पुष्पभद्रानदीतीरे विहरिष्यामि निर्जने ॥ ११ ॥
मनोरमे समुत्तिष्ठ मलयं व्रज सुन्दरि । त्वया सार्धं रमिष्येऽहं तत्र चन्दनकानने ॥ १२ ॥
सुशीतल गन्धयुक्तेन वायुना सुरभीकृते । भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुताश्रिते ॥ १३ ॥
चन्दनागुरुकस्तूरीकुङ्कुमालेपनं कुरु । चन्दने स्थितसर्वाङ्गं पश्य मां सस्मिते सति ॥ १४ ॥
सुधातुल्यं सुमधुरं वचनं रचय प्रिये । कुटिलभ्रूविकारं च कथं न कुरुषेऽधुना ॥ १५ ॥
नृपस्य रोदनं श्रुत्वा वाग्बभूवाशरीरिणी । स्थिरो भव महाराज कुरुषे रोदनं कथम् ॥
त्वं महाज्ञानिनां श्रेष्ठो दत्तात्रेयप्रसादतः । जलबुद्बुदवत्सर्वं संसारं पश्य शोभनम् ॥
कमलांशा च सा साध्वी जगाम कमलालयम् । त्वमेव गच्छ वैकुण्ठं रणं कृत्वा रणाजिरे
इत्येवं वचनं श्रुत्वा जहौ शोकं नराधिपः । ततश्चन्दनकाष्ठेन चितां दिव्यां चकार ह ॥
संस्काराग्निं कारयित्वा पुत्रद्वारा ददाह ताम् । नानाविधानि रत्नानि ब्राह्मणेभ्यो ददौ मुदा

नानाविधानि दानानि वस्त्राणि[1] विविधानि च । मनोरमायाः पुण्येन ब्राह्मणेभ्यो ददौ मुदा
भुज्यतां भुज्यतां शश्वद्दीयतां दीयतामिति । शब्दो बभूव सर्वत्र कार्तवीर्याश्रमे मुने ॥
कोषेषु स्वाधिकारेषु स्थितं यद्यद्धनं तदा । मनोरमायाः पुण्येन ब्राह्मणेभ्यो ददौ मुदा ॥
राजा जगाम समरं हृदयेन विदूयता । सार्धं सैन्यसमूहैश्च वाद्यभाण्डैरसंख्यकैः ॥ २४ ॥
ददर्शामङ्गलं राजा पुरो वर्त्मनि वर्त्मनि । ययौ तथाऽपि समरं नाऽऽजगाम गृहं पुनः
मुक्तकेशीं छिन्ननासां रुदतीं च दिगम्बराम् । कृष्णवस्त्रपरिधानामपरां विधवामपि ॥
मुखदुष्टां यं निदुष्टां व्याधियुक्तां च कुट्टिनीम् । पतिपुत्रविहीनां च डाकिनीं पुंश्चलीं तथा
कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम् । कुचैलमतिरूक्षाङ्गं नग्नं काषायवासिनम् ॥
वसाविक्रयिणं चैव कन्याविक्रयिणं तथा । चितादग्धं शवं भस्म निर्वाणाङ्गारमेव च ॥
सर्पक्षतं नरं सर्पं गोधां च शशकं विषम् । श्राद्धपाकं च पिण्डं च मोटकं च तिलांस्तथा
देवलं वृषवाहं च शूद्रश्राद्धान्नभोजिनम् । शूद्रान्नपाचकं शूद्रयाजकं ग्रामयाजकम् ॥
कुशपुत्तलिकां चैव शवदाहनकारिणम् । शून्यकुम्भं भग्नकुम्भं तैलं लवणमस्थि च ॥
वासिं कच्छपं चूर्णं कुक्कुरं शब्दकारिणम् । दक्षिणे च सृगालं च कुर्वन्तं भैरवं रवम्
कपर्दकं च क्षौरं च छिन्नकेशं नखं मलम् । कलहं च विलापं च तथा तत्कारिणं जनम्
अमङ्गलं वदन्तं च रुदन्तं शोककारिणम् ॥ ३९ ॥
मिथ्यासाक्ष्यप्रदातारं चौरं च नरघातिनम् । पुंश्चलीपतिपुत्रौ च पुंश्चल्योदनभोजिनम् ॥
देवतागुरुविप्राणां वस्तुवित्तापहारिणम् । दत्तापहारिणं दस्युं हिंसकं सूचकं खलम् ॥
पितृमातृविरक्तं च द्विजाश्वत्थविघातिनम् । सत्यघ्नं च कृतघ्नं च स्थाप्यस्वापहारिणम्
विप्रमित्रद्रोहरूपं क्षतं विश्वासघातकम् । गुरुदेवद्विजानां च निन्दकं स्वाङ्गघातकम् ॥
जीवानां घातकं चैव स्वाङ्गहीनं च निर्दयम् । व्रतोपवासहीनं च दीक्षाहीनं न पुंसकम् ॥
गलितव्याधिगात्रं च काणं बधिरमेव च । पुल्कसं छिन्नलिङ्गं च सुरामत्तं सुरां तथा ॥
क्षिप्तं वमन्तं रुधिरं महिषं गर्दभं तथा । मूत्रं पुरीषं श्लेष्माणं रूक्षिणं नृकपालिनम् ॥
चण्डवातं रक्तवृष्टिं वाद्यं वै वृक्षपातनम् । वृकं च सूकरं गृध्रं श्येनं कङ्कं च भल्लुकम् ॥
पाशं च शुष्ककाष्ठं च वायसं गन्धकं तथा ॥ ४४ ॥
प्रतिग्राहिब्राह्मणं च तन्त्रमन्त्रोपजीविनम् । वैद्यं च रक्तपुष्पं च पथ्यौषधं तुषमेव च ॥
कुवार्तां मृतवार्तां च विप्रशापं च दारुणम् । दुर्गन्धिवातं दुःशब्दं राजाऽपश्यत्स वर्त्मनि
मनश्च कुत्सितं प्राणाः क्षुभिताश्च निरन्तरम् । वामाङ्गस्पन्दनं देहजाड्यं राज्ञो बभूव ह

---

1 क. वस्तूनि । 2 क. यक्ष्मव्याधिनमे° ।

तथाऽपि राजा निःशङ्को ददर्श समराङ्गणम् । सर्वसैन्यसमायुक्तः प्रविवेश रणाजिरम्
अवरुह्य रथात्तूर्णं दृष्ट्वा च पुरतो भृगुम् । ननाम दण्डवद्भूमौ राजेन्द्रैः सह भक्तितः ॥
आशिषं युयुजे रामः स्वर्गं याहीति वाञ्छितम् । तेषां सद्यं तद्बभूवुर्दुर्लङ्घ्या ब्राह्मणाशिषः
भृगुं प्रणम्य राजेन्द्रो राजेन्द्रैः सह तत्क्षणात् । आरुरोह रथं तूर्णं नानायुधसमन्वितम्
नानाप्रकारवाद्यं च दुन्दुभिं मुरजादिकम् । वादयामास सहसा ब्राह्मणेभ्यो ददौ धनम् ॥
उवाच रामो राजेन्द्रं राजेन्द्राणां च संसदि । हितं सत्यं नीतिसारं वाक्यं वेदविदां वरः ॥

परशुराम उवाच—

शृणु राजेन्द्र धर्मिष्ठ चन्द्रवंशसमुद्भव । विष्णोरंशस्य शिष्यस्त्वं दत्तात्रेयस्य धीमतः ॥
स्वयं विद्वांश्च वेदांश्च श्रुत्वा वेदविदो मुखात् । कथं दुर्बुद्धिरधुना सज्जनानां विहिंसना ॥
त्वं पूर्वमहनो लोभान्निरीहं ब्राह्मणं कथम् । ब्राह्मणी शोकसंतप्ता भर्त्रा सार्धं गता सती
किं भविष्यति ते भूप परत्रैवानयोर्वधात् । सर्वं मिथ्यैव संसारं पद्मपत्रे यथा जलम् ॥
सत्कीर्तिश्चाथ दुष्कीर्तिः कथामात्रावशेषिता । विडम्बना वा किमतो दुष्कीर्तिश्च सतामहो
क्व गता कपिला त्वं क्व क निव दो मुनिः कुतः । यत्कृतं विदुषा राज्ञा न कृतं हालिकेन तत्
त्वामुपोषितमीशं हि दृष्ट्वा रामो हि धार्मिकः । पारणां कारयामास दत्तं तस्य फलं त्वया
अधीतं विधिवद्दत्तं ब्राह्मणेभ्यो दिने दिने । जगत्ते यशसा पूर्णमयशो वार्धके कथम् ॥
दाता बलिष्ठो धर्मिष्ठो यशस्वी पुण्यवान्सुधीः । कार्तवीर्यार्जुनसमो न भूतो न भविष्यति
पुरातना वदन्तीति बन्दिनो धरणीतले । यो विख्यातः पुराणेषु तस्य दुष्कीर्तिरीदृशी
दुर्वाक्यं दुःसहं राजंस्तीक्ष्णास्त्रादपि जीविनाम् । संकटेऽपि सतां वक्त्र दुरुक्तिर्न विनिर्गता
न ददामि दुरुक्तिं ते प्रकृतं कथयाम्यहम् । उत्तरं देहि राजेन्द्र मह्यं राजेन्द्रसंसदि ॥
सूर्यचन्द्रमनूनां च वंशजाः सन्ति संसदि । सत्यं वद सभायां च शृण्वन्तु पितरः सुराः ॥
शृण्वन्तु सर्वे राजेन्द्राः सदसद्वक्तुमीश्वराः । पश्यन्तो हि समं सन्तः पाक्षिकं न वदन्ति च
इत्युक्त्वा रैणुकेयश्च विरराम रणस्थले । राजा बृहस्पतिसमः प्रवक्तुमुपचक्रमे ॥ १८ ॥

कार्तवीर्यार्जुन उवाच—

शृणु राम हरेरंशो हरिभक्तो जितेन्द्रियः । श्रुतो धर्मो मुखाद्येषां त्वं च तेषां गुरोर्गुरुः ॥
कर्मणा ब्राह्मणो जातः करोति ब्रह्मभावनाम् । स्वधर्मनिरतः शुद्धस्तस्माद्ब्राह्मण उच्यते ॥
अन्तर्बहिश्च मननात्कुरुते कर्मनित्यशः । मौनी शश्वद्वदेत्काले यो वै स मुनिरुच्यते ॥

---

१ ख. °णा वाऽप्यसद्बुद्ध्या क° ।

स्वर्णे लोष्टे गृहेऽरण्ये पङ्के सुस्निग्धचन्दने । समताभावना यस्य स योगी परिकीर्तितः ॥
सर्वजीवेषु यो विष्णुं भावयेत्समताधिया । हरौ करोति भक्तिं च हरिभक्तः स च स्मृतः॥
तपो धनं ब्राह्मणानां तपः कल्पतरुर्यथा । तपस्या कामधेनुश्च संततं तपसि स्पृहा ॥७४॥
ऐश्वर्ये क्षत्रियाणां च वाणिज्ये च तथा विशाम् । शूद्राणां विप्रसेवैव स्पृहा वेदेष्वनिन्दिता॥
क्षत्रियाणां च तपसि स्पृहाऽतीवाप्रशंसिता । ब्राह्मणानां विवादे च स्पृहाऽतीव विनिन्दिता॥
रागी राजसिकं कार्यं कुरुते कर्मरागतः । रागान्धो यो राजसिकस्तेन राजा प्रकीर्तितः ॥
रागतः कामधेनुश्च मया वै याचिता मुने । को दोष एव मे जातः क्षत्रियस्यानुरागिणः ॥
कुतः कस्य मुनेरस्ति कामधेनुस्त्वया विना । स्पृहा रणे वा भोगे वा युष्माकं च व्यतिक्रमः
त्रिंशदक्षौहिणीं सेनां राजेन्द्राणां त्रिकोटिकाम् । निहत्याऽऽयान्तमेकं मां न हन्तुं सहनं मुने
आत्मानं हन्तुमायान्तमपि वेदाङ्गपारगम् । न दोषो हनने तस्य न तेन ब्रह्महाऽभवम् ॥
प्रायश्चित्तं हिंसकानां न वेदेषु निरूपितम् । वधः समुचितस्तेषामित्याह कमलोद्भवः ॥
पित्रा ते निहता भूपा महाबलपराक्रमाः । इदानीं राजपुत्राश्च शिशवोऽत्र समागताः ॥
त्रिःसप्तकृत्वो निर्भूपां कर्तुं महीमिति । त्वया कृता प्रतिज्ञा या तस्यास्त्वं पालनं कुरु
क्षत्रियाणां रणो धर्मो रणे मृत्युर्न गर्हितः । रणे स्पृहा ब्राह्मणानां लोके वेदे विडम्बना ॥
तपोधनानां विप्राणां वाग्बलानां युगे युगे । शान्तिः स्वस्त्ययनं कर्म विप्रधर्मो न संकरः ॥
क्षत्रियाणां बलं युद्धं व्यापारश्च बलं विशाम् । भिक्षाबलं भिक्षुकाणां शूद्राणां विप्रसेवनम्
हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः । हिंसा बलं खलानां च तपस्या च तपस्विनाम् ॥
बलं वेषश्च वेश्यानां योषितां यौवनं बलम् । बलं प्रतापो भूपानां बालानां रोदनं बलम् ।
सतां सत्यं बलं मिथ्या बलमेवासतां सदा । अनुगानामनुगमः स्वल्पस्वानां च संचयः ॥
विद्या बलं पण्डितानां धैर्यं साहसिनां बलम् । शश्वत्कुकर्मशीलानां गाम्भीर्यं साहसं बलम्
धर्मं बलं च धनिनां शुचीनां च विशेषतः । बलं विवेकः शान्तानां गुणिनां बलमेकता ॥
गुणो बलं च गुणिनां चौराणां चौर्यमेव च । प्रियवाक्यं च कापट्यमधर्मः पुंश्चलीबलम् ॥
हिंसा च हिंस्रजन्तूनां सतीनां पतिसेवनम् । वरशापौ सुराणां च शिष्याणां गुरुसेवनम्॥
बलं धर्मो गृहस्थानां भृत्यानां राजसेवनम् । बलं स्तवः स्तावकानां ब्रह्म च ब्रह्मचारिणाम् ॥
यतीनां च सदाचारो न्यासः संन्यासिनां बलम् । पापं बलं पातकिनामशक्तानां हरिर्बलम्
पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम् । फलं बलं च वृक्षाणां जलजानां जलं बलम् ॥
जलं बलं च सस्यानां मत्स्यानां च जलं बलम् । शान्तिर्बलं च भूपानां विप्राणां च विशेषतः

---

१ क. स्वर्णं ।

विप्र: शान्तो रणोद्योगी नैव दृष्टो न च श्रुतः। स्थिते नारायणे देवे बभूवाद्य विपर्ययः ।।
इत्येवमुक्त्वा राजेन्द्रो विरराम रणाजिरे । तस्य तद्वचनं श्रुत्वा सदस्तूष्णीं बभूव ह ।
रामस्य भ्रातरः सर्वे तीक्ष्णशस्त्रासिपाणयः । आरेभिरे रणं कर्तुं महावीरास्तदाज्ञया ।।
रणोन्मुखांश्च तान्दृष्ट्वा मत्स्यराजो महाबलः । समारेभे रणं कर्तुं मङ्गले मङ्गलालयः ।।
शरजालेन राजेन्द्रो वारयामास तानपि । चिच्छिदुः शरजालं च जमदग्निसुतास्तदा ।।
राजा चिक्षेप दिव्यास्त्रं शतसूर्यप्रभं मुने । माहेश्वरेण मुनयश्चिच्छिदुश्चैव लीलया ।। १०४ ।।
दिव्यास्त्रेणैव मुनयश्चिच्छिदुः सशरं धनुः । रथं च सारथिं चैव राज्ञः संनाहमेव च ।।
न्यस्तशस्त्रं नृपं दृष्ट्वा मुनयो हर्षविह्वलाः । दधार शूलिनः शूलं मत्स्यराजजिघांसया ।।
शूलनिःक्षेपसमये वागभूदशरीरिणी । शूलं त्यजत विप्रेन्द्राः शिवस्याव्यर्थमेव च ।।
शिवस्य कवचं दिव्यं दत्तं दुर्वाससा पुरा । मत्स्यराजगलेऽस्त्येतत्सर्वावयवरक्षणम् ।।
प्राणानां च प्रदातारं कवचं याचतं नृपम् । तदा निक्षिप्तशूलं च जघान नृपतीश्वरम् ।।
तच्छूलं तं नृपं प्राप्य शतखण्डं गतं मुने । श्रुत्वैवाऽऽकाशवाणीं च शूली संन्यासिवेषकृत्
ययाचे कवचं भूपं जमदग्निसुतो महान् । राजा ददौ च कवचं ब्रह्माण्डविजयं परम् । १११ ।।
गृहीत्वा कवचं तच्च शूलेनैव जघान ह । पपात मत्स्यराजश्च शतचन्द्रसमाननः ।।
महाबलिष्ठो गुणवांश्चन्द्रवंशसमुद्भवः ।। ११२ ।।

नारद उवाच—

शिवस्य कवचं ब्रूहि मत्स्यराजेन यद्धृतम् । नारायण महाभाग श्रोतुं कौतूहलं मम ।।

नारायण उवाच—

कवचं शृणु विप्रेन्द्र शंकरस्य महात्मनः । ब्रह्माण्डविजयं नाम सर्वावयवरक्षणम् ।।
पुरा दुर्वाससा दत्तं मत्स्यराजाय धीमते । दत्त्वा षडक्षरं मन्त्रं[2] सर्वपापप्रणाशनम् ।।
स्थिते च कवचे देहे नास्ति मृत्युश्च जीविनाम् । अस्त्रे शस्त्रे जले वह्नौ सिद्धिश्चेन्नास्ति संशयः
यद्धृत्वा पठनाद्बाणः शिवत्वं प्राप लीलया । बभूव शिवतुल्यश्च यद्धृत्वा नन्दिकेश्वरः
वीरश्रेष्ठो वीरभद्रो साम्बोऽभूद्धारणाद्यतः । त्रैलोक्यविजयी राजा हिरण्यकशिपुः स्वयम्
हिरण्याक्षश्च विजयी चाभवद्धारणाद्धि सः । यद्धृत्वा पठनात्सिद्धो दुर्वासा विश्वपूजितः ।।
जैगीषव्यो महायोगी पठनाद्धारणाद्यतः । यद्धृत्वा वामदेवश्च देवलः पवनः स्वयम् ।।
अगस्त्यश्च पुलस्त्यश्चाप्यभवद्विश्वपूजितः ।। १२० ।।

---

१ क. विप्रे । २ क ॐ नमः शिवायेति च ।

ॐ नमः शिवायेति च मस्तकं मे सदाऽवतु । ॐ नमः शिवायेति च स्वाहा भालं सदाऽवतु
ॐ ह्रीं श्रीं क्लीं शिवायेति स्वाहा नेत्रे सदाऽवतु । ॐ ह्रीं क्लीं हूं शिवायेति नमो मे पातु नासि-
काम् ॥ १२२ ॥
ॐ नमः शिवाय शान्ताय स्वाहा कण्ठं सदाऽवतु । ॐ ह्रीं श्रीं हूं संहारकर्त्रे स्वाहा कर्णौ
सदाऽवतु ॥ १२३ ॥
ॐ ह्रीं श्रीं पञ्चवक्त्राय स्वाहा दन्तं सदाऽवतु ॐ ह्रीं महेशाय स्वाहा चाधरं पातु मे सदा
ॐ ह्रीं श्रीं क्लीं त्रिनेत्राय स्वाहा केशान्सदाऽवतु । ॐ ह्रीं ऐं महादेवाय स्वाहा वक्षः सदाऽवतु
ॐ ह्रीं श्रीं क्लीं ऐं रुद्राय स्वाहा नाभिं सदाऽवतु ॐ ह्रीं ऐं श्रीमीश्वराय स्वाहा पृष्ठं सदाऽवतु
ॐ ह्रीं क्लीं मृत्युंजयाय स्वाहा भ्रुवौ सदाऽवतु । ॐ ह्रीं श्रीं क्लीमीशानाय स्वाहा पार्श्वं
सदाऽवतु ॥ १२७ ॥
ॐ ह्रीमीश्वराय स्वाहा चोदरं पातु मे सदा । ॐ श्रीं ह्रीं मृत्युंजयाय स्वाहा बाहू सदाऽवतु ॥
ॐ ह्रीं श्रीं क्लीमीश्वराय[1] स्वाहा पातु करौ मम । ॐ महेश्वराय रुद्राय नितम्बं पातु मे सदा
ॐ ह्रीं श्रीं भूतनाथाय स्वाहा पादौ सदाऽवतु । ॐ सर्वेश्वराय शर्वाय स्वाहा सर्वं सदाऽवतु
प्राच्यां मां पातु भूतेश आग्नेय्यां पातु शंकरः । दक्षिणे पातु मां रुद्रो नैर्ऋत्यां स्थाणुरेव च
पश्चिमे खण्डपरशुर्वायव्यां चन्द्रशेखरः । उत्तरे गिरिशः पातु चैशान्यामीश्वरः स्वयम् ॥
ऊर्ध्वे मृडः सदा पातु चाधो मृत्युंजयः स्वयम् । जले स्थले चान्तरिक्षे स्वप्ने जागरणे सदा
पिनाकी पातु मां प्रीत्या भक्तं वै भक्तवत्सलः । इति ते कथितं वत्स कवचं परमाद्भुतम् ॥
दशलक्षजपेनैव सिद्धिर्भवति निश्चितम् । यदि स्यात्सिद्धकवचो रुद्रतुल्यो भवेद्ध्रुवम् ॥
तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् । कवचं काण्वशाखोक्तमतिगोप्यं सुदुर्लभम्
अश्वमेधसहस्राणि राजसूयशतानि च । सर्वाणि कवचस्यास्य कलां नार्हन्ति षोडशीम् ॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः । सर्वज्ञः सर्वसिद्धेशो मनोयायी भवेद्ध्रुवम् ॥
इदं कवचमज्ञात्वा भजेद्यः शंकरप्रभुम् । शतलक्षं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० शंकरकवचनकथनं नाम-
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

अथ षट्त्रिंशोऽध्यायः ।

नारायण उवाच—

---

[1] क. °मीशानाय ।

मत्स्यराजे निपतिते राजा युद्धविशारदः। राजेन्द्रान्प्रेषयामास युद्धशास्त्रविशारदान्
बृहद्बलं सोमदत्तं विदर्भं मिथिलेश्वरम्। निषधाधिपतिं चैव मगधाधिपतिं तथा ॥ २ ॥
आययुः समरे योद्धुं जामदग्न्यं महारथाः। त्रितयाक्षौहिणीभिश्च सेनाभिः सह नारद
रामस्य भ्रातरः सर्वे वीरास्तीक्ष्णास्त्रपाणयः। वारयामासुरस्त्रैश्च तानेव रणमूर्धनि ॥
ते वीराः शरजालेन दिव्यास्त्रेण प्रयत्नतः। वारयामासुरेकैकं भ्रातृवर्गान्भृगोस्तथा ॥
आययौ समरे शीघ्रं दृष्ट्वा तांश्च पराजितान्। पिनाकहस्तः स भृगुर्ज्वलदग्निशिखोपमः
चिक्षेप नागपाशं च जामदग्न्यो महाबलः। चिच्छेद तं गारुडेन सोमदत्तो महाबलः ॥
भृगुः शंकरशूलेन सोमदत्तं जघान ह। बृहद्बलं च गदया विदर्भं मुष्टिभिस्तथा ॥
मैथिलं मुद्गरेणैव शक्त्या वै नैषधं तथा। मागधं चरणोद्घातैरस्त्रजालेन सैनिकान् ॥
निहत्य निखिलान्भूपान्संहाराग्निसमो रणे। दुद्राव कार्तवीर्यं च जामदग्न्यो महाबलः ॥
दृष्ट्वा तं योद्धुमायान्तं राजानश्च महारथाः। आययुः समरं कर्तुं कार्तवीर्यं निवार्य च ॥
कान्यकुब्जाश्च शतशः सौराष्ट्राः शतशस्तथा। राष्ट्रीयाः शतशश्चैव वीरेन्द्राः शतशस्तथा
सौम्या वाङ्गाश्च शतशो महाराष्ट्रास्तथा दश। तथा गुर्जरजातीयाः कलिङ्गाः शतशस्तथा ॥
कृत्वा ते शरजालं च भृगुं चिच्छिदुरेव च। तं छित्वाऽभ्युत्थितो रामो नीहारमिव भास्करः
त्रिरात्रं युयुधे रामस्तैः सार्धं समराजिरे। द्वादशाक्षौहिणीं सेनां तथा चिच्छेद पर्शुना
रम्भास्तम्भसमूहं च यथा खड्गेन लीलया। छित्वा सेनां भूपवर्गं जघान शिवशूलतः
सर्वांस्तान्निहतान्दृष्ट्वा सूर्यवंशसमुद्भवः। आजगाम सुचन्द्रश्च लक्षराजेन्द्रसंयुतः ॥
द्वादशाक्षौहिणीभिश्च सेनाभिः सह संयुगे। कोपेन युयुधे रामं सिंहं सिंहो यथा रणे
भृगुः शंकरशूलेन नृपलक्षं निहत्य च। द्वादशाक्षौहिणीं सेनमहन्वै पर्शुना बली ॥
निहत्य सर्वाः सेनाश्च सुचन्द्रं युयुधे बली। नागास्त्रं प्रेरयामास निर्हन्तुं तं भृगुः स्वयम्
नागपाशं च चिच्छेद गारुडेन नृपेश्वरः। जहास च भृगुं राजा समरे च पुनः पुनः॥
भृगुर्नारायणास्त्रं च चिक्षेप रणमूर्धनि। अस्त्रं ययौ तं निहन्तुं शतसूर्यसमप्रभम्॥ २२॥
दृष्ट्वाऽस्त्रं नृपशार्दूलश्चावरुह्य रथात्क्षणात्। न्यस्तशस्त्रः प्राणमच्च स्तुत्वा नारायणं शिवम्
तमेव प्रणतं त्यक्त्वा ययौ नारायणान्तिकम्। अस्त्रराजो भगवतो रामः संप्राप विस्मयम्॥
भृगुः शक्तिं च मुसलं तोमरं पट्टिशं तथा। गदां पर्शुं च कोपेन चिक्षिपे तज्जिघांसया॥
जग्राह काली तान्सर्वान्सुचन्द्रस्यन्दनस्थिता। चिक्षेप शिवशूलं स नृपमाल्यं बभूव सः॥
ददर्श पुरतो रामो भद्रकालीं जगत्प्रसूम्। वहन्तीं मुण्डमालां च विकटास्यां भयंकरीम्॥

१ क. सौवराष्ट्रा°। २ ख. भृगुश्चिच्छेद तत्क्षणम्।

विहाय शस्त्रमस्त्रं च पिनाकं च भृगुस्तदा । तुष्टाव तां महामायां भक्तिनम्रात्मकंधरः ॥

परशुराम उवाच—

नमः शंकरकान्तायै सारायै ते नमो नमः । नमो दुर्गतिनाशिन्यै मायायै ते न० ॥२९॥
नमो नमो जगद्धात्र्यै जगत्कर्त्र्यै न० । नमोऽस्तु ते जगन्मात्रे कारणायै न० ॥ ३०॥
प्रसीद जगतां मातः सृष्टिसंहारकारिणि । त्वत्पादौ शरणं यामि प्रतिज्ञां सार्थिकां कुरु॥
त्वयि मे विमुखायां च को मां रक्षितुमीश्वरः । त्वं प्रसन्ना भव शुभे मां भक्तं भक्तवत्सले
युष्माभिः शिवलोके च मह्यं दत्तो वरः पुरा तं वरं सफलं कर्तुं त्वमर्हसि वरानने ॥
रेणुकेयस्तवं श्रुत्वा प्रसन्नाऽभवदम्बिका । मा भैरित्येवमुक्त्वा तु तत्रैवान्तरधीयत ॥
एतद्भृगुकृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । महाभयात्समुत्तीर्णः स भवेदेव लीलया ॥
स पूजितश्च त्रैलोक्ये तत्रैव विजयी भवेत् । ज्ञातिश्रेष्ठो भवेच्चैव वैरिपक्षविमर्दकः ॥
एतस्मिन्नन्तरे ब्रह्मा भृगुं धर्मभृतां वरम् । आगत्य कथयामास रहस्यं रामेव च ॥

ब्रह्मोवाच—

शृणु राम महाभाग रहस्यं पूर्वमेव च । सुचन्द्रजयहेतुं च प्रतिज्ञासार्थकाय च ॥३८॥
दशाक्षरी महाविद्या दत्ता दुर्वाससा पुरा । सुचन्द्रायैव कवचं भद्रकाल्या सुदुर्लभम् ॥
कवचं भद्रकाल्याश्च देवानां च सुदुर्लभम् । कवचं तद्गले यस्य सर्वशत्रुविमर्दकम्॥४०॥
अतीव पूज्यं शस्तं च त्रैलोक्यजयकारणम् । तस्मिन्स्थिते च कवचे कस्त्वं जेतुमलं भुवि
भृगुर्गच्छतु भिक्षार्थं करोतु प्रार्थनां नृपम् । सूर्यवंशोद्भवो राजा दाता परमधार्मिकः ॥
प्राणांश्च कवचं मन्त्रं सर्वं दास्यति निश्चितम् ॥ ४३ ॥
भृगुः संन्यासिवेषेण गत्वा राजान्तिकं मुने । भिक्षां चकार मन्त्रं च कवचं परमाद्भुतम् ॥
राजा ददौ च तन्मन्त्रं कवचं परमादरात् । ततः शंकरशूलेन तं जघान नृपं भृगुः ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० भृगुकार्तवीर्ययुद्धवर्णनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

=====

अथ सप्तत्रिंशोऽध्यायः ।

---

नारद उवाच—

कवचं श्रोतुमिच्छामि तां च विद्यां दशाक्षरीम् । नाथ त्वत्तो हि सर्वज्ञ भद्रकाल्याश्च सांप्रतम्

नारायण उवाच—

शृणु नारद वक्ष्यामि महाविद्यां दशाक्षरीम् । गोपनीयं च कवचं त्रिषु लोकेषु दुर्लभम्॥

ॐ ह्रीं श्रीं क्लीं कालिकायै स्वाहेति च दशाक्षरीम्। दुर्वासा हि ददौ राज्ञे पुष्करे सूर्यपर्वणि
दशलक्षजपेनैव मन्त्रसिद्धिः कृता पुरा। पञ्चलक्षजपेनैव पठन्कवचमुत्तमम् ॥ ४ ॥
बभूव सिद्धकवचोऽप्ययोध्यामाजगाम सः। कृत्स्नां हि पृथिवीं जिग्ये कवचस्य प्रसादतः॥

**नारद उवाच—**

श्रुता दशाक्षरी विद्या त्रिषु लोकेषु दुर्लभा। अधुना श्रोतुमिच्छामि कवचं ब्रूहि मे प्रभो

**नारायण उवाच—**

शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतम्। नारायणेन यद्दत्तं कृपया शूलिने पुरा ॥
त्रिपुरस्य वधे घोरे शिवस्य विजयाय च। तदेव शूलिना दत्तं पुरा दुर्वाससे मुने ॥
दुर्वाससा च यद्दत्तं सुचन्द्राय महात्मने। अतिगुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् ॥९॥
ॐ ह्रीं श्रीं क्लीं कालिकायै स्वाहा मे पातु मस्तकम्। क्लीं कपालं सदा पातु ह्रीं ह्रीं ह्रीमिति लोचने ॥ १० ॥
ॐ ह्रीं त्रिलोचने स्वाहा नासिकां मे सदाऽवतु। क्लीं कालिके रक्ष रक्ष स्वाहा दन्तान्सदाऽवतु
क्लीं भद्रकालिके स्वाहा पातु मेऽधरयुग्मकम्। ॐ ह्रीं ह्रीं क्लीं कालिकायै स्वाहा कण्ठं सदाऽवतु ॥ १२ ॥
ॐ ह्रीं कालिकायै स्वाहा कर्णयुग्मं सदाऽवतु। ॐ क्रीं क्रीं क्लीं काल्यै स्वाहा स्कन्धं पातु सदा मम ॥ १३ ॥
ॐ क्रीं भद्रकाल्यै स्वाहा मम वक्षः सदाऽवतु। ॐ क्लीं कालिकायै स्वाहा मम नाभिं सदाऽवतु
ॐ ह्रीं कालिकायै स्वाहा मम पृष्ठं सदाऽवतु। रक्तबीजविनाशिन्यै स्वाहा हस्तौ सदाऽवतु॥
ॐ ह्रीं क्लीं मुण्डमालिन्यै स्वाहा पादौ सदाऽवतु। ॐ ह्रीं चामुण्डायै स्वाहा सर्वाङ्गं मे सदाऽवतु ॥ १६ ॥
प्राच्यां पातु महाकाली चाग्नेय्यां रक्तदन्तिका। दक्षिणे पातु चामुण्डा नैर्ऋत्यां पातु कालिका
श्यामा च वारुणे पातु वायव्यां पातु चण्डिका। उत्तरे विकटास्या चाप्यैशान्यां साट्टहासिनी ॥ १८ ॥
पातूर्ध्वे लोलजिह्वा सा मायाद्या पात्वधः सदा। जले स्थले चान्तरिक्षे पातु विश्वप्रसूः सदा
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्। सर्वेषां कवचानां च सारभूतं परात्परम् ॥
सप्तद्वीपेश्वरो राजा सुचन्द्रोऽस्य प्रसादतः। कवचस्य प्रसादेन मान्धाता पृथिवीपतिः

---

१ क. गुर्वं स° २ क. भद्रका° । ३ क. सुरथो ।

प्रचेता लोमशश्चैव यतः सिद्धो बभूव ह । यतो हि योगिनां श्रेष्ठः सौभरिः पिप्पलायनः
यदि स्यात्सिद्धकवचः सर्वसिद्धेश्वरो भवेत् । महादानानि सर्वाणि तपांस्येवं व्रतानि च ॥
निश्चितं कवचस्यास्य कलां नार्हन्ति षोडशीम् ॥ २१ ॥
इदं कवचमज्ञात्वा भजेत्कालीं जगत्प्रसूम् । शतलक्षं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः

इति श्रीब्रह्म० महा० गणपतिख० नारदना० भद्रकालीकवचनिरूपणं
नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

=====

अथाष्टत्रिंशोऽध्यायः ।

———

नारायण उवाच—

सुचन्द्रे पतिते ब्रह्मन्राजेन्द्राणां शिरोमणौ । अगमत्पुष्कराक्षस्तु सेनाक्ष्यक्षौहिणीयुतः ॥
सूर्यवंशोद्भवो राजा सुचन्द्रतनयो महान् । महालक्ष्मीसेवकश्च लक्ष्मीवान्पूर्यसंनिभः ॥
महालक्ष्म्याश्च कवचं गले यस्य मनोहरम् । परमैश्वर्यसंयुक्तस्त्रैलोक्यविजयी ततः ॥३॥
तं दृष्ट्वा भ्रातरः सर्वे रैणुकेयस्य धीमतः । आययुः समरं कर्तुं नानाशस्त्रास्त्रपाणयः ॥
राजेन्द्रः शरजालेन च्छादयामास तांस्तथा । चिच्छिदुः शरजालं च ते वीराश्चैव लीलया
चिच्छिदुः स्यन्दनं राज्ञस्ते वीराः पञ्चबाणतः । सारथिं पञ्चबाणेन रथाश्वं दशबाणतः ॥
तद्धनुः सप्तबाणेन तूर्णं वै पञ्चबाणतः । चिच्छिदुस्तद्भ्रातृवर्गा विप्राः शंकरशूलतः ॥७॥
ते च क्ष्यक्षौहिणीं सेनां निजघ्नुश्चापि लीलया । हन्तुं नृपेन्द्रं ते वीराः शिवशूलं निचिक्षिपुः
गले बभूव तच्छूलं राज्ञः पुष्करमालिका ॥ ८ ॥
शक्तिं च परिघं चैव भुशुण्डीं मुद्गरं तथा । गदां च चिक्षिपुर्विप्राः कोपेन ज्वलदग्नयः
तानि शस्त्राणि चूर्णानि क्ष्माभृतो देहयोगतः । विस्मिता भ्रातरः सर्वे भृगोरेव महामुने ॥
रथं धनुश्च शस्त्राणि चास्त्राणि विविधानि च । सेनां प्रस्थापयामास कार्तवीर्यार्जुनः स्वयम्
राजा स्यन्दनमारुह्य पुष्कराक्षो महाबलः । चकार शरजालं च महाघोरतरं मुने ॥१२॥
चिच्छिदुः शरजालं च ते वीराः शस्त्रपाणयः । राजा प्रस्वापनेनैव निद्रितांस्तांश्चकार ह
भ्रातॄंश्च निद्रितान्दृष्ट्वा जामदग्न्यो महाबलः । क्षतविक्षतसर्वाङ्गान्बोधयामास तत्त्वतः ॥
बोधयित्वा तान्निनार्य जगाम रणमूर्धनि । चिक्षेप पर्शुं कोपेन शीघ्रं राजजिघांसया ॥
छित्त्वा राज्ञः किरीटं च पर्शुर्भूमौ पपात ह । जग्राह परशुं शीघ्रं जामदग्न्यो महाबलः ॥
तदा शांकरशूलं च चिक्षिपे मन्त्रपूर्वकम् । नृपस्य कुण्डलं छित्त्वा जगाम शिवसंनिधिम्

राजा निहन्तुं तं रामं शरजालं चकार ह । चिच्छेद शरजालं च रेणुकेयश्च लीलया ॥
क्रमेण राजा नानास्त्रं चिक्षिपे मन्त्रपूर्वकम् । तच्चिच्छेद क्रमेणैव भृगुः शस्त्रभृतां वरः ॥
भृगुश्चिक्षेप नानास्त्रं महासंधानपूर्वकम् । तच्चिच्छेद महाराजः संधानेनैव लीलया ॥
रामश्चिक्षेप संधाय ब्रह्मास्त्रं मन्त्रपूर्वकम् । राजा निर्वापणं चक्रे संधानेनैव लीलया ॥२१॥
सर्वाण्यस्त्राणि शस्त्राणि रामः पाशुपतं विना । चिक्षेप कोपविभ्रान्तो भूपश्चिच्छेद तानि च
रामः स्नात्वा शिवं नत्वा ददे पाशुपतं मुने । नारायणश्च भगवानवोचद्विप्ररूपधृक् ॥

वृद्धब्राह्मण उवाच—

किं करोषि भृगो वत्स त्वमेव ज्ञानिनां वरः । नरं हन्तुं पाशुपतं कोपात्किं क्षिपसि भ्रमत्
विश्वं पाशुपतेनैव भवेद्भस्म च सेश्वरम् । सर्वघ्नं स्याच्छस्त्रमिदं विना श्रीकृष्णमीश्वरम् ॥
अहो पाशुपतं जेतुं न लभेव सुदर्शनम् । हरेः सुदर्शनं चैव सर्वास्त्रविमर्दकम् ॥ २६ ॥
खट्वाङ्गिनः पाशुपतं हरेरेव सुदर्शनम् । एते प्रधाने सर्वेष मस्त्राणां च जगत्त्रये ॥ २७ ॥
त्यज पाशुपतं ब्रह्मन्मदीयं वचनं शृणु । यथा जेष्यसि राजानं पुष्कराक्षं महाबलम् ॥
कार्तवीर्यमजेतारं यथा जेष्यसि सांप्रतम् । श्रूयतां सावधानेन तत्सर्वं कथयामि ते ॥२९॥
महालक्ष्म्याश्च कवचं त्रिषु लोकेषु दुर्लभम् । भक्त्या च पुष्कराक्षेण धृतं कण्ठे विधानतः
परं दुर्गतिनाशिन्याः कवचं परमाद्भुतम् । धृतं च दक्षिणे बाहौ पुष्कराक्षसुतेन च ॥
कवचस्य प्रभावेन विश्वं जेतुं क्षमौ च तौ । को जेता च त्रिभुवने देहे च कवचे स्थिते
अहं यास्यामि भिक्षार्थं संनिधाने तयोर्मुने । करिष्यामि च तद्भिक्षां प्रतिज्ञासफलाय ते
ब्राह्मणस्य वचः श्रुत्वा रामः संत्रस्तमानसः । उवाच ब्राह्मणं वृद्धं हृदयेन विदूयता ॥

परशुराम उवाच—

न जानामि महाप्राज्ञ कस्त्वं ब्राह्मणरूपधृक् । शीघ्रं च ब्रूहि मां मूढं तदा गच्छ नृपान्तिकम् ॥ ३५ ॥
जामदग्न्यवचः श्रुत्वा प्रहस्य ब्राह्मणः स्वयम् । उक्त्वा चाहं विष्णुरिति ययौ भिक्षितुमीश्वरः ॥ ३६ ॥
गत्वा तयोः संनिधानं ययाचे कवचे च तौ । ददतुस्तौ च कवचे विष्णवे विष्णुमायया ॥
गृहीत्वा कवचे विष्णुर्वैकुण्ठं निर्जगाम सः ॥ ३७ ॥

नारद उवाच—

महालक्ष्म्याश्च कवचं केन दत्तं महामुने । पुष्कराक्षाय भूपाय श्रोतुं कौतुहलं मम ॥३८॥

---

१ ख. स्नुत्वा ।

कवचं चापि दुर्गायाः पुष्कराक्षसुताय च । दुर्लभं केन वा दत्तं तद्भवान्वक्तुमर्हति ॥ १९॥
कवचं चापि किंभूतं तयोर्वा तस्य किं फलम् । मन्त्रौ तु किंप्रकारौ च तन्मे ब्रूहि जगद्गुरो ॥

नारायण उवाच—

दत्तं सनत्कुमारेण पुष्कराक्षाय धीमते । महालक्ष्म्याश्च कवचं मन्त्रश्चापि दशाक्षरः ॥
स्तवनं चापि गोप्यं वै प्रोक्तं तच्चरितं च यत् । ध्यानं च सामवेदोक्तं पूजां चैव मनोहराम् ॥
दुर्गायाश्चापि कवचं दत्तं दुर्वाससा पुरा । स्तवनं चातिगोप्यं च मन्त्रश्चापि दशाक्षरः ॥
पश्चाच्छ्रोष्यसि तत्सर्वं देव्याश्च परमाद्भुतम् । महायुद्धसमारम्भे दत्तं प्रार्थनया च यत् ॥
महालक्ष्म्याश्च मन्त्रं च शृणु तं कथयामि ते । ॐ श्रीकमलवासिन्यै स्वाहेति परमाद्भुतम् ॥
ध्यानं च सामवेदोक्तं शृणु पूजाविधिं मुने । दत्तं तस्मै कुमारेण पुष्कराक्षाय धीमते ॥
सहस्रदलपद्मस्थां पद्मनाभप्रियां सतीम् । पद्मालयां पद्मवक्त्रां पद्मपत्राभलोचनाम् ॥ ४७॥
पद्मपुष्पप्रियां पद्मपुष्पतल्पाधिशायिनीम् । पद्मिनीं पद्महस्तां च पद्ममालाविभूषिताम् ॥
पद्मभूषणभूषाढ्यां पद्मशोभाविवर्धिनीम् । पद्माटवीं प्रपश्यन्तीं सस्मितां तां भजे मुदा ॥
चन्दनाष्टदले पद्मे पद्मपुष्पेण पूजयेत् । गणं संपूज्य दत्त्वा चैवोपचारांश्च षोडश ॥ १०॥
ततः स्तुत्वा च प्रणमेत्साधको भक्तिपूर्वकम् कवचं श्रूयतां ब्रह्मन्सर्वसारं वदामि ते ॥

नारायण उवाच—

शृणु विप्रेन्द्र पद्मायाः कवचं परमं शुभम् । पद्मनाभेन यद्दत्तं ब्रह्मणे नाभिपद्मके ॥ १२॥
संप्राप्य कवचं ब्रह्मा तत्पद्मे ससृजे जगत् । पद्मालयाप्रसादेन सलक्ष्मीको बभूव सः ॥ १३॥
पद्मालयावरं प्राप्य पाद्मश्च जगतां प्रभुः । पाद्मेन पद्मकल्पे च कवचं परमाद्भुतम् ॥
दत्तं सनत्कुमाराय प्रियपुत्राय धीमते । कुमारेण च यद्दत्तं पुष्कराक्षाय नारद ॥ १५ ॥
यद्धृत्वा पठनाद्ब्रह्मा सर्वसिद्धेश्वरो महान् । परमैश्वर्यसंयुक्तः सर्वसंपत्समन्वितः ॥ १६॥
यद्धृत्वा च धनाध्यक्षः कुबेरश्च धनाधिपः । स्वायंभुवो मनुः श्रीमान्पठनाद्धारणाद्यतः ॥
प्रियव्रतोत्तानपादौ लक्ष्मीवन्तौ यतो मुने । पृथुः पृथ्वीपतिः सद्यो ह्यभवद्धारणाद्यतः ॥
कवचस्य प्रसादेन स्वयं दक्षः प्रजापतिः । धर्मश्च कर्मणां साक्षी पाता यस्य प्रसादतः ॥
यद्धृत्वा दक्षिणे बाहौ विष्णुः क्षीरोदशायितः । भक्त्या बिभर्ति कण्ठे च शेषो नारायणांशकः ॥
यद्धृत्वा वामनं लेभे कश्यपश्च प्रजापतिः । सर्वदेवाधिपः श्रीमान्महेन्द्रो धारणाद्यतः ॥
राजा मरुत्तो भगवानभवद्धारणाद्यतः । त्रैलोक्याधिपतिः श्रीमान्नहुषो यस्य धारणात् ॥
विश्वं विजिग्ये खट्वाङ्गः पठनाद्धारणाद्यतः । मुचुकुन्दो यतः श्रीमान्मान्धातृतनयो महान् ॥
सर्वसंपत्प्रदस्यास्य कवचस्य प्रजापतिः । ऋषिश्छन्दश्च बृहती देवी पद्मालया स्वयम् ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः । पुण्यबीजं च महतां कवचं परमाद्भुतम् ॥
ॐ ह्रीं कमलवासिन्यै स्वाहा मे पातु मस्तकम् । श्रीं मे पातु कपालं च लोचने श्रीं श्रियै नमः
ॐ श्रीं श्रियै स्वाहेति च कर्णयुग्मं सदाऽवतु । ॐ श्रीं क्लीं महालक्ष्म्यै स्वाहा मे पातु नासिकाम्
ॐ श्रीं पद्मालयायै च स्वाहा दन्तान्सदाऽवतु । ॐ श्रीं कृष्णस्य कवचं त्रिषु लोकेषु दुर्लभम्
भक्त्या च पुष्करे दत्तं दन्तवक्त्रं सदाऽवतु । ॐ श्रीं कृष्णप्रियायै च दन्तरन्ध्रं सदाऽवतु ॥
ॐ श्रीं नारायणेशायै मम कण्ठं सदाऽवतु । ॐ श्रीं केशवकान्तायै मम स्कन्धं सदाऽवतु ॥
ॐ श्रीं पद्मनिवासिन्यै स्वाहा नाभिं सदाऽवतु । ॐ ह्रीं श्रीं संसारमात्रे मम वक्षः सदाऽवतु
ॐ श्रीं ॐ कृष्णकान्तायै स्वाहा पृष्ठं सदाऽवतु । ॐ ह्रीं श्रीं श्रियै स्वाहा च मम हस्तौ सदाऽवतु ॥ ७१ ॥
ॐ श्रीं निवासकान्तायै मम पादौ सदाऽवतु । ॐ ह्रीं श्रीं क्लीं श्रियै स्वाहा सर्वाङ्गं मे सदाऽवतु
प्राच्यां पातु महालक्ष्मीराग्नेय्यां कमलालया । पद्मा मां दक्षिणे पातु नैर्ऋत्यां श्रीहरिप्रिया
पद्मालया पश्चिमे मां वायव्यां पातु सा स्वयम् । उत्तरे कमला पातु चैशान्यां सिन्धुकन्यका
नारायणी च पातूर्ध्वमधो विष्णुप्रियाऽवतु । संततं सर्वतः पातु विष्णुप्राणाधिका मम ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् । सर्वैश्वर्यप्रदं नाम कवचं परमाद्भुतम् ॥ ७६ ॥
सुवर्णपर्वतं दत्त्वा मेरुतुल्यं द्विजातये । यत्फलं लभते धर्मी कवचेन ततोऽधिकम् ॥
गुरुमभ्यर्च्य विधिवत्कवचं धारयेत्तु यः । कण्ठे वा दक्षिणे बाहौ स श्रीमान्प्रतिजन्मनि ॥
अस्ति लक्ष्मीर्गृहे तस्य निश्चला शतपूरुषम् । देवेन्द्रैश्च सुरेन्द्रैश्च सोऽवध्यो निश्चितं भवेत्
स सर्वपुण्यवान्धीमान्सर्वयज्ञेषु दीक्षितः । स स्नातः सर्वतीर्थेषु यस्येदं कवचं गले ॥
यस्मै कस्मै न दातव्यं लोभमोहभयैरपि । गुरुभक्ताय शिष्याय शरण्याय प्रकाशयेत् ॥
इदं कवचमज्ञात्वा जपेल्लक्ष्मीं जगत्प्रसूम् । कोटिसंख्यं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥

इति श्रीब्रह्म० मह० गणपतिख० नारदना० श्रीलक्ष्मीकवचवर्णनं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

अथैकोनचत्वारिंशोऽध्यायः ।

---

नारद उवाच—

कवचं कथितं ब्रह्मन्पद्मायाश्च मनोहरम् । परं दुर्गतिनाशिन्याः कवचं कथय प्रभो ॥

---

१ क. ॐ क्लीं ह्रीं श्रीं क° । २ क. ॐ ह्रीं श्रीं । ३ क. ह्रीं श्रीं म° । ४ क. °चे च हृदि स्थिते । ५ क. सरलाय ।

पद्माक्षप्राणतुल्यं च जीवनं बलकारणम् । कवचानां च यत्सारं दुर्गासेवनकारणम् ॥

**नारायण उवाच—**

शृणु नारद वक्ष्यामि दुर्गायाः कवचं शुभम् । श्रीकृष्णेनैव यद्दत्तं गोलोके ब्रह्मणे पुरा ॥
ब्रह्मा त्रिपुरसंग्रामे शंकराय ददौ पुरा । जघान त्रिपुरं रुद्रो यद्धृत्वा भक्तिपूर्वकम् ॥
हरो ददौ गौतमाय पद्माक्षाय च गौतमः । यतो बभूव पद्माक्षः सप्तद्वीपेश्वरो जयी ॥
यद्धृत्वा पठनाद्ब्रह्मा ज्ञानवाञ्छक्तिमान्भुवि । शिवो बभूव सर्वज्ञो योगिनां च गुरुर्यतः ॥
शिवतुल्यो गौतमश्च बभूव मुनिसत्तमः ॥ ६ ॥
ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः । ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी ॥
ब्रह्माण्डविजये चैव विनियोगः प्रकीर्तितः । पुण्यतीर्थं च महतां कवचं परमाद्भुतम् ॥
ॐ ह्रीं दुर्गतिनाशिन्यै स्वाहा मे पातु मस्तकम् । ॐ ह्रीं मे पातु कपालं चाप्योंं ह्रीं श्रीं पातु लोचने ॥ ९ ॥
पातु मे कर्णयुग्मं चाप्योंं दुर्गायै नमः सदा । ॐ ह्रीं श्रीमिति नासां मे सदा पातु च सर्वतः ॥
दुर्गे दुर्गे रक्षणीति त्राहि मां त्वं शिवप्रिये । ह्रीं श्रीं ह्रूमिति दन्तांश्च पातु क्लीमोष्ठयुग्मकम् ॥
क्लीं क्लीं क्लीं पातु कण्ठं च दुर्गे रक्षतु गण्डके ॥ ११ ॥
स्कन्धं महाकालि दुर्गे स्वाहा पातु निरन्तरम् । वक्षो विपद्विनाशिन्यै स्वाहा मे पातु सर्वतः ॥
दुर्गे दुर्गे रक्ष पार्श्वौ स्वाहा नाभिं सदाऽवतु । दुर्गे दुर्गे देहि रक्षां पृष्ठं मे पातु सर्वतः ॥
ॐ ह्रीं दुर्गायै स्वाहा च हस्तौ पादौ सदाऽवतु । ॐ ह्रीं दुर्गायै स्वाहा च सर्वाङ्गं मे सदाऽवतु ॥
प्राच्यां पातु महामाया चाऽऽग्नेय्यां पातु कालिका । दक्षिणे दक्षकन्या च नैरृत्यां शिवसुन्दरी ॥ १५ ॥
पश्चिमे पार्वती पातु वाराही वारुणे सदा । कुबेरमाता कौबेर्यामैशान्यामीश्वरी सदा ॥
ऊर्ध्वं नारायणी पातु त्वम्बिकाऽधः सदाऽवतु । ज्ञानं ज्ञानप्रदा पातु स्वप्ने निद्रा सदाऽवतु ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् । ब्रह्माण्डविजयं नाम कवचं परमाद्भुतम् ॥
सुस्नातः सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् । सर्वव्रतोपवासे च तत्फलं लभते नरः ॥ १९ ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः । कण्ठे वा दक्षिणे बाहौ कवचं धारयेत्तु यः ॥
स च त्रैलोक्यविजयी सर्वशत्रुप्रमर्दकः ॥ २१ ॥

---

१ क. पद्मजीवश्च° । २ चाप्यैं ह्रीं । ३ क. ॐ ऐं ह्रीं श्रीं ह्रीं इति ना० ४ क. श्रीं ह्रीं क्लीमिति दन्तालिं पातु ह्रूं मो° । ५ क. क्लीं ह्रीं ह्रीं पा० । ६ क. °न्धं दुर्गविनाशिन्यै स्वा° । ७ क. ॐ श्रीं ह्रीं ।

इदं कवचमज्ञात्वा भजेद्दुर्गतिनाशिनीम्। शतलक्षं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः
कवचं कण्वशाखोक्तमुक्तं नारद सिद्धिदम्। यस्मै कस्मै न दातव्यं गोपनीयं सुदुर्लभम्

इति श्रीब्रह्म० महा० गणपतिख० नारदना० दुर्गतिनाशिनीकवचं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## अथ चत्वारिंशोऽध्यायः।

नारायण उवाच—

तं गृहीत्वा तदा विष्णौ वैकुण्ठं च गते सति। सपुत्रं च सहस्राक्षं जघान भृगुनन्दनः
कृत्वा युद्धं तु सप्ताहं ब्रह्मास्त्रेण प्रयत्नतः। राजा कवचहीनोऽपि सपुत्रश्च पपात ह ॥
पतिते तु सहस्राक्षे कार्यवीर्यार्जुनः स्वयम्। आजगाम महावीरो द्विलक्षाक्षौहिणीयुतः॥
सुवर्णरथमारुह्य रत्नसारपरिच्छदम्। नानास्त्रं परितः कृत्वा तस्थौ समरमूर्धनि ॥ ४ ॥
समरे तं परशुरामो राजेन्द्रं च ददर्श ह। रत्नालंकारभूषाढ्यै राजेन्द्राणां च कोटिभिः॥
रत्नातपत्रभूषाढ्यं रत्नालंकारभूषितम्। चन्दनोक्षितसर्वाङ्गं सस्मितं सुमनोहरम् ६॥
राजा दृष्ट्वा मुनीन्द्रं तमवरुह्य रथाद्द्रुतम्। प्रणम्य रथमारुह्य तस्थौ नृपगणैः सह ॥
ददौ शुभाशिषं तस्मै रामश्च समयोचिताम्। प्रोवाच च गतार्थं तं स्वर्गं गच्छेति सानुगः
उभयोः सेनयोर्युद्धमभवत्तत्र नारद। पलायिता रामशिष्या भ्रातरश्च महाबलाः ॥
क्षतविक्षतसर्वाङ्गाः कार्तवीर्यप्रपीडिताः ॥ ९ ॥
नृपस्य शरजालेन रामः शस्त्रभृतां वरः। न ददर्श स्वसैन्यं च राजसैन्यं तथैव च ॥
चिक्षेप रामश्चाऽऽग्नेयं बभूवाग्निमयं रणे। निर्वापयामास राजा वारुणेनैव लीलया ॥
चिक्षेप रामो गान्धर्वं शैलसर्पसमन्वितम्। वायव्येन महाराजः प्रेरयामास लीलया ॥
चिक्षेप रामो नागास्त्रं दुर्निवार्यं भयंकरम्। गारुडेन महाराजः प्रेरयामास लीलया ॥
माहेश्वरं च भगवांश्चिक्षेप भृगुनन्दनः। निर्वापयामास राजा वैष्णवास्त्रेण लीलया ॥
ब्रह्मास्त्रं चिक्षिपे रामो नृपनाशाय नारद। ब्रह्मास्त्रेण च शान्तं तत्प्राणनिर्वापणं रणे ॥
दत्तदत्तं च यच्छूलमव्यर्थं मन्त्रपूर्वकम्। जग्राह राजा परशुरामनाशाय संयुगे ॥ १६ ॥
शूलं ददर्श रामश्च शतसूर्यसमप्रभम्। प्रलयाग्निशिखोद्रिक्तं दुर्निवार्यं सुरैरपि ॥ १७ ॥
पपात शूलं समरे रामस्योपरि नारद। मूर्छामवाप स भृगुः पपात च हरिं स्मरन् ॥
पतिते तु तदा रामे सर्वे देवा भयाकुलाः। आजग्मुः समरं तत्र ब्रह्मविष्णुमहेश्वराः ॥
शंकरश्च महाज्ञानी महाज्ञानेन लीलया। ब्राह्मणं जीवयामास तूर्णं नारायणाज्ञया ॥ २० ॥

भृगुश्च चेतनां प्राप्य ददर्श पुरतः सुरान् । प्रणनाम परं भक्त्या लज्जानम्रात्मकंधरः॥
राजा दृष्ट्वा सुरेशांश्च भक्तिनम्रात्मकंधरः। प्रणम्य शिरसा मूर्ध्ना तुष्टाव च सुरेश्वरान् ॥
तत्राऽऽजगाम भगवान्दत्तात्रेयो रणस्थलम्। शिष्यरक्षानिमित्तेन कृपालुर्भक्तवत्सलः ॥
भृगुः पाशुपतास्त्रं च सोऽग्रहीत्कोपसंयुतः । दत्तदत्तेन दृष्टेन बभूव स्तम्भितो भृगुः ॥
ददर्श स्तम्भितो रामो राजानं रणमूर्धनि । नानापार्षदयुक्तेन कृष्णेनाऽऽरक्षितं रणे ॥
सुदर्शनं प्रज्वलन्तं भ्रमणं कुर्वता सदा। सस्मितेन स्तुतेनैव ब्रह्मविष्णुमहेश्वरैः ॥२६॥
गोपालशतयुक्तेन गोपवेषविधारिणा । नवीनजलदाभेन वंशीहस्तेन गायता ॥ २७ ॥
एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी । दत्तेन दत्तं कवचं कृष्णस्य परमात्मनः॥२८॥
राज्ञोऽस्ति दक्षिणे बाहौ सद्रत्नगुटिकान्वितम्। गृहीतकवचे शंभौ भिक्षया योगिनां गुरौ
तदा हन्तुं नृपं शक्तो भृगुश्चेति च नारद। श्रुत्वाऽऽशरीरिणीं वाणीं शंकरो द्विजरूपधृक्॥
भिक्षां कृत्वा तु कवचमानिनाय च नृपस्य च । शंभुना भृगवे दत्तं कृष्णस्य कवचं च यत्॥
एतस्मिन्नन्तरे देवा जग्मुः स्वस्थानमुत्तमम्। प्रत्युवाचापि परशुरामो वै समरे नृपम् ॥

परशुराम उवाच—

राजेन्द्रोत्तिष्ठ समरं कुरु साहसपूर्वकम् । कालभेदे जयो नृणां कालभेदे पराजयः॥३१॥
अधीतं विधिवद्दत्तं कृत्स्ना पृथ्वी सुशासिता। सम्यक्कृतश्च संग्रामो त्वयाऽहं मूर्छितोऽधुना
जिताः सर्वे च राजेन्द्रा लीलया रावणो जितः । जितोऽहं दत्तशूलेन शंभुना जीवितः पुनः
रामस्य वचनं श्रुत्वा राजा परमधार्मिकः । मूर्ध्ना प्रणम्य तं भक्त्या यथार्थोक्तिमुवाच ह

राजोवाच—

किमधीतं तथा दत्तं का वा पृथ्वी सुशासिता । गताः कतिविधा भूपा मद्दशा धरणीतले॥
बुद्धिस्तेजो विक्रमश्च विविधा रणमन्त्रणा । श्रीरैश्वर्यं तथा ज्ञानं दानशक्तिश्च लौकिकम्
आचारो विनयो विद्या प्रतिष्ठा परमं तपः । सर्वं मनोरमासङ्गे गतमेव मम प्रभो ॥३९॥
सा च स्त्री प्राणतुल्या मे साध्वी पद्मांशसंभवा । यज्ञेषु पत्नी मातेव स्नेहे क्रीडति सङ्गिनी
आबाल्यात्सङ्गिनी शश्वच्छयने भोजने रणे । तां विना प्राणहीनोऽहं विषहीनो यथोरगः
त्वया न दृष्टं युद्धं मे पुरेयं शोचना स्थिरा । द्वितीया शोचना विप्र हतोऽहं ब्राह्मणेन च
काले सिंहः सृगालं च सृगालः सिंहमेव च । काले व्याघ्रं हन्ति मृगो गजेन्द्रं हरिणस्तथा
महिषं मक्षिका काले गरुडं च तथोरगः । किंकरः स्तौति राजेन्द्रं काले राजा च किंकरम्
इन्द्रं च मानवः काले काले ब्रह्मा मरिष्यति । तिरोभूत्वा सा प्रकृतिः काले श्रीकृष्णविग्रहे

---

१ क. यशः कृतं च संसारे स्व° ।

मरिष्यन्ति सुराः सर्वे त्रिलोकस्थाश्चराचराः । सर्वे काले लयं यान्ति कालो हि दुरतिक्रमः
कालस्य कालः श्रीकृष्णः स्रष्टुः स्रष्टा यथेच्छया । संहर्ता चैव संहर्तुः पातुः पाता परात्परः
महास्थूलात्स्थूलतमः सूक्ष्मात्सूक्ष्मतमः कृशः । परमाणुपरः कालः कालः स्यात्कालभेदकः
यस्य लोमानि विश्वानि स पुमांश्च महाविराट् । तेजसां षोडशांशश्च कृष्णस्य परमात्मनः ।
ततः क्षुद्रविराड्जातः सर्वेषां कारणं परम् । यः स्रष्टा च स्वयं ब्रह्मा तन्नाभिकमलोद्भवः
नाभेः कमलदण्डस्य योऽन्तं न प्राप यत्नतः । भ्रमणाल्लक्षवर्षं च ततः स्वस्थानसंस्थितः
तपश्चक्रे ततस्तत्र लक्षवर्षं च वायुभुक् । ततो ददर्श गोलोकं श्रीकृष्णं च सपार्षदम् ॥
गोपगोपीपरिवृतं द्विभुजं मुरलीधरम् । रत्नसिंहासनस्थं च राधावक्षःस्थलस्थितम् ॥
दृष्ट्वाऽनुज्ञां गृहीत्वा च प्रणम्य च पुनः पुनः । ईश्वरेच्छां च विज्ञाय स्रष्टुं सृष्टिं मनो दधे
यः शिवः सृष्टिसंहर्ता स च स्रष्टुर्ललाटजः । विष्णुः पाता क्षुद्रविराट्श्वेतद्वीपनिवासकृत्
सृष्टिकारणभूताश्च ब्रह्मविष्णुमहेश्वराः । सन्ति विश्वेषु सर्वेषु श्रीकृष्णस्य कलोद्भवाः ॥
तेऽपि देवाः प्राकृतिकाः प्राकृतश्च महाविराट् । सर्वप्रसूतिः प्रकृतिः श्रीकृष्णः प्रकृतेः परः
न शक्तः परमेशोऽपि तां शक्तिं प्रकृतिं विना । सृष्टिं विधातुं मायेशो न सृष्टिर्मायया विना
सा च कृष्णे तिरो भूत्वा सृष्टिसंहारकारके । साऽऽविर्भूता सृष्टिकाले सा च नित्या महेश्वरी
कुलालश्च घटं कर्तुं यथाऽशक्तो मृदं विना । स्वर्णं विना स्वर्णकारः कुण्डलं कर्तुमक्षमः
सा च शक्तिः सृष्टिकाले पञ्चधा चेश्वरेच्छया । राधा पद्मा च सावित्री दुर्गा देवी सरस्वती
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः । प्राणाधिकप्रियतमा सा राधा परिकीर्तिता ॥
ऐश्वर्याधिष्ठातृदेवी सर्वमङ्गलकारिणी । परमानन्दरूपा च सा लक्ष्मीः परिकीर्तिता ॥
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा । या माता वेदशास्त्राणां सा सावित्री प्रकीर्तिता
बुद्ध्यधिष्ठातृदेवी या सर्वशक्तिस्वरूपिणी । सर्वज्ञानात्मिका सर्वा सा दुर्गा दुर्गनाशिनी
वागधिष्ठातृदेवी या शास्त्रज्ञानप्रदा सदा । कृष्णकण्ठोद्भवा सा स्याद्या च देवी सरस्वती
पञ्चधाऽऽदौ स्वयं देवी मूलप्रकृतिरीश्वरी । ततः सृष्टिक्रमेणैव बहुधा कलया च सा ॥
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च । मायया सृष्टिकाले च तद्विना न भवेद्भवः ॥
सृष्टिश्च प्रतिविश्वेषु ब्रह्मन्ब्रह्मोद्भवा सदा । पाता विष्णुश्च संहर्ता शिवः शश्वच्छिवप्रदः
दत्तदत्तं ज्ञानमिदं राम मह्यं च पुष्करे । दीक्षाकाले च माघ्यां च मुनिप्रवरसंनिधौ ॥
इत्युक्त्वा कार्तवीर्यश्च रामं नत्वा च सस्मितः । आरुरोह रथं शीघ्रं गृहीत्वा सशरं धनुः ॥

---

१ क. पुराणः परमः का° । २ क. °त्या यथेश्वरः ।

रामस्ततो राजसैन्यं ब्रह्मास्त्रेण जघान ह । नृपं पाशुपतेनैव लीलया श्रीहरिं स्मरन् ॥
एवं त्रिःसप्तकृत्वश्च क्रमेण च वसुंधराम् । रामश्चकार निर्भूपां लीलया च शिवं स्मरन् ॥
गर्भस्थं मातुरङ्कस्थं शिशुं वृद्धं च मध्यमम् । जघान क्षत्रियं रामः प्रतिज्ञापालनाय वै ॥
कार्तवीर्यश्च गोलोकं त्वगमत्कृष्णमंनिधिम् । जगाम परशुरामश्च स्वालयं श्रीहरिं स्मरन् ॥
त्रिःसप्तकृत्वो निर्भूपां महीं दृष्ट्वा महेश्वरः । पर्शुना रमणं दृष्ट्वा परशुरामं चकार तम् ॥
देवाश्च मनुयो देव्यः सिद्धगन्धर्वकिन्नराः । सर्वे चक्रुः पुष्पवृष्टिं राममूर्ध्नि च नारद ॥
स्वर्गे दुन्दुभयो नेदुर्हर्षशब्दो बभूव ह । यशसा चैव परशुरामस्याऽऽपूरितं जगत् ॥
ब्रह्मा भृगुश्च शुक्रश्च वाल्मीकिश्च्यवनस्तथा । जमदग्निर्ब्रह्मलोकादाजगाम प्रहर्षितः ॥
पुलकाञ्चितसर्वाङ्गाः सानन्दाश्रुसमन्विताः । दूर्वापुष्पकराः सर्वे कुर्वन्तो मङ्गलाशिषः ॥
प्रणनाम च तान्रामो दण्डवत्पतितो भुवि । क्रोडे चकार ब्रह्माऽऽदौ कणताततेति संवदन्[1] ॥
तमुवाचाथ परशुरामं ब्रह्मा जगद्गुरुः । वेदसारं नीतियुतं परिणामसुखावहम् ॥८२॥

ब्रह्मोवाच—

शृणु राम प्रवक्ष्यामि सर्वसंपत्करं परम् । काण्वशाखोक्तवचनं सत्यं वै सर्वसंमतम् ॥
पूज्यानामेव सर्वेषामिष्टः पूज्यतमः परः । जनको जन्मदानाच्च पालनाच्च पिता स्मृतः ॥
गरीयाञ्जन्मदातुश्च सोऽन्नदाता पिता मुने । विनाऽन्नं नश्वरो देहो नित्यं पितुरुद्भवः ॥
तयोः शतगुणं माता पूज्या मान्या च वन्दिता । गर्भधारणपोषाभ्यां सैव प्रोक्ता गरीयसी ॥
तेभ्यः शतगुणं पूज्योऽभीष्टदेवः श्रुतौ श्रुतः । ज्ञानविद्यामन्त्रदाताऽभीष्टदेवात्परो गुरुः ॥
गुरुवद्गुरुपुत्रश्च गुरुपत्नी ततोऽधिका । देवे रुष्टे गुरू रक्षेद्गुरौ रुष्टे न कश्चन ॥ ८८ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुरेव परं ब्रह्म ब्राह्मणेभ्यः क्रियापरः ॥ ८९ ॥
गुरुर्ज्ञानं ददात्येव ज्ञानं च हरिभक्तिदम् । हरिभक्तिप्रदाता यः को वा बन्धुस्ततः परः ॥
अज्ञानतिमिराच्छन्नो ज्ञानदीपं यतो लभेत् । लब्ध्वा च निर्मलं पश्येत्को वा बन्धुस्ततः परः ॥
गुरुदत्तं सुमन्त्रं च जप्त्वा ज्ञानं ततो लभेत् । सर्वज्ञत्वाच्च सिद्धिं च को वा बन्धु-
स्ततोऽधिकः ॥९२॥
सुखं जयति सर्वत्र विद्यया गुरुदत्तया । यया पूज्योऽपि जगति को वा बन्धुस्ततोऽधिकः ॥
विद्यान्धो वा धनान्धो वा यो मूढो न यजेद्गुरुम् । ब्रह्महत्यादिकं पापं लभते नात्र संशयः ॥
दरिद्रं पतितं क्षुद्रं नरबुद्ध्या भजेद्गुरुम् । तीर्थस्नातोऽपि न शुचिर्नाधिकारी च कर्मसु ॥
अभीष्टदेवः श्रीकृष्णो गुरुस्ते शंकरः स्वयम् । शरणं गच्छ हे पुत्र देवपूज्यतमं गुरुम् ॥

---

१ क. संवदन् ।

त्रिःसप्तकृत्वो निर्भूपां त्वया पृथ्वी कृता यतः । प्राप्ता त्वया हरेर्भक्तिस्तं शिवं शरणं व्रज ॥
शिवं च शिवरूपं च शिवदं शिवकारणम् । शिवाराध्यं शिवं शान्तं गुरुं त्वं शरणं व्रज ॥
गोलोकनाथो भगवानंशेन शिवरूपधृक् । य इष्टदेवः स गुरुस्तमेव शरणं व्रज ॥९९॥
आत्मा कृष्णः शिवो ज्ञानं मनोऽहं सर्वजीविषु । प्राणा विष्णुः सा प्रकृतिः सर्व
शक्तियुता सुत ॥ १०० ॥
ज्ञानदं ज्ञानरूपं च ज्ञानबीजं सनातनम् । मृत्युंजयं कालकालं तं गुरुं शरणं व्रज ॥
ब्रह्मज्योतिःस्वरूपं तं भक्तानुग्रहविग्रहम् । शरणं व्रज सर्वज्ञं भगवन्तं सनातनम् ॥
प्रकृतिर्लक्षवर्षं च तपस्तप्त्वा यमीश्वरम् । कान्तं प्रियपतिं लेभे तं गुरुं शरणं व्रज ॥
इत्युक्त्वा मुनिभिः सार्धं जगाम कमलोद्भवः । रामश्च गन्तुं कैलासं मनश्चक्रे च नारद

इति श्रीब्रह्म० महा० गणपति० नारदना० भृगोः कैलासगमनोपदेशो नाम
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

अथैकचत्वारिंशोऽध्यायः ।

---

नारायण उवाच—

हरेश्च कवचं धृत्वा कृत्वा निःक्षत्त्रियां महीम् । रामो जगाम कैलासं नमस्कर्तुं शिवं गुरुम् ।
गुरुपत्नीं शिवामम्बां द्रष्टुं गुरुसुतौ च तौ । गुणैर्नारायणसमौ कार्तिकेयगणेश्वरौ ॥ २ ॥
मनोयायी महात्मा स भृगुः संप्राप्य तत्क्षणम् । ददर्श नगरं रम्यमतीव सुमनोहरम् ॥
शुद्धस्फटिकसंकाशैर्मणिभिः सुमनोहरैः । सुवर्णभूमिसदृशै राजमार्गैर्विराजितम् ॥ ४ ॥
सिन्दूरारुणवर्णैश्च वेष्टितं मणिवेदिभिः । संयुक्तमुक्तानिकरैः पूरितं मणिमण्डपैः ॥ ५ ॥
लक्षाणामालयैर्दिव्यैः संयुक्तं शतकोटिभिः । कपाटस्तम्भसोपानैः शोभितैर्मणिनिर्मितैः ॥
सुवर्णकलशैर्दिव्यै राजतैः श्वेतचामरैः । रत्नकाञ्चनपूर्णैश्च यक्षेन्द्रगणवेष्टितैः ॥ ७ ॥
रत्नभूषणभूषाढ्यैर्दीप्तैः सुन्दरीगणैः । बालिकाभिर्बालकैश्च चित्रपुत्तलिकाकरैः ॥८॥
क्रीडद्भिः सस्मितैः शश्वत्स्वच्छन्दं च विराजितैः । पारिजातद्रुमगणैः स्वर्णदीतीरनीरजैः
आकीर्णं पुष्पजालैश्च पुष्पितैश्च सुगन्धिभिः । कल्पवृक्षाश्रितैः सिद्धैः कामधेनुपुरस्कृतैः
सिद्धविद्यासु निपुणैः पुण्यवद्भिर्निषेवितम् । त्रिलक्षयोजनोच्छ्रायैर्वटवृक्षैरथाक्षयैः ॥ ११ ॥
शतयोजनविस्तीर्णैः शतस्कन्धसमन्वितैः । असंख्यशाखानिकरैरसंख्यफलसंयुतैः ॥ १२ ॥
नानापक्षिगणाकीर्णैः सुमनोहरशब्दितैः । कम्पितैः शीतवातेन मण्डितं च सुगन्धिना ॥

---

१ क. °त्राऽचला ह°। २ क. °ण्ल्यमास°।

पुष्पोद्यानसहस्रेण सरसां च शतेन च । सिद्धेन्द्रालयलक्षैश्च मणिरत्नविकारजैः ॥ १४ ॥
रामश्च दृष्ट्वा नगरमतिसंहृष्टमानसः । ददर्श पुरतो रम्यं श्रीयुक्तं शंकरालयम् ॥ १५ ॥
सुवर्णमूल्यशतकैर्मणिभिः स्वर्णवर्णकैः । खचितं रत्नसारैश्च रचितं विश्वकर्मणा ॥ १६ ॥
त्रिपञ्चयोजनोच्छ्रायं चतुर्योजनविस्तृतम् । चतुरस्रं चतुष्कोणं प्राकारं सुमनोहरम् ॥
द्वारं रत्नकपाटेन नानाचित्रान्वितेन च । मणीन्द्रवेदिभिर्युक्तं मणिस्तम्भविराजितैः ॥
तद्दक्षिणे वृषेन्द्रं च वामे सिंहं च नारद । नन्दीश्वरं महाकालं पिङ्गलाक्षं भयंकरम् ॥ १९ ॥
विशालाक्षं च बाणं च विरूपाक्षं महाबलम् । विकटाक्षं भास्कराक्षं रक्ताक्षं विकटोदरम् ॥
संहारभैरवं कालभैरवं च भयंकरम् । रुरुभैरवमीशानं महाभैरवमेव च ॥ २१ ॥
कृष्णाङ्गभैरवं चैव क्रोधभैरवमुल्बणम् । कपालभैरवं चैव रुद्रभैरवमेव च ॥ २२ ॥
सिद्धेन्द्रान्रुद्रगणान्विद्याधरसुगुह्यकान् । भूतान्प्रेतान्पिशाचांश्च कूष्माण्डान्ब्रह्मराक्षसान् ।
वेतालान्दानवांश्चैव योगीन्द्रांश्च जटाधरान् । यक्षान्किंपुरुषांश्चैव किंनरांश्च ददर्श ह ॥
तान्दृष्ट्वा नन्दिकेशाज्ञां गृहीत्वा भृगुनन्दनः । तान्संभाष्याभ्यन्तरं च जगामाऽऽनन्दसंप्लुतः ।
रत्नेन्द्रसारखचितं ददर्श शतमन्दिरम् । अमूल्यरत्नकलशैर्ज्वलद्भिश्च विराजितम् ॥
अमूल्यरत्नरचितैर्मुक्तानिर्मलदर्पणैः । हीरसारविकारैश्च कपाटैश्च विराजितम् ॥ २७ ॥
गोरोचनाभैर्मणिभिर्युतं स्तम्भसहस्रकैः । मणिसारविकारैश्च सोपानैः परिशोभितम् ॥
ददर्शाभ्यन्तरं द्वारं नानाचित्रैश्च चित्रितम् । माणिक्यमुक्ताग्रथितैर्माल्यजालैर्विराजितम् ॥
ददर्श कार्तिकेयं च वामे दक्षे गणेश्वरम् । वीरभद्रं महाकायं शिवतुल्यपराक्रमम् ॥
प्रधानपार्षदगणान्क्षेत्रपालांश्च नारद । रत्नसिंहासनस्थांश्च रत्नभूषणभूषितान् ॥ ३१ ॥
तान्संभाष्य भृगुः शीघ्रं महाबलपराक्रमः । पर्शुहस्तः स परशुरामो गन्तुं समुद्यतः ॥
गच्छन्तं तं गणेशश्च क्षणं तिष्ठेत्युवाच ह । निद्रितो निद्रया युक्तो महादेवोऽधुनेति च ॥
ईश्वराज्ञां गृहीत्वाऽहमत्राऽऽगत्य क्षणान्तरे । त्वया सार्धं गमिष्यामि भ्रातस्तिष्ठात्र सांप्रतम् ॥
गणेशवाक्यं परशुरामः श्रुत्वा महाबलः । बृहस्पतिसमो वक्ता प्रवक्तुमुपचक्रमे ॥ ३५ ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० कैलासवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

अथ द्वाचत्वारिंशोऽध्यायः ।

---

परशुराम उवाच—

यास्याम्यन्तःपुरं भ्रातः प्रणामं कर्तुमीश्वरम् । प्रणम्य मातरं भक्त्या यास्यामि त्वरितं गृहम् ।

त्रिःसप्तकृत्वो निर्भूपां कृत्वा पृथ्वीं च लीलया। कार्तवीर्यः सुचन्द्रश्च हतो यस्य प्रसादतः
नानाविद्या यतो लब्ध्वा नानाशास्त्रं सुदुर्लभम्। तं गुरुं जगतां नाथं द्रष्टुमिच्छामि सांप्रतम्
सगुणं निर्गुणं चैव भक्तानुग्रहविग्रहम्। सत्यं सत्यस्वरूपं च ब्रह्मज्योतिः सनातनम्॥
स्वेच्छामयं दयासिन्धुं दीनबन्धुं मुनीश्वरम्। आत्मारामं पूर्णकामं व्यक्ताऽव्यक्तं परात्परम्
परापराणां स्रष्टारं पुरुहूतं पुरुष्टुतम्। पुराणं परमात्मानमीशानं त्वादिमव्ययम्॥ ६॥
सर्वमङ्गलमाङ्गल्यं सर्वमङ्गलकारणम्। सर्वमङ्गलदं शान्तं सर्वैश्वर्यप्रदं वरम्॥ ७॥
आशुतोषं प्रसन्नास्यं शरणागतवत्सलम्। भक्ताभयप्रदं भक्तवत्सलं समदर्शनम्॥८॥
इत्थं परशुरामोऽस्थादुक्त्वा गणपतेः पुरः। वाचा मधुरया तत्र समुवाच गणेश्वरः॥

गणेश्वर उवाच—

क्षणं तिष्ठ क्षणं तिष्ठ शृणु भ्रातरिदं वचः। रहःस्थलस्थितो नैव द्रष्टव्यः स्त्रीयुतः पुमान्
स्त्रीसंयुक्तं च पुरुषं यः पश्यति नराधमः। करोति रसभङ्गं वा वाऽपसूत्रं व्रजेद्ध्रुवम्॥
तत्र तिष्ठति पार्वीमन्यावच्चन्द्रदिवाकरौ। विशेषतश्च पितरं गुरुं वा भूपतिं द्विजम्॥
रहःसुरतसंसक्तं नहि पश्येद्विचक्षणः। कामतः कोपतो वाऽपि यः पश्येत्सुरतो मुखम्॥
स्त्रीविच्छेदो भवेत्तस्य ध्रुवं सप्तसु जन्मसु। श्रोणीं वक्षःस्थलं वक्त्रं यः पश्यति परस्त्रियः॥
कामतोऽपि विमूढश्च सोऽन्धो भवति निश्चितम्॥ १४॥
गणेशस्य वचः श्रुत्वा प्रहस्य भृगुनन्दनः। तमुवाच महाकोपान्निष्ठुरं वचनं मुने॥१५॥

परशुराम उवाच—

अहो श्रुतं किं वचनमपूर्वं नीतिसंयुतम्। इदमेवमहो नैवं श्रुतमीश्वरवक्त्रतः॥ १६॥
श्रुतं श्रुतौ वाक्यमिदं कामिनां च विकारिणाम्। निर्विकारस्य च शिशोर्न दोषः कश्चिदेव हि
यास्याम्यन्तःपुरं भ्रातस्तव किं तिष्ठ बालक। यथादृष्टं करिष्यामि मत्कार्यं समयोचितम्
तवैव तातो माता चेत्येवं नैव निरूपितम्। जगतां पितरौ तौ च पार्वतीपरमेश्वरौ॥
पार्वती स्त्री पुमाञ्छंभुरिति केन निरूपितः। सर्वरूपः शंकरश्च सर्वरूपा च पार्वती॥
गुणातीतस्य का क्रीडा तद्भङ्गो वा कुतो विभो। क्रीडा लज्जा भीतिभङ्गो ग्राम्यस्यैव न चेशितुः
स्तनन्धयं च मां दृष्ट्वा पित्रोर्लज्जा कुतो भवेत्। लज्जायाश्च कुतो लज्जा लज्जेशस्य च सा कुतः॥ २२॥
लज्जा लज्जां किमाप्नोति तापं किं वा हुताशनः। शीतं शैत्यमहो भ्रातर्निद्राघो दाहमेव च
भीतिर्भीतिमवाप्नोति मृत्योर्मृत्युर्बिभेति किम्। कुतो ज्वरो ज्वरं हन्ति व्याधिं व्याधिश्च जीर्यति॥ २४॥

---

१ क. षण्ढो भ०।

संहर्तारं च संहर्ता काल: कालं बिभेति किम् । स्रष्टारं सृजते स्रष्टा पाता किं पाति ते मते ॥
क्षुत्क्षुधं समवाप्नोति तृष्णा तृष्णां प्रयाति किम् । निद्रा निद्रां च शोभां श्रीः शान्तिः शान्तिं
च ते मते ॥ २१ ॥
पुष्टिः पुष्टिं किमाप्नोति तुष्टिस्तुष्टिं क्षमा क्षमाम् । आत्मनः परमात्माऽस्ति शक्तिः शक्त्या
बिभेति किम् ॥ २१ ॥
कामक्रोधौ लोभमोहौ स्वात्मनैते न बाधिताः । दया न बद्धा दयया नेच्छां बद्धेच्छया प्रभो ॥
ज्ञानबुद्ध्योः को विकारो जरां नो बाधते जरा । चिन्ता न चिन्तया ग्रस्ता चक्षुश्चक्षुर्न पश्यति
हर्षो मुदं किं प्राप्नोति शोकं शोको न बाधते । का विपत्तिर्विपत्तेश्च संपत्तिः संपदः कुतः ॥
मेधाया धारणाशक्तिः स्मृतेर्वा स्मरणं कुतः । न दग्धः स्वप्रतापेन विवस्वानिति संमतः
विपरीतमतो भ्रातस्त्वयैवाऽऽचरितोऽधुना । न श्रुतोऽयं गुरुमुखान्न दृष्टो न श्रुतौ श्रुतः
इत्युक्त्वा च पिधपरशुरामः शश्वत्प्रहस्य सः । शीघ्रं गन्तुं मनश्चक्रे तद्गृहाभ्यन्तरं मुदा ॥
तच्च रामवचः श्रुत्वा जितक्रोधो गणेश्वरः । शुद्धसत्त्वस्वरूपश्च प्रहस्य तमुवाच ह ॥

गणपतिरुवाच—

अज्ञानतिमिराच्छन्नो ज्ञानं प्राप्नोति तद्विदः । पितुर्भ्रातुर्मुखाज्ज्ञानं दुर्लभं भार्गवाँल्लभेत्
श्रुतं ज्ञानं विशिष्टं च ज्ञानिनामपि दुर्लभम् । किंचिन्मे त्वं मन्दबुद्धेः शृणु भ्रातर्निवेदनम् ॥
यो निर्गुणः स निर्लिप्तः शक्तिभिर्नहि संयुतः । सिसृक्षुराश्रितः शक्त्या निर्गुणः सगुणो भवेत्
यावन्ति च शरीराणि भोगार्हाणि महामुने । प्राकृतानि च सर्वाणि विना श्रीकृष्णविग्रहम्
ध्यायन्ति योगिनस्तं च शुद्धज्योतिःस्वरूपिणम् । हस्तपादादिरहितं निर्गुणं प्रकृतेः परम् ॥
वैष्णवास्तं नमस्यन्ति भक्तानुग्रहकारकम् । कुतो बभूव तज्ज्योतिरहो तेजस्विना विना
ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम् । द्विभुजं मुरलीहस्तं सस्मितं पीतवाससम् ॥
अतीवामूल्यसद्रत्नभूषणैश्च विभूषितम् । ज्योतिरभ्यन्तरे मूर्तिं पश्यन्ति कृपया विभोः ॥
तदा दास्ये नियुक्तास्ते भवन्त्येवेश्वरेच्छया । योगस्तपो वा दास्यस्य कलां नार्हति षोडशीम्
यदा सृष्ट्युन्मुखः कृष्णः ससृजे प्रकृतिं मुदा । तद्योनौ हार्पितं वीर्यं वीर्याद्डिम्भो बभूव ह
दिव्येन लक्षवर्षेण गर्भाद्डिम्भो विनिर्गतः । तदा बभूव निःश्वासस्ततो वायुर्बभूव ह ॥
निःश्वासेन समं भ्रातर्मुखबिन्दुर्विनिर्गतः । ततो बभूव सहसा जलराशिर्हरेः पुरः ॥४१॥
तज्जले च स्थितो डिम्भो दिव्यवर्षाणि लक्षकम् । ततो बभूव सहसा विश्वाधारो महाविराट्
यावन्ति गात्रलोमानि तस्य सन्ति महात्मनः । ब्रह्माण्डानि च तावन्ति विद्यमानानि निश्चितम्
तत्रैव प्रतिविश्वाण्डे ब्रह्मविष्णुमहेश्वराः । देवा नराश्च मुनयो विद्यमानाश्चराचराः ॥४८॥

महाविराडाश्रयश्च सर्वस्य च जनस्य च । निःश्वासवायुर्भगवान्बभूव श्रीहरेर्मुने ॥४९॥

महाविष्णुश्च कलया ततः क्षुद्रविराडभूत् । तन्नाभिकमले ब्रह्मा शंकरस्तल्ललाटजः ॥

विष्णुस्तदंशः पाता यः श्वेतद्वीपनिवासकृत् । एवं ते प्रतिविश्वण्डे ब्रह्मविष्णुमहेश्वराः ॥

स्वयं च स्वांशकलया नानामूर्तिधरो हरिः । तदाऽभवच्च सगुणः सर्वशक्तियुतस्तदा ॥

कथं लज्जादिरहितः स च स्वेच्छामयो महान् । सर्वदा सर्वभोगार्हः सर्वशक्तिसमन्वितः ॥

लज्जा नास्त्येव लज्जायामतोऽयं सर्वसंमतः । या च लज्जावती देवी तस्या लज्जा कुतो गता ॥

सर्वशक्तिमती दुर्गा प्रकृत्या सा च शैलजा । तस्या लज्जादयः सन्ति सर्वदा सर्वसंमताः ॥

पञ्चधा प्रकृतिर्या च श्रीकृष्णस्य बभूव ह । राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥

प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः । प्राणाधिका प्रिया सा च राधाऽऽस्ते तस्य वक्षसि ॥ ५७ ॥

विद्याधिष्ठातृदेवी या सावित्री ब्रह्मणः प्रिया । लक्ष्मीर्नारायणस्यैव सर्वसंपत्स्वरूपिणी ॥

सरस्वती द्विधा भूत्वा कृष्णस्य मुखनिर्गता । सावित्री ब्रह्मणः कान्ता स्वयं नारायणस्य च

बुद्ध्यधिष्ठातृदेवी या ज्ञानसूः शक्तिसंयुता । सा दुर्गा शूलिनः कान्ता तस्या लज्जा कुतो गता ॥ ६० ॥

प्रकृतिः पञ्चधा भ्रातर्गोलोके च बभूव ह । इमाः प्रधानाः कलया बभूवुर्नैकधा यतः ॥

विप्रेन्द्र नित्यं वैकुण्ठं ब्रह्माण्डात्परमुच्यते । अविनाशि स्थलं शश्वल्लये प्राकृतिके ध्रुवम् ॥

तत्र नारायणो देवः कृष्णार्धांशश्चतुर्भुजः । वनमाली पीतवासाः शक्त्या वै पद्मया सह ॥

स्वयं कृष्णश्च गोलोके द्विभुजः श्यामसुन्दरः । सस्मितो मुरलीहस्तो राधावक्षःस्थलस्थितः

शश्वद्गोगोपगोपीभिः संयुक्तो गोपरूपधृत् । परिपूर्णतमः श्रीमन्निर्गुणः प्रकृतेः परः ॥

स्वेच्छामयः स्वतन्त्रस्तु परमानन्दरूपधृत् । सुराः कलोद्भवा यस्य षोडशांशो महाविराट्

यतो भवन्ति विश्वानि स्थूलसूक्ष्मादिकानि च । पुनस्तत्र प्रलीयन्त एवमेव मुहुर्मुहुः ॥

गोलोक ऊर्ध्वं वैकुण्ठात्पञ्चाशत्कोटियोजनः । नास्ति लोकस्तदूर्ध्वं च नास्ति कृष्णात्परः प्रभुः

इदं श्रुतं शंभुवक्त्रान्मया ते कथितं द्विज । क्षणं तिष्ठाधुना भ्रातरीश्वरः सुरतोन्मुखः ॥

इति श्रीब्रह्म० महा० गणेशख० नारदना० गणेशपरशुरामसंवादो नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

अथ त्रिचत्वारिंशोऽध्यायः ।

नारायण उवाच —

गणेशवचनं श्रुत्वा स तत्र वेगतः सुधीः । पर्शुहस्तः स वै रामो निर्भयो गन्तुमुद्यतः ॥
गणेश्वरस्तदा दृष्ट्वा शीघ्रमुत्थाय यत्नतः । वारयामास संप्रीत्या चकार विनयं पुनः ॥
रामस्तं प्रेरयामास हुं कृत्वा तु पुनः पुनः । बभूव च ततस्तत्र वाग्युद्धं हस्तकर्षणैः ॥
पर्शुनिःक्षेपणं कर्तुं मनश्चक्रे भृगुस्तदा । हाहा कृत्वा कार्तिकेयो बोधयामास संसदि ॥
अभ्यर्थमस्त्रं हे भ्रातर्गुरुपुत्रे कथं क्षिपेः । गुरुवद्गुरुपुत्रं च मा भवान्हन्तुमर्हति ॥६॥
पर्शुं क्षिपन्तं कुपितं रक्तपद्मदलेक्षणम् । गणेशो बोधयामास निवर्तस्वेत्युवाच तम् ॥
पुनर्गणेशं रामश्च प्रेरयामास कोपतः । पपात पुरतो वेगा[1]न्मानहीनो गजाननः ॥ ७ ॥
गजाननः समुत्थाय धर्मं कृत्वा तु साक्षिणम् । पुनस्तं बोधयामास जितक्रोधः शिवात्मजः ॥
निवर्तस्व निवर्तस्वेत्युच्चार्य च पुनः पुनः । प्रवेशने ते का शक्तिरीश्वराज्ञां विना प्रभो ॥
मम भ्राता त्वमतिथिर्विद्यासंबन्धतो ध्रुवम् । ईश्वरप्रियशिष्यश्च सोऽहं वै तेन हेतुना ॥
नाहं कार्तवीर्यश्च भूपास्ते क्षुद्रजन्तवः । अतो विप्र न जानासि मां च विश्वेशात्मजम् ॥
क्षणं तिष्ठ निवर्तस्व समये ब्राह्मणातिथे । क्षणान्तरे त्वया सार्धं यास्यामीश्वरसंनिधिम् ॥

नारायण उवाच—

हेरम्बवचनं श्रुत्वा प्रजहास पुनः पुनः । पर्शुं क्षेप्तुं मनश्चक्रे प्रणम्य हरिशंकरौ ॥१३॥
पर्शुं क्षिपन्तं कोपेन तं च रामं गजाननः । दृष्ट्वा मुमूर्षुं देवेशो धर्मं कृत्वा तु साक्षिणम्
योगेन वर्धयामास शुण्डां तां कोटियोजनाम् । योगीन्द्रस्तत्र संनिष्टन्भ्रामयित्वा पुनः पुनः
शतधा वेष्टयित्वा तु भ्रामयित्वा तु तत्र वै । ऊर्ध्वमुत्तोल्य वेगेन क्षुद्राहिं गरुडो यथा ॥
सप्तद्वीपांश्च शैलांश्च मेरुं चाखिलसागरान् । क्षणेन दर्शयामास रामं योगपराहतम् ॥
हस्तपादाद्यनाथं तं जडं स्वाङ्गकम्पितम् । पुनस्तं भ्रामयामास दर्पितं दर्पनाशनः ॥
भूर्लोकं च भुवर्लोकं स्वर्लोकं च सुरेश्वरः । जनोलोकं तपोलोकं दर्शयामास लीलया ॥
पुनस्तत्र भ्रामयित्वा ब्रह्माण्डादूर्ध्वमुत्तमम् । सत्यलोकं ब्रह्मलोकं ध्रुवलोकं च तत्परम् ॥
गौरीलोकं शंभुलोकं दर्शयामास नारद । दर्शयित्वा तु विघ्नघ्नः स पपौ सप्तसागरान् ॥
पुनरुद्गिरणं चक्रे सनक्रमकरोदकम् । तत्र तं पातयामास गम्भीरे सागरोदके ॥ २१ ॥
मुमूर्षुं तं संतरन्तं पुनर्जग्राह लीलया । पुनस्तत्र भ्रामयित्वा ब्रह्माण्डादूर्ध्वमप्यमुम् ॥
वैकुण्ठं दर्शयामास सलक्ष्मीकं जनार्दनम् ॥ २२ ॥
क्षणं तत्र भ्रामयित्वा योगीन्द्रो योगमायया । पुनः करं च योगेन वर्धयामास लीलया ॥

१ क. °गाच्छन्नमानो । २ क. भये । ३ क. कोपेन ।

गोलोकं दर्शयामास विरजां च नदीश्वरीम् । वृन्दावनं शृङ्गशतं शैलेन्द्रं रासमण्डलम् ॥
गोपीगोपादिभिः सार्धं श्रीकृष्णं श्यामसुन्दरम् । द्विभुजं मुरलीहस्तं सस्मितं सुमनोहरम् ॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । तेजसा कोटिसूर्याभ राधावक्षःस्थलस्थितम् ॥
एवं कृष्णं दर्शयित्वा प्रणमय्य पुनः पुनः । क्षणेन लम्बमानं च भ्रामयित्वा पुनः पुनः ॥
दृष्ट्वा कृष्णं चेष्टदेवं सर्वपापप्रणाशनम् । भ्रूणहत्यादिकं पापं भृगोर्दूरं चकार ह ॥ २८ ॥
न भवेद्यातना नष्टा विना भोगेन पापजा । स्वल्पां च बुभुजे रामो गणान्न्या कृष्णदर्शनात् ॥
क्षणेन चेतनां प्राप्य भुवि वेगात्पपात ह । बभूव दूरीभूतं च गणेशास्तम्भनं भृगोः ॥ ३० ॥
सस्मार कवचं स्तोत्रं गुरुदत्तं सुदुर्लभम् । अभीष्टदेवं श्रीकृष्णं गुरुं शंभुं जगद्गुरुम् ॥
चिक्षेप पर्शुमव्यर्थं शिवतुल्यं च तेजसा । ग्रीष्ममध्याह्नमार्तण्डप्रभाशतगुणं मुने ॥ ३२ ॥
पितुरव्यर्थमस्त्रं च दृष्ट्वा गणपतिः स्वयम् । जग्राह वामदन्तेन नास्त्रं व्यर्थं चकार ह ॥
निपात्य पर्शुर्वेगेन छित्त्वा दन्तं समूलकम् । जगाम रामहस्तं च महाबलेन च ॥
हाहेति शब्दमाकाशे देवाश्चक्रुर्महाभिया । वीरभद्रः कार्तिकेयः क्षेत्रपालाश्च पार्षदाः ॥
पपात भूमौ दन्तश्च सरक्तः शब्दयंस्तदा । पपात गैरिकायुक्तो यथा स्फटिकपर्वतः ॥
शब्देन महता विप्र चकम्पे पृथिवी भिया । कैलासस्था जनाः सर्वे मूर्छामापुः क्षणं भिया
निद्रा बभञ्ज तत्काले निद्रेशस्य जगत्प्रभोः । आजगाम बहिः शंभुः पार्वत्या सह संभ्रमात् ॥
पुरो ददर्श हेरम्बं लोहितास्यं क्षतेन तम् । भग्नदन्तं जितक्रोधं सस्मितं लज्जितं मुने ॥
पप्रच्छ पार्वती शीघ्रं स्कन्दं किमिति पुत्रक । स च तां कथयामास वार्तां पौर्वापरीं भिया
चुकोप दुर्गा कृपया रुरोद च मुहुर्मुहुः । उवाच शंभोः पुरतः पुत्रं कृत्वा स्ववक्षसि ॥
संबोध्य शंभुं शोकेन भिया विनयपूर्वकम् । उवाच प्रणता साध्वी प्रणतार्तिहरं पतिम् ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० गणेशदन्तभङ्गकारणवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

====

अथ चतुश्चत्वारिंशोऽध्यायः ।

---

पार्वत्युवाच—

सर्वे जानन्ति जगति दुर्गां शंकरकिंकरीम् । अपेक्षारहिता दासी तस्या वै जीवनं वृथा ॥
ईश्वरस्य समाः सर्वास्तृणपर्वतजातयः । दासीपुत्रस्य शिष्यस्य दोषः कस्येति च प्रभो ॥
विचारं कर्तुमुचितं त्वं च धर्मविदां वरः । वीरभद्रः कार्तिकेयः पार्षदाः सन्ति साक्षिणः

---

१ क. °द्रश्च नन्दिश्च ।

साक्ष्ये मिथ्यां को वदेद्वा द्वयोर्नषां भ्रातरौ समौ। साक्ष्ये समे शत्रुमित्रे सतां धर्मनिरूपणे
साक्षी सभायां यत्साक्ष्यं जानन्नप्यन्यथा वदेत्। कामतः क्रोधतो वाऽपि लोभेन च भयेन च
स याति कुम्भीपाकं च निपात्य शतपूरुषम्। तैश्च सार्धं वसेत्तत्र यावच्चन्द्रदिवाकरौ ॥६॥
अहं विबोधितुं शक्ता निर्णेत्री च द्वयोरपि। तथाऽपि तव साक्षात्तु ममाऽऽज्ञा निन्दिता श्रुतौ
किंकराणां प्रभा कुत्र नृपे वसति संसदि। उदिते भास्करे पृथ्व्यां खद्योतो हि यथा प्रभो ॥
सुचिरं तपसा प्राप्तं त्वदीयं चरणाम्बुजम्। परित्यागभयेनैव संततं भीतया मया॥ ९ ॥
यत्किंचित्कोपशोकाभ्यामुक्तं मोहेन तत्परम्। तत्क्षमस्व जगन्नाथ पुत्रस्नेहाच्च दारुणात्
त्वया यदि परित्यक्ता तदा पुत्रेण तेन किम्। साध्व्या सद्वंशजायाश्च शतपुत्राधिकः पतिः
असद्वंशप्रसूता या दुःशीला ज्ञानवर्जिता। स्वामिनं मन्यते नासौ पित्रोर्दोषेण कुत्सिता ॥
कुत्सितं पतितं मूढं दरिद्रं रोगिणं जडम्। कुलजा विष्णुतुल्यं च कान्तं पश्यति संततम्
हुताशनो वा सूर्यो वा सर्वतेजस्विनां वरः। पतिव्रतातेजसश्च कलां नार्हति षोडशीम्
महादानानि पुण्यानि व्रतान्यनशनानि च। तपांसि पतिसेवायाः कलां नार्हन्ति षोडशीम्
पुत्रो वाऽपि पिता वाऽपि बान्धवोऽथ सहोदरः। योषितां कुलजातानां न कश्चित्स्वामिनः समः ॥ ११ ॥

इत्युक्त्वा स्वामिनं दुर्गा ददर्श पुरतो भृगुम्। शंभोः पदाब्जं सेवन्तं निर्भयं तमुवाच ह ॥

पार्वत्युवाच—

अये राम महाभाग ब्रह्मवंश्योऽसि पण्डितः। पुत्रोऽसि जमदग्नेश्च शिष्योऽस्य योगिनां गुरोः
माता ते रेणुका साध्वी पद्मांशा सत्कुलोद्भवा। मातामहो वैष्णवश्च मातुलश्च ततोऽधिकः॥
त्वं च रेणुकभूपस्य मनुवंशोद्भवस्य च। दौहित्रो मातुलः साधुः शूरो विष्णुपदाश्रयः॥२०॥
कस्य दोषेण दुर्धर्षस्त्वं न जानेऽप्यशुद्धधीः। येषां दोषैर्जनो दुष्टस्तमृते शुद्धमानसः ॥
अमोघं प्राप्य पर्शुं च गुरोश्च करुणानिधेः। परीक्षां क्षत्रिये कृत्वा बभूवास्य सुते पुनः ॥
गुरवे दक्षिणादानमुचितं च श्रुतौ श्रुतम्। भग्नो दन्तस्तत्सुतस्य छिन्धि मरतकमप्यहो ॥
गणेश्वरं रणे जित्वा स्थितश्चेदग्रतो पुरः। स त्वं लब्ध्वाऽऽशिषो लोके पूजितोऽभूर्जगत्त्रये
पर्शुनाऽमोघवीर्येण शंकरस्य वरेण च। हन्तुं शक्तः सृगालश्च सिंहं शार्दूलमाखुभुक् ॥
त्वद्विधं लक्षकोटिं च हन्तुं शक्तो गणेश्वरः। जितेन्द्रियाणां प्रवरो नहि हन्ति च मक्षिकाम्
तेजसा कृष्णतुल्योऽयं कृष्णांशश्च गणेश्वरः देवाश्चान्ये कृष्णकलाः पूजाऽस्य पुरतस्ततः
मतप्रभावतः प्राप्तः शंकरस्य वरेण च। शोकेनातिकठोरेण नहि संपद्विनाऽऽपदम् ॥
इत्युक्त्वा पार्वती रोषात्तं रामं शप्तुमुद्यता। रामः सस्मार तं कृष्णं प्रणम्य मनसा गुरुम्॥

एतस्मिन्नन्तरे दुर्गा ददर्श पुरतो द्विजम् । अतीव वामनं बालं सूर्यकोटिसमप्रभम् ॥
शुक्लदन्तं शुक्लवस्त्रं शुक्लयज्ञोपवीतिनम् । दण्डिनं छत्रिणं चैव सुप्रभं तिलकोज्ज्वलम् ॥
दधतं तुलसीमालां सस्मितं सुमनोहरम् । रत्नकेयूरवलयं रत्नमालाविभूषितम् ॥ ३२ ॥
रत्ननूपुरपादं च सद्रत्नमुकुटोज्ज्वलम् । रत्नकुण्डलयुग्माढ्यगण्डस्थलविराजितम् ॥
स्थिरमुद्रां दर्शयन्तं भक्तं वामकरेण च । दक्षिणेऽभयमुद्रां च भक्तेशं भक्तवत्सलम् ॥
बालिकाबालकगणैर्नगरैः सस्मितैर्युतम् । कैलासवासिभिः सर्वैरावृद्धैर्वीक्षितं मुदा ॥
तं दृष्ट्वा संभ्रमाच्छंभुः सभृत्यः सहपुत्रकः । मूर्ध्ना भक्त्या प्रणनाम दुर्गा च दण्डवद्भुवि
आशिषं प्रददौ बालः सर्वेभ्यो वाञ्छितप्रदाम् । तं दृष्ट्वा बालकाः सर्वे महाश्चर्यं ययुर्भिया
दत्त्वा तस्मै शिवो भक्त्या तूपचारांस्तु षोडश । पूजां चकार श्रुत्युक्तां परिपूर्णतमस्य च
तुष्टाव काण्वशाखोक्तस्तोत्रेण नतकंधरः । पुलकाङ्कितसर्वाङ्गो भगवन्तं सनातनम् ॥
रत्नसिंहासनस्थं च प्रावोचच्छंकरः स्वयम् । अतीव तेजसाऽत्यन्तं प्रच्छन्नाकृतिमेव च

शंकर उवाच—

आत्मारामेषु कुशलप्रश्नोऽतीव विडम्बनम् । ते शश्वत्कुशलाधाराः कुशलाः कुशलप्रदाः
अद्य मे सफलं जन्म जीवितं च सुजीवितम् । प्राप्तस्त्वमतिथिर्ब्रह्मन्कृष्णसेवाफलोदयात् ॥
परिपूर्णतमः कृष्णो लोकनिस्तारहेतवे । पुण्यक्षेत्रे हि कलया भारते च कृपानिधिः ॥
अतिथिः पूजितो येन पूजिताः सर्वदेवताः । अतिथिर्यस्य संतुष्टस्तस्य तुष्टो हरिः स्वयम् ॥
स्नानेन सर्वतीर्थेषु सर्वदानेन यत्फलम् । सर्वव्रतोपवासेन सर्वयज्ञेषु दीक्षया ॥ ४१ ॥
सर्वैस्तपोभिर्विविधैर्नित्यैर्नैमित्तिकादिभिः । तदेवातिथिसेवायाः कलां नार्हति षोडशीम् ॥
अतिथिर्यस्य भग्नाशो याति रुष्टश्च मन्दिरात् । कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम्
स्त्रीगोघ्नश्च कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः । पितृमातृगुरूणां च निन्दको नरघातकः॥ ४८॥
संध्याहीनो स्वघाती च सत्यघ्नो हरिनिन्दकः । ब्रह्मस्वस्थाप्यहारी च मिथ्यासाक्ष्यप्रदायकः
मित्रद्रोही कृतघ्नश्च वृषवाहश्च सूपकृत् । शवदाही ग्रामयाजी ब्राह्मणो वृषलीपतिः ॥
शूद्रश्राद्धान्नभोजी च शूद्रश्राद्धेषु भोजकः । कन्याविक्रयकारी च श्रीहरेर्नामविक्रयी ॥
लाक्षामांसतिलानां च लवणस्य निलस्य च । विक्रेता ब्राह्मणश्चैव तुरगाणां गवां तथा ॥
एकादशीकृष्णसेवाहीनो विप्रश्च भारते । एते महापातकिनस्त्रिषु लोकेषु निन्दिताः ॥
कालसूत्रे च नरके पतन्ति ब्रह्मणां शतम् । एतेभ्योऽप्यधमः सोऽपि यश्चातिथिपराङ्मुखः

नारायण उवाच—

शंकरस्य वचः श्रुत्वा संतुष्टः श्रीहरिः स्वयम् । मेघगम्भीरया वाचा तमुवाच जगत्पतिः॥

१ क. °शलात्मिकाः । २ क. °क्षालोहरसानां च ।

विष्णुरुवाच—

श्वेतद्वीपादागतोऽहं ज्ञात्वा कोलाहलं च वः । अस्य रामस्य रक्षार्थं कृष्णभक्तस्य सांपतम्
नैतेषां कृष्णभक्तानामशुभं विद्यते क्वचित् । रक्षामि तांश्चक्रहस्तो गुरुमन्यं विना शिव ॥
नाहं पाता गुरौ रुष्टे बलवद्गुरुहेलनम् । तत्परः पातकी नास्ति सेवाहीनो गुरोश्च यः ॥
मान्यः पूज्यश्च सर्वेभ्यः सर्वेषां जनको भवेत् । अहो यस्य प्रसादेन सर्वान्पश्यति मानवः ॥
जनको जन्मदानाच्च रक्षणाच्च पिता नृणाम् । ततो विस्तारकरणात्कलया स प्रजापतिः ॥
पितुः शतगुणं माता पोषणाद्गर्भधारणात् । वन्द्या पूज्या च मान्या च प्रसूः स्याद्धि वसुंधरा
मातुः शतगुणं वन्द्यः पूज्यो मान्योऽन्नदायकः । यद्विना नश्वरो देहो विष्णुश्च कलयाऽन्नदः
अन्नदातुः शतगुणोऽभीष्टदेवः परः स्मृतः । गुरुस्तस्माच्छतगुणो विद्यामन्त्रप्रदायकः ॥
अज्ञानतिमिराच्छन्नं ज्ञानदीपेन चक्षुषा । यः सर्वार्थं दर्शयति तत्परो नैव बान्धवः ॥
गुरुदत्तेन मन्त्रेण तपसेष्टसुखं लभेत् । सर्वज्ञत्वं सर्वसिद्धिं तत्परो नैव बान्धवः ॥
सर्वं जयति सर्वत्र विद्यया गुरुदत्तया । तस्मात्पूज्यो हि जगति को वा बन्धुस्ततोऽधिकः ॥
विद्यान्धो वा धनान्धो वा यो मूढो न भजेद्गुरुम् । ब्रह्महत्यादिभिः पापैः स लिप्तो नात्र संशयः
दरिद्रं पतितं क्षुद्रं नरबुद्ध्याऽऽचरेद्गुरुम् । तीर्थस्नातोऽपि न शुचिर्नाधिकारी च कर्मसु ॥
पितरं मातरं भार्यां गुरुपत्नीं गुरुं परम् । यो न पुष्णाति कापट्यात्स महापातकी शिव ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुरेव परं ब्रह्म गुरुर्भास्कररूपकः ॥ ७० ॥
गुरुश्चन्द्रस्तथेन्द्रश्च वायुश्च वरुणोऽनलः । सर्वरूपो हि भगवान्परमात्मा स्वयं गुरुः ॥
नास्ति वेदात्परं शास्त्रं नहि कृष्णात्परः सुरः । नास्ति गङ्गासमं तीर्थं न पुष्पं तुलसीदलात्
नास्ति क्षमावती भूमेः पुत्रान्नास्त्यपरः प्रियः । न च दैवात्परा शक्तिर्नैकादश्याः परं

व्रतम् ॥ ७१ ॥

शालग्रामात्परो यन्त्रो न क्षेत्रं भारतात्परम् । परं पुण्यस्थलानां च पुण्यं वृन्दावनं यथा
मोक्षदानां यथा काशी वैष्णवानां यथा शिवः । न पार्वत्याः परा साध्वी न गणेशात्परो

वशी ॥ ७२ ॥

न च विद्यासमो बन्धुर्नास्ति कश्चिद्गुरोः परः । विद्यादातुः पुत्रदारौ तत्समौ नात्र संशयः
गुरुस्त्रियां च पुत्रे चाप्यभवद्रामहेलनम् । परं समार्जनं कर्तुमागतोऽहं तवाऽऽलयम् ॥

नारायण उवाच—

इत्येवमुक्त्वा शंभुं च दुर्गां संबोध्य नारद । उवाच भगवांस्तत्र सत्यसारं परं वचः ॥

---

१ क. प्रसूरूपा व० ।

विष्णुरुवाच—

शृणु देवि प्रवक्ष्यामि मदीयं वचनं शुभम् । नीतियुक्तं वेदसारं परिणामसुखावहम् ॥
यथा ते गजवक्त्रश्च कार्तिकेयश्च पार्वति । तथा परशुरामश्च भार्गवो नात्र संशयः ॥८०॥
नास्त्येषु स्नेहभेदश्च तव वा शंकरस्य च । विचार्य सर्वं सर्वज्ञे कुरु मातर्यथोचितम् ॥
पुत्रेण सार्धं पुत्रस्य विवादो दैवदोषतः । दैवं हन्तुं को हि शक्तो दैवं च बलवत्तरम् ॥
पुत्राभिधानं वेदेषु पश्य वत्से वरानने । एकदन्त इति ख्यातं सर्वदेवनमस्कृतम् ॥८३॥
पुत्रनामाष्टकं स्तोत्रं सामवेदोक्तमीश्वरि । शृणुष्वावहितं मातः सर्वविघ्नहरं परम् ॥८४॥

विष्णुरुवाच—

गणेशमेकदन्तं च हेरम्बं विघ्ननायकम् । लम्बोदरं शूर्पकर्णं गजवक्त्रं गुहाग्रजम् ॥८५॥
अष्टाख्यार्थं च पुत्रस्य शृणु मातर्हरप्रिये । स्तोत्राणां सारभूतं च सर्वविघ्नहरं परम् ॥
ज्ञानार्थवाचको गश्च णश्च निर्वाणवाचकः । तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ॥
एकशब्दः प्रधानार्थो दन्तश्च बलवाचकः । बलं प्रधानं सर्वस्मादेकदन्तं न० ॥ ८८ ॥
दीनार्थवाचको हेश्च रम्बः पालकवाचकः । पालकं दीनलोकानां हेरम्बं प्रण० ॥ ८९ ॥
विपत्तिवाचको विघ्नो नायकः खण्डनार्थकः । विपत्खण्डनकारं तं प्रणमे विघ्ननायकम् ॥
विष्णुदत्तैश्च नैवेद्यैर्यस्य लम्बं पुरोदरम् । पित्रा दत्तैश्च विविधैर्वन्दे लम्बोदरं च तम् ॥
शूर्पाकारौ च यत्कर्णौ विघ्नवारणकारकौ । संपद्दौ ज्ञानरूपौ च शूर्पकर्णं न० ॥ ९२ ॥
विष्णुप्रसादं मुनिना दत्तं यन्मूर्ध्नि पुष्पकम् । तद्गजेन्द्रमुखं कान्तं गजवक्त्रं न० ॥ ९३ ॥
गुहस्याग्रे च जातोऽयमाविर्भूतो हरालये । वन्दे गुहाग्रजं देवं सर्वदेवाग्रपूजितम् ॥९४॥
एतन्नामाष्टकं दुर्गे नानाशक्तियुतं परम् । एतन्नामाष्टकं स्तोत्रं नानार्थसहितं शुभम् ॥
त्रिसंध्यं यः पठेन्नित्यं स सुखी सर्वतो जयी । ततो विघ्नाः पलायन्ते वैनतेयाद्यथोरगाः ॥
गणेश्वरप्रसादेन महाज्ञानी भवेद्ध्रुवम् । पुत्रार्थी लभते पुत्रं भार्यार्थी कुशलां स्त्रियम् ॥
महाजडः कवीन्द्रश्च विद्यावांश्च भवेद्ध्रुवम् । पुत्र त्वं पश्य वेदे च तथा कोपं च नो कुरु ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० गणेशस्तोत्रकथनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

====

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

१ क. देवेषु । २ क. मतः । ३ क. नामार्थस° ।

नारायण उवाच—

पार्वतीं बोधयित्वा तु विष्णू राममुवाच ह । हितं सत्यं नीतिसारं परिणामसुखावहम् ॥

विष्णुरुवाच—

राम त्वमधुना सत्यमपराधी श्रुतेर्मते । कोपात्कृत्वा दन्तभङ्गं गणेशस्य स्थिते शिवे ॥ २ ॥
स्तोत्रेणैव मयोक्तेन स्तुत्वा गणपतिं परम् । काण्वशाखोक्तविधिना स्तुहि दुर्गां जगत्प्रसूम् ॥
श्रीकृष्णस्य परा शक्तिर्बुद्धिरूपा जगत्प्रभोः । अस्यां च तव रुष्टायां हता बुद्धिर्भविष्यति ॥
सर्वशक्तिस्वरूपेयमनया शक्तिमज्जगत् । अनया शक्तिमान्कृष्णो निर्गुणः प्रकृतेः परः ॥
सृष्टिं कर्तुं न शक्तश्च ब्रह्मा शक्त्याऽनया विना । वयमस्यां प्रसूताश्च ब्रह्मविष्णुमहेश्वराः ॥
सुरसङ्घेऽसुरग्रस्ते काले घोरतरे द्विज । तेजःसु सर्वदेवानामाविर्भूता पुरा सती ॥ ७ ॥
कृष्णाज्ञयाऽसुरान्हत्वा दत्त्वा तेभ्यः पदं ततः । दक्षपत्न्यां जनिं लेभे दक्षस्य तपसा पुरा ॥
भार्या भूत्वा शंकरस्य पुनः पत्युश्च निन्दया । देहं त्यक्त्वा शैलपत्न्यां जनिं लेभे पुरा सती ॥
शंकरस्तपसा लब्धो योगीन्द्राणां गुरोर्गुरुः । लब्धो गणपतिः पुत्रः कृष्णांशः कृष्णसेवया ॥
यं ध्यायस्येव नित्यं किं तं न जानासि बालक । स एव भगवान्कृष्णश्चांशेन गिरिजासुतः ॥
कृताञ्जलिर्नतो भूत्वा स्तुहि दुर्गां शिवप्रियाम् । शिवां शिवप्रदां शैवां शिवबीजां शिवेश्वरीम् ॥
शिवायाः स्तोत्रराजेन पुरा शूलिकृतेन वै । त्रिपुरस्य वधे घोरे ब्रह्मणा प्रेरितेन च ॥ १३ ॥
इत्युक्त्वा श्रीपदं शीघ्रं जगाम श्रीनिकेतनम् । गते हरौ हरिं स्मृत्वा रामस्तां स्तोतुमुद्यतः ॥
स्तोत्रेण विष्णुदत्तेन सर्वविघ्नहरेण च । धर्मार्थकाममोक्षाणां कारणेन च नारद ॥ १५ ॥
कृताञ्जलिपुटो भूत्वा स्नात्वा गङ्गोदके शुभे । गुरुं प्रणम्य भक्त्या च धृत्वा धौते च वाससी ॥
आचम्य नत्वा मूर्ध्ना तां भक्तिनम्रात्मकंधरः । पुलकाञ्चितसर्वाङ्गश्चाऽऽनन्दाश्रुसमन्वितः ॥

परशुराम उवाच—

श्रीकृष्णस्य च गोलोके परिपूर्णतमस्य च । आविर्भूता विग्रहतः पुरा सृष्ट्युन्मुखस्य च ॥
सूर्यकोटिप्रभायुक्ता वस्त्रालंकारभूषिता । वह्निशुद्धांशुकाधाना सस्मिता सुमनोहरा ॥ १९ ॥
नवयौवनसंपन्ना सिन्दूरारुण्यशोभिता । ललितं कबरीभारं मालतीमाल्यमण्डितम् ॥ २० ॥
अहोऽनिर्वचनीया त्वं चारुमूर्तिं च बिभ्रती । मोक्षप्रदा मुमुक्षूणां महाविष्णुर्विधिः स्वयम् ॥
मुमोह क्षणमात्रेण दृष्ट्वा त्वां सर्वमोहिनीम् । बालैः संभूय सहसा सस्मिता धाविता पुरा ॥
सद्भिः ख्याता तेन राधा मूलप्रकृतिरीश्वरी । कृष्णस्त्वां सहसा भीतो वीर्याधानं चकार ह ॥
ततो डिम्भं महज्जज्ञे ततो जातो महान्विराट् । यस्यैव लोमकूपेषु ब्रह्माण्डान्यखिलानि च ॥

---

१ ख. स्थितोऽशि° । १ क. सनातनी । २ क. रत्नालं° । ३ क. °न्दूरबिन्दुशो° । ४ रासे सं° । ५ क. राधिता । ६ क. °साऽऽज्ञाय भी° ।

राधाप्रतिक्रमेणैव तन्निःश्वासो बभूव ह । स निःश्वासो महावायुः स विराड्विश्वधारकः ॥
भयधर्मजलेनैव पुप्लुवे विश्वगोलकम् । स विराड्विश्वनिलयो जलराशिर्बभूव ह ॥ २९ ॥
ततस्त्वं पञ्चधा भूय पञ्च मूर्तीश्च बिभ्रती । प्राणाधिष्ठातृमूर्तिर्या कृष्णस्य परमात्मनः ॥
कृष्णप्राणाधिकां राधां तां वदन्ति पुराविदः । वेदाधिष्ठातृमूर्तिर्या वेदशास्त्रप्रसूरपि ॥
तां सावित्रीं शुद्धरूपां प्रवदन्ति मनीषिणः । ऐश्वर्याधिष्ठातृमूर्तिः शान्तिस्त्वं शान्तरूपिणी
लक्ष्मीं वदन्ति सन्तस्तां शुद्धां सत्त्वस्वरूपिणीम् । रागाधिष्ठातृदेवी या शुक्लमूर्तिः सतां प्रसूः ॥ ३० ॥
सरस्वतीं तां शास्त्रज्ञां शास्त्रज्ञाः प्रवदन्त्यहो । बुद्धिर्विद्या सर्वशक्तेर्या मूर्तिरधिदेवता ॥
सर्वमङ्गलदा सन्तो वदन्ति सर्वमङ्गलाम् । सर्वमङ्गलमङ्गल्या सर्वमङ्गलरूपिणी ॥ ३१ ॥
सर्वमङ्गलबीजस्य शिवस्य निलयेऽधुना । शिवे शिवास्वरूपा त्वं लक्ष्मीर्नारायणान्तिके
सरस्वती च सावित्री वेदसूर्ब्रह्मणः प्रिया । राधा रासेश्वरस्यैव परिपूर्णतमस्य च ॥ ३२ ॥
परमानन्दरूपस्य परमानन्दरूपिणी । त्वत्कलांशांशकलया देवानामपि योषितः ॥
त्वं विद्या योषितः सर्वाः सर्वेषां बीजरूपिणी । छाया सूर्यस्य चन्द्रस्य रोहिणी सर्वमोहिनी ॥
शची शक्रस्य कामस्य कामिनी रतिरीश्वरी । वरुणानी जलेशस्य वायोः स्त्री प्राणवल्लभा
वह्नेः प्रिया हि स्वाहा च कुबेरस्य च सुन्दरी । यमस्य तु सुशीला च नैर्ऋतस्य च कैटभी
ऐशानी स्याच्छशिकला शतरूपा मनोः प्रिया । देवहूतिः कर्दमस्य वसिष्ठस्याप्यरुन्धती
लोपामुद्राऽप्यगस्त्यस्य देवमाताऽदितिस्तथा । अहल्या गौतमस्यापि सर्वाधारा वसुंधरा
गङ्गा च तुलसी चापि पृथिव्यां या सरिद्वरा । एताः सर्वाश्च या ह्यन्या सर्वास्त्वत्कलयाऽम्बिके
गृहलक्ष्मीर्गृहे नृणां राजलक्ष्मीश्च राजसु । तपस्विनां तपस्या त्वं गायत्री ब्राह्मणस्य च ॥
सतां सत्त्वस्वरूपा त्वमसतां कलहाङ्कुरा । ज्योतीरूपा निर्गुणस्य शक्तिस्त्वं सगुणस्य च
सूर्ये प्रभास्वरूपा त्वं दाहिका च हुताशने । जले शैत्यस्वरूपा च शोभारूपा निशाकरे ॥
त्वं भूमौ गन्धरूपा चाप्याकाशे शब्दरूपिणी । क्षुत्पिपासादयस्त्वं च जीविनां सर्वशक्तयः
सर्वबीजस्वरूपा त्वं संसारे साररूपिणी । स्मृतिर्मेधा च बुद्धिर्वा ज्ञानशक्तिर्विपश्चिताम् ॥
कृष्णेन विद्या या दत्ता सर्वज्ञानप्रसूः शुभा । शूलिने कृपया सा त्वं यया मृत्युंजयः शिवः
सृष्टिपालनसंहारशक्तयस्त्रिविधाश्च याः । ब्रह्मविष्णुमहेशानां सा त्वमेव नमोऽस्तु ते ॥
मधुकैटभभीत्या च त्रस्तो धाता प्रकम्पितः । स्तुत्वा मुक्तश्च यां देवीं तां मूर्ध्ना प्रणमाम्यहम्
मधुकैटभयोर्युद्धे त्राताऽसौ विष्णुरीश्वरीम् । बभूव शक्तिमान्स्तुत्वा त्वां दुर्गां प्रण० ॥

---

१ क. सत्यस्व' ।

त्रिपुरस्य महायुद्धे सरथे पतिते शिवे । यां तुष्टुवुः सुराः सर्वे तां दुर्गां प्रण०॥११॥
विष्णुना वृषरूपेण स्वयं शंभुः समुत्थितः । जघान त्रिपुरं स्तुत्वा तां दुर्गां प्रण० ॥
यदाज्ञया वाति वातः सूर्यस्तपति संततम् । वर्षतीन्द्रो दहत्यग्निस्तां दुर्गां प्रण० ॥
यदाज्ञया हि कालश्च शश्वद्भ्रमति वेगतः । मृत्युश्चरति जन्तूनां तां दुर्गां प्रण० ॥
स्रष्टा सृजति सृष्टिं च पाता पाति यदाज्ञया । संहर्ता संहरेत्काले तां दुर्गां प्रण० ॥
ज्योतिःस्वरूपो भगवाञ्छ्रीकृष्णो निर्गुणः स्वयम् । यया विना न शक्तश्च सृष्टिं कर्तुं नमामि ताम् ॥ ५१ ॥
रक्ष रक्ष जगन्मातरपराधं क्षमस्व मे । शिशूनामपराधेन कुतो माता हि कुप्यति ।९७॥
इत्युक्त्वा परशुरामश्च नत्वा तां च रुरोद ह । तुष्टा दुर्गा संभ्रमेण चाभयं च वरं ददौ॥
अमरो भव हे पुत्र वत्स सुस्थिरतां व्रज । शर्वप्रसादात्सर्वत्र जयोऽस्तु तव संततम् ॥
सर्वान्तरात्मा भगवांस्तुष्टः स्यात्संततं हरिः । भक्तिर्भवतु ते कृष्णे शिवदे च शिवे गुरौ
इष्टदेवे गुरौ यस्य भक्तिर्भवति शाश्वती । तं हन्तुं न हि शक्ता वा रुष्टा वा सर्वदेवताः
श्रीकृष्णस्य च भक्तस्त्वं शिष्यो वै शंकरस्य च । गुरुपत्नीं स्तौषि यस्मात्कस्त्वां हन्तुमिहेश्वरः ॥ ६२ ॥
अहो न कृष्णभक्तानामशुभं विद्यते क्वचित् । अन्यदेवेषु ये भक्ता न भक्ता वा निरङ्कुशाः॥
चन्द्रमा बलवांस्तुष्टो येषां भाग्यवतां भृगो । तेषां तारागणा रुष्टाः किं कुर्वन्ति च दुर्बलाः॥
यस्मै तुष्टः पालयति नरदेवो महान्सुखी । तस्य किंवा करिष्यन्ति रुष्टाः भृत्याश्च दुर्बलाः
इत्युक्त्वा पार्वती तुष्टा दत्त्वा रामाय चाऽऽशिषम् । जगामान्तःपुरं तूर्णं हर्षशब्दो बभूव ह
स्तोत्रं वै कण्वशाखोक्तं पूजाकाले च यः पठेत् । यात्राकाले तथा प्रातर्वाञ्छितार्थं लभेद्ध्रुवम्
पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत् । विद्यार्थी लभते विद्यां प्रजार्थी चाऽऽप्नुयात्प्रजाः ॥ ६८ ॥
भ्रष्टराज्यो लभेद्राज्यं नष्टवित्तो धनं लभेत् । यस्य रुष्टो गुरुर्देवो राजा वा बान्धवोऽथवा ।
तस्मै तुष्टश्च वरदः स्तोत्रराजप्रसादतः । दस्युग्रस्तः फणिग्रस्तः शत्रुग्रस्तो भयानकः ॥
व्याधिग्रस्तो भवेन्मुक्तः स्तोत्रस्मरणमात्रतः । राजद्वारे श्मशाने च कारागारे च बन्धने ॥
जलराशौ निमग्नश्च मुक्तस्तत्स्मृतिमात्रतः । स्वामिभेदे पुत्रभेदे मित्रभेदे च दारुणे ॥
स्तोत्रस्मरणमात्रेण वाञ्छितार्थं लभेद्ध्रुवम् । कृत्वा हविष्यं वर्षं च स्तोत्रराजं शृणोति या
भक्त्या दुर्गां च संपूज्य महावन्ध्या प्रसूयते । लभते सा दिव्यपुत्रं ज्ञानिनं चिरजीविनम्

---

१ क. ग्रहम° ।

असौभाग्या च सौभाग्यं षण्मासश्रवणाल्लभेत् । नवमासं काकवन्ध्या मृतवत्सा च भक्तितः
स्तोत्रराजं या शृणोति सा पुत्रं लभते ध्रुवम् । कन्यामाता पुत्रहीना पञ्चमासं शृणोति या
घटे संपूज्य दुर्गां च सा पुत्रं लभते ध्रुवम् ॥ ७१ ॥

इति श्रीब्रह्म० महा० गणपतिख० नारदना० परशुरामकृतदुर्गास्तोत्रं
नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

====

अथ षट्चत्वारिंशोऽध्यायः ।

---

**नारायण उवाच—**

स्तुत्वा तां परशुरामोऽसौ हर्षसंफुल्लमानसः । स्तोत्रेण हरिणोक्तेन स तुष्टाव गणाधिपम्
पूजां चकार भक्त्या च नैवेद्यैर्विविधैरपि । धूपैर्दीपैश्च गन्धैश्च पुष्पैश्च तुलसीं विना ॥२॥
संपूज्य भ्रातरं भक्त्या स रामः शंकराज्ञया । गुरुपत्नीं गुरुं नत्वा गमनं कर्तुमुद्यतः ॥३॥

**नारद उवाच—**

पूजां भगवतश्चक्रे रामो गणपतेर्यदा । नैवेद्यैर्विविधैः पुष्पैस्तुलसीं च विना कथम् ॥४॥
तुलसी सर्वपुष्पाणां मान्या धन्या मनोहरा । कथं पूतां सारभूतां न गृह्णाति गणेश्वरः ॥

**नारायण उवाच—**

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् । ब्रह्मकल्पस्य वृत्तान्तं निगूढं च मनोहरम् ॥
एकदा तुलसी देवी प्रोद्भिन्नवयौवना । तीर्थं भ्रमन्ती तपसा नारायणपरायणा ॥ ७ ॥
ददर्श गङ्गातीरे सा गणेशं यौवनान्वितम् । अतीव सुन्दरं शुद्धं सस्मितं पीतवाससम्
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् । ध्यायन्तं कृष्णपादाब्जं जन्ममृत्युजरापहम् ॥
जितेन्द्रियाणां प्रवरं योगीन्द्राणां गुरोर्गुरुम् । अरूपहार्यं निष्कामं सकामा तमुवाच ह ॥

**तुलस्युवाच—**

अहो ध्यायसि किं देव शान्तरूप गजानन । कथं लम्बोदरो देहो गजवक्त्रं कथं तव ॥
एकदन्तः कथं वक्त्रे वदामुत्र च कारणम् । त्यज ध्यानं महाभाग सायंकाल उपस्थितः
इत्युक्त्वा तुलसी देवी प्रजहास पुनः पुनः । परं चेतसि दग्धा सा कामबाणैः सुदारुणैः
गणेशस्य प्रधानाङ्गे दत्त्वा किंचिज्जलं मुने । जघान तर्जन्यग्रेण निष्पन्दं कृष्णमानसम् ॥
बभूव ध्यानभङ्गं च तस्य नारद चेतनम् । दुःखं च ध्यानभेदेन तद्विच्छेदो हि शोकदः
ध्यानं त्यक्त्वा हरिं स्मृत्वा चापश्यत्कामिनीं पुरः । नवयौवनसंपन्नां सस्मितां कामपीडिताम्
लम्बोदरश्च तां दृष्ट्वा परं विनयपूर्वकम् । उवाच सस्मितः शान्तः शान्तां कामातुरां वशी

गणेश्वर उवाच—

का त्वं वत्से कस्य कन्या मातर्मां ब्रूहि किं शुभे । पापदोऽशुभदः शश्वद्ध्यानभङ्गस्तप-
स्विनाम् ॥ १८ ॥

कृष्णः करोतु कल्याणं हन्तु विघ्नं कृपानिधिः । तद्ध्यानभङ्गजाद्दोषात्त्वाशुभं स्यात्तु ते शुभे
गणेशवचनं श्रुत्वा तमुवाच स्मरातुरा । सस्मितं सकटाक्षं च देवं मधुरया गिरा ॥

तुलस्युवाच—

धर्मात्मजस्य कन्याऽहमप्रौढा च तपस्विनी । तपस्या मे स्वामिनोऽर्थे त्वं स्वामी भव मे प्रभो
तुलसीवचनं श्रुत्वा गणेशः श्रीहरिं स्मरन् । तामुवाच महाप्राज्ञः प्राज्ञीं मधुरया गिरा ॥

गणेश उवाच—

हे मातर्नास्ति मे वाञ्छा घोरे दारपरिग्रहे । दारग्रहो हि दुःखाय न सुखाय कदाचन ॥
हरिभक्तेर्व्यवायश्च तपस्यानाशकारकः । मोक्षद्वारकपाटश्च भवबन्धनपाशकः ॥२४॥
गर्भवासकरः शश्वत्तत्त्वज्ञाननिकृन्तकः । संशयानां समारम्भो यस्त्याज्यो बुधैरपि ॥
गेहोऽहंकरणानां च सर्वमायाकरण्डकम् । साहसानां समूहश्च दोषाणां च विशेषतः ॥
निवर्तस्व महाभागे पश्यान्यं कामुकं पतिम् । कामुकेनैव कामुक्याः संगमो गुणवान्भवेत्
इत्येवं वचनं श्रुत्वा कोपात्सा तं शशाप ह । दाराऽन्ते भविताऽसाध्वी गणेश्वर न संशयः
इत्याकर्ण्य सुरश्रेष्ठस्तां शशाप शिवात्मजः । देवि त्वमसुरग्रस्ता भविष्यसि न संशयः ॥
तत्पश्चान्महतां शापाद्वृक्षस्त्वं भवितेति च । महातपस्वीत्युक्त्वा तां विरराम च नारद ॥
शापं श्रुत्वा तु तुलसी सा रुरोद पुनः पुनः । तुष्टाव च सुरश्रेष्ठं स प्रसन्न उवाच ताम्

गणेश्वर उवाच—

पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे । कलांशेन महाभागे स्वयं नारायणप्रिया ॥
प्रिया त्वं सर्वदेवानां श्रीकृष्णस्य विशेषतः । पूजा विमुक्तिदा नृणां मया भोग्या न नित्यशः
इत्युक्त्वा तां सुरश्रेष्ठो जगाम तपसे पुनः । हरेराराधनव्यग्रो बदरीसंनिधिं ययौ ॥
जगाम तुलसी देवी हृदयेन विदूयता । निराहारा तपश्चक्रे पुष्करे लक्षवर्षकम् ॥३५॥
पश्चान्मुनीन्द्रशापेन गणेशस्य च नारद । सा प्रिया शङ्खचूडस्य बभूव सुचिरं मुने ॥
ततः शंकरशूलेन स ममारासुरेश्वरः । सा कलांशेन वृक्षत्वं ययौ नारायणप्रिया ॥
कथितश्चेतिहासस्ते श्रुतो धर्ममुखात्पुरा । मोक्षदश्च सारश्च पुराणेन प्रकीर्तितः ॥३८॥
ततः परशुरामोऽसौ जगाम तपसे वनम् । प्रणम्य शंकरं दुर्गां संपूज्य च गणेश्वरम् ॥३९॥

---

१ क. मद्धया॰ ।

पूजितो वन्दितः सर्वैः सुरेन्द्रमुनिपुंगवैः । पार्वतीशिवसांनिध्ये सुखं तस्थौ गणेश्वरः ॥
इदं गणपतेः खण्डं यः शृणोति समाहितः । स राजसूययज्ञस्य फलमाप्नोति निश्चितम् ॥
अपुत्रो लभते पुत्रं श्रीगणेशप्रसादतः । धीरं वीरं च धनिनं गुणिनं चिरजीविनम् ॥
यशस्विनं पुत्रिणं च विद्वांसं सुकवीश्वरम् । जितेन्द्रियाणां प्रवरं दातारं सर्वसंपदाम् ॥
सुशीलं च सदाचारं प्रशंस्यं वैष्णवं लभेत् । अहिंसकं दयालुं च तत्त्वज्ञानविशारदम् ॥
भक्त्या गणेशं संपूज्य वस्त्रालंकारचन्दनैः । श्रुत्वा गणपतेः खण्डं महावन्ध्या प्रसूयते ॥
मृतवत्सा काकवन्ध्या ब्रह्मन्पुत्रं लभेद्ध्रुवम् । अदुष्टदूषणपरा शुद्धा चैव लभेत्सुतम् ॥
संपूर्णे ब्रह्मवैवर्ते श्रुत्वा यल्लभते फलम् । तत्फलं लभते मर्त्यः श्रुत्वेदं खण्डमुत्तमम् ॥
वाञ्छां कृत्वा तु मनसि शृणोति परमास्थितः । तस्मै ददाति सर्वेष्टं सुरश्रेष्ठो गणेश्वरः
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय यत्नतः । स्वर्णयज्ञोपवीतं च श्वेतच्छत्रं च माल्यकम्
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकान् । परिपक्वफलान्येव देशकालोद्भवानि च ॥

इति श्रीब्रह्मवैवर्ते महापुराणे गणपतिखण्डे नारदनारायणसंवादे परशुरामगणे-
तत्खण्डश्रवणफलवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## समाप्तमिदं श्रीब्रह्मवैवर्तपुराणस्य तृतीयं महागणपतिखण्डम् ॥

---

१ क. सुपवित्रं स° ।

*